बन्धानामवसर्ज्जनाये॑ति यैर्बन्धैर्बद्धो भवति 'यां त्वा जनो भूमिरिति[2] प्रमन्दत' इतीयं वै भूमिरस्यां वै स भवति यो भवति 'निर्ऋतिं[3] त्वाहं परिवेद विश्वत' इति निर्ऋतिरिति त्वाहं परिवेद सर्वत इत्येतदियं वै निर्ऋतिरियं वै तं निरर्पयति यो निर्ऋच्छति तद्यथा वै ब्रूयादसावामुष्यायणोऽसि वेद त्वा मा मा हिंसीरित्येवमेतदाह नतराᳫं हि विदित आमन्त्रितो हिनस्ति ॥ ११ ॥ नोपस्पृशति । पाप्मा वै निर्ऋतिर्नेत्पाप्मना सᳫंस्पृशा इति न सादयति प्रतिष्ठा वै सादनं नेत्पाप्मानं प्रतिष्ठापयानीति न सूददोहसाधिवदति प्राणो वै सूददोहा नेत्पाप्मानं प्राणेन सन्तनवानि सन्दधानीति ॥ १२ ॥ ता हैके परस्तादर्वाचीरुपदधति । पाप्मा वै निर्ऋतिर्नेत्पाप्मानं निर्ऋतिमन्ववायामेति न तथा कुर्यात्पराचीरेवोपदध्यात्पराञ्चमेव तत्पाप्मानं निर्ऋतिमपहते ॥ १३ ॥ तिस्र इष्टका उपदधाति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैव तत्पाप्मानं निर्ऋतिमपहते ॥ १४ ॥ अथासन्दीᳫं * शिक्यᳫं । रुक्मपाशमिण्ड्वे तत्परार्द्धे न्यस्यति नैर्ऋतो वै पाशो निर्ऋतिपाशादेव तत्प्रमुच्यते 'यं[4] ते देवी निर्ऋतिरा बबन्ध पाशं ग्रीवास्वविचृत्यमि'त्यनेवं विदुषा ह्यविचृत्य'स्तं[5] ते विष्यम्यायुषो न मध्या-

(१) शु० य० सं० अ० १२ क० ६४। (२) शु० य० सं० अ० १२ क० ६४।
(३) शु० य० सं० अ० १२ क० ६४।
* का० श्रौ० सू० १७. २. ३।
(४) शु० य० सं० अ० १२ क० ६५। (५) शु० य० सं० अ० १२ क० ६५।

दि'त्यग्निर्वा ऽआयुस्तस्यैतन्मह्वं व्यचितो गार्हपत्यो भव-
त्यचित ऽआहवनीयस्तस्माद्यदि युवाग्निं चिनुते यदि
स्थविर ऽआयुषो न मह्यादित्येवा'हाथैतं पितुर्मह्वि
प्रसूत' ऽइत्यन्नं वै पितुरथैतदन्नमह्वि प्रमुक्त ऽइत्येत-
ग्निष्टुब्भिर्वज्रो वै त्रिष्टुब्वज्रेणैव तत्पाप्मानं निर्ऋति-
मपहते ॥ १५ ॥ तिस्र ऽइष्टका भवन्ति । आसन्दी
शिक्यहः रुक्मपाश ऽइण्डे तदष्टावष्टाक्षरा गायत्री गाय-
त्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैव तत्पाप्मानं
निर्ऋतिमपहते ॥ १६ ॥ अथान्तरेणोदचमसं * निनयति ।
वज्रो वा ऽआपो वज्रेणैव तत्पाप्मानं निर्ऋतिमन्तर्द्धत्ते-
'नमो भूत्यै येदं चकारे'त्युपोत्तिष्ठन्ति भूत्यै वा ऽएतदुमे
देवाः कर्म्माकुर्वत तस्या ऽएतन्नमोऽकुर्वन्भूत्या ऽउ-
ऽएवायमेतत्कर्म्म कुरुते तस्या ऽएतन्नमस्करोत्यप्रतीक्ष-
मायन्त्यप्रतीक्षमेव तत्पाप्मानं निर्ऋतिं जहति ॥ १७ ॥
प्रत्येत्याग्निमुपतिष्ठते । एतद्वा ऽएतदयथायथं करोति
यदग्नौ साग्निचित ऽएतां दिशमेति तस्मा ऽएवैतन्नि-
ह्नुतेऽहिंसायै ॥ १८ ॥ † यद्वेवोपतिष्ठते । अयं वै लोको
गार्हपत्यः प्रतिष्ठा वै गार्हपत्य ऽइयमु वै प्रतिष्ठाथै-
तदपथमिवैति यदेतां दिशमेति तद्यदुपतिष्ठत ऽइमामेवै-
तत्प्रतिष्ठामभिप्रत्यैत्यस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति

(१) शु० य० सं० अ० १२ क० ६५।
* का० श्रौ० सू० १७, २. ४।
(२) शु० य० सं० अ० १२ क० ६५।
† का० श्रौ० सू० १७ २. ५।

॥ १९ ॥ 'निवेशनः संगमनो वसूनामि'ति । निवेशनो ह्ययं लोकः संगमनो वसूनां 'विश्वा रूपाभिचष्टे शचीभिरिति' सर्वाणि रूपाण्यभिचष्टे शचीभि रित्येत'देव ऽइव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनामि'ति यथैव यजुस्तथा बन्धुः ॥ २० ॥ (A)

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ प्रायणेष्टिः ]

( तत्र प्रायणीयहविषः प्रचारः, सीरोपादानभूतवृक्षविशेषविधानादिकञ्च )

अथ प्रायणीयं निर्वपति । तस्य हविष्कृता वाचं विसृजते वाचं विसृज्य स्तम्बयजुर्हरति स्तम्बयजुर्हृत्वा पूर्वेण परिग्रहेण परिगृह्य लिखित्वाह हर त्रिरिति हरति त्रिराग्नीध्रः ॥ १ ॥ प्रत्येत्य प्रायणीयेन प्रचरति । प्रायणीयेन प्रचर्य सीरं युनक्त्येतद्वा ऽएनं देवाः संस्करिष्यन्तः पुरस्तादन्नेन समार्द्धयंस्तथैवैनमयमेतत्संस्करिष्यन्पुरस्तादन्नेन समर्द्धयति सीरं भवति सैरः हैतद्यत्सीरमिराभेवास्मिन्नेतद्दधाति ॥ २ ॥ औदुम्बरं भवति । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्जैवैनमेतद्रसेन समर्द्धयति मौञ्जं परिसीर्य्यं निवृत्तस्योक्तो बन्धुः ॥ ३ ॥ * सोऽग्ने-

(१) शु० य० सं० अ० १२ क० ६६ । (२) शु० य० सं० अ० १२ क० ६६ ।
(३) शु० य० सं० अ० १२ क० ६६ ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा का० श० ६ ३. १, कठ० सं० १९. १२, कपि० सं० ३१ ३, मै० सं० ३ ७ १२, तै० सं० ४ २ ५ ।

* का० श्रौ० सू० १७. २ १० ।

दक्षिणार्धं श्रोणिम् । जघनेन तिष्ठन्नुत्तरस्याᳬंसस्य पुरस्ताद्युज्यमानमभिमन्त्रयते 'सीरा युञ्जन्ति कवयो युगा वितन्वते पृथगि'ति ये विद्वाᳬंसस्ते कवयस्ते सीरं च युञ्जन्ति युगानि च वितन्वते पृथ'ग्धीरा देवेषु सुम्नये'ति यज्ञो वै सुम्नं धीरा देवेषु यज्ञं तन्वाना ऽइत्येतत् ॥ ४ ॥ 'युनक्त सीरा वियुगा तनुध्वमि'ति । युञ्जन्ति हि सीरं वियुगानि तन्वन्ति 'कृते योनौ वपतेह बीजमि'ति बीजाय वा ऽएषा योनिष्क्रियते यत्सीता यथा ह वा-ऽअयोनौ रेतः सिञ्चेदेवं तद्यदकृष्टे वपति 'गिरा च श्रुष्टिः सभरा ऽअसन्न' ऽइति वाग्वै गीरन्नᳬं श्रुष्टि'र्नेदीय-ऽइत्सृण्यः पक्वमेयादि'ति यदा वा ऽअन्नं पच्यतेऽथ तत्सृण्योपचरन्ति द्वाभ्यां युनक्ति गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः ॥ ५ ॥ स दक्षिणमेवाग्रे युनक्ति । अथ सव्यमेवं देवत्रेतरथा मानुषे षड्गवं भवति द्वादशगवं वा चतुर्विᳬंशतिगवं वा संवत्सरमेवाभिसम्पदम् ॥६॥ अथैनं विकृषति । अन्नं वै कृषिरेतद्वा ऽअस्मिन्देवाः संस्करिष्यन्तः पुरस्तादन्नमदधुस्तथैवास्मिन्नयमेतत्संस्करिष्यन्पुरस्तादन्नं दधाति ॥ ७ ॥ स वा ऽआत्मानमेव * विकृषति । न पक्षपुच्छान्यात्मँस्तदन्नं दधाति यदु वा ऽआत्मन्नन्नं धीयते तदात्मानमवति तत्पक्षपुच्छान्यथ यत्पक्षपुच्छेषु

(१) शु० स० अ० १२ क० ६७। (२) शु० स० अ० १२ क० ६७। (३) शु० स० अ० १२ क० ६८। (४) शु० स० अ० १२ क० ६८। (५) शु० स० अ० १२ क० ६८। (६) शु० स० अ० १२ क० ६८।

* का० श्रौ० सू० १७ २ १२।

नैव तदात्मानमवति न पक्षपुच्छानि ॥ ८ ॥ स दक्षिणार्द्धेनाग्नेः । अन्तरेण परिश्रितः प्राचीं प्रथमाᳪं सीतां कृषति 'शुनᳪं सु फाला विकृषन्तु भूमिᳪं शुनं कीनाशाऽअभियन्तु वाहैरि'ति शुनᳪं शुनमिति यद्वै समृद्धं तच्छुनᳪं समर्द्धयत्येवैनामेतत् ॥ ९ ॥ अथ जघनार्द्धेनोदीचीम् । 'घृतेन सीता मधुना समज्यताᳪं'ति यथैव यजुस्तथा बन्धु'र्विश्वैर्देवैरनुमता मरुद्भिरि'ति विश्वे च वै देवा मरुतश्च वर्षस्येशत 'ऽऊर्ज्जस्वती पयसा पिन्वमाने'ति रसो वै पय ऽऊर्ज्जस्वती रसेनान्नेन पिन्वमानेत्येत'द्स्मान्त्सीते पयसाभ्यावबृत्स्वे'त्यस्मान्त्सीते रसेनाभ्यावबृत्स्वेत्येतत् ॥ १० ॥ अथोत्तरार्द्धेन प्राचीम् । लाङ्गलं पवीरवदि'ति लाङ्गलᳪं रयिमदित्येत'त्सुशेवᳪं सोमपित्सरु'इत्यन्नं वै सोमस्त'दुद्वपति गामविं प्रफर्व्यं च पीवरीं प्रस्थावद्रथवाहणमि'त्येतद्धि सर्वᳪं सीतोद्वपति ॥ ११ ॥ अथ पूर्वार्द्धेन * दक्षिणाम् । 'कामं कामदुघे धुक्ष्व मित्राय वरुणाय च । इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्यऽओषधीभ्य' ऽइति सर्वदेवत्या वै कृषिरेताभ्यो देवताभ्यᳪं सर्वान्कामान्धुक्ष्वेत्येतदित्यमे कृषत्यथेति अथेत्यथेति तद्दक्षिणावृत्ताद्धि देवत्रा ॥ १२ ॥ चतस्रᳪं सीता

(१) शु० य० सं० अ० १२ क० ७० । (२) शु० य० सं० अ० १२ क० ७० । (३) शु० य० सं० अ० १२ क० ७० । (४) शु० य० सं० अ० १२ क० ७० । (५) शु० य० सं० अ० १२ क० ७१ । (६) शु० य० सं० अ० १२ क० ७१ । (७) शु० य० सं० अ० १२ क० ७१ । (८) शु० य० सं० अ० १२ क० ७२ । (९) शु० य० सं० अ० १२ क० ६९ ।

* 'दक्षिणा' इति पाठ 'क' पुस्तके ।

यजुषा कृषति । तद्यचतसृषु दिक्ष्वन्नं तदस्मिन्नेतद्दधाति तद्वै यजुषाद्धा वै तद्यद्यजुरद्धो तद्यदिमा दिशः ॥ १३ ॥ अथात्मानं विकृषति । तद्यदेव संवत्सरेऽन्नं तदस्मिन्नेतद्दधाति तूष्णीमनिरुक्तं वै तद्यत्तूष्णीथं सर्वं वा ऽअनिरुक्तः सर्वेणैवास्मिन्नेतदन्नं दधातीत्यग्रे कृषत्यथेति अथेत्यथेति तद्दक्षिणावृत्तद्धि देवत्रा ॥ १४ ॥ तिस्रस्तिस्रः सीताः कृषति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥ १५ ॥ द्वादश सीतास्तूष्णीं कृषति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥ १६ ॥ ता ऽउभय्यः षोडश सम्पद्यन्ते । षोडशकलः प्रजापतिः प्रजापतिरग्निरात्मसम्मितमेवास्मिन्नेतदन्नं दधाति यदु वा ऽआत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥ १७ ॥ यद्वेवैनं विकृषति । एतद्वा ऽअस्मिन्देवाः संस्करिष्यन्तः पुरस्तात्प्राणानदधुस्तथैवास्मिन्नयमेतत्संस्करिष्यन्पुरस्तात्प्राणान्दधाति लेखा भवन्ति लेखासु हीमे प्राणाः ॥ १८ ॥ * चतस्रः सीता यजुषा कृषति । तद्य ऽइमे शीर्षंश्चत्वारो निरुक्ताः प्राणास्तानस्मिन्नेतद्दधाति तद्वै यजुषाद्धा वै तद्यद्यजुरद्धो तद्यदिमे शीर्षन्प्राणाः ॥ १९ ॥ यद्वेवात्मानं विकृषति । य ऽएवेमेऽन्तरात्मन्प्राणास्तानस्मिन्नेतद्दधाति तूष्णीं को हि तद्वेद यावन्त ऽइमेऽन्तरात्मन्प्राणाः

* अत्र शतम् ४१०० ।

॥ २० * अथैनान्विमुञ्चति । आप्त्वा तं कामं यस्मै कामायैनान्युङ्क्ते 'विमुच्यध्वमघ्न्या' इत्यघ्न्या हैते देवत्रा 'देवयाना' इति देवत्र ह्येभिः कर्म्म करो'त्यगन्म तमसस्पारमस्ये'त्यशनाया वै तमोऽगन्मास्या अशनायायै पारमित्ये'तज्ज्योतिरापामेति ज्योतिर्ह्याप्नोति यो देवात्रो यज्ञमथैनानुदीचः प्राचः प्रसृजति तस्योक्तो बन्धुस्ता-नध्वर्यवे ददाति स हि तैः करोति ताँस्तु दक्षिणानां कालेऽनुदिशेत् ॥ २१ ॥ (B)

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥
कण्डिकासंख्या ॥ १०८ ॥



[ आत्ममध्ये कुशगुच्छोपधानादि ]

अथ † दर्भस्तम्बमुपदधाति । एतद्वै देवा ओष-धीरुपादधत तथैवैतद्यजमान ओषधीरुपधत्ते ॥ १ ॥ यद्वेव दर्भस्तम्बमुपदधाति । जायत एष एतद्यच्चीयते स-एष सर्वस्मा अन्नाय जायत उभयम्वेतदन्नं यद्दर्भा-आपश्च ह्येता ओषधयश्च या वै वृत्राद्बीभत्समाना-

* का० श्रौ० सू० १७. २. १६ ।

( १ ) शु० य० स० अ० १२ क० ७३ । ( २ ) शु० य० सं० अ० १२ क० ७३ । ( ३ ) शु० य० सं० अ० १२ क० ७३ । ( ४ ) शु० य० सं० अ० १२ क० ७३ ।

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा– का० सं० २१. २, कठ० १६. १३, कपि० २५. ४, मै० सं० ११. ७ १३; तै० सं० ४. २. ६ ।

† कुशस्तम्बमुपदधाति मध्ये तूष्णीम् ( का० श्रौ० सू० १७. ३. १ ) ।

ऽआपो धन्व दृभन्त्य ऽउदायँस्ते दर्भा ऽअभवन्न्यद्दृभन्त्य-
ऽउदायँस्तस्माद्दर्भास्ता हैताः शुद्धा मेध्या ऽआपो
वृत्राभिप्रक्षरिता यद्दर्भा यदु दर्भास्तेनौषधय ऽउभये-
नैवैनमेतदन्नेन प्रीणाति ॥ २ ॥ सीतासमरे । वाग्वै
सीता समरः प्राणा वै सीतास्तासामयः समयो वाचि
वै प्राणेभ्योऽन्नं धीयते मध्यतो मध्यत ऽएवास्मिन्नेत-
दन्नं दधाति तूष्णीमनिरुक्तं वै तद्यत्तूष्णीᳫं सर्वं वा-
ऽअनिरुक्तः सर्वेणैवास्मिन्नेतदन्नं दधाति ॥ ३ ॥ अथैन-
मभिजुहोति । जायत ऽएष ऽएतद्यच्चीयते स ऽएष
सर्वस्मा ऽअन्नाय जायते सर्वस्यो ऽअस्यैष रसो यदाज्यमपां
च ह्येष ऽओषधीनां च रसोऽस्यैवैनमेतत्सर्वस्य रसेन
प्रीणाति यावानु वै रसस्तावानात्मानेनैवैनमेतत्सर्वेण
प्रीणाति पञ्चगृहीतेन पञ्चचितिकोऽग्निः पञ्चर्त्तवः संव-
त्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतै-
वैनमेतदन्नेन प्रीणाति ॥ ४ ॥ यद्वेवैनमभिजुहोति । एतद्वै
यत्रैतं प्राणा ऽऋषयोऽग्रेऽग्निᳫं समस्कुर्वंस्तदस्मिन्नेतं पुर-
स्ताद्भागमकुर्वत तस्मात्पुरस्ताद्भागास्तद्यदभिजुहोति य-
ऽएवास्मिँस्ते प्राणा ऽऋषयः पुरस्ताद्भागमकुर्वत तानेवै-
तत्प्रीणात्याज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः ॥ ५ ॥ यद्वेवै-
नमभिजुहोति । एतद्वै यान्येतस्मिन्नग्नौ रूपाण्युपधास्य-
न्भवति यान्स्तोमान्यानि पृष्ठानि यानि च्छन्दाᳫंसि
तेभ्य ऽएतं पुरस्ताद्भागं करोति तान्येवैतत्प्रीणात्याज्येन
पञ्चगृहीतेन तस्योक्तो बन्धुः ॥ ६ ॥ यद्वेवैनमभिजुहोति ।

एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइदं कर्म्म यद्वै न ऽइममिह रक्षा सि नाष्ट्रा न हन्युरिति त ऽएतामेतस्य कर्म्मणः पुरस्तात्स स्थामपश्यँस्तमत्रैव सर्वं समस्थापयन्नत्रा-चिन्वँस्तथैवैनमयमेतदत्रैव सर्वं स स्थापयत्यत्र चिनोति ॥ ७ ॥ 'सजूरब्द' ऽइति चितिः । 'अयवोभिरि'ति पुरीषः 'सजूरुषा' ऽइति चिति'ररुणीभिरि'ति पुरीषः 'सजोषसा-वश्विने'ति चितिर्द्वे'सोभिरि'ति पुरीषः 'सजूः सूर' ऽइति चिति'रेतशेने'ति पुरीषः 'सजूर्वैश्वानर' ऽइति चिति'रिडये'ति पुरीषं 'घृतेने'ति चितिः ''स्वे'ति पुरीषः 'हेति' ' चितिः ॥ ८ ॥ त्रयोदशैता व्याहृतयो भवन्ति । त्रयोदश मासाः संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि यावा-नग्निर्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोत्याज्येन जुहो-त्यग्नेरेष यदाज्यमग्निमेवैतच्चिनोति पञ्चगृहीतेन पञ्चचिति-कोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोत्यूर्द्ध्वामुद्गृह्य जुहोत्यूर्द्ध्वं तदग्निं चितिभिश्चिनोति ॥ ९ ॥ (C)

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ कर्षणक्रमेण सीतासूदकप्रक्षेपः ]

अथोदचमसान्निनयति * । एतद्वै देवा ऽअब्रुवँश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्ते चेतयमाना व्वृष्टिमेव चितिमपश्यँस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति ॥ १ ॥ उदचमसा भवन्ति । आपो वै व्वृष्टिर्व्वृष्टिमेवास्मिन्नेतद्दधात्यौदुम्बरेण चमसेन तस्योक्तो बन्धुश्चतुःस्रक्तिना चतस्रो वै दिशः सर्वाभ्य ऽएवास्मिन्नेतद्दिग्भ्यो व्वृष्टिं दधाति ॥ २ ॥ त्रींस्त्रीनुदचमसान्निनयति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति ॥ ३ ॥ द्वादशोदचमसान्कृष्टे निनयति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति ॥ ४ ॥ स वै कृष्टे निनयति । तस्मात्कृष्टाय वर्षति स यत्कृष्ट ऽएव निनयेन्नाकृष्टे कृष्टायैव वर्षेन्नाकृष्टायाथ यदकृष्ट ऽएव निनयेन्न कृष्टेऽकृष्टायैव वर्षेन्न कृष्टाय कृष्टे चाकृष्टे च निनयति तस्मात्कृष्टाय चाकृष्टाय च वर्षति ॥ ५ ॥ त्रीन्कृष्टे † चाकृष्टे च निनयति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्वृष्टिं दधाति ॥ ६ ॥ यद्वेवोदचमसान्निनयति । एतद्वा ऽअस्मिन्देवाः संस्करिष्यन्तः पुरस्तादपो दधुस्तथैवास्मिन्नयमेतत्संकरिष्यन्पुरस्तादपो दधाति ॥ ७ ॥ त्रींस्त्रीनुदचमसान्निनयति । त्रिवृ-

* का० श्रौ० सू० १७. २. ३ ।
† का० श्रौ० सू० १७. २. ४, ५ ।

दग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति ॥ ८ ॥ द्वादशोदचमसान्कृष्टे निनयति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति ॥९॥ स वै कृष्टे निनयति । प्राणेषु तदपो दधाति स यत्कृष्ट ऽएव निनयेन्नाकृष्टे प्प्राणेष्वेवापः स्युर्नेतरस्मिन्नात्मन्नथ यदकृष्ट ऽएव निनयेन्न कृष्ट ऽआत्मन्नेवापः स्युर्न प्राणेषु कृष्टे चाकृष्टे च निनयति तस्मादिमा ऽउभयत्रापः प्प्राणेषु चात्मँश्च ॥ १० ॥ त्रीन्कृष्टे चाकृष्टे च निनयति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदपो दधाति ॥ ११ ॥ पञ्चदशोदचमसान्निनयति । पञ्चदशो वै वज्र ऽएतेनैवास्यैतत्पञ्चदशेन वज्रेण सर्वं पाप्मानमपहन्ति ॥१२॥ अथ * सर्वौषधं वपति । एतद्वै देवा ऽअब्रुवँश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्ते चेतयमाना ऽअन्नमेव चितिमपश्यँस्तामस्मिन्नदधुस्तथैवास्मिन्नयमेतद्दधाति ॥१३॥ सर्वौषधं भवति । † सर्वमेतदन्नं यत्सर्वौषधः सर्वमेवास्मिन्नेतदन्नं दधाति तेषामेकमन्नमुद्धरेत्तस्य नाश्नीयाद्यावज्जीवमौदुम्बरेण चमसेन तस्योक्तो बन्धुश्चतुःस्रक्तिना चतस्रो वै दिशः सर्वाभ्य ऽएवास्मिन्नेतद्दिग्भ्योऽन्नं दधात्यनुष्टुभ्भिर्वपति वाग्वा ऽअनुष्टुब्वाचो वाऽअन्नमद्यते ॥ १४ ॥ तिसृभिस्तिसृभिर्ऋग्भिर्वपति । त्रिवृदग्निर्यावा-

---

* का० श्रौ० सू० १७ २ ६ ।

† 'सर्वमेव तदन्नम्' इति 'ख-ग' पुस्तकयोः ।

नग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥१५॥ द्वादशभिर्ऋग्भिः कृष्टे वपति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥ १६ ॥ स वै कृष्टे वपति । तस्मात्कृष्टेऽन्नं पच्यते * स यत्कृष्ट एव वपेन्नाकृष्टे कृष्ट एवान्नं पच्येत नाकृष्टेऽथ यदकृष्ट एव वपेन्न कृष्टेऽकृष्ट एवान्नं पच्येत न कृष्टे कृष्टे चाकृष्टे च वपति तस्मात्कृष्टे चाकृष्टे चान्नं पच्यते ॥ १७ ॥ तिसृभिः कृष्टे चाकृष्टे च वपति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतदन्नं दधाति ॥ १८ ॥ यद्वेव सर्वौषधं वपति । एतद्वा एनं देवाः सँस्करिष्यन्तः पुरस्तात्सर्वेण भेषजेनाभिषज्यँस्तथैवैनमयमेतत्संकरिष्यन्पुरस्तात्सर्वेण भेषजेन भिषज्यति ॥ १९ ॥ सर्वौषधं भवति । सर्वमेतद्भेषजं यत्सर्वौषधः सर्वेणैवैनमेतद्भेषजेन भिषज्यति ॥ २० ॥ तिसृभिस्तिसृभिर्ऋग्भिर्वपति । त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्भिषज्यति ॥ २१ ॥ द्वादशभिर्ऋग्भिः कृष्टे † वपति । द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्भिषज्यति ॥ २२ ॥ स वै कृष्टे वपति । प्राणाँस्तद्भिषज्यति स यत्कृष्ट एव वपेन्नाकृष्टे प्राणानेव भिषज्येन्नेतरमात्मानमथ यदकृष्ट एव वपेन्न कृष्ट आत्मानमेव

---

* 'यत्कृष्टे' इति 'ख ग' पुस्तकयोः ।
† का० श्रौ० सू० १७ ३ ८ ।

भिषज्यत्येव प्राणान्कृष्टे चाकृष्टे च वपति प्राणाँश्च तदात्मानं च भिषज्यति ॥ २३ ॥ तिसृभिः कृष्टे चाकृष्टे च वपति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्भिषज्यति ॥ २४ ॥ पञ्चदशोदचमसान्निनयति । पञ्चदशभिर्ऋग्भिर्वपति तत्त्रिंशत्त्रिंशदक्षरा विराड्विराडु कृत्स्नमन्नꣳ सर्वमेवास्मिन्नेतत्कृत्स्नमन्नं दधाति ॥२५॥ 'या ऽओषधीः पूर्वा जाताः । देवेभ्यस्त्रियुगं पुरे'त्यृतवो वै देवास्तेभ्य ऽएतास्त्रिः पुरा जायन्ते वसन्ता प्रावृषि शरदि 'मनै नु बभ्रूणामहमि'ति सोमो वै बभ्रुः सौम्या ऽओषधय ऽओषधः पुरुषः शतं धामानी'ति यदिदꣳ शतायुः शतार्घः शतवीर्य्य ऽएतानि हास्य तानि 'शतं धामानि सप्त चे'ति य ऽएवेमे सप्त शीर्षन्प्राणास्तानेतदाह ॥ २६ ॥ 'शतं वो ऽअम्ब धामानि । सहस्रमुत वो रुह ऽइति यदिदꣳ शतधा च सहस्रधा च विरूढा 'ऽअधा शतक्रत्वो यूयमिमं मे ऽअगदं कृते'ति यमिमं भिषज्यामीत्येतत् ॥ २७ ॥ ता ऽएता ऽएकव्याख्यानाः । एतमेवाभि यथैतमेव भिषज्येदेतं पारयेत्ता ऽअनुष्टुभो भवन्ति वाग्वा ऽअनुष्टुब्वाग्वु सर्वं भेषजꣳ सर्वेणैवैनमेतद्भेषजेन भिषज्यति ॥ २८ ॥ अथातो निरुक्तानिरुक्तानामेव । यजुषा द्वावनड्वाहौ युनक्ति तूष्णीमितरान्यजुषा घृतस्रꣳ सीताꣳ कृषति तूष्णीमितरास्तूष्णीं दर्भस्तम्ब-

(१) शु० य० सं० अ० १२ क० ७५ । (२) शु० य० सं० अ० १२ क० ७५ ।
(३) शु० य० सं० अ० १२ क० ७५ । (४) शु० य० सं० अ० १२ क० ७६ ।
(५) शु० य० सं० अ० १२ क० ७६ ।

मुपदधाति यजुषाभिजुहोति तूष्णीमुदचमसान्निनयति यजुषा वपति ॥ २९ ॥ प्रजापतिरेषोऽग्निः । उभयम्वेतत्प्रजापतिर्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्यद्यजुषा करोति यदेवास्य निरुक्तं परिमितꣳ रूपं तदस्य तेन संस्करोत्यथ यत्तूष्णीं यदेवास्यानिरुक्तमपरिमितꣳ रूपं तदस्य तेन संस्करोति स ह वा ऽएतꣳ सर्वं कृत्स्नं प्रजापतिं संस्करोति य ऽएवं विद्वानेतदेवं करोति बाह्यानि रूपाणि निरुक्तानि भवन्त्यन्तराण्यनिरुक्तानि पशुरेष यदग्निस्तस्मात्पशोर्बाह्यानि रूपाणि निरुक्तानि भवन्त्यन्तराण्यनिरुक्तानि ॥ ३० ॥ (D)

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ सोमक्रयादि ]

चितो गार्हपत्यो भवति । अचित ऽआहवनीयोऽथ राजानं क्रीणात्ययं वै लोको गार्हपत्यो द्यौराहवनीयोऽथ योऽयं वायुः पवत ऽएष सोम ऽएतं तदिमौ लोकावन्तरेण दधाति तस्मादेष ऽइमौ लोकावन्तरेण पवते ॥ १ ॥ यद्वेव चिते गार्हपत्ये । अचित ऽआहवनीयेऽथ राजानं क्रीणात्यात्मा वा ऽअग्निः प्राणः सोम ऽआत्मꣳस्तत्प्राणं मध्यतो दधाति तस्मादयमात्मन्प्राणो मध्यतः ॥ २ ॥

एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० सं० ९. १. ४, कठ० सं० १९. १३, कपि० सं० २५. ४, मै० सं० ११ ७. १२, तै० सं० ५. २ ६।

यद्वेव चिते गार्हपत्ये। अचित ऽआहवनीयेऽथ राजानं क्रीणात्यात्मा वा ऽअग्नी रसः सोम ऽआत्मानं तद्रसेनानुपजति तस्मादयमान्तमेवात्मा रसेनानुपक्तः ॥ ३ ॥ राजानं क्रीत्वा पर्य्युह्य। अथास्मा ऽआतिथ्यह्ँ हविर्न्निर्वपति तस्य * हविष्कृता वाचं विसृजतेऽथ वा ऽएतद्व्यतिपजत्यद्ध्वरकर्म्म चाग्निकर्म्म च कर्म्मणः समानतायै समानमिदं कर्म्मासदिति ॥ ४ ॥ यद्वेव व्यतिपजति। आत्मा वा ऽअग्निः प्राणोऽद्ध्वर ऽआत्मँस्तत्प्राणं मद्ध्यतो दधाति तस्मादयमात्मन्प्राणो मद्ध्यतः ॥ ५ ॥ यद्वेव व्यतिपजति। आत्मा वा ऽअग्नी रसोऽद्ध्वर ऽआत्मानं तद्रसेनानुपजति तस्मादयमान्तमेवात्मा रसेनानुपक्तोऽथाहवनीयस्यार्द्धमैति ॥ ६ ॥ तद्धैके। उभयत्रैव † पलाशशाखया व्युदूहन्त्युभयत्र वै चिनोतीति न तथा कुर्य्यादवस्यति वाव गार्हपत्येनोर्द्ध्व ऽएवाहवनीयेन रोहति तस्मात्तथा न कुर्य्यात् ॥ ७ ॥ अथ गार्हपत्य ऽएवोपान्निवपति। नाहवनीयेऽयं वै लोको गार्हपत्यः पशव ऽऊपाऽअस्मिँस्तल्लोके पशून्दधाति तस्मादिमेऽस्मिँल्लोके पशवः ॥ ८ ॥ अथाहवनीय ऽएव पुष्करपर्णमुपदधाति। न गार्हपत्य ऽआपो वै पुष्करपर्णं द्यौराहवनीयो दिवि तदपो दधात्युभयत्र सिकता निवपति रेतो वै सिकता ऽउभयत्र वै विक्रियते तस्माद्रेतसोऽधि विक्रियाता ऽइति ॥ ९ ॥ ता नाना मन्त्राभ्यां निवपति। मनुष्यलोको वै गार्हपत्यो

* शु॰ य॰ मं॰ १ १५. ३।
† का॰ श्रौ॰ सू॰ १७ १. ३।

देवलोक ऽआहवनीयो नानो वा ऽएतयद्दैवं च मानुषं च द्राघीयसा मन्त्रेणाहवनीये निवपति ह्रसीयसा गार्हपत्ये द्राघीयो हि देवायुषꣳ ह्रसीयो मनुष्यायुषꣳ स पूर्वाः परिश्रिद्भ्यो गार्हपत्ये सिकता निवपति रेतो वै सिकता ऽअस्माद्रेतसोऽधीमा विक्रियान्ता ऽइति ॥ १० ॥ तदाहुः । यद्योनिः परिश्रितो रेतः सिकता ऽअथ पूर्वाः परिश्रिद्भ्यो गार्हपत्ये सिकता निवपति कथमस्यैतद्रेतोऽपरासिक्तं परिगृहीतं भवतीत्युल्वं वा ऽऊषास्तयदूषान्पूर्वान्निवपत्येतेनो हास्यैतदुल्वेन रेतोऽपरासिक्तं परिगृहीतं भवत्यथाहवनीये परिश्रितोऽभिमन्त्रयते तस्योक्तो बन्धुरथ सिकता निवपति रेतो वै सिकता ऽएतयो ऽअस्यैतद्योन्या रेतोऽपरासिक्तं परिगृहीतं भवति ॥ ११ ॥ अथाहवनीय * ऽएवाप्यानवतीभ्यामभिमृशति । न गार्हपत्येऽयं वै लोको गार्हपत्यः स्वर्गो लोक ऽआहवनीयोऽद्धो वा ऽअयमस्मिँल्लोके जातो यजमानः स्वर्ग ऽएव लोके प्रजिजनयिषितव्यस्तद्यदाहवनीय ऽएवाप्यानवतीभ्यामभिमृशति न गार्हपत्ये स्वर्ग ऽएवैनं तल्लोके प्रजनयति ॥ १२ ॥ अथ लोकेष्टका ऽउपदधाति । इमे वै लोका ऽएषोऽग्निर्दिशो लोकेष्टका ऽएषु तल्लोकेषु दिशो दधाति तस्मादिमा ऽएषु लोकेषु दिशः ॥ १३ ॥ याह्नेनाग्निमाहरति । आशा वा ऽअस्य ता दिशो याऽएषु लोकेष्वथ या ऽइमाँल्लोकान्परेण दिशस्ता ऽअस्मि-

* का० श्रौ० सू० १७ २ ५ ।

न्नेतद्दधाति ॥१४॥ [ अर्धप्रपाठकः ४३॥ ] वहिर्वेदेरियं वै वेदिः। आप्ता वा ऽअस्य ता दिशो या ऽअस्यामथ या ऽइमां परेण दिशस्ता ऽअस्मिन्नेतद्दधाति ॥ १५ ॥ यद्वेव * लोगेष्टका ऽउपदधाति । प्रजापतेर्विस्रस्तस्य सर्वा दिशो रसोऽनु व्यक्षरत्तं यत्र देवाः समस्कुर्वंस्तदस्मिन्नेताभिर्लोगेष्टकाभिस्तः रसमदधुस्तथैवास्मिन्नयमेतद्दधाति ॥ १६ ॥ वाह्येनाग्निमाहरति । आप्तो वा ऽअस्य स रसो य ऽएषु लोकेष्वथ य ऽइमाँल्लोकान्पराङ्सोऽत्यक्षरत्तमस्मिन्नेतद्दधाति ॥ १७ ॥ वहिर्वेदेरियं वै वेदिः । आप्तो वा ऽअस्य स रसो योऽस्यामथ य ऽइमां पराङ्सोऽत्यक्षरत्तमस्मिन्नेतद्दधाति ॥ १८ ॥ स्फ्येनाहरति । वज्रो वै स्फ्यो वीर्यं वै वज्रो वित्तिरियं वीर्येण वै वित्तिं विन्दते ॥ १९ ॥ स पुरस्तादाहरति । 'मा मा हिꣳसीज्जनिता यः पृथिव्या' ऽइति प्रजापतिर्वै पृथिव्यै जनिता मा मा हिꣳसीत्प्रजापतिरित्येत'द्यो वा दिवꣳ सत्यधर्मा व्यानडि'ति यो वा दिवꣳ सत्यधर्मा सृजतेत्येतद्य'श्चापश्चन्द्राः प्रथमो जजाने'ति मनुष्या वा ऽआपश्चन्द्रा यो मनुष्यान्प्रथमोऽसृजतेत्येत'त्कस्मै देवाय हविषा विधेमे'ति प्रजापतिर्वै कस्तस्मै हविषा विधेमेत्येतत्तामाहृत्यान्तरेण परिश्रित ऽआत्मन्नुपदधाति स यः प्राच्यां दिशि रसोऽत्यक्षरत्तमस्मिन्नेतद्दधात्यथो प्राचीमेवास्मिन्नेतद्दिशं दधा-

* का० श्रौ० सू० १७ ३ ११,१२ ।

( १ ) शु० य० सं० अ० १२ क० १०२ । ( २ ) शु० य० सं० अ० १२ क० १०२ । ( ३ ) शु० य० सं० अ० १२ क० १०२ । ( ४ ) शु० य० सं० अ० १२ क० १०२ ।

ति ॥ २० ॥ अथ दक्षिणतः । 'अभ्यावर्त्तस्व पृथिवि यज्ञेन पयसा सहे'ति यथैव यजुस्तथा बन्धु'र्वपां ते ऽअग्निरिषितो ऽअरोहदि'ति यद्वै किञ्चास्याश्च सास्यै वपा तामग्निरिषित ऽउपादीप्तो रोहति तामाहृत्यान्तरेण पक्षसन्धिमात्मन्नुपदधाति स यो दक्षिणायां दिशि रसोऽस्त्यक्षरत्तमस्मिन्नेतद्दधात्यथो दक्षिणामेवास्मिन्नेतद्दिशं दधाति ॥ २१ ॥ अथ पश्चात् । 'अग्ने यत्ते शुक्रं यच्चन्द्रं यत्पूतं यच्च यज्ञियम्'तीयं वा ऽअग्निरस्यै तदाह 'तद्देवेभ्यो भरामसी'ति तदस्मै दैवाय कर्म्मणे हराम ऽइत्येतत्तामाहृत्यान्तरेण पुच्छसन्धिमात्मन्नुपदधाति स यः प्रतीच्यां दिशि रसोऽस्त्यक्षरत्तमस्मिन्नेतद्दधात्यथो प्रतीचीमेवास्मिन्नेतद्दिशं दधाति स न सम्प्रति पश्चादाहरेन्नेद्यजपथाद्रसमाहराणीति ऽइवाहरति ॥ २२ ॥ अथोत्तरतः । 'इषमूर्जमहमित ऽआदमि'तीषमूर्जमहमित ऽआदद ऽइत्येत'दृतस्य योनिमि'ति सत्यं वा ऽऋतꣳ सत्यस्य योनिमित्येत'न्महिषस्य धारामि'त्यग्निर्वै महिषः स हीदं जातो महान्त्सर्वमैष्णा'दा मा गोषु विशत्वा तनूष्वि'त्यात्मा वै तनूरा मा गोषु चात्मनि च विशत्वित्येत'ज्जहामि सेदिमनिरामनीवामि'ति सिकताः प्रक्षूꣳसयति तथैव

(१) शु० य० सं० अ० १२ क० १०३। (२) शु० य० सं० अ० १२ क० १०३।
(३) शु० य० सं० अ० १२ क० १०४। (४) शु० य० सं० अ० १२ क० १०४।
(५) शु० य० सं० अ० १२ क० १०५। (६) शु० य० सं० अ० १२ क० १०५।
(७) शु० य० सं० अ० १२ क० १०५। (८) शु० य० सं० अ० १२ क० १०५।
(९) शु० य० सं० अ० १२ क० १०५।

सेदिग्र्याग्निरा ग्रामीवा तामेतस्यां दिशि दधाति तस्मा-
देतस्यां दिशि प्रजा ऽअशनायुकास्तामाहृत्यान्तरेण
पक्षसन्धिमात्मन्नुपदधाति स य ऽउदीच्यां दिशि रसो-
ऽयक्षरत्तमस्मिन्नेतद्दधात्यथो ऽउदीचीमेवास्मिन्नेतद्दिशं
दधाति ॥ २३ ॥ ता ऽएता दिशः । ताः सर्वत ऽउप-
दधाति सर्वतस्तद्दिशो दधाति तस्मात्सर्वतो दिशः
सर्वतः समीचीः सर्वतस्तत्समीचीर्दिशो दधाति तस्मा-
त्सर्वतः समीच्यो दिशस्ता नानोपदधाति नाना साद-
यति नाना सूददोहसाधिवदति नाना हि दिशस्तिष्ठ-
न्नुपदधाति तिष्ठन्तीव हि दिशोऽथो तिष्ठन्वै वीर्यं-
वत्तरः ॥ २४ ॥ ता ऽएता यजुष्मत्य ऽइष्टकाः । ता-
ऽआत्मन्नेवोपदधाति न पक्षपुच्छेष्वात्मन्नेव यजुष्मत्य-
ऽइष्टका ऽउपधीयन्ते न पक्षपुच्छेषु ॥ २५ ॥ तदाहुः ।
कथमस्यैताः पक्काः शृता ऽउपहिता भवन्तीति रसो वा-
ऽएताः स्वयं शृत ऽउ वै रसोऽथो यद्वै किञ्चैतमग्निं
वैश्वानरमुप निगच्छति तत ऽएव तत्पक्वं शृतमुपहितं
भवति ॥ २६ ॥ * अथोत्तरवेदिं निवपति । इयं वै वेदि-
र्द्यौरुत्तरवेदिर्दिशो लोगेष्टकास्तद्यदन्तरेण वेदिं चोत्तर-
वेदिं च लोगेष्टका ऽउपदधातीमौ तल्लोकावन्तरेण दिशो
दधाति तस्मादिमौ लोकावन्तरेण दिशस्तां युगमात्रीं
वा सर्वतः करोति चत्वारिंशत्पदां वा यत्तरथा काम-
येताथ सिकता निवपति तस्योक्तो बन्धुः ॥ २७ ॥ ता-

* का० श्रौ० सू० १७. १. १४ ।

ऽउत्तरवेदौ * निवपति । योनिर्वा ऽउत्तरवेदिर्योनौ तद्रेतः सिञ्चति यद्वै योनौ रेतः सिच्यते तत्प्रजनिष्णु भवति ताभिः सर्वमात्मानं प्रच्छादयति सर्वस्मिंस्तदात्मन्रेतो दधाति तस्मात्सर्वस्मादेवात्मनो रेतः सम्भवति ॥ २८ ॥ '[1]अग्ने तवे श्रवो वय' ऽइति । धूमो वा ऽअस्य श्रवो वयः स ह्येनममुष्मिँल्लोके श्रावयति '[2]मंहि भ्राजन्ते ऽअर्चयो विभावसवि'ति महतो भ्राजन्तेऽर्चयः प्रभूवसवित्येतद् '[3]बृहद्भानो शवसा वाजमुक्थ्यमि'ति बलं वै शवो बृहद्भानो बलेनान्नमुक्थ्यमित्येतद्दधासि '[4]दाशुषे कव' ऽइति यजमानो वै दाश्वान्दधासि यजमानाय कव ऽइत्येतत् ॥ २९ ॥ '[5]पावकवर्चाः शुक्रवर्चा' ऽइति । पावकवर्चा ह्येष शुक्रवर्चा '[6]ऽअनूनवर्चा ऽउदियर्षि भानुने'त्यनूनवर्चा ऽउद्दीप्यसे भानुनेत्येत'[7]त्पुत्रो मातरा विचरन्नुपावसी'ति पुत्रो ह्येष मातरा विचरन्नुपावति '[8]पृणक्षि रोदसी ऽउभे' ऽइतीमे वै द्यावापृथिवी रोदसी ते ऽएष ऽउभे पृणक्ति धूमेनामूं वृष्ट्येमाम् ॥ ३० ॥ '[9]ऊर्जो नपाज्जातवेदः सुशस्तिभिरि'ति । ऊर्जो नपाज्जातवेदः सुप्रष्टुतिभिरित्येत'[10]न्मन्दस्व धीतिभिर्हित' ऽइति दीप्यस्व धीतिभिर्हित ऽइत्येत'[11]त्त्वे ऽइषः सन्दधुर्भूरि-

* का० श्रौ० सू० १७. ३. १५।

(१) शु० य० सं० अ० १२ क० १०६। (२) शु० य० सं० अ० १२ क० १०६।
(३) शु० य० सं० अ० १२ क० १०६। (४) शु० य० सं० अ० १२ क० १०६।
(५) शु० य० सं० अ० १२ क० १०७। (६) शु० य० सं० अ० १२ क० १०७।
(७) शु० य० सं० अ० १२ क० १०७। (८) शु० य० सं० अ० १२ क० १०७।
(९) शु० य० सं० अ० १२ क० १०८। (१०) शु० य० सं० अ० १२ क० १०८।
(११) शु० य० सं० अ० १२ क० १०८।

वर्प्पस' ऽइति त्वे ऽइषः सन्दधुर्वहुवर्प्पस ऽइत्येत‘च्चित्रोतयो[1] वामजाता' ऽइति यथैव यजुस्तथा वन्धुः ॥३१॥ ‘इरज्यन्नग्ने[2] प्प्रथयस्व जन्तुभिरि'ति। मनुष्या वै जन्तवो दीप्प्यमानोऽग्ने प्प्रथस्व मनुष्यैरित्येत‘दस्मे रायो[3] ऽअमर्त्ये'त्यस्मे रयिं दधदमर्त्येत्येत‘त्स दर्शतस्य वपुषो विराजसी'ति दर्शतस्य ह्येष वपुषो विराजति ‘पृणोक्षि[4] सानसिं क्रतुमि'ति पृणाक्षि सनातनं क्रतुमित्येतत् ॥ ३२ ॥ ‘इष्कर्त्तारमद्ध्वरस्य[5] प्प्रचेतसमि'ति। अद्ध्वरो वै यज्ञः प्प्रकल्पयितारं यज्ञस्य प्प्रचेतसमित्येत‘त्क्षयन्तः[6] राधसो मह' ऽइति क्षयन्तः राधसि महतीत्येत‘द्रातिं[7] वामस्य सुभगां महीमिषमि'ति रातिं वामस्य सुभगां महतीमिषमित्येत‘द्दधासि[8] सानसिः रयिमि'ति दधासि सनातनः रयिमित्येतत् ॥ ३३ ॥ ‘ऋतावानमि'ति[9]। सत्यावानमित्येत‘न्महिषमि'[10]त्यग्निर्वै महिषो ‘विश्वदर्शतमि[11]'ति विश्वदर्शतो ह्येषो‘ऽग्निः सुम्नाय[12] दधिरे पुरो जना' ऽइति यज्ञो वै सुम्नं यज्ञाय वा ऽएतं पुरो दधते ‘श्रुत्कर्ण्णः[13] सप्प्रथस्तमं त्वा गिरा दैव्यं मानुषा युगे'त्याश्रृण्वन्तः[14] सप्प्रथस्तमं त्वा गिरा देवं मनुष्या हवामह ऽइत्येतत् ॥ ३४ ॥ स ऽएषोऽग्निरेव

(१) शु० य० सं० अ० १२ क० १०८। (२) शु० य० सं० अ० १२ क० १०८।
(३) शु० य० सं० अ० १२ क० १०९। (४) शु० य० सं० अ० १२ क० १०९।
(५) शु० य० सं० अ० १२ क० १०९। (६) शु० य० सं० अ० १२ क० १०९।
(७) शु० य० सं० अ० १२ क० ११०। (८) शु० य० सं० अ० १२ क० ११०।
(९) शु० य० सं० अ० १२ क० ११०। (१०) शु० य० सं० अ० १२ क० ११०।
(११) शु० य० सं० अ० १२ क० १११। (१२) शु० य० सं० अ० १२ क० १११।
(१३) शु० य० सं० अ० १२ क० १११। (१४) शु० य० सं० अ० १२ क० १११।

वैश्वानरः। एतत्पङ्क्त्यमारम्भायैवेमाः * सिकता न्युप्य-न्तेऽग्निमेवास्मिन्नेतद्वैश्वानरः रेतो भूतः सिञ्चति पङ्क्त्येन पङ्क्तवः संवत्सरः संवत्सरो वैश्वानरः ॥ ३५ ॥ तदाहुः। यद्वेतः सिकता उच्यन्ते किमासाथं रेतो रूपमिति शुक्ला इति ब्रूयाच्छुक्लः हि रेतोऽथो पृश्नय इति पृश्नीव हि रेतः ॥ ३६ ॥ तदाहुः। यदार्द्रं रेतः शुष्काः सिकता निवपति कथमस्यैता आर्द्रा रेतोरूपं भवन्तीति रसो वै छन्दाश्रस्यार्द्र उ वै रसस्तद्यदेनाश्छन्दोभिर्नि-वपत्येवमु हास्यैता आर्द्रा रेतोरूपं भवन्ति ॥ ३७ ॥ तदाहुः। कथमस्यैता अहोरात्राभ्यामुपहिता भवन्तीति द्वे वा अहोरात्रे शुक्लं च कृष्णं च द्वे सिकते शुक्ला च कृष्णा चैवमु हास्यैता अहोरात्राभ्यामुपहिता भवन्ति ॥ ३८ ॥ तदाहुः। कथमस्यैता अहोरात्रैः सम्पन्ना-अन्यूना अनतिरिक्ता उपहिता भवन्तीत्यनन्तानि वा अहोरात्राण्यनन्ताः सिकता एवमु हास्यैता अहो-रात्रैः सम्पन्ना अन्यूना अनतिरिक्ता उपहिता भव-न्त्यथ कस्मात्समुद्रियं छन्द इत्यनन्तो वै समुद्रोऽनन्ताः सिकतास्तस्मात्समुद्रियं छन्दः ॥३९॥ तदाहुः। कथमस्यैताः पृथङ् नाना यजुर्भिरुपहिता भवन्तीति मनो वै यजुस्तदिदं मनो यजुः सर्वाः सिकता अनुविभवत्येवमु हास्यैताः पृथङ् नाना यजुर्भिरुपहिता भवन्ति ॥ ४० ॥ तदाहुः।

* का० श्रौ० सू० १७. ३. १५।

कथमस्यैताः सर्वैश्छन्दोभिरुपहिता भवन्तीति यदेवैना-ऽएतेन पङ्क्तेन निवपति यावन्ति हि सप्तानां छन्दसामक्षराणि तावन्त्येतस्य पङ्क्तस्याक्षराण्येवमु हास्यैताः सर्वैश्छन्दोभिरुपहिता भवन्ति ॥ ४१ ॥ यद्वेव सिकता निवपति । प्रजापतिरेषोऽग्निः सर्वमु ब्रह्म प्रजापतिस्तद्धैतद् ब्रह्मण ऽउत्सन्नं यत्सिकता ऽअथ यदनुत्सन्नमिदं तद्यो-ऽयमग्निश्चीयते तद्यत्सिकता निवपति यदेव तद् ब्रह्मण-ऽउत्सन्नं तदस्मिन्नेतत्प्रतिदधाति ता ऽअसंख्याता ऽअपरिमिता निवपति को हि तद्वेद यावत्तद् ब्रह्मण ऽउत्सन्नः स ह वा ऽएतः सर्वं कृत्स्नं प्रजापतिः संस्करोति य-ऽएवं विद्वान्सिकता निवपति ॥ ४२ ॥ तदाहुः । कैतासामसंख्यातानाथं संख्येति द्वे ऽइति ब्रूयाद् द्वे हि सिकते शुक्ला च कृष्णा चाथो सप्तविंशतिशतानीति ब्रूयादेतावन्ति हि संवत्सरस्याहोरात्राण्यथो द्वे द्वापञ्चाशे शते ऽइत्येतावन्ति ह्येतस्य पङ्क्तस्याक्षराण्यथो पञ्चविंशतिरिति पञ्चविंशः हि रेतः ॥ ४३ ॥ ता ऽएता यजुष्मत्य-ऽइष्टकाः । ता ऽआत्मन्नेवोपदधाति न पक्षपुच्छेष्वात्मन्नेव यजुष्मत्य ऽइष्टका ऽउपधीयन्ते न पक्षपुच्छेषु न सादयति नेद्रेतः प्रजातिः स्थापयानीति ॥ ४४ ॥ अथैना * ऽआप्यानवतीभ्यामभिमृशति । इदमेवैतद्रेतः सिक्तमाप्याययति तस्माद्योनौ रेतः सिक्तमाप्यायते सौमीभ्यां प्राणो वै सोमः प्राणं तद्रेतसि दधाति

* वा० सं० सू० १० १ १६ ।

तस्माद्रेतः सिक्तं प्राणमभिसम्भवति पूयेद्ध यद्ते प्राणान्त्संभवेदेषो हैवात्र सूददोहाः प्राणो वै सोमः प्राणः सूददोहाः ॥ ४५ ॥ [1]'आप्यायस्व समेतु ते। विश्वतः सोम वृष्ण्यमि'ति रेतो वै वृष्ण्यमाप्यायस्व समेतु ते सर्वतः सोम रेत इत्येत[2]'द्भवा वाजस्य सङ्गथ' इत्यन्नं वै वाजो भवान्नस्य सङ्गथ इत्येत[3]'त्सं ते पयांसि समु यन्तु वाजा' इति रसो वै पयोऽन्नं वाजाः सं ते रसाः समु यन्त्वन्नानीत्येत[4]'त्सं वृष्ण्यान्यभिमातिषाह' इति सः रेतांसि पाप्मसह इत्येत[5]'दाप्यायमानो अमृताय सोमे'ति प्रजातयां तदमृतं दधाति तस्मात्प्रजातिरमृता [6]'दिवि श्रवांस्युत्तमानि धिष्वे'ति चन्द्रमा वा अस्य दिवि श्रव उत्तमः सह्येनममुष्मिँल्लोके श्रावयति द्वाभ्यामाप्याययति गायत्र्या च त्रिष्टुभा च तस्योक्तो बन्धुः ॥ ४६ ॥ अथातः सम्पदेव। चतस्रो लोगेष्टका उपदधाति षड्भृचेन निवपति द्वाभ्यामाप्याययति तद् द्वादश द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ ४७ ॥ (A)

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

(१) शु० य० सं० अ० १२ क० ११२। (२) शु० य० सं० अ० १२ क० ११२। (३) शु० य० सं० अ० १२ क० ११३। (४) शु० य० सं० अ० १२ क० ११३। (५) शु० य० सं० अ० १२ क० ११३। (६) शु० य० सं० अ० १२ क० ११३।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा– का० श० ६. २. १; कठ० सं० १६. १४; कपि० सं० २५. ५; मै० सं० ११. ७. १४; तै० सं० ४, २. ५।

[ आनडुहे चर्मणि प्रथमचितीष्टकानामुपधानादि ]

आप्यानवतीभ्यामभिमृश्य। प्रचर्य्यातिथ्येन * प्र-
चरत्यातिथ्येन प्रचर्य्य प्रवर्ग्योपसद्भ्यां प्रचरति प्रवर्ग्यो-
पसद्भ्यां प्रचर्य्यैतां चर्म्मणि चितिꣳ समवशमयन्ति तद्य-
च्चर्म्मणि चर्म्म वै रूपꣳ रूपाणामुपाप्त्यै लोमतो लोम वै रूपꣳ
रूपाणामुपाप्त्यै रोहिते रोहिते ह सर्वाणि रूपाणि सर्वेषाꣳ
रूपाणामुपाप्त्या ऽआनडुहे ऽग्निरेष यदनड्वानग्निरूपाणा-
मुपाप्त्यै प्राचीनग्रीवे तद्धि देवत्रा ॥ १ ॥ तदग्रेण गार्ह-
पत्यम् । अन्तर्वेद्युत्तरलोम प्राचीनग्रीवमुपस्तृणाति तदेतां
चितिꣳ समवशमयन्त्यथ प्रोक्षति तद्यत्प्रोक्षति शुद्ध-
मेवैतन्मेध्यं करोत्याज्येन तद्धि शुद्धं मेध्यमथो ऽअन-
भ्यारोहाय न हि किञ्चनान्यद्धविराज्येन प्रोक्षन्ति
तूष्णीमनिरुक्तं वै तद्यत्तूष्णीꣳ सर्वं वा ऽअनिरुक्तꣳ
सर्वेणैवैतच्छुद्धं मेध्यं करोत्यथो ऽअनभ्यारोहाय न हि
किञ्चनान्यद्धविस्तूष्णीं प्रोक्षन्ति ॥ २ ॥ यद्वेव प्रोक्षति ।
हविर्वा ऽएतत्तदेतदभिघारयति यद्वै हविरभ्यक्तं यदभि-
घारितं तज्जुष्टं तन्मेध्यमाज्येनाज्येन हि हविरभिघार-
यन्ति तूष्णीं तूष्णीꣳ हि हविरभिघारयन्ति दर्भैस्ते
हि शुद्धा मेध्या ऽअग्नेयꣳ हि देवानाम् ॥ ३ ॥ तदाहुः ।
यत्प्रथमामेव चितिं प्रोक्षति कथमस्यैष सर्वोऽग्निꣳ
प्रोक्षितो भवति कथं चर्म्मणि प्रणीतꣳ कथमङ्गरप्रणीत-

* प्रवर्ग्यविते [illegible] निष्पाद [illegible] [illegible] ( का० श्रौ० सू० १७ । १० )।

ऽइति यदेवात्र सर्वासां चितीनामिष्टकाः प्रोक्षत्येवमु हास्यैष सर्वोऽग्निः प्रोक्षितो भवत्येवं चर्म्मणि प्रणीत ऽएवमश्वप्रणीत ऽउद्यच्छन्त्येतां चितिम् ॥ ४ ॥ अथाहाग्निभ्यः प्रह्रियमाणेभ्योऽनुब्रूहीति । एतद्वै देवानुपप्रैष्यत ऽएतं यज्ञं तꣳस्यमानान्रक्षाꣳसि नाष्ट्रा ऽअजिघाꣳसन्न यक्ष्यद्ध्वे न यज्ञं तꣳस्यद्ध्व ऽइति तेभ्य ऽएतानग्नीनेता ऽइष्टका वज्रान्क्षुरपवीन्कृत्वा प्राहरꣳस्तैरेनानस्तृणवत तान्स्तृत्वाभयेऽनाष्ट्र ऽएतं यज्ञमतन्वत ॥ ५ ॥ तद्वा ऽएतत्क्रियते । यद्देवा ऽअकुर्वन्निदं नु तानि रक्षाꣳसि देवैरेवोपहतानि यत्त्वेतत्करोति यद्देवा ऽअकुर्वꣳस्तत्करवाणीत्यथो यदेव रक्षो यः पाप्मा तेभ्य ऽएतानग्नीनेता ऽइष्टका वज्रान्क्षुरपवीन्कृत्वा प्रहरति तैरेनान्स्तृणुते तान्स्तृत्वाभयेऽनाष्ट्र ऽएतं यज्ञं तनुते ॥ ६ ॥ तद्यदग्निभ्य ऽइति । बहवो ह्येतेऽग्नयो यदेताश्चितयोऽथ यत्प्रह्रियमाणेभ्य ऽइति प्र हि हरति ॥ ७ ॥ तद्धैकेऽन्वाहुः । 'पुरीष्यासो ऽअग्नयः प्रावणेभिः सजोषस' ऽइति प्रायणरूपं न तथा कुर्य्यादाग्नेयीरेव गायत्रीः कामवतीरनुब्रूया'दा ते वत्सो मनो यमत्तुभ्यं ता ऽअङ्गिरस्तमाग्निः प्रियेषु धामस्वि'ति ॥ ८ ॥ आग्नेयीरन्वाह । अग्निरूपाणामुपाप्त्यै कामवतीः कामानामुपाप्त्यै गायत्रीर्गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्रेतोभूतꣳ सिञ्चति तिस्रस्त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा

(१) ऋ० सं० ३ २१.४; शु० य० सं० १२. ५०। (२) शु० य० सं० अ० १२ क० ११५-११७।

तावतैवैनमेतद्रेतो भूतꣳ सिञ्चति ताꣳ सप्त सम्पद्यन्ते सह त्रिरनूक्ताभ्याꣳ सप्तचितिकोऽग्निः सप्तर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतꣳ सिञ्चति ... तद्भवत्युपाꣳश्ववन्वाह रेतो वा ऽअत्र यज्ञ ऽउपाꣳशु वै रेतः सिच्यते पश्चादनुब्रुवन्नन्वेति छन्दोभिरेवैतद्यज्ञं पश्चादभिरक्षन्नेति ॥ ९ ॥ अथाश्वः शुक्लं पुरस्तान्नयन्ति । एतद्वै देवा ऽअबिभयुर्य्यद्वै न ऽइह रक्षाꣳसि नाष्ट्रा न हन्न्युरिति त ऽएतं वज्रमपश्यन्नमुमेवादित्यमसौ वा ऽआदित्य ऽएषोऽश्वस्त ऽएतेन वज्रेण पुरस्ताद्रक्षाꣳसि नाष्ट्रा ऽअपहत्याभयेऽनाष्ट्रे स्वस्ति समाश्नुवत तथैवैतद्यजमान ऽएतेन वज्रेण पुरस्ताद्रक्षाꣳसि नाष्ट्रा ऽअपहत्याभयेऽनाष्ट्रे स्वस्ति समश्नुत ऽआगच्छन्त्यग्निं दक्षिणतः * पुच्छस्य चितिमुपनिदधत्युत्तरतोऽश्वमाक्रमयन्ति ॥ १० ॥ तमुत्तरार्द्धेनाग्नेः । अन्तरेण परिश्रितः प्राञ्चं नयन्ति तत्प्राच्यै दिशः पाप्मानमपहन्ति तं दक्षिणा तद्दक्षिणायै दिशः पाप्मानमपहन्ति तं प्रत्यञ्चं तत्प्रतीच्यै दिशः पाप्मानमपहन्ति तमुदञ्चं तदुदीच्यै दिशः पाप्मानमपहन्ति सर्वाभ्य ऽएवैतद्दिग्भ्यो रक्षाꣳसि नाष्ट्रा ऽअपहत्याथैनमुदञ्चं प्राञ्चं प्रसृजति तस्योक्तो बन्धुः ॥ ११ ॥ † तं प्रत्यञ्चं नयन्तम् । एतां चितिमवघ्रापयत्यसौ वा ऽआदित्य ऽएषोऽश्व ऽइमा ऽउ सर्वाः प्रजा या ऽइमा ऽइष्टकास्तद्यदवघ्रापयत्यसावेव तदादित्य-

* का० श्रौ० सू० १७ ३ २२।

† अत्र शतम् ४१००, का० श्रौ० सू० १७ ३. २६।

ऽइमाः प्रजा ऽअभिजिघ्रति तस्माद्ु हैतत्सर्वोऽस्मीति मन्यते प्रजापतेर्वीर्य्येण तद्यत्प्रत्यञ्चं स्यन्तमवघ्रापयति प्रत्यङ् ह्येवैष यन्निमाः सर्वाः प्रजा ऽअभिजिघ्रति॥ १२॥ यद्वेवावघ्रापयति। असौ वा ऽआदित्य ऽएषोऽश्व ऽइम ऽउ लोका ऽएताः स्वयमातृण्णास्तद्यदवघ्रापयत्यसावेव तदादित्य ऽइमाँल्लोकान्त्सूत्रे समावयते तद्यत्तत्सूत्रमुपरि तस्य बन्धुः ॥ १३ ॥ यद्वेवावघ्रापयति। अग्निर्देवेभ्य ऽउदक्रामत्सोऽपः प्राविशत्ते देवाः प्रजापतिमब्रुवँस्त्वमिममन्विच्छ स तुभ्यथं स्वाय पित्र ऽआविर्भविष्यतीति तमश्वः शुक्लो भूत्वान्वैच्छत्तमद्भ्य ऽउपोदासृप्तं पुष्करपर्णे विवेद तमभ्यवेक्षाञ्चक्रे स हैनमुदुवोष तस्मादुश्वः शुक्ल ऽउदुष्टमुख ऽइवाथो ह दुरक्षो भावुकस्तमु वा ऽअक्षत्वेव हिꣳसित्वेव मेने तꣳ होवाच वरं ते ददामीति ॥ १४ ॥ स होवाच। यस्त्वानेन रूपेणान्विच्छाद्विन्दादेव त्वा स ऽइति स यो हैनमेतेन रूपेणान्विच्छति विन्दति हैनं वित्त्वा हैवैनं चिनुते ॥ १५ ॥ स शुक्लः स्यात्। तद्ध्येतस्य रूपं य ऽएष तपति यदि शुक्लं न विन्देदप्यशुक्लः स्यादश्वस्त्वेव स्याद्यद्यश्वं न विन्देदप्यनड्वानेव स्यादाग्नेयो वा ऽअनड्वानग्निरु सर्वेषां पाप्मनामपहन्ता ॥ १६ ॥ अथातोऽधिरोहणस्यैव । तꣳ हैके पुरस्तात्प्रत्यञ्चमधिरोहन्ति पश्चाद्वा प्राञ्चं न तथा कुर्य्यादपशुरेष यदग्निर्य्यो वै पशुं पुरस्तात्प्रत्यञ्चमधिरोहति विषाणाभ्यां तꣳ हन्त्यथ यः पश्चात्प्राञ्चं

पद्भ्यां तमात्मन्नेवैनमारोहेयं वा ऽआत्मना पशुमारोहन्ति स पारयति स न हिनस्त्युत्तरतो यः हि कश्च पशुमारोहन्त्युत्तरत ऽएवैनमारोहन्त्यारुह्याग्निमौत्तरवेदिकं कूर्म्मं कृत्वात्मन्नग्निं गृह्णीत ऽआत्मन्नग्निं गृहीत्वा सत्यः साम गायति पुष्करपर्णमुपदधाति तस्यातः ॥ १७ ॥
अथैतः साये भूतेऽश्वं परिणयन्ति । एतद्वै देवा ऽअबिभयुर्य्यद्वै न ऽइममिह रक्षाꣳसि नाष्ट्रा न हन्युरिति तस्मा ऽएतं वृज्रमभिगोप्तारमकुर्वन्नमुमेवादित्यमसौ वा ऽआदित्य ऽएषोऽश्वस्तथैवास्मा ऽअयमेतं वज्रमभिगोप्तारं करोति ॥ १८ ॥ तं वा ऽउपास्तमयमादित्यस्य * परिणयति । एष वा ऽअस्य प्रत्यक्षं दिवा गोप्ता भवति रात्रिसाचयान्न्यु वै रक्षाꣳसि रात्र्या ऽएवास्मा ऽएतं वज्रमभिगोप्तारं करोति सर्वतः परिणयति सर्वत-ऽएवास्मा ऽएतं वज्रमभिगोप्तारं करोति त्रिष्कृत्वः परिणयति त्रिवृतमेवास्मा ऽएतं वज्रमभिगोप्तारं करोत्यथैनमुदञ्चं प्राञ्चं प्रसृजति तस्योक्तो बन्धुरथ स पुनर्विपल्ययते तस्योपरि बन्धुः ॥ १९ ॥ (B)

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥

कण्डिकासंख्या ॥ १०५ ॥

---

* का० श्रौ० सू० १० ३ ३५ ।

(B) एतत्प्रकारस्था विधया अन्यत्राऽप्युपलभ्यन्ते यथा— का० सं० १९. ३, ३, कठ सं० १९. ११, कपि० ३५. ३, मै० सं० ११. ७. ११ तै० सं० ५. २ ४ ।

[ अग्निग्रहणम्, सत्यसामगानम्, पुष्करपर्णोपधानं च ]

आत्मन्नग्निं गृह्णीते चेष्यन् । आत्मनो वा ऽएतमधिजनयति यादृशाद्वै जायते तादृङेव भवति स यदात्मन्नगृहीत्वाग्निं चिनुयान्मनुष्यादेव मनुष्यं जनयेन्मर्त्यान्मर्त्यमनपहतपाप्मनोऽनपहतपाप्मानमथ यदात्मन्नग्निं गृहीत्वा चिनोति तदग्नेरेवाध्यग्निं जनयत्यमृतादमृतमपहतपाप्मनोऽपहतपाप्मानः ॥ १ ॥ † स गृह्णाति । 'मयि गृह्णाम्यग्रे ऽअग्निमिति तदात्मन्नेवाग्रेऽग्निं गृह्णीते 'रायस्पोषाय सुप्रजास्त्वाय सुवीर्याये'ति तदु सर्वा ऽआशिष ऽआत्मन्गृह्णीते 'मामु देवताः सचन्तामि'ति तदु सर्वान्देवानात्मन्गृह्णीते तद्यत्किंचात्मनोऽधि जनयिष्यन्भवति तत्सर्वमात्मन्गृह्णीते स वै तिष्ठन्नात्मन्नग्निं गृहीत्वानूपविश्य चिनोति पशुरेष यदग्निस्तस्मात्पशुस्तिष्ठन्गर्भं धित्वानूपविश्य विजायते ॥ २ ॥ अथ सत्यं ‡ साम गायति । एतद्वै देवा ऽअब्रुवन्त्सत्यमस्य मुखं करवाम ते सत्यं भविष्यामः सत्यं नोऽनुवर्त्स्यति सत्यो नः स कामो भविष्यति यत्कामा ऽएतत्करिष्यामह ऽइति ॥ ३ ॥ त ऽएतत्सत्यᳪ साम पुरस्तादगायन् । तदस्य सत्यं मुखमकुर्वंस्ते सत्यमभवन्त्सत्यमेनाननुवर्तत सत्य ऽएषाᳪ स कामोऽभवद्यत्कामा ऽएतदकुर्वत ॥ ४ ॥

---

† का० श्रौ० सू० १७. ३. २७ ।

(१) शु० य० सं० अ० १३ क० १ । (२) शु० य० सं० अ० १३ क० १ ।
(३) शु० य० सं० अ० १३ क० १ ।

‡ का० श्रौ० सू० १७. ३. २८ ।

तथैवैतद्यजमानः । यत्सत्यꣳ साम पुरस्ताद्गायति तदस्य सत्यं मुखं करोति स सत्यं भवति सत्यमेनमनुवर्त्तते सत्योऽस्य स कामो भवति यत्काम ऽएतत्कुरुते ॥ ५ ॥ तद्यत्तत्सत्यम् । आप ऽएव तदापो हि वै सत्यं तस्माद्येनापो यन्ति तत्सत्यस्य रूपमित्याहुरप ऽएव तदस्य सर्वस्याग्रमकुर्वꣳस्तस्माद्यदैवापो यन्त्यथेदꣳ सर्वं जायते यदिदं किञ्च ॥ ६ ॥ अथ * पुष्करपर्णमुपदधाति । योनिर्वै पुष्करपर्णं योनिमेवैतदुपदधाति ॥ ७ ॥ यद्वेव पुष्करपर्णमुपदधाति । आपो वै पुष्करं तासामियं पर्णं यथा ह वाऽइदं पुष्करपर्णमप्स्वध्याहितमेवमियमप्स्वध्याहिता सेयं योनिरग्नेरियꣳ ह्यग्निरस्यै हि सर्वोऽग्निश्चीयत ऽइमामेवैतदुपदधाति तामनन्तर्हिताꣳ सत्यादुपदधातीमां तत्सत्ये प्रतिष्ठापयति तस्मादियꣳ सत्ये प्रतिष्ठिता तस्मादियमेव सत्यमियꣳ ह्येषां लोकानामद्धातमाम् ॥ ८ ॥ 'अपां पृष्ठमसि योनिरग्ने'रिति । अपाꣳ हीयं पृष्ठं योनिर्हीयमग्नेः 'समुद्रमभितः पिन्वमाना'ति समुद्रो हीमामभितः पिन्वते 'वर्द्धमानो महाँ२॥ ऽआ च पुष्कर' ऽइति वर्द्धमानो महीयस्व पुष्कर ऽइत्येत'द्दिवो मात्रया वरिम्णा प्रथस्वे'त्यनुविमाप्ट्वर्येसो वा ऽआदित्य ऽएषोऽग्निर्नो हैतमन्यो दिवो वरिमा यन्तुमर्हति द्योर्भूत्वैनं यच्छेत्येवैतदाह स्वराज्ञोपदधाति स्वाराज्यꣳ ह्यपाꣳ

* पुष्करपर्णमुपदधाति इत्यस्ये पूर्वंवत् ( का० श्रौ० सू० १७ ४ १ )।

( १ ) शु० य० सं० अ० १३ क० २। ( २ ) शु० य० स० अ० १३ क० २।

( ३ ) शु० य० स० अ० १३ क० २। ( ४ ) शु० य० स० अ० १३ क० २।

सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ ९ ॥ अथ † रुक्ममुपदधाति । असौ वा ऽआदित्य ऽएष रुक्म ऽएष हीमाः सर्वाः प्रजा ऽअतिरोचते रोचो ह वै तं रुक्म ऽइत्याचक्षते परोक्षं परोक्षकामा हि देवा ऽअमुमेवैतदादित्यमुपदधाति स हिरण्मयो भवति परिमण्डल ऽएकविंशतिनिर्बाधस्तस्योक्तो बन्धुरधस्तान्निर्बाधमुपदधाति रश्मयो वा ऽएतस्य निर्बाधा ऽअवस्तादु वा ऽएतस्य रश्मयः ॥ १० ॥ तं पुष्करपर्णे ऽउपदधाति । योनिर्वै पुष्करपर्णं योनावेवैनमेतत्प्रतिष्ठापयति ॥ ११ ॥ यद्वेव पुष्करपर्णे ऽउपदधाति । प्रतिष्ठा वै पुष्करपर्णमियं वै पुष्करपर्णमियमु वै प्रतिष्ठा यो वा ऽअस्यामप्रतिष्ठितोऽपि दूरे सन्नप्रतिष्ठित ऽएव स रश्मिभिर्वा ऽएषो ऽस्यां प्रतिष्ठितोऽस्यामेवैनमेतत्प्रतिष्ठायां प्रतिष्ठापयति ॥ १२ ॥ यद्वेव पुष्करपर्णे ऽउपदधाति । इन्द्रो वृत्रं हत्वा नास्तृपीति मन्यमानोऽपः प्राविशत्ता ऽअब्रवीद्बिभेमि वै पुरं मे कुरुतेति स योऽपाꣳ रस ऽआसीत्तमूर्ध्वꣳ समुदौहꣳस्तामस्मै पुरमकुर्वꣳस्तद्यदस्मै पुरमकुर्वꣳस्तस्मात्पुष्करं पुष्करꣳ ह वै तत्पुष्करमित्याचक्षते परोक्षं परोक्षकामा हि देवास्तद्यत्पुष्करपर्ण ऽउपदधाति यमेवास्मै तमापो रसꣳ समुदौहन्यामस्मै पुरमकुर्वꣳस्तस्मिन्नेवैनमेतत्प्रतिष्ठापयति ॥ १३ ॥ '(१)ब्रह्म जज्ञानं प्रथमं पुरस्ताद्' इति । असौ वा ऽआदित्यो ब्रह्माहरहः

† का० श्रौ० सू० १७. ४. २।
(१) शु० य० सं० अ० १३ क० ३।

पुरस्ताज्जायते 'वि सीमतः सुरुचो वेन ऽआवरि'ति मध्यं वै सीमेमे लोकाः सुरुचोऽसावादित्यो वेनो यद्वै प्रजिजनिषमाणोऽवेनत्तस्माद्वेनस्तानेष सीमतो मध्यतो विवृण्वन्नुदेति 'स बुध्न्या ऽउपमा ऽअस्य विष्ठा' ऽइति दिशो वाऽअस्य बुध्न्या ऽउपमा विष्ठास्ता ह्येष ऽउपवितिष्ठते 'सतश्च योनिमसतश्च विवरि'तीमे वै लोकाः सतश्च योनिरसतश्च यच्च ह्यस्ति यच्च न तदेभ्य ऽएव लोकेभ्यो जायते त्रिष्टुभोपदधाति त्रैष्टुभो ह्येष सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥१४॥ अथ * पुरुषमुपदधाति । स प्रजापतिः सोऽग्निः स यजमानः स हिरण्मयो भवति ज्योतिर्वै हिरण्यं ज्योतिरग्निरमृतꣳ हिरण्यममृतमग्निः पुरुषो भवति पुरुषो हि प्रजापतिः ॥ १५ ॥ यद्वेव पुरुषमुपदधाति । प्रजापतेर्विस्रस्ताद्रम्या तनूर्मध्यत ऽउदक्रामत्तस्यामेनमुत्क्रान्तायां देवा ऽअजहुस्तं यत्र देवाः समस्कुर्वंस्तदस्मिन्नेताꣳ रम्यां तनूं मध्यतोऽदधुस्तस्यामस्य देवा ऽअरमन्त तद्यदस्यैतस्याꣳ रम्यायां तन्वां देवा ऽअरमन्त तस्माद्धिरम्यꣳ हि रम्यꣳ ह वै तद्धिरण्यमित्याचक्षते परोक्षं परोक्षकामा हि देवास्तथैवास्मिन्नयमेताꣳ रम्यां तनूं मध्यतो दधाति तस्यामस्य देवा रमन्ते प्राणो वा ऽअस्य सा रम्या तनूः प्राणमेवास्मिन्नेतं मध्यतो दधाति ॥१६॥ तꣳ रुक्मस्योपदधाति । असौ वा ऽआदित्य ऽएष रुक्मोऽथ

(१) शु० य० सं० अ० १३ क० ३। (२) शु० य० सं० अ० १३ क० ३।
(१) शु० य० सं० अ० १३ क० ३।
* का० श्रौ० सू० १७, ४, ३।

य ऽएष ऽएतस्मिन्मण्डले पुरुषः स ऽएष तमेवैतदुप-
दधाति ॥ १७ ॥ उत्तानमुपदधाति । एतद्ध देवा ऽअब्रुव-
न्यदि वा ऽइमाववाञ्चा ऽउपधास्यामः सर्वमेवेदं प्रधक्ष्यतो
यद्यु पराञ्चौ पराञ्चावेव तप्स्यतो यद्यु सम्यञ्चावन्तरेवैता-
वेतज्ज्योतिर्भविष्यत्यथो ऽअन्योऽन्यथ्ठ हिथ्ठसिष्यत-
ऽइति तेऽर्वाञ्चमन्यमुपादधुः पराञ्चमन्यः स ऽएष
रश्मिभिरर्वाङ् तपति स्वमः प्राणैरेव ऽऊर्द्ध्वः पुरुषः
प्राञ्चमुपदधाति प्राङ् ह्येषोऽग्निश्चीयते ॥ १८ ॥ 'हिरण्यय-
गर्भः समवर्त्तताग्र' ऽइति । हिरण्ययगर्भो ह्येष समवर्त्त-
ताग्रे 'भूतस्य जातः पतिरेक ऽआसीदि'त्येष ह्यस्य सर्वस्य
भूतस्य जातः पतिरेक ऽआसी'त्स दाधार पृथिवीं द्यामु-
तेमामि'त्येष वै दिवं च पृथिवीं च दाधार 'कस्मै देवाय
हविषा विधेमे'ति प्रजापतिर्वै कस्तस्मै हविषा विधेमेत्ये-
तत् ॥ १९ ॥ 'द्रप्सश्चस्कन्द पृथिवीमनु द्यामि'ति । असौ
वा ऽआदित्यो द्रप्सः स दिवं च पृथिवीं च स्कन्दतीय-
मूमितीमा'मिमं च योनिमनु यश्च पूर्व' ऽइतीमं च
लोकममुं चेत्येतदथो यश्चेदमेतर्हि चीयते यश्चादः पूर्वम-
चीयतेति 'समानं योनिमनु सञ्चरन्तमि'ति समानथ्ठ
ह्येष एतं योनिमनु सञ्चरति 'द्रप्सं जुहोम्यनु सप्त होत्रा'
ऽइत्यसौ वा ऽआदित्यो द्रप्सो दिशः सप्त होत्रा ऽअमुं

(१) शु० य० सं० अ० १३ क० ४ । (२) शु० य० सं० अ० १३ क० ४ । (३) शु० य० सं० अ० १३ क० ४ । (४) शु० य० सं० अ० १३ क० ४ । (५) शु० य० सं० अ० १३ क० ५ । (६) शु० य० सं० अ० १३ क० ५ । (७) शु० य० सं० अ० १३ क० ५ । (८) शु० य० सं० अ० १३ क० ५ ।

तदादित्यं दिक्षु प्रतिष्ठापयति ॥ २० ॥ द्वाभ्यामुपदधाति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदुपदधाति त्रिष्टुब्भ्यां त्रैष्टुभो ह्येष सादयित्वा सूददोहसाधिवदति तस्योक्तो बन्धुः ॥ २१ ॥

अथ * साम गायति । एतद्वै देवा ऽएतं पुरुषमुपधाय तमेतादृशमेवापश्यन्यथैतच्छुष्कं फलकम् ॥ २२ ॥ तेऽब्रुवन् । उप तज्जानीत यथास्मिन्पुरुषे वीर्यं दधामेति तेऽब्रुवँश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्तदिच्छत यथास्मिन्पुरुषे वीर्यं दधामेति ॥ २३ ॥ ते चेतयमानाः । एतत्सामापश्यँस्तदगायँस्तदस्मिन्वीर्यमदधुस्तथैवास्मिन्नयमेतद्दधाति पुरुषे गायति पुरुषे तद्वीर्यं दधाति चित्रे गायति सर्वाणि हि चित्राण्यग्निस्तमुपधाय न पुरस्तात्परीयाद्नेन्मायमग्निर्हिनसदिति ॥ २४ ॥

अथ † सर्पनामैरुपतिष्ठते । इमे वै लोकाः सर्पास्ते हानेन सर्वेण सर्पन्ति यदिदं किञ्च सर्वेषामु हैष देवानामात्मा यदग्निस्ते देवा ऽएतमात्मानमुपधायाबिभयुर्यद्वै न ऽइमे लोका ऽअनेनात्मना न सर्पेयुरिति ॥ २५ ॥ त ऽएतानि सर्पनामान्यपश्यन् । तैरुपातिष्ठन्त तैरस्मा ऽइमाँल्लोकानस्थापयँस्तैरनमयन्यदनमयँस्तस्मात्सर्पनामानि तथैवैतद्यजमानो यत्सर्पनामैरुपतिष्ठत ऽइमानेवास्मा ऽएतल्लोकान्स्थापयतीमाँल्लोकान्नमयति तथो हास्यैत ऽएतेना-

---

* का० श्रौ० सू० १७, ४ ४।
† का० श्रौ० सू० १७ ४. ६।

स्मना न सर्प्पन्ति ॥ २६ ॥ यद्वेव सर्प्पनामैरुपतिष्ठते । इमे वै लोकाः सर्प्पा यद्धि किञ्च सर्प्पत्येष्वेव तँल्लोकेषु सर्प्पति तद्यत्सर्प्पनामैरुपतिष्ठते यैवैषु लोकेषु नाष्ट्रा यो ऽव्यद्वरो या शिमिदा तदेवैतत्सर्वꣳ शमयति ॥ २७ ॥ 'नमोऽस्तु सर्प्पेभ्यः । ये के च पृथिवीमनु । ये ऽअन्तरिक्षे ये दिवि तेभ्यः सर्प्पेभ्यो नम' ऽइति य ऽएवैषु त्रिषु लोकेषु सर्प्पास्तेभ्य ऽएतन्नमस्करोति ॥ २८ ॥ 'या-ऽइषवो यातुधानानामि'ति । यातुधानप्रेषिता हैके दशन्ति 'ये वा वनस्पतीँ१ रनु । ये वावटेषु शेरते तेभ्यः सर्प्पेभ्यो नम' ऽइति ये चैव वनस्पतिषु सर्प्पा ये चावटेषु शेरते तेभ्य ऽएतन्नमस्करोति ॥ २९ ॥ 'ये वामी रोचने दिवः । ये वा सूर्य्यस्य रश्मिषु । येषामप्सु सदस्कृतं तेभ्यः सर्प्पेभ्यो नम' ऽइति यत्र-यत्रैते तदेवैभ्य ऽएतन्नमस्करोति नमो नम ऽइति यज्ञो वै नमो यज्ञेनैवैनानेतन्नमस्कारेण नमस्यति तस्मादु ह नायज्ञियं ब्रूयान्नमस्त ऽइति यथा हैनं ब्रूयाद्यज्ञस्त ऽइति तादृक्तत् ॥ ३० ॥ त्रिभिरुपतिष्ठते । त्रय ऽइमे लोका ऽअथो त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मा ऽएतदिमाँल्लोकान्त्स्थापयत्यथो तावतैवैतदिदꣳ सर्वꣳ शमयति तिष्ठन्नुपतिष्ठते तिष्ठन्तीव वा ऽइमे लोका ऽअथो तिष्ठन्वै वीर्य्यवत्तरः ॥ ३१ ॥ * अथैनमुपविश्याभिजुहोति

(१) शु॰ य॰ सं॰ अ॰ १३ क॰ ६। (२) शु॰ य॰ सं॰ अ॰ १३ क॰ ७।
(३) शु॰ य॰ सं॰ अ॰ १३ क॰ ७। (४) शु॰ य॰ सं॰ अ॰ १३ क॰ ८।
* का॰ श्रौ॰ सू॰ १७. ४. ७।

आज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः सर्वतः परिसर्प्पं सर्वाभ्य ऽएवैनमेतद्दिग्भ्योऽन्नेन प्रीणाति ॥ ३२ ॥ यद्वेवैनमभिजुहोति * । एतद्वै देवा ऽएतमात्मानमुपधाया-विभयुर्यद्वै न ऽइममिह रक्षाꣳसि नाष्ट्रा न हन्न्युरिति त ऽएतान्नाक्षोघ्नान्प्रतिसरानपश्यन्(१) "कृणुष्व पाजः प्रसितिं न पृथ्वीमि"ति राक्षोघ्ना वै प्रतिसरास्त ऽएतैः प्रतिसरैः सर्वाभ्यो दिग्भ्यो रक्षाꣳसि नाष्ट्रा ऽअपहत्या-ऽभयेऽनाष्ट्र ऽएतमात्मानꣳ समस्कुर्वत तथैवैतद्यजमान-ऽएतैः प्रतिसरैः सर्वाभ्यो दिग्भ्यो रक्षाꣳसि नाष्ट्रा-ऽअपहत्याऽभयेऽनाष्ट्र ऽएतमात्मानꣳ संस्कुरुते ॥ ३३ ॥ आज्येन जुहोति । † वज्रो वा ऽआज्यं वज्रेणैवैतद्रक्षाꣳसि नाष्ट्रा ऽअपहन्ति पञ्चगृहीतेन पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा ताव-तैवैतद्रक्षाꣳसि नाष्ट्रा ऽअपहन्त्याग्नेयीभिरग्निर्वै ज्योती रक्षोहाग्निनैवैतद्रक्षाꣳसि नाष्ट्रा ऽअपहन्ति त्रिष्टुब्भिर्वज्रो वै त्रिष्टुब्वज्रेणैवैतद्रक्षाꣳसि नाष्ट्रा ऽअपहन्ति सर्वतः परिसर्प्पं सर्वाभ्य ऽएवैतद्दिग्भ्यो रक्षाꣳसि नाष्ट्रा-ऽअपहन्ति ॥ ३४ ॥ पश्चादग्नेः प्राङासीनः । अथोत्तरतो दक्षिणाथ पुरस्तात्प्रत्यङ्ङथ जघनेन परीत्य दक्षिणत-ऽउदङ्ङासीनस्तद्दक्षिणावृत्तद्धि ‡ देवत्राथानुपरीत्य पश्चा-

---

* का॰ श्रौ॰ सू॰ १७ ४ ७।

(१) शु॰ य॰ सं॰ अ॰ ११ क॰ ८-१२, ऋ॰ सं॰ ४ ४ १।

† तैत्तिरीयकेऽपि मूलस्थ यजुष्पाठस्य प्रसिद्धम् ( तै॰ सं॰ ६.२ २.७ )।

‡ का॰ श्रौ॰ सू॰ १७. ४. ८-१०।

स्याङ्गासीनस्तथो हास्यैतत्प्रागेव कर्म्म कृतं भवति ॥ ३५ ॥ अथ * स्रुचा ऽउपदधाति । बाहू वै स्रुचौ बाहू ऽएवास्मिन्नेतत्प्रतिदधाति ते यत्स्रुचौ भवतः स्रुचौ हि बाहू ऽइदमेव † कपुत्सलमयं दण्डो द्वे भवतो द्वौ हीमौ बाहू पार्श्वत ऽउपदधाति पार्श्वतो हीमौ बाहू ॥ ३६ ॥ कार्ष्मर्य्यमयीं ‡ दक्षिणत ऽउपदधाति । एतद्वै देवा ऽअबिभयुर्यद्वै नो यज्ञं दक्षिणतो रक्षांसि नाष्ट्रा न हन्युरिति त ऽएतं रक्षोहणं वनस्पतिमपश्यन्कार्ष्मर्य्यं त ऽएतेन वनस्पतिना दक्षिणतो रक्षांसि नाष्ट्रा ऽअपहत्याभयेऽनाष्ट्र ऽएतं यज्ञमतन्वत तथैवैतद्यजमान ऽएतेन वनस्पतिना दक्षिणतो रक्षांसि नाष्ट्रा ऽअपहत्याभयेऽनाष्ट्र ऽएतं यज्ञं तनुत ऽआज्येन पूर्णा भवति वज्रो वा ऽआज्यं वज्रेणैवैतद्दक्षिणतो रक्षांसि नाष्ट्रा ऽअपहन्ति ॥ ३७ ॥ अथौदुम्बरीमुत्तरत ऽउपदधाति §। ऊर्ग्वै रस ऽउदुम्बर ऽऊर्जमेवास्मिन्नेतद्रसं दधाति दध्ना पूर्णा भवति रसो वै दधि रसमेवास्मिन्नेतद्दधाति ॥ ३८ ॥ यद्वेव स्रुचा ऽउपदधाति । प्रजापतेर्विस्रस्तस्याग्निस्तेज ऽआदाय दक्षिणाकर्षत्सोऽत्रोदरमयत्कृष्टोदरमतस्तस्मात्कार्ष्मर्य्योऽथास्येन्द्र ऽओज ऽआदायोदङ्ङुदक्रामत्स ऽउदुम्बरोऽभवत् ॥ ३९ ॥ तावब्रवीत् । उप मेतं प्रति म ऽएतद्धत्तं येन मे युवमुद-

---

* का० श्रौ० सू० १७. ४. ११।

† 'क पुत्सलम्' इति 'ख-ग' पुस्तकयो ।

‡ का० श्रौ० सू० १७. ४. ११।

§ का० श्रौ० सू० १७. ४. ११।

क्रमिष्टमिति ताभ्यां वै नौ सर्वमन्नं प्रयच्छेति तौ वै मा बाहू भूत्वा प्रपद्येथामिति तथेति ताभ्यां वै सर्वमन्नं प्रायच्छत्तावेनं बाहू भूत्वा प्रापद्येतां तस्माद्बाहुभ्यामेवान्नं क्रियते बाहुभ्यामद्यते बाहुभ्याᳬं हि स सर्वमन्नं प्रायच्छत् ॥ ४० ॥ स कार्ष्मर्य्यमयीं दक्षिणत ऽउपदधाति । 'अग्नेष्ट्वा' तेजसा सादयामी'ति यदेवास्य तदग्निस्तेज ऽआदाय दक्षिणाकर्षत्तदस्मिन्नेतत्प्रतिदधा'त्यग्निर्म्मूर्द्धा दिवः ककुदि'त्येष ऽउ सोऽग्निर्गायत्र्या गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतदुपदधाति घृतेन पूर्णा भवत्याग्नेयं वै घृतᳬं स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति ॥ ४१ ॥ अथौदुम्बरीमुत्तरत * ऽउपदधाति । 'इन्द्रस्य त्वौजसा सादयामी'ति यदेवास्य तदिन्द्र ऽओज ऽआदायोदङ्ङुदक्रामत्तदस्मिन्नेतत्प्रतिदधाति 'भुवो यज्ञस्य रजसश्च नेते'त्येष ऽउ स ऽइन्द्रः सा यदाग्नेय्यग्निकर्म्म ह्यथ यन्निरुद्धैन्द्र्यैन्द्रो हीन्द्र ऽऐन्द्राग्नोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतदुपदधातीन्द्राग्नी वै सर्वे देवाः सर्वदेवत्योऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनामेतदुपदधाति दध्ना पूर्णा भवत्यैन्द्रं वै दधि स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति ॥ ४२ ॥ तावस्यैताविन्द्राग्नी ऽएव बाहू । तावेनं तेजसा च वीर्य्येण च सह प्रपद्येते स सम्प्रत्युरः

(१) शु० य० सं० अ० १३ क० १३। (२) शु० य० सं० अ० १३ क० १४।
* का० श्रौ० सू० १७. ४ ३३।
(३) शु० य० सं० अ० १३ क० १४। (४) शु० य० सं० अ० १३ क० १५।

पुरुषमाकाशस्य यन्नाभ्याप्नोति तदालिख्यैने ऽउपदधात्येष हेतयोर्लोकः ॥४३॥ [ अर्धप्रपाठकः ४३॥ ] ते हैके तिरश्च्या ऽउपदधति । तिर्य्यञ्चौ वा ऽइमौ बाहू ऽइति न तथा कुर्य्यात्प्राच्यावेवोपदध्यात्प्राङ् ह्येषोऽग्निश्चीयतेऽथो ,ऽएवं ह्वै बाहू वीर्य्यवत्तरौ ते नानोपदधाति नाना सादयति नाना सूददोहसाधिवदति नाना हीमौ बाहू ॥ ४४ ॥ तदाहुः । नैतस्य पुरुषस्य बाहू कुर्य्यादेतौ वा ऽअस्य बाहू ये-ऽएते स्रुचौ नेदतिरेचयानीति स वै कुर्य्यादेवैतौ वा-ऽअस्य बाहू ऽअन्वेते स्रुचावथो ऽएतौ पक्षावथो यान्ये-तस्मिन्नग्नौ रूपाण्युपधास्यन्भवति यान्स्तोमान्यानि पृष्ठानि यानि च्छन्दांस्येतयोरेव सा संस्कृतिरेतयोर्वृद्धि-स्तस्माद् कुर्य्यादेवैतस्य पुरुषस्य बाहू ॥ ४५ ॥ (A)

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ स्वयमातृण्णेष्टकोपधानादि ]

स्वयमातृण्णामुपदधाति । इयं वै स्वयमातृण्णेमा-मेवैतदुपदधाति तामनन्तर्हितां पुरुषादुपदधात्यन्नं वै स्वय-मातृण्णेयं वै स्वयमातृण्णेयमु वा ऽअन्नमस्यां ह्येव सर्व-मन्नं पच्यतेऽनन्तर्हितमेवास्मादेतदन्नं दधात्युत्तरामुत्तर-मेवास्मादेतदन्नं दधाति ॥ १ ॥ यद्वेव स्वयमातृण्णामुप-

(A) एतद्ब्राह्मणस्था नियमा अन्यत्राप्युपलभ्यन्ते यथा—का० श्रौ० १७. ३. २,४; का० सं० १९. १५,१६; कपि० ३५. ६; मै० सं० ३. ३. ७, १५; तै० सं० ५. २. ८ ।

दधाति । प्राणो वै स्वयमातृण्णा प्राणो ह्येवैतत्स्वयमात्मन-
ऽआतृन्ते प्राणमेवैतदुपदधाति तामनन्तर्हितां पुरुषादुप-
दधाति प्राणो वै स्वयमातृण्णेयं वै स्वयमातृण्णेयमु वै
प्राणो यद्धि किञ्च प्राणीयं तत्सर्वं बिभर्त्यनन्तर्हितमे-
वास्मादेतत्प्राणं दधात्युत्तरामुत्तरमेवास्मादेतत्प्राणं दधाति
॥ २ ॥ यद्वेव स्वयमातृण्णामुपदधाति । प्रजापतिं विस्रस्तं
देवता ऽआदाय व्युदक्रामँस्तासु व्युत्क्रामन्तीषु प्रति-
ष्ठामभिपद्योपाविशत् ॥ ३ ॥ स यः स प्रजापतिर्व्यस्रंस-
तत । अयमेव स योऽयमग्निश्चीयतेऽथ या सा
प्रतिष्ठैषा सा प्रथमा स्वयमातृण्णा तद्यदेताम्त्रोपदधाति
यदेवास्यैषात्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेतामत्रो-
पदधाति ॥ ४ ॥ तां वै प्रजापतिनोपदधाति । प्रजापति-
र्ह्येवैतत्स्वयमात्मनः प्रत्यधत्त 'ध्रुवासी'ति स्थिरासीत्ये-
तदथो प्रतिष्ठितासीति 'धरुणे'ति प्रतिष्ठा वै धरुण-
'मास्तृता विश्वकर्मणे'ति प्रजापतिर्वै विश्वकर्मा तेनास्तृ-
तासीत्येतत्'इमा त्वा समुद्र ऽउद्धधीन्मा सुपर्ण' ऽइति
रुक्मो वै समुद्रः पुरुषः सुपर्णस्तौ त्वा मोद्वधिष्टामित्येत-
'दव्यथमाना पृथिवीं दृंहे'ति यथैव यजुस्तथा बन्धुः
॥ ५ ॥ 'प्रजापतिष्ट्वा सादयत्वि'ति । प्रजापतिर्ह्येतां प्रथमां
चितिमपश्यत्'दपां पृष्ठे समुद्रस्येमन्नि'त्यपाᳩ हीयं पृष्ठᳩ

(१) शु० य० सं० अ० १३ क० १५। (२) शु० य० सं० अ० १३ क० १६।
(३) शु० य० सं० अ० १३ क० १६। (४) शु० य० सं० अ० १३ क० १६।
(५) शु० य० सं० अ० १३ क० १६। (६) शु० य० सं० अ० १३ क० १७।
(७) शु० य० सं० अ० १३ क० १७।

'एका[1]दशभिरस्तुवते'ति । दश प्राणा ऽआत्मैकादशस्तेनैव तदस्तुवत । ऽऋतवो[2]ऽसृज्यन्ते'त्यृतवोऽत्रासृज्य'न्तार्त्तवा[3]ऽअधिपतय ऽआसन्नि'त्यार्त्तवा ऽअत्राधिपतय ऽआसन् ॥ ८ ॥ 'त्रयोद[4]शभिरस्तुवते'ति । दश प्राणा द्वे प्रतिष्ठे ऽआत्मा त्रयोदशस्तेनैव तदस्तुवत 'मासा[5] ऽअसृज्यन्ते'ति मासा ऽअत्रासृज्यन्त 'संवत्स[6]रोऽधिपतिरासीदि'ति संवत्सरोऽत्राधिपतिरासीत् ॥ ९ ॥ 'पञ्चद[7]शभिरस्तुवते'ति । दश हस्त्या ऽअङ्गुलयश्चत्वारि दोर्बाहवाणि यदूर्ध्वं नाभेस्तत्पञ्चदशं तेनैव तदस्तुवत 'क्षत्र[8]मसृज्यते'ति क्षत्रमत्रासृज्य'तेन्द्रो[9]ऽधिपतिरासीदि'तीन्द्रोऽत्राधिपतिरासीत् ॥ १० ॥ 'सप्तद[10]शभिरस्तुवते'ति । दश पाद्या ऽअङ्गुलयश्चत्वार्यूर्वष्ठीवानि द्वे प्रतिष्ठे यदवाङ्नाभेस्तत्सप्तदशं तेनैव तदस्तुवत 'ग्राम्या[11]ः पशवोऽसृज्यन्ते'ति ग्राम्याः पशवोऽत्रासृज्यन्त 'बृहस्[12]पतिरधिपतिरासीदि'ति बृहस्पतिरत्राधिपतिरासीत् ॥ ११ ॥ 'नवद[13]शभिरस्तुवते'ति । दश हस्त्या ऽअङ्गुलयो नव प्राणास्तैरेव तदस्तुवत 'शूद्रार्यौ[14]वसृज्येताम्'ति शूद्रार्यावत्रासृज्येता'महोरात्रे ऽअधि[15]पत्नी ऽआस्ता-

(१) शु॰ य॰ सं॰ अ॰ १४ क॰ २९ । (२) शु॰ य॰ सं॰ अ॰ १४ क॰ २९ ।
(३) शु॰ य॰ सं॰ अ॰ १४ क॰ २९ । (४) शु॰ य॰ सं॰ अ॰ १४ क॰ २९ ।
(५) शु॰ य॰ सं॰ अ॰ १४ क॰ २९ । (६) शु॰ य॰ सं॰ अ॰ १४ क॰ २९ ।
(७) शु॰ य॰ सं॰ अ॰ १४ क॰ २९ । (८) शु॰ य॰ सं॰ अ॰ १४ क॰ २९ ।
(९) शु॰ य॰ सं॰ अ॰ १४ क॰ २९ । (१०) शु॰ य॰ सं॰ अ॰ १४ क॰ २९ ।
(११) शु॰ य॰ सं॰ अ॰ १४ क॰ २९ । (१२) शु॰ य॰ सं॰ अ॰ १४ क॰ २९ ।
(१३) शु॰ य॰ सं॰ अ॰ १४ क॰ ३० । (१४) शु॰ य॰ सं॰ अ॰ १४ क॰ ३० ।
(१५) शु॰ य॰ सं॰ अ॰ १४ क॰ ३० ।

मि'त्यहोरात्रे ऽअत्राधिपत्नी ऽआस्ताम् ॥ १२ ॥ 'एकविꣳशत्यास्तुवते'ति । दश हस्त्या ऽअङ्गुलयो दश पाद्या ऽआत्मैकविꣳशस्तेनैव तदस्तु'वतैकशफाः पशवोऽसृज्यन्ते'त्येकशफाः पशवोऽत्रासृज्यन्त 'वरुणोऽधिपतिरासीदि'ति वरुणोऽत्राधिपतिरासीत् ॥ १३ ॥ 'त्रयोविꣳशत्यास्तुवते'ति । दश हस्त्या ऽअङ्गुलयो दश पाद्या द्वे प्रतिष्ठे ऽआत्मा त्रयोविꣳशस्तेनैव तदस्तुवत 'क्षुद्राः पशवोऽसृज्यन्ते'ति क्षुद्राः पशवोऽत्रासृज्यन्त 'पूषाधिपतिरासीदि'ति पूषात्राधिपतिरासीत् ॥ १४ ॥ 'पञ्चविꣳशत्यास्तुवते'ति । दश हस्त्या ऽअङ्गुलयो दश पाद्याश्चत्वार्यङ्गान्यात्मा पञ्चविꣳशस्तेनैव त'दस्तुवतारण्याः पशवोऽसृज्यन्ते'त्यारण्याः पशवोऽत्रासृज्यन्त 'वायुरधिपतिरासीदि'ति वायुरत्राधिपतिरासीत् ॥ १५ ॥ 'सप्तविꣳशत्यास्तुवते'ति । दश हस्त्या ऽअङ्गुलयो दश पाद्याश्चत्वार्यङ्गानि द्वे प्रतिष्ठे ऽआत्मा सप्तविꣳशस्तेनैव तदस्तुवत 'द्यावापृथिवी व्यैतामि'ति द्यावापृथिवी ऽअत्र व्यैतां 'वसवो रुद्रा ऽआदित्या ऽअनुव्यायन्नि'ति वसवो रुद्रा ऽआदित्या ऽअ'त्रानुव्यायꣳस्त ऽएवाधिपतय ऽआसन्नि'ति त ऽउ-

(१) शु० य० सं० अ० १४ कं० ३० । (२) शु० य० सं० अ० १४ कं० ३० ।
(३) शु० य० सं० अ० १४ कं० ३० । (४) शु० य० सं० अ० १४ कं० ३० ।
(५) शु० य० सं० अ० १४ कं० ३० । (६) शु० य० सं० अ० १४ कं० ३० ।
(७) शु० य० सं० अ० १४ कं० ३० । (८) शु० य० सं० अ० १४ कं० ३० ।
(९) शु० य० सं० अ० १४ कं० ३० । (१०) शु० य० सं० अ० १४ कं० ३० ।
(११) शु० य० सं० अ० १४ कं० ३० । (१२) शु० य० सं० अ० १४ कं० ३० ।
(१३) शु० य० सं० अ० १४ कं० ३० ।

ऽएवात्राधिपतय ऽआसन् ॥ १६ ॥ 'नवविꣳशत्यास्तुव-
ते'ति । दश हस्त्या ऽअङ्गुलयो दश पाद्या नव प्राणा-
स्तैरेव तदस्तुवत 'वनस्पतयोऽसृज्यन्ते'ति वनस्पतयो-
ऽत्रासृज्यन्त 'सोमोऽधिपतिरासीदि'ति सोमोऽत्राधिपति-
रासीत् ॥ १७ ॥ 'एकत्रिꣳशतास्तुवते'ति । दश हस्त्या-
ऽअङ्गुलयो दश पाद्या दश प्राणा ऽआत्मैकत्रिꣳशस्ते-
नैव तदस्तुवत 'प्रजा ऽअसृज्यन्ते'ति प्रजा ऽअत्रासृज्यन्त
'यवाश्चायवाश्चाधिपतय ऽआसन्नि'ति पूर्वपक्षापरपक्षा-
ऽएवात्राधिपतय ऽआसन् ॥ १८ ॥ 'त्रयस्त्रिꣳशतास्तुव-
ते'ति । दश हस्त्या ऽअङ्गुलयो दश पाद्या दश प्राणा
द्वे प्रतिष्ठे ऽआत्मा त्रयस्त्रिꣳशस्तेनैव तदस्तुवत 'भूता-
न्यशाम्यन्नि'ति सर्वाणि भूतान्यत्राशाम्यन्'प्रजापतिः
परमेष्ठ्यधिपतिरासीदि'ति प्रजापतिः परमेष्ठ्यत्राधि-
पतिरासीत् ॥ १९ ॥ ता वा ऽएताः । सप्तदशेष्टका-
ऽउपदधाति सप्तदशो वै संवत्सरः प्रजापतिः स प्रज-
नयिता तदेतेन वै सप्तदशेन संवत्सरेण प्रजापतिना
प्रजनयित्रैताः प्रजाः प्राजनयद्यत्प्राजनयदसृजत तद्य-
दसृजत तस्मात्सृष्टयस्ताः सृष्ट्वात्मन्प्रापादयत तथैवैतद्य-
जमान ऽएतेन सप्तदशेन संवत्सरेण प्रजापतिना प्रजन-

(१) शु० य० सं० अ० १४ क० ३१ । (२) शु० य० सं० अ० १४ क० ३१ ।
(३) शु० य० सं० अ० १४ क० ३१ । (४) शु० य० सं० अ० १४ क० ३१ ।
(५) शु० य० सं० अ० १४ क० ३१ । (६) शु० य० सं० अ० १४ क० ३१ ।
(७) शु० य० सं० अ० १४ क० ३१ । (८) शु० य० सं० अ० १४ क० ३१ ।
(९) शु० य० सं० अ० १४ क० ३१ ।

यित्रैताः प्रजाः प्रजनयति ताः सृष्ट्वात्मन्प्रपादयते रेतःसिचोर्वेलया पृष्ट्यो वै रेतःसिचौ मध्यमु पृष्ट्यो मध्यत-ऽएवास्मिन्नेताः प्रजाः प्रपादयति सर्वत ऽउपदधाति सर्वत ऽएवास्मिन्नेताः प्रजाः प्रपादयति ॥ २० ॥ (C)

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥

कण्डिकासंख्या ॥ १०५ ॥

---

[ स्तोमचित्यर्थवादः ]

अथातोऽन्वाहृतम् । त्रिवृद्वतीं पुरस्तादुपदधात्येकविंशवतीं पश्चात्पञ्चदशवतीं दक्षिणतः सप्तदशवतीमुत्तरतः ॥ १ ॥ एतद्वै प्रजापतिम् । त्रिवृद्वत्यामुपहितायां पञ्चदशवत्यां मृत्युरसीददिमामत ऽउपधास्यते तमत्र ग्रहीष्यामीति तं ग्रापश्यत्तं प्रख्याय परिक्रम्यैकविंशवतीमुपाधत्तैकविंशवतीं मृत्युरागच्छत्पञ्चदशवतीमुपाधत्त पञ्चदशवतीं मृत्युरागच्छत्सप्तदशवतीमुपाधत्त सोऽत्रैव मृत्युं न्यकरोदत्रामोहयत्तथैवैतद्यजमानोऽत्रैव सर्वान्पाप्मनो निकरोत्यत्र मोहयति ॥ २ ॥ अथोत्तराः । त्रिवृद्वत्यामेव त्रिवृद्वतीमनूपदधात्येकविंशवत्यामेकविंशवतीं पञ्चदशवत्याᳪं सप्तदशवतीᳪं सप्तदशवत्यां पञ्चदशवतीं

---

(C) एतत्प्रकरणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० शा० १०. ४. १, कठ० सं० १५. ५, कपि० क० २६. ४, मै० सं० ११. ८. ६, तै० सं० ४. ३. १० ।

ता यदेवं व्यतिहारमुपदधाति तस्माद्दक्षिणया स्तोमीया-
ऽअथो यदेते स्तोमा ऽअतोऽन्यथानुपूर्वं तस्माद्वेवाक्षिण-
यास्तोमीया ऽअथो ऽएवं देवा ऽउपादधतेतरथासुरास्ततो
देवा ऽअभवन्पराऽसुरा भवत्यात्मना परास्य द्विषन्भ्रा-
तृव्यो भवति य ऽएवं वेद ॥ ३ ॥ स ऽएष पशुर्यदग्निः ।
सोऽत्रैव सर्वः कृत्स्नः संस्कृतस्तस्य त्रिवृद्वत्यावेव शिरस्ते
यत्त्रिवृद्वत्यौ भवतस्त्रिवृद्धि शिरो द्वे भवतो द्विकपालꣳ
हि शिरः पूर्वार्द्ध ऽउपदधाति पुरस्ताद्धीदꣳ शिरः ॥ ४ ॥
प्रतिष्ठैकविꣳशवत्यौ । ते यदेकविꣳशवत्यौ भवतः
प्रतिष्ठा ह्येकविꣳशो द्वे भवतो द्वन्द्वꣳ हि प्रतिष्ठा पश्चा-
दुपदधाति पश्चाद्धीयं प्रतिष्ठा ॥ ५ ॥ बाहू पञ्चदशवत्यौ ।
ते यत्पञ्चदशवत्यौ भवतः पञ्चदशौ हि बाहू द्वे भवतो
द्वौ हीमौ बाहू पार्श्वत ऽउपदधाति पार्श्वतो हीमौ बाहू
॥ ६ ॥ अन्नꣳ सप्तदशवत्यौ । ते यत्सप्तदशवत्यौ भवतः
सप्तदशꣳ ह्यन्नं द्वे भवतो द्व्यक्षरꣳ ह्यन्नं ते ऽअनन्तर्हिते
पञ्चदशवतीभ्यामुपदधात्यनन्तर्हितं तद्बाहुभ्यामन्नं
दधाति यान्ये पञ्चदशवत्यौ भवतोऽन्तरे सप्तदशवत्यौ
बाहुभ्यां तदुभयतोऽन्नं परिगृह्णाति ॥ ७ ॥ अथ या मध्य-
ऽउपदधाति । स ऽआत्मा ता रेतःसिचोर्वेलयोपदधाति
पृष्टयो वै रेतःसिचौ मध्यमु पृष्टयो मध्यतो ह्ययमात्मा
सर्वत ऽउपदधाति सर्वतो ह्ययमात्माथ यदतोऽन्यदति-
रिक्तं तद्यद्वै देवानामतिरिक्तं छन्दाꣳसि तानि तद्यानि
तानि च्छन्दाꣳसि पशवस्ते तद्ये ते पशवः पुण्यास्ता

लक्ष्म्यस्तयास्ताः पुण्णया लक्ष्म्योऽसौ स ऽआदित्यः स-ऽआसामेष दक्षिणतः ॥ ८ ॥ ता हैकेऽनन्तर्हिताः । त्रिवृद्वतीभ्यामुपदधति जिह्वा हनू ऽइति वदन्तो याश्चतुर्दश ते हनू याः षट् सा जिह्वेति न तथा कुर्य्यादिति ते रेचयन्ति यथा पूर्व्वयोर्हन्न्वोरपरे हनू ऽअनुपदध्याद्यथा पूर्व्वस्यां जिह्वायामपरां जिह्वामनूपदध्यात्तादृक्तद्यत्राहैव शिरस्तदेव हनू तज्जिह्वा ॥ ९ ॥ अस्मिन्नु हैकेऽवान्तरदेश ऽउपदधाति । असौ वा ऽआदित्य ऽएता ऽअमुं तदादित्यमेतस्यां दिशि दध्म ऽइति न तथा कुर्य्यादन्यानि वाव तानि कर्म्माणि यैरेतमत्र दधाति ॥ १० ॥ दक्षिणत ऽउ हैक ऽउपदधाति । तदेताः पुण्णया लक्ष्मीर्द्दक्षिणतो दध्मह ऽइति तस्माद्यस्य दक्षिणतो लक्ष्म भवति तं पुण्णयलक्ष्मीक ऽइत्याचक्षत ऽउत्तरतस्त्रिया ऽउत्तरत ऽआयतना हि स्त्री तत्तत्कृतमेव पुरस्तात्त्वेवैना ऽउपदध्याद्यत्राहैव शिरस्तदेव हनू तज्जिह्वाऽथैताः पुण्णया लक्ष्मीर्म्मुखतो धत्ते तस्माद्यस्य मुखे लक्ष्म भवति तं पुण्णयलक्ष्मीक ऽइत्याचक्षते ॥ ११ ॥ सैषा ब्रह्मचितिः । यद् ब्रह्मोपादधत तस्माद् ब्रह्मचितिः सा प्प्रजापतिचितिर्य्यत्प्रजापतिमुपादधत तस्मात्प्रजापतिचितिः सर्षिचितिर्य्यदृषीनुपादधत तस्मादृषिचितिः सा वायुचितिर्य्यद्वायुमुपादधत तस्माद्वायुचितिः सा स्तोमचितिर्य्यत्स्तोमानुपादधत तस्मात्स्तोमचितिः सा प्प्राणचितिर्य्यत्प्राणानुपादधत तस्मात्प्राणचितिरतो यतमदेव कतमच्च विद्यात्तेन हैवास्यैषार्षेयवती वन्धुमती चितिर्भ-

वस्यथ लोकम्पृणे ऽउपदधात्यस्याᳫं स्रक्त्यां तयोरुपरि बन्धुः पुरीषं निवपति तस्योपरि बन्धुः ॥ १२ ॥ (D)

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥



[ पञ्चम्यां चितावसपत्नेष्टकोपधानम् ]

पञ्चमीं चितिमुपदधाति। एतद्वै देवाश्चतुर्थीं चितिं चित्वा समारोहंस्त्यदूर्द्ध्वमन्तरिक्षादर्वाचीनं दिवस्तदेव तत्संस्कृत्य समारोहन् ॥ १ ॥ तेऽब्रुवन्। चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवन्नित ऽऊर्द्ध्वमिच्छतेति ते चेतयमाना दिवमेव विराजं पञ्चमीं चितिमपश्यँस्तेभ्य-ऽएष लोको*ऽच्छदयत् ॥ २ ॥ तेऽकामयन्त। असपत्नमिमं लोकमनुपबाधं कुर्वीमहीति तेऽब्रुवन्नुप तज्जानीत यथेमं लोकमसपत्नमनुपबाधं करवामहा ऽइति तेऽब्रुवँश्चेतयध्व-मिति चितिमिच्छतेति वाव तदब्रुवँस्तदिच्छत यथेमं लोक-मसपत्नमनुपबाधं करवामहा ऽइति ॥ ३ ॥ ते चेतयमानाः। एता ऽइष्टका ऽअपश्यन्नसपत्नास्ता ऽउपादधत ताभिरेतं लोकमसपत्नमनुपबाधमकुर्वत तद्यदेताभिरेतं लोकमस-पत्नमनुपबाधमकुर्वत तस्मादेता ऽअसपत्नास्तथैवैतद्य-जमानो यदेता ऽउपदधात्येतमेवैतल्लोकमसपत्नमनुपबाधं कुरुते सर्वत ऽउपदधाति सर्वत ऽएवैतदेतं लोकमसपत्न-

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १० ४ ४।

* 'ऽच्छन्दयत्' इति ग-घ' पुस्तकयोः।

मनुपबाधं कुरुते परार्द्ध ऽउपदधाति सर्वमेवैतदेतं लोकमसपत्नमनुपबाधं कुरुते ॥ ४ ॥ अथ विराज ऽउपदधाति । एषा वै सा विराड्यां तद्देवा विराजं पञ्चमीं चितिमपश्यँस्ता दश-दशोपदधाति दशाक्षरा विराड्विराडेषा चितिः सर्वत ऽउपदधाति यो वा ऽएकस्यां दिशि विराजति न वै स विराजति यो वाव सर्वासु दिक्षु विराजति स ऽएव विराजति ॥ ५ ॥ यद्वेवैता * ऽअसपत्ना ऽउपदधाति । एतद्वै प्रजापतिमेतस्मिन्नात्मनः प्रतिहिते सर्वतः पाप्मोपायतत स ऽएता ऽइष्टका ऽअपश्यदसपत्नास्ता ऽउपाधत्त ताभिस्तं पाप्मानमपाहत पाप्मा वै सपत्नस्तद्यदेताभिः पाप्मानः सपत्नमपाहत तस्मादेता ऽअसपत्नाः ॥ ६ ॥ तद्वा ऽएतत्क्रियते । यद्देवा ऽअकुर्वन्निदं न्विमः स पाप्मा नोपयतते यत्त्वेतत्करोति यद्देवाऽअकुर्वंस्तत्करवाणीत्यथो य ऽएव पाप्मा यः सपत्नस्तमेताभिरपहते तद्यदेताभिः पाप्मानः सपत्नमपहते तस्मादेता ऽअसपत्नाः सर्वत ऽउपदधाति सर्वत ऽएवैतत्पाप्मानः सपत्नमपहते परार्द्ध ऽउपदधाति सर्वस्माद्वेवैतदात्मनः पाप्मानः सपत्नमपहते ॥ ७ ॥ स पुरस्तादुपदधाति । 'अग्ने जातान्प्रणुदा नः सपत्नानि'ति यथैव यजुस्तथा बन्धुरथ पश्चा'त्सहसा जातान्प्रणुदा नः सपत्नानि'ति यथैव यजुस्तथा बन्धुः ॥ ८ ॥ सा या

* आ० श्रौ० सू० १७ ११ १-३।

(१) शु० य० सं० अ० १५ क० १। (२) शु० य० सं० अ० १५ क० २।

पुरस्तादग्निः सा। या पश्चादग्निः साग्निनैव तत्पुरस्तात्पाप्मानमपाहताग्निना पश्चात्तथैवैतद्यजमानोऽग्निनैव पुरस्तात्पाप्मानमपहतेऽग्निना पश्चात् ॥ ९ ॥ अथ दक्षिणतः। 'षोडशी स्तोम ऽओजो द्रविणमि'त्येकादशाक्षरा वै त्रिष्टुप्त्रैष्टुभमन्तरिक्षं चतस्रो दिश ऽएष ऽएव वज्रः पञ्चदशस्तस्यालायेवादित्यः षोडशी वज्रस्य भर्त्ता स ऽएतेन पञ्चदशेन वज्रेणैतया त्रिष्टुभा दक्षिणतः पाप्मानमपाहत तथैवैतद्यजमान ऽएतेन पञ्चदशेन वज्रेणैतया त्रिष्टुभा दक्षिणतः पाप्मानमपहते ॥ १० ॥ अथोत्तरतः। 'चतुश्चत्वारिꣳश स्तोमो वर्चो द्रविणमि'ति चतुश्चत्वारिꣳशदक्षरा वै त्रिष्टुप्त्रैष्टुभो वज्रः स ऽएतेन चतुश्चत्वारिꣳशेन वज्रेणैतया त्रिष्टुभोत्तरतः पाप्मानमपाहत तथैवैतद्यजमान ऽएतेन चतुश्चत्वारिꣳशेन वज्रेणैतया त्रिष्टुभोत्तरतः पाप्मानमपहते ॥ ११ ॥ अथ मध्ये। 'अग्नेः पुरीषमसी'ति ब्रह्म वै चतुर्थी चितिरग्निरु वै ब्रह्म तस्या ऽएतत्पुरीषमिव यत्पञ्च'म्म्यप्सो नामे'ति तस्योक्तो बन्धुः ॥ १२ ॥ तां प्राचीं तिरश्चीमुपदधाति। एतद्धैतया प्रजापतिः पाप्मानो मूलमवृश्चत्तथैवैनयायमेतत्पाप्मनो मूलं वृश्चति दक्षिणतो दक्षिणत ऽउद्यामो हि वज्रोऽन्तरेण दक्षिणां दिश्यायामुद्यामाय ह तमवकाशं करोति ॥ १३ ॥ सा या पुरस्तात्प्राणः सा। या पश्चादपानः

(१) शु० य० स० अ० १५ क० ३। (२) शु० य० स० अ० १५ क० ३। (३) शु० य० स० अ० १५ क० ३। (४) शु० य० स० अ० १५ क० ३।

सा प्राणेनैव तत्पुरस्तात्पाप्मानमपाहतापानेन पश्चात्तथैवैतद्यजमानः प्राणेनैव पुरस्तात्पाप्मानमपहतेऽपानेन पश्चात् ॥ १४ ॥ अथ ये ऽअभितः । तौ बाहू स योऽस्याभितः पाप्मासीद् बाहुभ्यां तमपाहत तथैवैतद्यजमानो योऽस्याभितः पाप्मा भवति बाहुभ्यामेव तमपहते ॥ १५ ॥ अन्नं पुरीषवती । स योऽस्योपरिष्टात्पाप्मासीदन्नेन तमपाहत तथैवैतद्यजमानो योऽस्योपरिष्टात्पाप्मा भवत्यन्नेनैव तमपहते ॥ १६ ॥ स यद्ध वाऽएवंवित्प्राणिति । योऽस्य पुरस्तात्पाप्मा भवति तं तेनापहतेऽथ यदपानिति तेन तं य्यः पश्चादथ यद्बाहुभ्यां कर्म्म कुरुते तेन तं य्योऽभितोऽथ यदन्नमत्ति तेन तं य्यऽउपरिष्टात्तस्मादुा ह वा ऽएवंवित्पाप्मानमपहतेऽपि स्वपँस्तस्मादेवं विदुषः पापं न कीर्त्तयेन्नेदस्य पाप्मासानीति ॥ १७ ॥ (A)

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

अथ छन्दस्या ऽउपदधाति । एतद्वै प्रजापतिः पाप्मनो मृत्योर्म्मुक्त्वान्नमैच्छत्तस्मादु हैतदुपतापी भूयसीयान्भूत्वान्नमिच्छति तस्मिन्नाशःसन्तेऽन्नमिच्छति जीविष्यतीति तस्मै देवा ऽएतदन्नं प्रायच्छन्नेतान्छन्दस्याः पशवो वै छन्दांस्यन्नं पशवस्ता-

---

(A) एतत्प्रकरणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा– का० श्रौ० १०. ५. १; काठ० सं० १७. ६, कपिष्ठ० २६. ५, मै० सं० ३. २. ७, तै० सं० ५. ३. ११ ।

न्यस्म्मा ऽअच्छदयँस्तानि यदस्म्मा ऽअच्छदयँस्तस्माच्छ-
न्दाथंसि ॥ १ ॥ ता दश * दशोपदधाति । दशाक्षरा
विराड् विराडु कृत्स्नमन्नꣳ सर्वमेवास्मिन्नेतत्कृत्स्नमन्नं
दधाति सर्वत ऽउपदधाति सर्वत ऽएवास्मिन्नेतत्कृत्स्नमन्नं
दधाति ॥ २ ॥ 'एवश्छन्द'[1] ऽइति । अयं वै लोक ऽएव-
श्छन्दो 'वरिवश्छन्द'[2] ऽइत्यन्तरिक्षं वै वरिवश्छन्दः 'शम्भू-[3]
श्छन्द' ऽइति द्यौर्वै शम्भूश्छन्दः 'परिभूश्छन्द'[4] ऽइति-
दिशो वै परिभूश्छन्द 'ऽआच्छच्छन्द'[5] ऽइत्यन्नं वा ऽआच्छ-
च्छन्दो 'मनश्छन्द'[6] ऽइति प्रजापतिर्वै मनश्छन्दो 'व्यँच-[7]
श्छन्द' ऽइत्यसौ वा ऽआदित्यो व्यचश्छन्दः ॥ ३ ॥
'सिन्धुश्छन्द'[8] ऽइति । प्राणो वै सिन्धुश्छन्दः 'समुद्र-[9]
श्छन्द' ऽइति मनो वै समुद्रश्छन्दः 'सरिरं छन्द'[10] ऽइति
वाग्वै सरिरं छन्दः 'ककुप्छन्द'[11] ऽइति प्राणो वै ककुप्छन्द-
'त्रिककुप्छन्द'[12] ऽइत्युदानो वै त्रिककुप्छन्दः 'काव्यं
छन्द'[13] ऽइति त्रयी वै विद्या काव्यं छन्दोऽङ्कुपं छन्द-
ऽइत्यापो वा ऽअङ्कुपं छन्दो'ऽक्षरपङ्क्तिश्छन्द'[14] ऽइत्यसौ वै
लोकोऽक्षरपङ्क्तिश्छन्दः 'पदपङ्क्तिश्छन्द'[15] ऽइत्ययं वै लोकः

* का० श्रौ० सू० १७. ११. ५।

(१) शु० य० सं० अ० १५ क० ४। (२) शु० य० सं० अ० १५ क० ४।
(३) शु० य० सं० अ० १५ क० ४। (४) शु० य० सं० अ० १५ क० ४।
(५) शु० य० सं० अ० १५ क० ४। (६) शु० य० सं० अ० १५ क० ४।
(७) शु० य० सं० अ० १५ क० ४। (८) शु० य० सं० अ० १५ क० ४।
(९) शु० य० सं० अ० १५ क० ४। (१०) शु० य० सं० अ० १५ क० ४।
(११) शु० य० सं० अ० १५ क० ४। (१२) शु० य० सं० अ० १५ क० ४।
(१३) शु० य० सं० अ० १५ क० ४। (१४) शु० य० सं० अ० १५ क० ४।
(१५) शु० य० सं० अ० १

पङ्क्तिश्छन्दो 'विष्टारपङ्क्तिश्छन्दः'[1] ऽइति दिशो वै विष्टारपङ्क्तिश्छन्दः 'क्षुरो भ्रजश्छन्द'[2] ऽइत्यसौ वाऽआदित्यः क्षुरो भ्रजश्छन्द 'ऽआच्छच्छन्दः[3] प्रच्छच्छन्द'-ऽइत्यन्नं वा ऽआच्छच्छन्दोऽन्नं प्रच्छच्छन्दः ॥ ४ ॥

'सँयच्छन्द'[4] ऽइति । रात्रिर्वै सँयच्छन्दो 'वियच्छन्द'[5]-ऽइत्यहर्वै वियच्छन्दो 'बृहच्छन्द'[6] ऽइत्यसौ वै लोको बृहच्छन्दो 'रथन्तरं[7] छन्द' ऽइत्ययं वै लोको रथन्तरं छन्दो 'निकायश्छन्द'[8] ऽइति वायुर्वै निकायश्छन्दो 'विवधश्छन्द[9]-ऽइत्यन्तरिक्षं वै विवधश्छन्दो 'गिरश्छन्द'[10] ऽइत्यन्नं वै गिरश्छन्दो 'भ्रजश्छन्द'[11] इत्यग्निर्वै भ्रजश्छन्दः 'सःस्तुप्[12]-छन्दोऽनुष्टुप्छन्द' ऽइति वागेव सःस्तुप्छन्दो वागनुष्टुप्छन्द 'ऽएवश्छन्दो[13] वरिवश्छन्द' ऽइति तस्योक्तो बन्धुः ॥ ५ ॥

'वयश्छन्द'[14] ऽइति । अन्नं वै वयश्छन्दो 'वयस्कृच्छन्द'[15] ऽइत्यग्निर्वै वयस्कृच्छन्दो 'विष्पर्धाश्छन्द'[16] ऽइत्यसौ वै लोको विष्पर्धाश्छन्दो 'विशालं[17] छन्द' ऽइत्ययं वै लोको विशालं छन्द 'श्छदिश्छन्द'[18] ऽइत्यन्तरिक्षं वै छदिश्छन्दो

(१) शु० य० सं० अ० १५ क० ४। (२) शु० य० सं० अ० १५ क० ४।
(३) शु० य० सं० अ० १५ क० ४। (४) शु० य० सं० अ० १५ क० ५।
(५) शु० य० सं० अ० १५ क० ५। (६) शु० य० सं० अ० १५ क० ५।
(७) शु० य० सं० अ० १५ क० ५। (८) शु० य० सं० अ० १५ क० ५।
(९) शु० य० सं० अ० १५ क० ५। (१०) शु० य० सं० अ० १५ क० ५।
(११) शु० य० सं० अ० १५ क० ५। (१२) शु० य० सं० अ० १५ क० ५।
(१३) शु० य० सं० अ० १५ क० ५। (१४) शु० य० सं० अ० १५ क० ५।
(१५) शु० य० सं० अ० १५ क० ५। (१६) शु० य० सं० अ० १५ क० ५।
(१७) शु० य० सं० अ० १५ क० ५। (१८) शु० य० सं० अ० १५ क० ५।

'दूरोहणं छन्द'[1] ऽइत्यसौ वा ऽआदित्यो दूरोहणं छन्द-स्तेन्द्रं[2] छन्द' ऽइति पङ्क्तिर्वै तन्द्रं छन्दो'ऽङ्काङ्कं छन्द'[3] ऽइत्यापो वा ऽअङ्काङ्कं छन्दः ॥ ६ ॥ तद्याः पुरस्तादु-पदधाति । प्राणस्तासां प्रथमा व्व्यानो द्वितीयोदानस्तृ-तीयोदानश्चतुर्थी व्व्यानः पञ्चमी प्प्राणः षष्ठी प्प्राणः सप्तमी व्व्यानोऽष्टम्म्युदानो नवमी यजमान ऽएवात्र दशमी स ऽएष यजमान ऽएतस्यां विराज्यध्यूढः प्प्रति-ष्ठितः प्प्राणमय्यामर्वाचीश्च पराचीश्चोपदधाति तस्मा-दिमे प्प्राणा ऽअर्वाञ्चश्च पराञ्चश्च ॥ ७ ॥ अथ या दक्षिणतः । अग्निस्तासां प्रथमा वायुर्द्वितीयादित्यस्तृतीया-दित्यश्चतुर्थी वायुः पञ्चम्म्यग्निः षष्ठ्यग्निः सप्तमी वायुरष्टम्म्यादित्यो नवमी यजमान ऽएवात्र दशमी स-ऽएष यजमान ऽएतस्यां विराज्यध्यूढः प्प्रतिष्ठितो देवता-मय्यामर्वाचीश्च पराचीश्चोपदधाति तस्म्मादेते देवा-ऽअर्वाञ्चश्च पराञ्चश्च ॥ ८ ॥ अथ याः पश्चात् । अयं लोकस्तासां प्रथमान्तरिक्षं द्वितीया द्यौस्तृतीया द्यौश्च-तुर्थ्यन्तरिक्षं पञ्चम्म्ययं लोकः षष्ठ्ययं लोकः सप्तम्य-न्तरिक्षमष्टमी द्यौर्नवमी यजमान ऽएवात्र दशमी स-ऽएष यजमान ऽएतस्यां विराज्यध्यूढः प्प्रतिष्ठितो लोक-मय्यामर्वाचीश्च पराचीश्चोपदधाति तस्म्मादिमे लोका ऽअर्वाञ्चश्च पराञ्चश्च ॥ ९ ॥ अथ या ऽउत्तरतः ।

(१) शु० य० सं० अ० १५ क० ५। (२) शु० य० सं० अ० १५ क० ५।
(३) शु० य० सं० अ० १५ क० ५ ।

ग्रीष्मस्तासां प्रथमा वर्षा द्वितीया हेमन्तस्तृतीया हेमन्तश्चतुर्थी वर्षाः पञ्चमी ग्रीष्मः षष्ठी ग्रीष्मः सप्तमी वर्षा ऽअष्टमी हेमन्तो नवमी यजमान ऽएवात्र दशमी स ऽएष यजमान ऽएतस्यां विराज्यृतुव्यूढः प्रतिष्ठित ऽऋतुसव्यामर्वाचीश्च पराचीश्चोपदधाति तस्मादेत ऽऋतवोऽर्वाञ्चश्च पराञ्चश्च ॥ १० ॥ अथ पुनरेव । याः पुरस्तादुपदधाति प्राणास्ते ता दश भवन्ति दश वै प्राणाः पूर्वार्द्ध ऽउपदधाति पुरस्ताद्धीमे प्राणाः ॥ ११ ॥ अथ या दक्षिणतः । एतास्ता देवता ऽअग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चान्नं चापश्च ॥ १२ ॥ अथ याः पश्चात् । दिशस्ता-श्चतस्रो दिशश्चतस्रोऽवान्तरदिश ऽऊर्द्ध्वा चेयं च ॥ १३ ॥ अथ या ऽउत्तरतः । मासास्ते वासन्तिकौ द्वौ ग्रैष्मौ द्वौ वार्षिकौ द्वौ शारदौ द्वौ हैमन्तिकौ द्वौ ॥ १४ ॥ अथ पुनरेव । या प्रथमा दशद्यः स लोको या द्वितीयान्तरिक्षं तद्या तृतीया द्यौः सेममेव लोकं प्रथमया दशतारोहन्नन्तरिक्षं द्वितीयया दिवं तृतीयया तथैवैतद्यजमान ऽइममेव लोकं प्रथमया दशता रोहत्यन्तरिक्षं द्वितीयया दिवं तृतीयया ॥ १५ ॥ स स पराङिव रोहः । इयमु वै प्रतिष्ठा ते देवा ऽइमां प्रतिष्ठामभिप्रत्यायँ-स्तथैवैतद्यजमान ऽइमां प्रतिष्ठामभिप्रत्येत्यथ योत्तमा

( B ) एतद्ब्राह्मणस्था विषया अन्यत्राप्युपलभ्यन्ते यथा—का० श० १०. ५. २, कठ० सं० १७. ६; कपि० २६. ५; मै० सं० ११. ८, ७. तै० सं० ४, ३. १२ ।

दशादयः स लोकस्तस्माद्यथैव प्रथमायै दशतः प्रभृतिरेवमुत्तमायै समानᳫ᳭ ह्येतद्यदेते दशतावयमेव लोकः ॥ १६ ॥ ता वा एताः । चत्वारिᳫ᳭शदिष्टकाश्चत्वारिᳫ᳭शद्यजूᳫ᳭ष्यपि तदशीतिरन्नमशीतिस्तद्यदेतदाह तदस्माऽअन्नमशीतिं कृत्वा प्रयच्छति तेनैनं प्रीणाति ॥ १७ ॥ (D)

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ पञ्चम्यां चितौ स्तोमभागेष्टकोपधानम् ]

अथ स्तोमभागा उपदधाति । एतद्वै प्रजापतेरेतदन्नमिन्द्रोऽभ्यध्यायत्सोऽस्मादुदचिक्रमिषत्तमब्रवीत्क थोत्क्रामसि कथा मा जहासीति स वै मेऽस्यान्नस्य रसं प्रयच्छेति तेन वै मा सह प्रपद्यस्वेति तथेति तस्माऽएतस्यान्नस्य रसं प्रायच्छत्तेनैनᳫ᳭ सह प्रापद्यत ॥ १ ॥ स यः स प्रजापतिः । अयमेव स योऽयमग्निश्चीयतेऽथ यत्तदन्नमेतास्ताश्छन्दस्या अथ यः सोऽन्नस्य रसऽएतास्ता * स्तोमभागा अथ यः स इन्द्रोऽसौ सऽआदित्यः स एष एव स्तोमो यद्धि किंच स्तुवतऽएतमेव तेन स्तुवन्ति तस्मा एतस्मै स्तोमायैतं भागं प्रायच्छत्तद्यदेतस्मै स्तोमायैतं भागं प्रायच्छत्तस्मात्स्तोमभागाः ॥ २ ॥ 'रश्मिना सत्याय सत्यं जिन्व'ति । एष वै रश्मिरन्नᳫ᳭ रश्मिरेतं च तद्रसं च सन्धायात्म-

(D) एतद्ब्राह्मणस्य विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १०. ५. २ ।

* का० श्रौ० सू० १७. ११. ६ ।

(१) शु० य० सं० अ० १५ कं० ६ ।

श्च्प्रपादयते 'प्रेतिना धर्म्मणा धर्म्मं जिन्वे'[1]त्येष वै प्रेतिरन्नं प्रेतिरेतं च तद्रसं च सन्धायात्मश्च्प्रपादयते 'ऽन्वित्या[2] दिवा दिवं जिन्वे'त्येष वा ऽअन्वितिरन्नमन्वितिरेतं च तद्रसं च सन्धायात्मश्च्प्रपादयते तद्यदेतदाह तच्च तद्रसं च सन्धायात्मश्च्प्रपादयतेऽमुनादो जिन्वादोऽस्यमुष्मै 'स्वाधिपतिनो[3]र्जोर्ज्जं जिन्वे'ति त्रेधाविहितास्त्रेधाविहितᳫं ह्यन्नम् ॥ ३ ॥ यद्वेव स्तोमभागा ऽउपदधाति । एतद्वै देवा विराजं चितिं चित्वा समारोहँस्तेऽब्रुवँश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्ते चेतयमाना नाकमेव स्वर्गं लोकमपश्यँस्तमुपादधत स यः स नाकः स्वर्गो लोक ऽएतास्ता स्तोमभागास्तद्यदेता ऽउपदधाति नाकमेवैतत्स्वर्गं लोकमुपधत्ते ॥ ४ ॥ तद्यास्तिस्रः प्रथमाः । अयᳫं स लोको या द्वितीया ऽअन्तरिक्षं तद्यास्तृतीया द्यौः सा याश्चतुर्थ्यः प्राची सा दिग्याः पञ्चम्यो दक्षिणा सा याः षष्ठ्यः प्रतीची सा याः सप्तम्य ऽउदीची सा ॥ ५ ॥ ता वा ऽएताः । एकविᳫंशतिरिष्टका ऽइमे च लोका दिशश्चेमे च वै लोका दिशश्च प्रतिष्ठेमे च लोका दिशश्चैकविᳫंशस्तस्मादाहुः प्रतिष्ठैकविᳫंश ऽइति ॥ ६ ॥ अथ या ऽअष्टाविष्टका ऽअतियन्ति । साष्टाक्षरा गायत्री ब्रह्म गायत्री तद्यत्तद् ब्रह्मैतत्तद्यदेतन्मण्डलं तपति तदेतस्मिन्नेकविᳫंशे प्रतिष्ठायां प्रतिष्ठितं तपति तस्मान्नावप-

(१) शु० य० सं० अ० १५ क० ६। (२) शु० य० सं० अ० १५ क० ६।
(३) शु० य० सं० अ० १५ क० ७।

यते ॥ ७ ॥ तद्धैके * । त्रेषश्रीः 'क्षत्राय क्षत्रं जिन्वे'ति त्रिंशत्तमीमुपदधति त्रिंशदक्षरा विराड्विराडेषा चितिरिति न तथा कुर्याद्दिति ते रेचयन्त्येकविंशसम्पदमथो गायत्रीसम्पदमथो ऽइन्द्र लोको हैष यैषात्यूना विराडिन्द्राय ह त ऽइन्द्रलोके द्विषन्तं भ्रातृव्यं प्रत्युद्यामिनं कुर्वन्तीन्द्रमिन्द्रलोकान्नुदन्ते यजमानो वै स्वे यज्ञ ऽइन्द्रो यजमानाय ह ते यजमानलोके द्विषन्तं भ्रातृव्यं प्रत्युद्यामिनं कुर्वन्ति यजमानं स्यजमानलोकान्नुदन्ते यं वा ऽएतमग्निमाहुरन्त्येष ऽएव यजमान ऽआयतनेनैष ऽउ ऽएवात्र त्रिंशत्तमी ॥ ८ [ अर्धप्रपाठकः ४४॥ ] (C)

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

---

ता ऽअषाढायै त्रेलयोपदधाति । वाग्वा ऽअषाढा रस ऽएष वाचि तद्रसं दधाति तस्मात्सर्वेषामङ्गानां वाचैवान्नस्य रसं विजानाति ॥ १ ॥ यद्वेवाषाढायै । इयं वा ऽअषाढासावादित्य स्तोमभागा ऽअमुं तदादित्यमस्यां प्रतिष्ठायां प्रतिष्ठापयति ॥ २ ॥ यद्वेवाषाढायै । इयं वा ऽअषाढा हृदयथं स्तोमभागा ऽअस्यां तद्धृदयं मनो दधाति तस्मादस्याथं हृदयेन मनसा चेतयते सर्वत ऽउपदधाति सर्वतस्तद्धृदयं मनो दधाति तस्मादस्याथं सर्वतो हृदयेन मनसा चेतयतेऽथो पुण्यया

---

* का० श्रौ० सू० १७. ११. ११।

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा- का० श० १०. ५. ३; काठ० १७. ५; कपिष्ठ० २६, ६; मै० सं० ३१. ८. ८; तै० सं० ४. ४. ११।

हैता लक्ष्म्यस्ता ऽएतत्सर्वतो धत्ते तस्मादस्य सर्वतो लक्ष्म भवति तं पुण्यलक्ष्मीक ऽइत्याचक्षते ॥ ३ ॥ अथैनाः पुरीषेण प्रच्छादयति। अन्नं वै पुरीषꣳ रस-ऽएष तमेतत्तिरः करोति तस्मात्तिर ऽइवान्नस्य रसः ॥ ४ ॥ यद्वेव पुरीषेण। अन्नं वै पुरीषꣳ रस ऽएषोऽन्नं च तद्रसं च सन्तनोति सन्दधाति ॥ ५ ॥ यद्वेव पुरीषेण। हृदयं वै स्तोमभागाः पुरीतत्पुरीषꣳ हृदयं तत्पुरीतता प्रच्छादयति ॥६॥ यद्वेव पुरीषेण। संवत्सर ऽएषोऽग्निस्त-मेतच्चितिपुरीषैर्व्यावर्त्तयति तथाश्चतस्रः प्रथमाश्चित-यस्ते चत्वार ऽऋतवोऽथ स्तोमभागा ऽउपधाय पुरीषं निव-पति सा पञ्चमी चितिः स पञ्चम ऽऋतुः ॥७॥ तदाहुः। यल्लोकम्पृणान्ता ऽअन्याश्चितयो भवन्ति नात्र लोक-म्पृणामुपदधाति कात्र लोकम्पृणेत्यसौ वा ऽआदित्यो लोकम्पृणैषु ऽउ ऽएषा चितिः सैषा स्वयं लोकम्पृणा चितिरथ यदुत ऽऊर्द्ध्वमा पुरीषात्सा षष्ठी चितिः स षष्ठ ऽऋतुः ॥ ८ ॥ अथ पुरीषं निवपति। तत्र विकर्णीं च स्वयमातृण्णां चोपदधाति हिरण्यशकलैः प्रोक्षत्यग्निम-भ्यादधाति सा सप्तमी चितिः स सप्तम ऽऋतुः ॥ ९ ॥ ता ऽउ वै षडेव। यद्धि विकर्णी च स्वयमातृण्णा च षष्ठ्या ऽएव तच्चितेः ॥ १० ॥ ता ऽउ वै पञ्चैव। यजुषान्यासु पुरीषं निवपति तूष्णीमत्र तेनैषा न चितिरथो लोकम्पृणान्ता ऽअन्याश्चितयो भवन्ति नात्र लोकम्पृणामुपदधाति तेनो ऽएवैषा न चितिः ॥ ११ ॥ ता-

ऽउ वै तिस्र ऽएव । अयमेव लोकः प्रथमा चितिर्द्यौ-रुत्तमाथ या ऽएतास्तिस्रस्तदन्तरिक्षं तद्वा ऽइदमेक-मिवैवान्तरिक्षं ता ऽएवं तिस्र ऽएवं पञ्चैवः षडेवः सप्त ॥ १२ ॥ (D)

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

---

[ नाकसत्पञ्चचूडेष्टकोपधानम् ]

नाकसद ऽउपदधाति । देवा वै नाकसदोऽत्रैष सर्वोऽग्निः संस्कृतः स ऽएषोऽत्र नाकः स्वर्गो लोकस्त-स्मिन्देवा ऽअसीदँस्तद्यदेतस्मिन्नाके स्वर्गे लोके देवा ऽअसीदँस्तस्माद्देवा नाकसदस्तथैवैतद्यजमानो यदेता ऽउपदधात्येतस्मिन्नेवैतन्नाके स्वर्गे लोके सीदति ॥ १ ॥ यद्वेव नाकसद * ऽउपदधाति । एतद्वै देवा ऽएतं नाकँ स्वर्गं लोकमपश्यन्नेता स्तोमभागास्तेऽब्रुवन्नुप तज्जानीत यथास्मिन्नाके स्वर्गे लोके सीदामेति तेऽ-ब्रुवँश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्तदिच्छत यथास्मिन्नाके स्वर्गे लोके सीदामेति ॥ २ ॥ ते चेत-यमानाः । एता ऽइष्टका ऽअपश्यन्नाकसदस्ता ऽउपा-दधत ताभिरेतस्मिन्नाके स्वर्गे लोकेऽसीदँस्तद्यदेताभि-रेतस्मिन्नाके स्वर्गे लोकेऽसीदँस्तस्मादेता नाकसद-

---

( D ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १०. ५. ४ ।

* का० श्रौ० सू० १७. १२. २ ।

स्तथैवैतद्यजमानो यदेता ऽउपदधात्येतस्मिन्नेवैतन्नाके स्वर्गे लोके सीदति ॥ ३ ॥ दिक्षूपदधाति । दिशो वै स नाकः स्वर्गो लोकः स्वर्ग ऽएवैना ऽएतल्लोके सादयत्यृतव्यानां वेलया संवत्सरो वा ऽऋतव्याः संवत्सरः स्वर्गो लोकः स्वर्ग ऽएवैना ऽएतल्लोके सादयत्यन्तस्तोमभागमेष वै स नाकः स्वर्गो लोकस्तस्मिन्नेवैना ऽएतत्प्रतिष्ठापयति ॥ ४ ॥ स पुरस्तादुपदधाति । 'राज्ञ्यसि प्राची दिगि'ति राज्ञी ह नामैषा प्राची 'दिग्वसवस्ते देवा ऽअधिपतय' ऽइति वसवो हैतस्यै दिशो देवा 'ऽअधिपतयोऽग्निर्हेतीनां प्रतिधर्त्ते'त्यग्निर्हैवात्र हेतीनां प्रतिधर्त्ता 'त्रिवृत्त्वा स्तोमः पृथिव्याᳫं श्रयत्वि'ति त्रिवृता हैषा स्तोमेन पृथिव्याᳫं श्रि'ताज्यमुक्थमव्यथायै स्तभ्नात्वि'त्याज्येन हैषोक्थेनाव्यथायै पृथिव्याᳫं स्तब्धा 'रथन्तरᳫं साम प्रतिष्ठित्या ऽअन्तरिक्ष' ऽइति रथन्तरेण हैषा साम्ना प्रतिष्ठितान्तरिक्ष 'ऽऋषयस्त्वा प्रथमजा देवेष्वि'ति प्राणा वा ऽऋषयः प्रथमजास्तद्धि ब्रह्म प्रथमजं 'दिवो मात्रया वरिम्णा प्रथन्त्वि'ति यावती द्यौस्तावतीं वरिम्णा प्रथन्त्वि'त्ये'तद्विधर्त्ता चायमधिपतिश्चे'ति वाक्च तौ मनश्च'

---

(१) शु० य० सं० अ० १५ क० १०। (२) शु० य० सं० अ० १५ क० १०।
(३) शु० य० सं० अ० १५ क० १०। (४) शु० य० सं० अ० १५ क० १०।
(५) शु० य० सं० अ० १५ क० १०। (६) शु० य० सं० अ० १५ क० १०।
(७) शु० य० सं० अ० १५ क० १०। (८) शु० य० सं० अ० १५ क० १०।
(९) शु० य० सं० अ० १५ क० १०।

तौ हीदꣳ सर्वं विधारयत स्ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्त्वि’ति यथैव यजुस्तथा बन्धुः ॥ ५ ॥ अथ दक्षिणतः । ‘विराडसि दक्षिणा दिगि’ति विराड्ढ नामैषा दक्षिणा दि ‘ग्रुद्रास्ते देवा ऽअधिपतय’ ऽइति रुद्रा हैतस्यै दिशो देवा ‘ऽअधिपतय ऽइन्द्रो हेतीनां प्प्रतिधर्त्ते’तीन्द्रो हैवात्र हेतीनां प्रतिधर्त्ता ‘पञ्चदशस्त्वा स्तोमः पृथिव्व्याꣳ श्रयत्वि’ति पञ्चदशेन हैषा स्तोमेन पृथिव्व्याꣳ श्रिता प्प्र ऽउगमुक्थमव्व्यथायै स्तब्भ्नात्वि’ति प्प्र ऽउगेण हैषोक्थेनाव्व्यथायै पृथिव्व्याꣳ स्तब्धा ‘बृहत्साम प्प्रतिष्ठित्याऽअन्तरिक्ष’ ऽइति बृहता हैषा साम्म्ना प्प्रतिष्ठिताऽन्तरिक्ष ऽऋषयस्त्वा प्प्रथमजा देवेष्वि’ति तस्योक्तो बन्धुः ॥ ६ ॥ अथ पश्चात् । ‘सम्म्राडसि प्प्रतीची दिगि’ति सम्म्राड्ढ नामैषा प्प्रतीची दि ‘गादित्यास्ते देवा ऽअधिपतय’ ऽइत्यादित्या हैतस्यै दिशो ‘देवा ऽअधिपतयो वरुणो हेतीनां प्रतिधर्त्ते’ति वरुणो हैवात्र हेतीनां प्रतिधर्त्ता ‘सप्तदशस्त्वा स्तोमः पृथिव्व्याꣳ श्रयत्वि’ति सप्तदशेन हैषा स्तोमेन पृथिव्व्याꣳ श्रिता ‘मरुत्वती-

(१) शु० य० सं० अ० १५ क० १०। (२) शु० य० सं० अ० १५ क० ११।
(३) शु० य० सं० अ० १५ क० ११। (४) शु० य० सं० अ० १५ क० ११।
(५) शु० य० सं० अ० १५ क० ११। (६) शु० य० सं० अ० १५ क० ११।
(७) शु० य० सं० अ० १५ क० ११। (८) शु० य० सं० अ० १५ क० ११।
(९) शु० य० सं० अ० १५ क० १२। (१०) शु० य० सं० अ० १५ क० १२।
(११) शु० य० सं० अ० १५ क० १२। (१२) शु० य० सं० अ० १५ क० १२।
(१३) शु० य० सं० अ० १५ क० १२।

यमुक्थमव्यथायै स्तभ्नात्वि'ति मरुत्वतीयेन हैषो-
क्थेनाव्यथायै पृथिव्याᳫं स्तब्धा 'वैरूपᳪं साम प्र-
तिष्ठित्या ऽअन्तरिक्ष' ऽइति वैरूपेण हैषा साम्ना
प्रतिष्ठि'तान्तरिक्ष ऽऋषयस्त्वा प्रथमजा देवष्वि'ति
तस्योक्तो बन्धुः ॥ ७ ॥ अथोत्तरतः । 'स्वराडस्युदीची
दिगि'ति स्वराड्ढ . नामैषोदीची दिङ् 'मरुतस्ते देवा-
ऽअधिपतय' ऽइति मरुतो हैतस्यै दिशो देवा ऽअधि-
पतयः 'सोमो हेतीनां प्रतिधर्त्ते'ति सोमो हैवात्र हेतीनां
प्रतिध'र्त्तैकविᳪंशस्त्वा स्तोमः पृथिव्याᳫं श्रयत्वि'त्ये-
कविᳪंशेन हैषा स्तोमेन पृथिव्याᳫं श्रिता 'निष्केवं-
ल्यमुक्थमव्यथायै स्तभ्नात्वि'ति निष्केवल्येन हैषो-
क्थेनाव्यथायै पृथिव्याᳫं स्तब्धा 'वैराजᳪं साम
प्रतिष्ठित्या ऽअन्तरिक्ष' ऽइति वैराजेन हैषा साम्ना
प्रतिष्ठि'तान्तरिक्षे ऽऋषयस्त्वा प्रथमजा देवेष्वि'ति
तस्योक्तो बन्धुः ॥ ८ ॥ अथ मध्ये । 'अधिपत्न्यसि
बृहती दिगि'त्यधिपत्नी ह नामैषा बृहती 'दिग्विश्वे ते
देवा ऽअधिपतय' ऽइति विश्वे हैतस्यै, दिशो देवा-
ऽअधिपतयो 'बृहस्पतिर्हेतीनां प्रतिधर्त्ते'ति बृहस्पति-

(१) शु० य० सं० अ० १५ क० १२। (२) शु० य० सं० अ० १५ क० १२।
(३) शु० य० सं० अ० १५ क० ११। (४) शु० य० सं० अ० १५ क० ११।
(५) शु० य० सं० अ० १५ क० ११। (६) शु० य० सं० अ० १५ क० ११।
(७) शु० य० सं० अ० १५ क० ११। (८) शु० य० सं० अ० १५ क० ११।
(९) शु० य० सं० अ० १५ क० ११। (१०) शु० य० सं० अ० १५ क० १४।
(११) शु० य० सं० अ० १५ क० १४। (१२) शु० य० सं० अ० १५ क० १४।

हैवात्र हेतीनां प्रतिधत्यै 'त्रिणवत्रयस्त्रिꣳशौ त्वा स्तोमौ पृथिव्याꣳ श्रयतामि'ति त्रिणवत्रयस्त्रिꣳशाभ्याꣳ हैषा स्तोमाभ्यां पृथिव्याꣳ श्रिता 'वैश्वदेवाग्निमारुते ऽउक्थे ऽअव्यथायै स्तभ्नीतामि'ति वैश्वदेवाग्निमारुताभ्याꣳ हैषोक्थाभ्यामव्यथायै पृथिव्याꣳ स्तब्धा 'शाक्वररैवते सामनी प्रतिष्ठित्या ऽअन्तरिक्ष' ऽइति शाक्वररैवताभ्याꣳ हैषा सामभ्यां प्रतिष्ठितान्तरिक्ष- 'ऽऋषयस्त्वा प्रथमजा देवेष्वि'ति तस्योक्तो बन्धुः ॥ ९ ॥ एतावान्वै सर्वो यज्ञः । यज्ञ ऽउ देवानामात्मा यज्ञमेव तद्देवा ऽआत्मानं कृत्वैतस्मिन्नाके स्वर्गे लोकेऽसीदꣳस्तथैवैतद्यजमानो यज्ञमेवात्मानं कृत्वैतस्मिन्नाके स्वर्गे लोके सीदति ॥ १० ॥ अथ * पञ्चचूडा ऽउपदधाति । यज्ञो वै नाकसदो यज्ञ ऽउ ऽएव पञ्चचूडास्तद्य ऽइमे चत्वार ऽऋत्विजो गृहपतिपञ्चमास्ते नाकसदो होत्राः पञ्चचूडा ऽअतिरिक्तं वै तद्यद्धोत्रा यद्वु वा ऽअतिरिक्तं चूडः स तद्यत्पञ्चातिरिक्तास्तस्मात्पञ्चचूडाः ॥ ११ ॥ यद्वेव नाकसत्पञ्चचूडा ऽउपदधाति । आत्मा वै नाकसदो मिथुनं पञ्चचूडा ऽअर्द्धमु हैतदात्मनो यन्मिथुनं यदा वै सह मिथुनेनाथ सर्वोऽथ कृत्स्नः कृत्स्नतायै ॥ १२ ॥ यद्वेव नाकसत्पञ्चचूडा ऽउपदधाति । आत्मा वै नाकसदः प्रजा पञ्चचूडा ऽअतिरिक्तं वै तदात्मनो यत्प्रजा यद्वु

(१) शु० य० सं० अ० १५ क० १४ । (२) शु० य० सं० अ० १५ क० १४ । (३) शु० य० सं० अ० १५ क० १४ । (४) शु० य० सं० अ० १५ क० १४ ।
* का० श्रौ० सू० १७. १२. ११ ।

वा ऽअतिरिक्तं चूडꣳ स तद्यत्पञ्चातिरिक्तास्तस्मात्पञ्चचूडाꣳ ॥ १३ ॥ यद्वेव नाकसत्पञ्चचूडा ऽउपदधाति । दिशो वै नाकसदो दिश ऽउ ऽएव पञ्चचूडास्तद्या ऽअमुष्मादादित्यादर्वाच्यꣳ पञ्च दिशस्ता नाकसदो याꣳ पराच्यस्ताꣳ पञ्चचूडा ऽअतिरिक्ता वै ता दिशो या ऽअमुष्मादादित्यात्पराच्यो यद्दु वा ऽअतिरिक्तं चूडꣳ स तद्यत्पञ्चातिरिक्तास्तस्मात्पञ्चचूडाꣳ ॥ १४ ॥ यद्वेव पञ्चचूडा ऽउपदधाति । एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइमाँल्लोकानुपरिष्टाद्रक्षाꣳसि नाष्ट्रा न हन्युरिति त ऽएतानेषां लोकानामुपरिष्टाद्गोप्तॄनकुर्वत य ऽएते हेतयश्च प्रहेतयश्च तथैवैतद्यजमान ऽएतानेषां लोकानामुपरिष्टाद्गोप्तॄन्कुरुते य ऽएते हेतयश्च प्रहेतयश्च ॥ १५ ॥ स पुरस्तादुपदधाति । 'अयं पुरो हरिकेश' ऽइत्ययमिवै पुरस्तद्यत्तमाह पुर ऽइति प्राञ्चꣳ ह्यग्निमुद्धरन्ति प्राञ्चमुपचरन्त्यथ यद्धरिकेश ऽइत्याह हरिरिव ह्यग्निꣳ 'सूर्यरश्मिरि'ति सूर्यस्येव ह्यग्ने रश्मय'स्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्रामण्या'विति वासन्तिकौ तावृतू 'पुञ्जिकस्थला च क्रतुस्थला चाप्सरसावि'ति दिक् चोपदिशा चेति ह स्माह माहित्थिꣳ सेना च तु ते समितिश्च 'दङ्क्ष्णवꣳ पशवो हेतिꣳ पौरुषेयो वधꣳ प्रहेतिरि'ति यद्वै सेनायां च

(१) शु० य० सं० अ० १५ क० १५। (२) शु० य० सं० अ० १५ क० १५।
(३) शु० य० सं० अ० १५ क० १५। (४) शु० य० सं० अ० १५ क० १५।
(५) शु० य० सं० अ० १५ क० १७।

समितौ चर्त्तीयन्ते ते 'दङ्क्ष्णवद्दः पशवो हेतिः पौरुषेयो वधः प्प्रहेतिरि'ति यदुन्योऽन्यं घ्नन्ति स पौरुषेयो वधः प्प्रहेति'स्तेभ्यो नमो ऽअस्त्वि'ति तेभ्य ऽएव नमस्करोति 'ते नो मृडयन्त्वि'ति त ऽएवास्मै मृडयन्ति 'ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्म' ऽइति यमेव द्वेष्टि यश्चैनं द्वेष्टि तमेषां जम्भे दधात्यमुमेषां जम्भे दधामीति ह ब्रूयाद्यं द्विष्यात्ततोऽह तस्मिन्न पुनरस्त्यपि तन्नाद्रियेत स्वयं निर्दिष्टो ह्येव स यमेवं विद्वेष्टि ॥ १६ ॥ अथ दक्षिणतः । 'अयं दक्षिणा विश्वकर्म्मे'त्य'यं वै वायुर्विश्वकर्म्मा योऽयं पवत ऽएष हीदः सर्वं करोति तद्यत्तमाह दक्षिणेति तस्मादेष दक्षिणैव भूयिष्ठं वाति 'तस्य रथस्वनश्च रथेचित्रश्च सेनानीग्रामण्यावि'ति ग्रैष्मौ तावृतू 'मेनका च सहजन्या चाप्सरसावि'ति दिक्चोपदिशा चेति ह स्माह माहित्थिरिमे तु ते द्यावापृथिवी 'यातुधाना हेती रक्षाꣳसि प्प्रहेतिरि'ति यातुधाना हैवात्र हेती रक्षाꣳसि प्प्रहेति'स्तेभ्यो नमो ऽअस्त्वि'ति तस्योक्तो बन्धुः ॥ १७ ॥ अथ पश्चात् । 'अयं पश्चाद्विश्वव्यचा' ऽइत्यसौ वा ऽआदित्यो विश्वव्यचा यदा ह्येवैष ऽउदेत्यथेदः सर्वं व्यचो भवति तद्य-

---

(१) शु० य० सं० अ० १५ क० १५। (२) शु० य० सं० अ० १५ क० १५। (३) शु० य० सं० अ० १५ क० १५। (४) शु० य० सं० अ० १५ क० १५। (५) शु० य० सं० अ० १५ क० १६। (६) शु० य० सं० अ० १५ क० १६। (७) शु० य० सं० अ० १५ क० १६। (८) शु० य० सं० अ० १५ क० १६। (९) शु० य० सं० अ० १५ क० १७। (१०) शु० य० सं० अ० १५ क० १८।

त्तमाह पश्चादिति तस्मादेतं प्रत्यञ्चमेव यन्तं पश्यन्ति 'तस्य रथप्रोतश्चासमरथश्च सेनानीग्रामण्याविʼति वार्षिकौ तावृतू 'प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसाविʼति दिक्चोपदिशा चेति ह स्माह माहित्थिरहोरात्रे तु ते ते हि प्र च म्लोचतोऽनु च म्लोचतो 'व्याघ्रा हेतिः सर्पाः प्रहेतिरिʼति व्याघ्रा हैवात्र हेतिः सर्पाः प्रहेति'स्तेभ्यो नमो ऽअस्त्विʼति तस्योक्तो बन्धुः ॥ १८ ॥ अथोत्तरतः । 'अयमुत्तरात्संयद्वसुरिʼति यज्ञो वाऽउत्तरात्तद्यत्तमाहोत्तरादित्युत्तरत ऽउपचारो हि यज्ञोऽथ यत्संयद्वसुरित्याह यज्ञः हि संयन्तीतीदं वस्विति 'तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्रामण्याविʼति शारदौ तावृतू 'विश्वाची च घृताची चाप्सरसाविʼति दिक्चोपदिशा चेति ह स्माह माहित्थिर्वेदिश्च तु ते स्रुक्च वेदिरेव विश्वाची स्रुग्घृता'च्यापो हेतिर्वातः प्रहेतिरिʼत्यापो हैवात्र हेतिर्वातः प्रहेतिरतो ह्येवोष्णो धारयतः शीत'स्तेभ्यो नमो ऽअस्त्विʼति तस्योक्तो बन्धुः ॥ १९ ॥ अथ मध्ये । 'अयमुपर्यर्वाग्वसुरिʼति पर्जन्यो वा ऽउपरि तद्यत्तमाहोपरीत्युपरि हि पर्जन्योऽथ यदर्वाग्वसुरित्याहातो ह्यर्वाग्वसु वृष्टिरन्नं प्रजाभ्यः प्रदीयते

(१) शु० य० मा० सं० १५ क० १७। (२) शु० य० सं० अ० १५ क० १७। (३) शु० य० मा० सं० १५ क० १९। (४) शु० य० सं० अ० १५ क० १७। (५) शु० य० सं० अ० १५ क० १८। (६) शु० य० सं० अ० १५ क० १८। (७) शु० य० मा० सं० १५ क० १८। (८) शु० य० सं० अ० १५ क० १८। (९) शु० य० सं० अ० १५ क० १८। (१०) शु० य० सं० अ० १५ क० १९।

'तस्य सेनजिच्च सुषेणश्च सेनानीग्रामण्याविं'ति हैम-
न्तिकौ तावृतू 'ऽउर्वशी च पूर्वचित्तिश्चाप्सरसावि'ति
दिक्चोपदिशा चेति ह स्माह माहित्थिराहुतिश्च तु ते
दक्षिणा 'चावस्फूर्जन्हेतिर्विद्युत्प्रहेतिरि'त्यवस्फूर्जन्हैवात्र
हेतिर्विद्युत्प्रहेति'स्तेभ्यो नमो ऽअस्त्विति' तस्योक्तो
बन्धुः ॥ २० ॥ एते वै ते हेतयश्च प्रहेतयश्च । याँस्त-
द्देवा ऽएषां लोकानामुपरिष्टाद्गोप्तॄनकुर्वताथ यास्ताः प्रजा-
ऽएते ते सेनानीग्रामण्योऽथ यत्तन्मिथुनमेतास्ता-
ऽअप्सरसः सर्व ऽएव तद्देवाः कृत्स्ना भूत्वा सह
प्रजया सह मिथुनेनैतस्मिन्नाके स्वर्गे लोकेऽसीदँस्तथैवै-
तद्यजमानः सर्व ऽएवं कृत्स्नो भूत्वा सह प्रजया सह
५ मिथुनेनैतस्मिन्नाके स्वर्गे लोके सीदति ॥ २१ ॥
* ता वा ऽएताः । दशेष्टका ऽउपदधाति दशाक्षरा
विराड्विराडेषा चितिस्ता ऽउ वै पञ्चैव द्वे-द्वे ह्युपदधाति
ता हैता ऽअग्नेराशिषस्ता ऽउत्तमायां चिता ऽउपदधात्यन्त-
ऽएषोऽग्नेर्यदुत्तमा चितिरन्ततस्तदग्नेराशिषो, निराह पञ्च'
भवन्ति पञ्च हि यज्ञ ऽआशिषोऽथैने ऽअन्तरा पुरीषं
निवपत्यग्नी हैतौ यदेते ऽइष्टके नेदिमावग्नी सङ्शोचात-
ऽइत्यथो ऽअन्नं वै पुरीषमन्नेनैवाभ्यामेतत्संज्ञां करोति
॥ २२ ॥ अथातोऽन्वावृत्तम् । पुरस्तादुपधाय दक्षिणतः
पश्चादुत्तरतो मध्य ऽउपदधात्यथोत्तराः पुरस्तादेवाग्र-

(१) शु० य० सं० अ० १५ क० १९। (२) शु० य० सं० अ० १५ क० १९।
(३) शु० य० सं० अ० १५ क० १९। (४) शु० य० सं० अ० १५ क० १९।
* अत्र शतम् ४६००॥

ऽउपधाय दक्षिणत ऽउत्तरतो मध्ये पश्चादुपदधात्यवस्ता-
त्प्रपदनो ह स्वर्गो लोक ऽएतद्वै देवा ऽइमाँल्लोकान्त्सर्वतः
समपिधायावस्तात्स्वर्गं लोकं प्रापद्यन्त तथैवैतद्यजमान-
ऽइमाँल्लोकान्त्सर्वतः समपिधायावस्तात्स्वर्गं लोकं
प्रपद्यते ॥ २३ ॥ (A)

पष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

[ छन्दस्येष्टकोपधानम् ]

छन्दस्या ऽउपदधाति । अत्रैष सर्वोऽग्निः संस्कृतः स ऽएषोऽत्र श्रियमैच्छन्नो हैषोऽतः पुरा तस्मा-ऽअलमास यच्छ्रियमधारयिष्यत्तस्मादिदमप्येतर्ह्याहुर्न वा-ऽएषोऽलꣳ श्रियै धारणाय राज्याय वा ग्रामणीथ्याय वेति तस्मै देवा ऽएताꣳ श्रियं प्रायच्छन्नेताश्छन्दस्याः पशवो वै छन्दाꣳस्यन्नं पशवोऽन्नमु श्रीः ॥ १ ॥ त्रिचा-न्युपदधाति । त्रिवृद्वै पशुः पिता माता पुत्रोऽथो गर्भ-ऽउल्बं जरायुथो त्रिवृद्वा ऽअन्नं कृषिर्वृष्टिर्बीजमेकै-वातिच्छन्दा भवत्येका ह्येव सा सर्वाणि च्छन्दाꣳस्यति सा या सा श्रीर्महत्तदुक्थं तद्यत्तन्महदुक्थमेतास्ता-श्छन्दस्याः ॥ २ ॥ तस्य शिरो गायत्र्यः । आत्मा त्रिष्टुभोऽनूकं जगत्यः पक्षौ पङ्क्तयोऽथैतासां ककुभां चत्वारि-चत्वार्यक्षराण्यादायातिच्छन्दस्युपदधाति सा सा-

(A) एतामिष्टकां विधया अन्यत्राऽप्युपलभ्यते यथा– का० सं० २१ १. १, कठ० सं० १७. ६, ६, कपिष्ठ० २९. ४, ६, मै० सं० ३३. ८ ६, १०; तै० सं० ४. ४ २, ३ ।

तिच्छन्दा ऽएव भवति गायत्र्य ऽउत्तराः सम्पद्यन्ते सैव गायत्र्यशीतिर्या बृहत्यः सा वार्हती या ऽउष्णिहः सौष्णिह्यथ यद्वशो यदर्द्धर्चौ यदैन्द्राग्नं व्यदावपनं तद्गति-च्छन्दा ऽअथ यन्नदो यत्सूददोहा यत्पदनुपङ्गा यत्किं-चात्रानुष्टुप्कर्म्मीणं तदनुष्टुभः ॥ ३ ॥ प्रतिष्ठा द्विपदाः । एतावद्वै महदुक्थं महदुक्थꣳ श्रीः सर्वामेवास्मा ऽएतां देवाः श्रियं प्रायच्छँस्तथैवास्मा ऽअयमेताꣳ सर्वाꣳ श्रियं प्रयच्छति ॥ ४ ॥ यद्वेव छन्दस्या ऽउपदधाति । एतद्वै देवा ऽएतं नाकꣳ स्वर्ग्गं लोकमपश्यन्नेता स्तोम-भागास्तस्मिन्नविशँस्तेषां विशतां प्रजापतिरुत्तमोऽविशत्त-थः स प्रजापतिरेतास्ताश्छन्दस्याः ॥ ५ ॥ तस्य शिरो गायत्र्यः । ता यद्गायत्र्यो भवन्ति गायत्रं हि शिरस्तिस्रो भवन्ति त्रिवृद्धि शिरः पूर्वार्द्धे ऽउपदधाति पुरस्ताद्धीदꣳ शिरः ॥ ६ ॥ उरस्त्रिष्टुभः । ता रेतःसिचोर्वेलयोप-दधाति पृष्टयो वै रेतःसिचा ऽउरो वै प्रति पृष्टयः ॥ ७ ॥ श्रोणी जगत्यः । स यावति पुरस्तात्स्वयमातृ-ण्णायै त्रिष्टुभ ऽउपदधाति तावति पश्चाज्जगतीर्यो वा ऽअयं मध्ये प्राणस्तदेषा स्वयमातृण्णा यावत्यु वा-ऽएतस्मात्प्राणात्पुरस्तादुरस्तावति पश्चाच्छ्रोणी ॥ ८ ॥ सक्थ्यावनुष्टुभः । ता ऽअनन्तर्हिता जगतीभ्य ऽउप-दधात्यनन्तर्हिते तच्छ्रोणिभ्याꣳ सक्थ्यौ दधाति ॥ ९ ॥ पर्शवो बृहत्यः । कीकसाः ककुभः सोऽन्तरेण त्रिष्टुभश्च ककुभश्च बृहतीरुपदधाति तस्मादिमा ऽउभयत्र पर्शवो

यद्धाः कीकसासु च जत्रुषु च ॥ १० ॥ ग्रीवा ऽउष्णिहः । ता ऽअनन्तर्हिता गायत्रीभ्य ऽउपदधात्यनन्तर्हितास्तच्छीर्ष्णो ग्रीवा दधाति ॥ ११ ॥ पक्षौ पङ्क्तयः । ता यत्पङ्क्तयो भवन्ति पाङ्क्तौ हि पक्षौ पार्श्वत ऽउपदधाति पार्श्वतो हीमौ पक्षौ यद्वर्षीयश्छन्दस्तद्दक्षिणत ऽउपदधाति दक्षिणं तदर्द्धं पशोर्वीर्य्यवत्तरं करोति तस्माद्दक्षिणोऽर्द्धः पशोर्वीर्य्यवत्तरः ॥ १२ ॥ उदरमतिच्छन्दाः । पशवो वै छन्दाᳪंस्यन्नं पशव ऽउदरं वा ऽअन्नमत्त्युदरᳪं हि वा ऽअन्नमत्ति तस्माद्यदोदरमन्नं प्राप्नोत्यथ तज्जग्धं ग्यातयामरूपं भवति तद्यदेषा पशूँश्छन्दाᳪंस्यत्ति तस्मादत्तिच्छन्दा ऽअत्तिच्छन्दा ह वै तामतिच्छन्दा ऽइत्याचक्षते परोक्षं परोक्षकामा हि देवाः ॥ १३ ॥ योनिः पुरीषवती । ते सᳪंस्पृष्टे ऽउपदधाति सᳪंस्पृष्टे ह्युदरं च योनिश्च पुरीषसᳪंहिते भवतो माᳪंसं वै पुरीषं माᳪंसेन वा ऽउदरं च योनिश्च सᳪंहिते पूर्वातिच्छन्दा भवत्यपरा पुरीषवत्युत्तरᳪं ह्युदरमधरा योनिः ॥ १४ ॥ ते प्राच्या ऽउपदधाति । प्राङ् ह्येषोऽग्निश्चीयतेऽथो प्राग्वै प्राच ऽउदरं प्राची योनिर्वहि स्तोमभागाः हृदयं वै स्तोमभागा हृदयमु वा ऽउत्तममथोदरमथ योनिः ॥ १५ ॥ ते दक्षिणतः स्वयमातृण्णाया ऽउपदधाति । अथ प्रथमायां चिता ऽउत्तरतः स्वयमातृण्णाया ऽउदरं च योनिं चोपदधाति यो वा ऽअयं मध्ये प्राणस्तदेषा स्वयमातृण्णेतस्य तत्प्राणस्योभयत ऽउदरं च योनिं च दधाति तस्मा-

देतस्य प्राणस्योभयत ऽउदरं च योनिश्च ॥ १६ ॥ प्रतिष्ठा द्विपदाः । ता यद् द्विपदा भवन्ति द्वन्द्वं हि प्रतिष्ठा तिस्रो भवन्ति त्रिवृद्धि प्रतिष्ठा पश्चादुपदधाति पश्चाद्धीयं प्रतिष्ठा ॥ १७ ॥ सोऽस्यैष सुकृत ऽआत्मा । तद्यस्य हैतमेवं सुकृतमात्मानं कुर्वन्त्येतं ह स सुकृतमात्मानमभिसम्भवत्यथ यस्य हैतमतोऽन्यथा कुर्वन्ति दुष्कृतं ह तस्यात्मानं कुर्वन्ति स ह स दुष्कृतमेवात्मानमभिसम्भवति ॥ १८ ॥ तदेते सामनिधने ऽअभ्युक्ते । अर्कों देवानां परमे व्योमन्नर्कस्य देवाः परमे व्योमन्नित्येतद्वै देवानां विशतां प्रजापतिरुत्तमोऽविशत्तस्मादाहार्कों देवानां परमे व्योमन्नित्यथ यदाहार्कस्य देवाः परमे व्योमन्नित्ययं वा ऽअग्निरर्कस्तस्यैतदुत्तमायां चितौ सर्वे देवा विष्टास्तस्मादाहार्कस्य देवाः परमे व्योमन्निति ॥ १९ ॥ (B)

पष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या १०८ ॥



[ गार्हपत्येष्टकोपधानम् ]

गार्हपत्यमुपदधाति । एतद्वै देवाः प्राप्य राद्धेवामन्यन्त तेऽब्रुवन्केनेदमरात्स्मेति गार्हपत्येनेत्यब्रुवन्गार्हपत्यं वै चित्वा समारुह्य प्रथमां चितिमपश्याम

(B) एतद्ब्राह्मणगत्या विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० सं० ११. १. २ ।

प्रथमायै द्वितीयां द्वितीयायै तृतीयां तृतीयायै चतुर्थीं चतुर्थ्यै पञ्चमीं पञ्चम्या ऽइदमिति ॥ १ ॥ तेऽब्रुवन् । उप तज्जानीत यथेयमस्मास्वेव राद्धिरसदिति तेऽब्रुवँश्चेतयद्ध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्तदिच्छत यथेयमस्मास्वेव राद्धिरसदिति ॥ २ ॥ ते चेतयमानाः । एतदपश्यन्निहेममाहृत्योपदधामहा ऽइति तमिहाहृत्योपादधत तस्मिन्नन्व्यवदन्त वसवः पुरस्ताद्रुद्रा दक्षिणत ऽआदित्याः पश्चान्मरुत ऽउत्तरतो विश्वे देवा ऽउपरिष्टादिहोपदधामेहोपदधामेति ॥ ३ ॥ तेऽब्रुवन् । मध्य ऽएवोपदधामहै स नो मध्य ऽउपहितः सर्वेषां भविष्यतीति तं मध्य ऽउपादधत तदेताथं राद्धिमास्मन्नदधत मध्यतो मध्यत ऽएवैतदेताथं राद्धिमास्मन्नदधत तथैवैतद्यजमानो यद्गार्हपत्यमुपदधात्येतामेवैतद्राद्धिमात्मन्धत्ते मध्यतो मध्यत ऽएवैतदेताथं राद्धिमात्मन्धत्ते ॥ ४ ॥ यद्वेव गार्हपत्यमुपदधाति । अन्नं वै गार्हपत्योऽयमग्निश्चितोऽन्न ऽएवैतदन्नमपिदधाति मध्यतो मध्यत ऽएवास्मिन्नेतदन्नं दधाति ॥ ५ ॥ यद्वेव गार्हपत्यमुपदधाति । वेदिर्वै देवलोकोऽथ वा ऽएष वहिर्वेदि चितो भवति तं यदिहाहृत्योपदधाति तदेनं वेदौ देवलोके प्रतिष्ठापयति ॥ ६ ॥ यद्वेव गार्हपत्यमुपदधाति । योनिर्वै पुष्करपर्णमथ वा ऽएष वहिर्योनि चितो भवति वहिर्द्धो वाऽ ऽएतद्योनेरग्निकर्म्म यत्पुरा पुष्करपर्णाच्चं यदिहाहृत्योपदधाति तदेनं योनौ पुष्करपर्णे प्रतिष्ठापयति

तथो हैषोऽवहिर्द्धा भवत्यष्टाविष्टका उउपदधाति तस्योक्तो बन्धुस्तं वा ऽएतैरेव यजुर्भिरेतयावृता चिनोति यो ह्येवासौ स ऽएवायं तमेवैतदाहृत्येहोपदधाति ॥ ७ ॥ अथ पुनश्चितिमुपदधाति । एतद्वै देवा गार्हपत्यं चित्वा तस्मिन् राद्धिं नापश्यन्त्योनिर्वै गार्हपत्या चितिरेषो वै योने राद्धिर्यद्रेतः प्रजातिस्तस्यामेतस्यां स्योनौ रेतः प्रजातिं नापश्यन् ॥ ८ ॥ तेऽब्रुवन् । उप तज्जानीत यथास्यां स्योनौ रेतः प्रजातिं दधामेति तेऽब्रुवँश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्तदिच्छत यथास्यां स्योनौ रेतः प्रजातिं दधामेति ॥ ९ ॥ ते चेतयमानाः । एतां पुनश्चितिमपश्यँस्तामुपादधत तदेतस्यां स्योनौ रेतः प्रजातिमदधुर्म्मध्यतो मध्यत ऽएवैतदेतस्यां स्योनौ रेतः प्रजातिमदधुस्तथैवैतद्यजमानो यत्पुनश्चितिमुपदधात्येतस्यामेवैतद्योनौ रेतः प्रजातिं दधाति मध्यतो मध्यत ऽएवैतदेतस्यां स्योनौ रेतः प्रजातिं दधाति ॥ १० ॥ ताᳬं हैके जघनार्द्ध ऽउपदधति । जघनार्द्धाद्वै रेतः सिच्यते पुच्छसन्धौ पुच्छाद्वै रेतः सिच्यत ऽइति न तथा कुर्य्याद्बहिर्द्धा ह ते योने रेतः प्रजातिं दधति ये तथा कुर्वन्ति मध्य ऽएवोपदध्यात्तत्सम्प्रति योनौ रेतः प्रजातिं दधाति ॥ ११ ॥ अष्टाविष्टका ऽउपदधाति । अष्टाक्षरा गायत्री गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्रेतो भूतᳬं सिञ्चति पञ्चकृत्वः सादयति पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्या-

वानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतद्देतोभूतᳪ सिञ्चत्यष्टा-विष्टकाᳪ पञ्चकृत्वᳪ सादयति तत्त्रयोदश त्रयोदश मासाᳪ संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि यावानग्निर्य्यावत्यस्य मात्रा तावत्तद्भवति ॥ १२ ॥ यद्वेव * पुनश्चितिमुपदधाति । एतद्वा ऽएतद्यथायथं करोति यदाहवनीयाद् गार्हपत्यमुत्तरं चिनोति तद्यत्पुनश्चितिमुपदधाति य ऽएवायमग्निश्चितस्तमेवैतदाहृत्यास्योपरिष्टात्पुनश्चिनोति तद्यच्चितᳪ सन्तं पुनश्चिनोति तस्मात्पुनश्चितिᳪ ॥ १३ ॥ तद्धैके । जघनार्द्धे गार्हपत्यमुपदधति पूर्वार्द्धे पुनश्चितिमाहवनीयश्च वा ऽएतौ गार्हपत्यश्चैवं वा-ऽएतावग्नी ऽइति न तथा कुर्य्यादयं वै लोको गार्हपत्यो द्यौराहवनीय ऽउत्तरो वा ऽअसावस्यै तस्मादेनामुत्तरामेवोपदध्यात् ॥ १४ ॥ यद्वेव गार्हपत्यं च पुनश्चितिं चोपदधाति । वेदिश्च हैते ऽअग्नेरुत्तरवेदिश्चाथ ये-ऽअमू पूर्वे निवपत्यद्ध्वरस्य ते ऽअथ हैते ऽअग्नेस्तद्यदेते-ऽउपधायाग्निं निदधाति वेदौ चैवैतमेतदुत्तरवेदौ च प्रतिष्ठापयति ॥ १५ ॥ यद्वेव पुनश्चितिमुपदधाति । पुनर्य्यज्ञो हैष ऽउत्तरा हैषा देवयज्या पुनर्य्यज्ञमेवैतदुपधत्त ऽउत्तरामेव देवयज्यामुप हैनं पुनर्य्यज्ञो नमति ॥ १६ ॥ यद्वेव पुनश्चितिमुपदधाति । यं वै तं प्राणा-ऽऋषयोऽग्रेऽग्निᳪ समस्कुर्वंस्त ऽएष तमेवैतत्पुनश्चिनोति तद्यच्चितᳪ सन्तं पुनश्चिनोति तस्माद्वेव

---

* का० श्रौ० सू० १७ १२ १८।

पुनश्चिच्चतिः ॥ १७ ॥ 'येन[1] ऽऋषयस्तपसा सत्रमाय-
न्नि'ति । अमूनेतदृषीना'इन्धाना[2] ऽअग्निꣳ स्वराभरन्त'
ऽइतीन्धाना ऽअग्निꣳ स्वर्गं लोकमाहरन्त ऽइत्येत'त्तस्मि-
न्नहं[3] निदधे नाके ऽअग्नि'मिति स्वर्गो वै लोको नाको
'यमाहुर्[4]मनव स्तीर्णबर्हिष'मिति ये विद्वाꣳसस्ते मनव
स्तीर्णबर्हिषमिति सर्वदा हैव स स्तीर्णबर्हिः ॥ १८ ॥
'तं[5] पत्नीभिरनुगच्छेम देवाः । पुत्रैर्भ्रातृभिरुत वा हिर-
ण्ययैरि'त्येतेनैनः सर्वेणानुगच्छेमे'त्येत'न्नाकं[6] गृभ्णानाः
सुकृतस्य लोक ऽइति स्वर्गो वै लोको नाकः स्वर्गं
लोकं गृह्णानाः सुकृतस्य लोक ऽइत्येत'त्तृतीये[7] पृष्ठे-
ऽअधि रोचने दिव' ऽइत्येतद्ध तृतीयं पृष्ठꣳ रोचनं
दिवो यत्रैष ऽएतत्तपति ॥ १९ ॥ 'आ[8] वाचो मध्यमरुह-
द्भुरण्युरि'ति । एतद्ध वाचो मध्यं यत्रैष ऽएतच्ची-
यते भुरण्युरिति भर्त्ते'त्येत'दयमग्निः[9] सत्पतिश्चेकितान'-
ऽइत्ययमग्निः सतां पतिश्चेतयमान ऽइत्येत'त्पृष्ठे
पृथिव्या[10] निहितो दविद्युतद्'ति पृष्ठे पृथिव्या निहितो
दीप्यमान ऽइत्येत'दधस्पदं कृण्वतां[11] ये पृतन्यव'
ऽइत्यधस्पदं कुरुताꣳ सर्वान्पाप्मन ऽइत्येतत् ॥ २० ॥
'अयमग्निर्[12]वीरतमो वयोधा' ऽइति । अयमग्निर्वीर्यवत्तमो

(१) शु० य० सं० अ० १५ क० ४९ । (२) शु० य० सं० अ० १५ क० ४९ ।
(३) शु० य० सं० अ० १५ क० ४९ । (४) शु० य० सं० अ० १५ क० ४९ ।
(५) शु० य० सं० अ० १५ क० ५० । (६) शु० य० सं० अ० १५ क० ५० ।
(७) शु० य० सं० अ० १५ क० ५० । (८) शु० य० सं० अ० १५ क० ५१ ।
(९) शु० य० सं० अ० १५ क० ५१ । (१०) शु० य० सं० अ० १५ क० ५१ ।
(११) शु० य० सं० अ० १५ क० ५१ । (१२) शु० य० सं० अ० १५ क० ५१ ।

वयोधा ऽइत्येत'त्सहस्रियो[1] द्योततामप्रयुच्छन्नि'ति सहस्रियो दीप्यतामप्रमत्त ऽइत्येत'द्दिवि भ्राजमानः[2] सरिरस्य मध्य' ऽइतीमे वै लोकाः सरिरं दीप्यमान ऽएषु लोकेष्वित्येत'दुप प्रयाहि[3] दिव्यानि धामे'त्युप प्रयाहि स्वर्गं[4] लोकमित्येतत् ॥ २१ ॥ 'सम्प्रच्यवध्वमुप[5] सम्प्रयाते'ति । अमूनेतदृषीनाह समेनं प्रच्यवध्वमुप चैनः सम्प्रयाते'त्यग्ने पथो[6] देवयानान्कृणुध्वमि'ति यथैव यजुस्तथा बन्धुः 'पुनः[7] कृण्वाना पितरा युवाने'ति वाक्च वै मनश्च पितरा युवाना वाक्च मनश्चैतावग्नी 'ऽअन्वाँ[8] ताथ्ठसीत्त्वयि तन्तुमेतामि'ति योऽसावृषिभिस्तन्तुस्ततस्तमेतदाह ॥ २२ ॥ 'उद्बुध्यस्वाग्ने[9] प्रतिजागृहि त्वमि'ति । इममेतदग्निमाहोच्चैनं बुध्यस्व प्रति चैनं जागृही'तीष्टापूर्ते[10] सःसृजेथामयं चे'ति यथैव यजुस्तथा बन्धु'रस्मिन्त्सधस्थे[11] ऽअध्युत्तरस्मिन्नि'ति द्यौर्वा ऽउत्तरः सधस्थं 'विश्वे देवा यजमानश्च सीदते'ति तद्विश्वैर्देवैः सह यजमानः सादयति ॥ २३ ॥ 'येन वहसि[12] सहस्रम् । येनाग्ने सर्ववेदसमि'त्येतद्धास्य प्रतिज्ञाततमं धाम येन सहस्रं वहति येन सर्ववेदसं 'तेनेमं यज्ञं[13] नो नय स्वर्देवेषु

(१) शु० य० सं० अ० १५ क० ५१। (२) शु० य० सं० अ० १५ क० ५१।
(३) शु० य० सं० अ० १५ क० ५२। (४) शु० य० सं० अ० १५ क० ५२।
(५) शु० य० सं० अ० १५ क० ५३। (६) शु० य० सं० अ० १५ क० ५३।
(७) शु० य० सं० अ० १५ क० ५३। (८) शु० य० सं० अ० १५ क० ५४।
(९) शु० य० सं० अ० १५ क० ५४। (१०) शु० य० सं० अ० १५ क० ५४।
(११) शु० य० सं० अ० १५ क० ५४। (१२) शु० य० सं० अ० १५ क० ५५।
(१३) शु० य० सं० अ० १५ क० ५५।

गन्तव ऽइति तेन न ऽइमं यज्ञं नय स्वर्गं लोकं देवेषु
गन्तव ऽइत्येतदथ ते योनिर्ऋत्विय ऽइति तस्योक्तो बन्धु-
रष्टाविष्टका ऽउपदधाति तस्यो ऽएवोक्तः ॥ २४ ॥ (C)

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

---

[ ऋतव्या-स्वयमातृण्णा-विकर्ण्यर्थवादः ]

ऋतव्या ऽउपदधाति । ऋतव ऽएते यदृतव्या-
ऽऋतूनेवैतदुपदधाति तदेतत्सर्वं यदृतव्याः संवत्सरो वा-
ऽऋतव्याः संवत्सर ऽइदꣳ सर्वमिदमेवैतत्सर्वमुपदधा-
त्यथो प्रजननमेतत्संवत्सरो वा ऽऋतव्याः संवत्सरः
प्रजननं प्रजननमेवैतदुपदधाति ॥ १ ॥ यद्वेवर्त्तव्या-
ऽउपदधाति । क्षत्रं वा ऽऋतव्या विश ऽइमा ऽइतरा-
ऽइष्टकाः क्षत्रं तद्विश्यत्तारं दधाति ताः सर्वासु चिति-
षूपदधाति सर्वस्यां तद्विशि क्षत्रमत्तारं दधाति ॥ २ ॥
यद्वेवर्त्तव्या ऽउपदधाति । संवत्सर ऽएषोऽग्निः स-
ऽऋतव्याभिः सꣳहितः संवत्सरमेवैतदृतुभिः सन्तनोति
सन्दधाति ता वै नाना प्रभृतयः समानोदर्का ऽऋतवो
वा ऽअसृज्यन्त ते सृष्टा नानैवासन् ॥ ३ ॥ तेऽब्रुवन् ।
न वा ऽइत्थꣳ सन्तः शक्ष्यामः प्रजनयितुꣳ रूपैः समा-
यामेति त ऽएकैकमृतुꣳ रूपैः समायँस्तस्मादेकैकस्मि-
न्नृतौ सर्वेषामृतूनाꣳ रूपं ता यन्नाना प्रभृतयो नाना

( C ) एतद्ब्राह्मणस्था विषया अन्यथाऽप्युपलभ्यन्ते यथा— का॰ श॰ ११. २. ३ ।

ह्यसृज्यन्ताथ यत्समानोदर्कौ रूपैर्हि समायन् ॥ ४ ॥
स ऽउपदधाति । 'तपश्च तपस्यश्च शैशिरावृतू' ऽइति नामनी ऽएनयोरेते नामभ्यामेवैने ऽएतदुपदधात्यसौ वा ऽआदित्यस्तपस्तस्मादेतावृतू ऽअनन्तर्हितौ तद्यदेतस्मादेतावृतू ऽअनन्तर्हितौ तस्मादेतौ तपश्च तपस्यश्च ॥ ५ ॥ 'अग्नेरन्तः श्लेषोऽसी'ति । संवत्सर ऽएषोऽग्निः स ऽऋतुभ्याभिः सन्हितः संवत्सरमेवैतदृतुभिः सन्तनोति सन्दधाति 'कल्पेतां द्यावापृथिवी कल्पन्तामाप ऽओषधय' ऽइतीदमेवैतत्सर्वमृतुभिः कल्पयति 'कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रता' ऽइत्यग्नयो ह्येते पृथग्यदेता ऽइष्टकास्ते यथानयोर्ऋत्वोर्ज्यैष्ठ्याय कल्पेरन्नेवमेतदाह 'ये ऽअग्नयः समनसोऽन्तरा द्यावापृथिवी ऽइमे' ऽइति यथैव यजुस्तथा बन्धुः 'शैशिरावृतू ऽअभिकल्पमाना ऽइन्द्रमिव देवा ऽअभिसंविशन्त्वि'ति यथेन्द्रं देवा ऽअभिसंविष्टा ऽएवमिमावृतू ज्यैष्ठ्यायाभिसंविशन्त्वित्येतद् द्वे ऽइष्टके भवतो द्वौ हि मासावृतुः सकृत्सादयत्येकं तदृतुं करोति ॥ ६ ॥ तद्यदेते ऽअत्रोपदधाति । संवत्सर ऽएषोऽग्निरिम ऽउ लोकाः संवत्सरस्तस्य द्यौरेव पञ्चमी चितिर्द्यौरस्य शिशिर ऽऋतुस्तद्यदेते ऽअत्रोपदधाति यदेवास्यैते ऽआत्मनस्त-

(१) शु० य० सं० अ० १५ कं० ५७। (२) शु० य० सं० अ० १५ कं० ५७।
(३) शु० य० सं० अ० १५ कं० ५७। (४) शु० य० सं० अ० १५ कं० ५७।
(५) शु० य० सं० अ० १५ कं० ५७। (६) शु० य० सं० अ० १५ कं० ५७।

दस्मिन्नेतत्प्रतिदधाति तस्मादेते ऽअत्रोपदधाति ॥ ७ ॥ यद्वेवैते ऽअत्रोपदधाति । प्रजापतिरेषोऽग्निः संवत्सर-ऽउ प्रजापतिस्तस्य शिर ऽएव पञ्चमी चितिः शिरोऽस्य शिशिर ऽऋतुस्तद्यदेते ऽअत्रोपदधाति यदेवास्यैते ऽआत्मनस्तदस्मिन्नेतत्प्रतिदधाति तस्मादेते ऽअत्रोपदधाति ॥ ८ ॥ स पुरस्तात्स्वयमातृण्णायै च विश्वज्योतिषश्चर्त्तव्ये ऽउपदधाति । द्यौर्वा ऽउत्तमा स्वयमातृण्णादित्य ऽउत्तमा विश्वज्योतिरर्वाचीनं तद्दिवश्चादित्याच्चर्तून्दधाति तस्मादर्वाचीनमेवात ऽऋतवोऽथो प्रजननमेतदर्वाचीनं तद्दिवश्चादित्याच्च प्रजननं दधाति तस्मादर्वाचीनमेवातः प्रजायते स्थितः हैवातः पराक्प्रजननं स्याद्यावन्तो ह्येव सनाग्रे देवास्तावन्तो देवाः ॥ ९ ॥ अथ प्रथमायै स्वयमातृण्णायै । प्रथमायै च विश्वज्योतिषऽउपरिष्टादृतव्ये ऽउपदधातीयं वै प्रथमा स्वयमातृण्णाग्निः प्रथमा विश्वज्योति*रितस्तदूर्ध्वानृतून्दधाति तस्मादित ऽऊर्ध्वा ऽऋतवोऽथो प्रजननमेतदितस्तदूर्ध्वं प्रजननं दधाति तस्मादित ऽऊर्ध्वमेव प्रजायते ॥ १० ॥ ता न व्यूहेत् । नेदृतून्व्यूहानीति यो वै भ्रियतऽऋतवो ह तस्मै व्युह्यन्ते तस्माद्यत्रैव प्रथमे ऽउपदधाति तत्सर्वा ऽउपदध्यात् ॥ ११ ॥ अथो ऽइमे वै लोका ऽऋतव्याः । इमाँस्तल्लोकानूर्ध्वाँश्चितिभिश्चिनोत्यथो क्षत्रं वा ऽऋतव्याः क्षत्रं तदूर्ध्वं चितिभिश्चिनो-

* 'रितस्तदूर्ध्वा' इति 'क-घ' । 'स्तदूर्ध्वा' इति 'ग-ञ' पुस्तकयो. ।

त्यथो संवत्सरो वा ऽऋतव्व्याः संवत्सरं तदूर्द्ध्वं चितिभिश्चिनोति ता नान्यया यजुष्मत्येष्टकयोपरिष्टादभ्युपदध्यान्नेदक्षत्रं विशाऽभ्युपदधानीति ॥ १२ ॥ ता हैता ऽएव सँय्यान्यः । एतद्वै देवा ऽऋतव्व्याभिरेवेमाँल्लोकान्त्समयुरितश्चोर्द्ध्वानमुतश्चार्वाचस्तथैवैतद्यजमान ऽऋतव्व्याभिरेवेमाँल्लोकान्त्सँय्यातीतश्चोर्द्ध्वानमुतश्चार्वाचः ॥१३॥ तदु ह चरकाद्ध्वर्य्यवः । अन्या ऽएव सँय्यानीरित्युपदधति न तथा कुर्य्यादत्यहैव रेचयन्त्येता ऽउ ऽएव सँय्यान्यः ॥ १४ ॥ अथ विश्वज्ज्योतिषमुपदधाति । आदित्यो वा ऽउत्तमा विश्वज्ज्योतिरादित्यो ह्येवामुष्मिँल्लोके विश्वज्ज्योतिरादित्यमेवैतदुपदधाति ॥ १५ ॥ यद्वेव विश्वज्ज्योतिषमुपदधाति । प्रजा वै विश्वज्ज्योतिः प्रजा ह्येव विश्वज्ज्योतिः प्रजननमेवैतदुपदधाति ॥ १६ ॥ स पुरस्तात्स्वयमातृण्णायै * विश्वज्ज्योतिषमुपदधाति । द्यौर्वा ऽउत्तमा स्वयमातृण्णादित्य ऽउत्तमा विश्वज्ज्योतिरर्वाचीनं तद्दिव ऽआदित्यं दधाति तस्माद्वेषोऽर्वाचीनमेवातस्तपत्यथो प्रजननमेतदर्वाचीनं तद्दिवः प्रजननं दधाति तस्मादर्वाचीनमेवातः प्रजायते ॥ १७ ॥ अथ प्रथमायै स्वयमातृण्णायै । उपरिष्टाद्विश्वज्ज्योतिषमुपदधातीयं वै प्रथमा स्वयमातृण्णाग्निः प्रथमा विश्वज्ज्योतिरितस्तदूर्द्ध्वमग्निं दधाति तस्मादित ऽऊर्द्ध्वोऽग्निर्दीप्यतेऽथो प्रजननमेतदितस्तदूर्द्ध्वं प्रजननं

* का० श्रौ० सू० १७ ११. २२।

दधाति तस्मादित ऽऊर्द्ध्वमेव प्रजायते ॥ १८ ॥ अथ मद्ध्यमायै स्वयमातृण्णायै । उपरिष्टाद्विश्वज्योतिष-मुपदधात्यन्तरिक्षं वै मद्ध्यमा स्वयमातृण्णा वायु-र्म्मद्ध्यमा विश्वज्योतिरन्तरिक्षे तद्वायुं दधाति तस्मा-दयमन्तरिक्षे वायुः ॥ १९ ॥ ताज्येतानि ज्ज्योतीᳪषि । तद्यदेता ऽएवमुपदधात्येतान्येवैतज्ज्योतीᳪषि सम्म्यञ्चि दधाति तस्मादित ऽऊर्द्ध्वोऽग्निर्द्दीप्यतेऽर्वाङसावादित्य-स्तपत्यन्तरिक्षेऽयं तिर्य्यङ् वायुः पवते ॥ २० ॥ 'परमेष्ठी त्वा सादयत्वि'ति । परमेष्ठी ह्येतां पञ्चमीं चितिमपश्यद्'दिवस्पृष्ठे ज्योतिष्मतीमि'ति दिवो ह्यसौ पृष्ठे ज्योतिष्मानादित्यः॥ २१ ॥ 'विश्वस्मै प्राणायापानाय । व्यानाये'ति प्राणो वै विश्वज्योतिः सर्वस्मा ऽउ वा-ऽएतस्मै प्राणो 'विश्वंज्ज्योतिर्य्यच्छे'ति सर्वं ज्योतिर्य्य-च्छेत्येत'त्सूर्य्यस्तेऽधिपतिरि'ति सूर्य्यमेवास्या ऽअधिपतिं करोति सादयित्वा सूददोहसाभिवदति तस्योक्तो बन्धुः ॥ २२ ॥ ता हैता ऽएव सᳪयाज्यः । एतद्वै देवा विश्व-ज्योतिर्भिरेवेमाँल्लोकान्त्समयुरितश्चोर्द्ध्वानमुतश्चार्वाचस्तथै-वैतद्यजमानो विश्वज्ज्योतिर्भिरेवेमाँल्लोकान्त्सᳪयातीत-श्चोर्द्ध्वानमुतश्चार्वाचः ॥ २३ ॥ तदु ह चरकाद्ध्वर्य्यवः ।

(१) शु० य० सं० अ० १५ क० ५८ । (२) शु० य० सं० अ० १५ क० ५८ ।
(३) शु० य० सं० अ० १५ क० ५८ । (४) शु० य० सं० अ० १५ क० ५८ ।
(५) शु० य० सं० अ० १५ क० ५८ ।

अन्या ऽएव सँख्यानीरित्युपदधाति न तथा कुर्य्यादत्यहैव रेचयन्त्येता ऽउ ऽएव सँख्यान्यः ॥ २४ ॥ (A)

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ लोकम्पृणेष्टकोपधानम्, इष्टकाप्रमाणं च ]

अथ लोकम्पृणामुपदधाति । असौ वा ऽआदित्यो लोकम्पृणैष हीमाँल्लोकान्पूरयत्यमुमेवैतदादित्यमुपदधाति ताᳬ सर्वासु चितिषूपदधातीमे वै लोका ऽएताश्चितयोऽमुं तदादित्यमेषु लोकेषु दधाति तस्मादेष सर्वेभ्य ऽएवेभ्यो लोकेभ्यस्तपति ॥ १ ॥ यद्वेव * लोकम्पृणामुपदधाति । क्षत्रं वै लोकम्पृणा विश ऽइमा ऽइतरा ऽइष्टकाः क्षत्रं तद्विश्यत्तारं दधाति ताᳬ सर्वासु चितिषूपदधाति सर्वस्यां तद्विशि क्षत्रमत्तारं दधाति ॥ २ ॥ सैषैकैव भवति । एकस्थं तत्क्षत्रमेकस्थाᳬ श्रियं करोत्यथ या द्वितीया मिथुनं तदर्द्धमु हैतदात्मनो यन्मिथुनं यदा वै सह मिथुनेनाथ सर्वोऽथ कृत्स्नः कृत्स्नताया ऽएकेन यजुषा बह्वीरिष्टका ऽउपदधाति क्षत्रं तद्वीर्य्येणात्यादधाति क्षत्रं विशो वीर्य्यवत्तरं करोत्यथेतराः पृथङ् नाना यजुर्भिरुपदधाति विशं तत्क्षत्रादवीर्य्यतरां करोति पृथग्वादिनीं नाना चेतसम् ॥ ३ ॥ स वा ऽअस्याᳬ स्रक्त्यां प्रथमे ऽउपदधाति ।

(A) एतद्यमलस्था विधवा अन्यथाऽप्युपन्यस्त यथा— का० श० ११ २. १, का० १७ १०; कपिष्ठ० २६. ६, मै० म० ११. ८. १२, तै० सं० ५. ४ ११।

* का० श्रौ० सू० १७ ११. २४।

अमुं तदादित्यमेतस्यां दिशि दधात्यथेतस्तस्मादुतोऽ-
नुपर्य्येत्यथेतस्तस्मादुतोऽनुपर्य्येत्यथेतस्तस्मादुतोऽनुपर्य्ये-
त्यथातस्तस्मादुतोऽनुपर्य्येति ॥ ४ ॥ स यद्यत्रैव प्रथमे-
ऽउपदधाति । तदुत्तमे ऽअनूपदध्यात्सकृद्वैवासावादित्य-
ऽइमाँल्लोकान्पर्य्येत्यनातिप्रच्यवेतातिहृत्य पूर्वे ऽउत्तमे-
ऽअनूपदधात्यमुं तदादित्यमिमाँल्लोकानतिप्रच्यावयति
तस्मादसावादित्य ऽइमाँल्लोकानुसन्तस्थितो दक्षिणा-
वृत्पुनः पुनरनुपर्य्येति ॥ ५ ॥ 'लोकं पृण च्छिद्रं
पृणे'ति । लोकं च पूरय च्छिद्रं च पूरयेत्येत'दथो
सीद ध्रुवा त्वमित्यथो सीद स्थिरा त्वं प्रतिष्ठिते'त्येत-
दिन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन्नि'तीन्द्राग्नी
च त्वा बृहस्पतिश्चास्मिन्योनौ प्रत्यतिष्ठिपन्नित्येतद-
नुष्टुभा वाग्वा ऽअनुष्टुब्वाग्विन्द्र * ऽइन्द्रो लोकम्पृणा न
सादयत्यसन्नो ह्येष सूददोहसाधिवदति प्राणो वै
सूददोहाः प्राणेनैवैनमेतत्सन्तनोति सन्दधाति ॥ ६ ॥
तदाहुः । कथमेषा लोकम्पृणायातयाम्नी भवतीत्यसौ
वा ऽआदित्यो लोकम्पृणायातयामा वा ऽएषोऽथो वाग्वै
लोकम्पृणायातयाम्न्यु वै वाक् ॥ ७ ॥ [अर्धप्रपाठकः ५५॥]
स वै यजुष्मतीरुपधाय । लोकम्पृणया प्रच्छादयत्यन्नं वै
यजुष्मत्य ऽइष्टका ऽआत्मा लोकम्पृणान्नं तदात्मना परि-
दधाति तस्मादन्नमात्मना परिहितमात्मैव भवति ॥ ८ ॥ स

( १ ) शु० य० सं० अ० १५ क० ५९ । ( २ ) शु० य० सं० अ० १५ क० ५९ ।
( ३ ) शु० य० सं० अ० १५ क० ५९ ।

* 'वाग्गिन्द्र' इति 'ग-ज' पुस्तकयो ।

वा ऽआत्मन्नेव । यजुष्मतीरुपदधाति न पक्षपुच्छेष्वात्माँस्त-
दन्नं दधाति यदु वा ऽआत्मन्नन्नं धीयते तदात्मान-
मवति तत्पक्षपुच्छान्यथ यत्पक्षपुच्छेषु नैव तदात्मा-
नमवति न पक्षपुच्छानि ॥ ९ ॥ उभयीर्य्यजुष्मतीश्च
लोकम्पृणाश्चात्मन्नुपदधाति । तस्मादयमात्मा द्वि-
गुणो बहुलतर ऽइव लोकम्पृणा ऽएव पक्षपुच्छेषु
तस्मात्पक्षपुच्छानि तनीयाꣳसीवानूचीश्च तिरश्ची-
श्चात्मन्नुपदधात्यस्थीनि वा ऽइष्टकास्तस्मादिमान्य-
न्वञ्चि च तिर्य्यञ्चि चात्मन्नस्थीनि पराचीरेव पक्षपुच्छेषु
न हि किञ्चन पक्षपुच्छेषु तिर्य्यगस्थ्यस्ति तद्वैतदेव
चितस्य चाचितस्य च विज्ञानमेवमेव चित ऽइतरथा चितः
॥ १० ॥ स वै स्वयमातृण्णां लोकम्पृणया प्रच्छादयति ।
प्राणो वै स्वयमातृण्णादित्यो लोकम्पृणा प्राणं तदादित्येन
समिन्धे तस्मादयमुष्णः प्राणस्तया सर्वमात्मानं प्रच्छा-
दयति सर्वं तदात्मानमादित्येन समिन्धे तस्मादयꣳ
सर्व ऽएवात्मोष्णस्तद्वैतदेव जीविष्यतश्च मरिष्यतश्च
विज्ञानमुष्ण ऽएव जीविष्यञ्छीतो मरिष्यन् ॥ ११ ॥
स यस्याꣳ स्रक्त्यां प्रथमे ऽउपदधाति । ततो दशभि-
र्दशभिः सञ्छादयन्नेत्या स्वयमातृण्णायै स तेनैव दक्षिणा-
वृज्जघनेन स्वयमातृण्णाꣳ सञ्छादयन्नेत्यानूक्याया ऽअथ
पुनरेत्य तमवधिꣳ सञ्छादयति ॥ १२ ॥ आत्मानमग्रे
सञ्छादयति । आत्मा ह्येवाग्रे सम्भवतः सम्भवत्यथ
दक्षिणं पक्षमथ पुच्छमथोत्तरं तद्दक्षिणावृत्तद्धि देवत्राथो-

ऽएवं ह्वा ऽअसावादित्य ऽइमाँल्लोकान्दक्षिणावृदनुपर्य्येति
॥ १३ ॥ स ऽएष प्राण ऽएव यल्लोकम्पृणा । तया सर्व्वमा-
त्मानं प्रच्छादयति सर्व्वस्मिँस्तदात्मन्प्राणं दधाति तद्य-
द्धास्यैषाङ्गं नाभिप्राप्नुयात्प्राणो हास्य तदङ्गं नाभि-
प्राप्नुयाद्यद्वु वै प्राणोऽङ्गं नाभिप्राप्नोति शुष्यति
वा वै तन्म्लायति वा तस्मादेनः सर्व्वमेवैतया प्रच्छा-
दयेत् ॥ १४ ॥ स वा ऽआत्मन ऽएवाधि पक्षपुच्छानि
चिनोति । आत्मनो ह्येवाङ्ग्यङ्गानि प्ररोहन्त्यथ * यत्पर-
स्तादर्व्वाचीरुपदद्ध्याद्यथान्यत ऽआहृत्याङ्गं प्रतिदद्ध्यात्ता-
दृक्तत् ॥ १५ ॥ न भिन्नां न कृष्णामुपदद्ध्यात् । आर्च्छति
वा ऽएषा या भिद्यत ऽआर्त्तम्वेतद्रूपं यत्कृष्णं नेदार्त्त-
मात्मानमभिसंस्करवा ऽइति नाभिन्नां परास्येन्नेदनार्त्त-
मात्मनो बहिर्द्धा करवाणीति धिष्ण्येभ्यः प्रतिसंख्याय
या विराजमतिरिच्येरन्नोत्तरासुन्नवेयुस्तद्वै खलु ता-
ऽआर्च्छन्ति ता भित्त्वोत्कर ऽउत्किरेदुत्करो वा ऽअति-
रिक्तस्य प्रतिष्ठा तद्यत्रातिरिक्तस्य प्रतिष्ठा तदेवैना-
ऽएतत्प्रतिष्ठापयति ॥ १६ ॥ अथात ऽइष्टकामात्राणामेव ।
पादमात्रीः प्रथमायाश्चोत्तमायाश्च चित्योरुपदद्ध्यात्प्रतिष्ठा
वै पादो यो वै पादः स हस्त ऊर्ध्वस्त्यमात्र्यो वर्षिष्ठाः
स्युर्न ह्यूर्ध्वस्त्यात्किञ्चन वर्षीयोऽस्त्यस्ति ह्यालिखित-
वत्यस्तिस्रश्चितयः स्युस्त्रिवृतो हीमे लोका ऽअपरिमिता-
लिखिते द्वे रसो हैते चिती ऽअपरिमित ऽउ वै रसः

* 'यत्पुरस्ता' इति 'ग-ज' पुस्तकयो. ।

सर्वास्त्वेव च्छयालिखितवत्यः स्युः सर्वे ह्येवेमे लोकास्त्रिवृतः ॥ १७ ॥ अथात ऽइष्टकानामेवावपनस्य । यां काञ्च यजुष्मतीमिष्टकां विद्यात्तां मध्यमायां चिता ऽउपदध्या- दन्तरिक्षं वै मध्यमा चितिरन्तरिक्षमु वै सर्वेषां भूता- नामावपनमथो ऽअन्नं वै यजुष्मत्य ऽइष्टका ऽउदरं मध्यमा चितिरुदरे तदन्नं दधाति ॥ १८ ॥ तदाहुः । नोपदध्यान्नेदतिरेचयानीति स वा ऽउपैव दध्यात्कामे- भ्यो वा ऽएता ऽइष्टका ऽउपधीयन्ते न वै कामानामति- रिक्तमस्ति स वै नैवोपदध्यादेतावद्वा ऽएतद्देवा- ऽअकुर्वन् ॥ १९ ॥ (B)

सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ इष्टकासु पुरीषनिवापः, स्वयमातृण्णा विकर्णीउपधानं च ]

अथ पुरीषं निवपति । मांसं वै पुरीषं मांसेनैवै- नमेतत्प्रच्छादयतीष्टका ऽउपाधायास्थीष्टका ऽअस्थि तन्मांसेः सञ्छादयति ॥ १ ॥ स वै स्वयमातृण्णाया- मावपति । प्राणो वै स्वयमातृण्णान्नं पुरीषं प्राणे तदन्नं दधाति तेन सर्वमात्मानं प्रच्छादयति तस्मात्प्राणेऽन्नं धीयते * तत्सर्वमात्मानमवति सर्वमात्मानमनुव्येति॥ २॥ न स्वयमातृण्णायामावपेदित्यु हैक ऽआहुः । प्राणः स्वयमातृण्णा नेत्प्राणानपिदधानीति स वा ऽएव वपेदन्नेन वै प्राणा विष्टब्धा यो वा ऽअन्नं नात्ति सं वै तस्य प्राणा

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११ २ २।

* 'तत्समवम्' इति 'क घ । 'सर्वम्' इति 'ग-ज' पुस्तकयो. ।

रोहन्ति तद्यस्य ह तथा कुर्वन्ति यथा शुष्का सूर्म्मी सुषिरैवꣳ ह सोऽमुष्मिँल्लोके सम्भवति तस्मात्स्वयमातृण्णायामेव वपेत् ॥ ३ ॥ स्वयमातृण्णायामोप्य । अनूवयया सञ्छादयन्नेत्या परिश्रित्त्वयꣳ स तेनैव दक्षिणावृत्तघनेन स्वयमातृण्णाꣳ सञ्छादयन्नेत्या पुनरनूवयायै ॥ ४ ॥ आत्मानमग्रे सञ्छादयति । आत्मा ह्येवाग्रे सम्भवतꣳ सम्भवत्यथ दक्षिणं पक्षमथ पुच्छमथोत्तरं तद्दक्षिणावृत्तद्धि देवत्रा ॥ ५ ॥ स एष प्राण एव यत्पुरीषम् । तेन सर्वमात्मानं प्रच्छादयति सर्वस्मिँस्तदात्मन्प्राणं दधाति तद्यद्धास्यैतदङ्गं नाभिप्राप्नुयादप्राणो हास्य तदङ्गं नाभिप्राप्नुयाद्यदु वै प्राणोऽङ्गं नाभिप्राप्नोति शुष्यति वा वै तन्म्लायति वा तस्मादेनꣳ सर्वमेवैतेन प्रच्छादयेत् ॥ ६ ॥ 'इन्द्रं विश्वा ऽअवीवृधन्नि'ति । इन्द्रꣳ हि सर्वाणि भूतानि वर्द्धयन्ति 'समुद्रव्यचसं गिर' ऽइति महिमानमस्यैतदाह 'रथीतमꣳ रथीनामि'ति रथितमो ह्येष रथिनां 'वाजानाꣳ सत्पतिं पतिमि'त्यन्नं वै वाजा ऽअन्नानाꣳ सत्पतिं पतिमित्येतदैन्द्रयानुष्टुभा निवपत्यैन्द्रꣳ हि पुरीषं तदेतदर्द्धमग्नेर्यत्पुरीषमर्द्धमैष्टकम् ॥ ७ ॥ तदाहुः । यत्सर्वैश्छन्दोभिꣳ सर्वाभिर्देवताभिरिष्टका ऽउपदधात्यथैतदेकयैकदेवत्यया निवपति कथमेतदर्द्धमग्नेरितीन्द्रो वै सर्वान्देवा-

(१) शु० य० सं० अ० १५ क० ६१। (२) शु० य० सं० अ० १५ क० ६१। (३) शु० य० सं० अ० १५ क० ६१। (४) शु० य० सं० अ० १५ क० ६१।

ह्यप्रतिप्रतिस्तद्यदैन्द्र्या निवपति तेनैतदर्द्धमग्नेरथ यदनुष्टुभा वाग्वा ऽअनुष्टुब्वागु सर्वाणि च्छन्दाᳬसि तेनो ऽएवार्द्धम् ॥ ८ ॥ अथ * विकर्णीं च स्वयमातृण्णां चोपदधाति । वायुर्वै विकर्णी द्यौरुत्तमा स्वयमातृण्णा वायुं च तद्दिवं चोपदधात्युत्तमे ऽउपदधात्युत्तमे हि वायुश्च द्यौश्च सᳬस्पृष्टे सᳬस्पृष्टे हि वायुश्च द्यौश्च पूर्वां विकर्णीमुपदधात्यर्वाचीनं तद्दिवो वायुं दधाति तस्मादेषोऽर्वाचीन†मेवातः पवते ॥ ९ ॥ यद्वेव विकर्णीमुपदधाति । यत्र वा ऽअदोऽश्वं चितिमवघ्रापयन्ति तदसावादित्य ऽइमाँल्लोकान्त्सूत्रे समावयते तद्यत्तत्सूत्रं वायुः स स यः स वायुरेषा सा विकर्णी तद्यदेतामुपदधात्यसावेव तदादित्य ऽइमाँल्लोकान्त्सूत्रे समावयते ॥ १० ॥ यद्वेव विकर्णीं च स्वयमातृण्णां चोपदधाति । आयुर्वै विकर्णी प्राणः स्वयमातृण्णायुश्च तत्प्राणं चोपदधात्युत्तमे ऽउपदधात्युत्तमे ह्यायुश्च प्राणश्च सᳬस्पृष्टे सᳬस्पृष्टे ह्यायुश्च प्राणश्च पूर्वामुत्तरां विकर्णीमुपदधात्यायुषा तत्प्राणमुभयतः परिगृह्णाति ॥ ११ ॥ '(१)प्रोथदश्वो न यवसे । अविष्यन्यदा महः संवरणाद्व्यस्थात् । आदस्य वातो ऽअनुवाति शोचिरध स्म ते व्रजनं कृष्णमस्ती'ति यदा वा ऽएतस्य वातोऽनुवाति शोचिरथैतस्य

---

* "प्रदक्षिण पुरीषेण विकर्णीस्वयमातृण्णे सकृदे संसृष्टे छिद्रे 'प्रोथदश्व' इत्युत्तरां विकर्णीमसोढ्वेति स्वयमातृण्णाम्" ( का० श्रौ० सू० १७. १२. २५ )।

† 'मेवात' इति 'क-घ'। मेव व्रात' इति 'ग-ज' पुस्तकयोः ।

(१) शु० य० सं० अ० १५ क० ६१।

ऽव्रजनं कृष्णं भवति त्रिष्टुभोपदधाति त्रैष्टुभो हि वायुराग्ने-
स्याग्निकर्म्मं ह्यनिरुक्तयानिरुक्तो हि वायुरथ यद्वात ऽइत्याह
वातो हि वायुः ॥ १२ ॥ * अथ स्वयमातृण्णामुपदधाति ।
'आयोष्ट्वा सदने सादयामी'त्येष वा ऽआयुस्तस्यैतत्सदन-
'मवत' ऽइत्येष हीदꣳ सर्वमवति छायायामित्येतस्य हीदꣳ
सर्वं 'छायायाꣳ समुद्रस्य हृदय' ऽइति समुद्रस्य ह्येतद्धृ-
दयꣳ 'रश्मीवतीं भास्वतीमि'ति रश्मिवती हि द्यौर्भा-
स्व'त्या या द्यां भास्या पृथिवीमोर्वन्तरिक्षमि'त्येवꣳ ह्येष
ऽइमाँल्लोकानाभाति ॥ १३ ॥ 'परमेष्ठी त्वा सादयत्वि'ति ।
परमेष्ठी ह्येतां पञ्चमीं चितिमपश्यत् ॥ १४ ॥ यद्देव परमे-
ष्ठिनोपदधाति । प्रजापतिं विस्रस्तं देवता ऽआदाय
ऽव्युदक्रामँस्तस्य परमेष्ठी शिर ऽआदायोत्क्रम्यातिष्ठत्
॥ १५ ॥ तमब्रवीत् । उप मेहि प्रति म ऽएतद्धेहि येन
मे त्वमुदक्रमीरिति किं मे ततो भविष्यतीति त्वद्देवत्यमेव
म ऽएतदात्मनो भविष्यतीति तथेति तदस्मिन्नेतत्परमेष्ठी
प्रत्यदधात् ॥ १६ ॥ तद्यैपोत्तमा स्वयमातृण्णा । एतदस्य
तदात्मनस्तद्यदेतामत्रोपदधाति यदेवास्यैपात्मनस्तदस्मि-
न्नेतत्प्रतिदधाति तस्मादेतामत्रोपदधाति ॥ १७ ॥ 'दिवं-

* अत्र शतम् ४७०० ॥

(१) शु० य० सं० अ० १५ क० ६३ । (२) शु० य० सं० अ० १५ क० ६३ ।
(३) शु० य० सं० अ० १५ क० ६३ । (४) शु० य० सं० अ० १५ क० ६३ ।
(५) शु० य० सं० अ० १५ क० ६३ । (६) शु० य० सं० अ० १५ क० ६४ ।
(७) शु० य० सं० अ० १५ क० ६४ ।

स्पृष्ठे व्व्यचस्वतीम्प्रथस्वतीमि'ति । दिवो ह्येतत्पृष्ठं व्व्यचस्वत्प्रथस्वद्दिवँ 'य्यच्छ दिवं दृꣳह दिवं मा हिꣳसीरि'त्यात्मानं य्यच्छात्मानं दृꣳहात्मानं मा हिꣳसीरित्त्येतत् ॥१८॥

वि[2]श्वस्मै प्प्राणायापानाय । व्व्यानायोदानाये'ति प्प्राणो वै स्वयमातृण्णा सर्व्वस्म्मा ऽउ वा ऽएतस्म्मै प्प्राणः 'प्प्रति[3]ष्ठायै चरित्रायेतीमे वै लोकाः स्वयमातृण्णा ऽइम ऽउ लोकाः प्प्रतिष्ठा चरित्रꣳ 'सूर्य्यस्त्वा[4]भिपात्वि'ति सूर्य्यस्त्वाभिगोपायत्वित्त्येत'न्मह्या[5] स्वस्त्ये'ति महत्या स्वस्त्येत्त्येत'[6]च्छर्दिषा शन्तमेने'ति यच्छर्दिः शन्तमं तेनेत्त्येतत् ॥१९॥

नानोपदधाति । नाना हि वायुश्च द्यौश्च सकृत्सादयति समानं तत्करोति समानꣳ ह्यायुश्च प्प्राणश्च ते वा ऽउभे ऽएव शर्क्करे भवत ऽउभे स्वयमातृण्णे समानꣳ ह्येवायुश्च प्प्राणश्चाथैने सूददोहसाधिवदति प्प्राणो वै सूददोहाः प्प्राणेनैवैने ऽएतत्सन्तनोति सन्दधाति ॥ २० ॥

'ताँ ऽअस्य सूददोहस' ऽइति । आपो वै सूदोऽन्नं दोहः 'सोमꣳ श्रीणन्ति पृश्नय' ऽइत्त्यन्नं वै पृश्नि 'जन्मन्देवाना'मि'ति सवत्सरो वै देवानां जन्म 'विशः' ऽइति यज्ञो वै विशो यज्ञे हि सर्व्वाणि भूतानि विष्टानि 'त्रिष्ठा' रोचने

(१) शु० य० स० अ० १५ क० ६४। (२) शु० य० स० अ० १५ क० ६४।
(३) शु० य० स० अ० १५ क० ६४। (४) शु० य० स० अ० १५ क० ६४।
(५) शु० य० स० अ० १५ क० ६४। (६) शु० य० स० अ० १५ क० ६४।
(७) शु० य० स० अ० १५ क० ६४। (८) शु० य० स० अ० १५ क० ६४।
(९) शु० य० स० अ० १५ क० ६४। (१०) शु० य० स० अ० १५ क० ६४।
(११) शु० य० स० अ० १५ क० ६४।

दिव' ऽइति सवनानि वै त्रीणि रोचनानि सवनान्येतदाहा-
नुष्टुभा वाग्वा ऽअनुष्टुब्वागु सर्व्वे प्प्राणा वाचा चैवैने-
ऽएतत्प्राणेन च सन्तनोति सन्दधाति सा वा ऽएषैका
सती सूददोहाः सर्व्वा ऽऋुष्टका ऽअनुसञ्चरति प्प्राणो वै
सूददोहास्तस्मादयमेक ऽएव प्प्राणः सन्त्सर्वाण्यङ्गानि
सर्वमात्मानमनुसञ्चरति ॥ २१ ॥ (C)

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ पञ्चम्याश्चितः सुवर्णशकलसहस्रेण प्रोक्षणम्, पुरीषेणाच्छादनं च ]

अथ स्वयमातृण्णासु सामानि गायति । इमे वै
लोकाः स्वयमातृण्णास्ता ऽएताः शर्करास्ता देवा ऽउपधा-
यैतादृशीरेवापश्यन्यथैताः शुष्काः शर्कराः ॥ १ ॥ तेऽब्रु-
वन् । उप तज्जानीत यथेषु लोकेषु रसमुपजीवनं दधामेति
तेऽब्रुवँश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्त-
दिच्छत यथैषु लोकेषु रसमुपजीवनं दधामेति ॥ २ ॥
ते चेतयमानाः । एतानि सामान्यपश्यँस्तान्यगायँस्तैरेषु
लोकेषु रसमुपजीवनमदधुस्तथैवैतद्यजमानो यदेतानि
सामानि गायत्येष्वेवैतल्लोकेषु रसमुपजीवनं दधाति ॥ ३ ॥
स्वयमातृण्णासु गायति । इमे वै लोकाः स्वयमातृण्णा-
ऽएष्वेवैतल्लोकेषु रसमुपजीवनं दधाति ॥ ४ ॥ स वै

---

(C) एतद्ब्राह्मणस्य विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. १२. ३; कठ० १७. १०; कपिष्ठ० २६. ९; मै० सं० ११. ८. १, १४; तै० सं० ५. ४. ५।

'भूर्भुवः स्व॒रि॑ति । एतासु व्याहृतिषु गायति भूरिति वा ऽअयं लोको भुव ऽइत्यन्तरिक्षलोकः स्वरित्यसौ लोक ऽएष्वेवैतल्लोकेषु रसमुपजीवनं दधाति ॥ ५ ॥ तानि वै नाना प्रस्तावानि । समाननिधनानि तानि यन्नाना प्रस्तावानि नाना ह्यपश्यन्नर्थं यत्समाननिधनान्येकं ह्येव यज्ञस्य प्रतिष्ठैकं निधनꣳ स्वर्गं ऽएव लोकस्तस्मात्स्वर्ज्योतिर्निधनानि ॥ ६ ॥ अथैनꣳ हिरण्यशकलैः प्रोक्षति । अत्रैष सर्वोऽग्निः संस्कृतस्तस्मिन्देवा ऽएतदमृतꣳ रूपमुत्तममदधुस्तथैवास्मिन्नयमेतदमृतꣳ * रूपमुत्तमं दधाति ॥ ७ ॥ यद्वेवैनꣳ हिरण्यशकलैः † प्रोक्षति । एतद्वा ऽअस्मिन्नदोऽमुं पुरस्ताद्रुक्म्यां तनूं मध्यतो दधाति रुक्मं च पुरुषं चाथैनमेतत्सर्वमेवोपरिष्टाद्रुक्म्यया तन्वा प्रच्छादयति ॥ ८ ॥ द्वाभ्यां—द्वाभ्याꣳ शताभ्याम् । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदमृतꣳ रूपमुत्तमं दधाति पञ्चकृत्वः पञ्चचितिकोऽग्निः पञ्चर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतदमृतꣳ रूपमुत्तमं दधाति सहस्रेण सर्वं वै सहस्रꣳ सर्वेणैवास्मिन्नेतदमृतꣳ रूपमुत्तमं दधाति ॥ ९ ॥ पश्चाद्दुत्थे प्राङ् तिष्ठन् । अथोत्तरतो दक्षिणाथ पुरस्तात्प्रत्यङ्ङथ जघनेन परीत्य

* 'रूपमुत्तमम्' इति 'क' पुस्तके ।

† "पुरुषमग्निहोमवर्जितमग्निं प्रोक्षति हिरण्यशकलसहस्रेण शते द्वे-द्वे प्रतिदिशं सहस्रस्येति प्रतिमन्त्रं सहस्रस्येति प्रतिमन्त्रम्" ( का० श्रौ० सू० १७. १२ २६ ) ।

दक्षिणत ऽउदङ् तिष्ठँस्तद्दक्षिणावृत्तद्धि देवत्राथानुपरीत्य पश्चात्प्राङ् तिष्ठँस्तथो ह्यस्यैतत्प्रागेव कर्म्म कृतं भवति ॥ १० ॥ 'सहस्रस्य प्रमासि । सहस्रस्य प्रतिमासि सहस्रस्योन्मासि साहस्रोऽसि सहस्राय त्वे'ति सर्वं वै सहस्रꣳ सर्वमसि सर्वस्मै त्वेत्येतत् ॥ ११ ॥ अथातश्चिच-तिपुरीषाणामेव मीमाꣳसा । अयमेव लोकः प्रथमा चितिः पशवः पुरीषं स्यत्प्रथमां चितिं पुरीषेण प्रच्छादयतीमं तल्लोकं पशुभिः प्रच्छादयति ॥ १२ ॥ अन्तरिक्षमेव द्वितीया चितिः । वयाꣳसि पुरीषं स्यद् द्वितीयां चितिं पुरीषेण प्रच्छादयत्यन्तरिक्षं तद्वयोभिः प्रच्छादयति ॥ १३ ॥ द्यौरेव तृतीया चितिः । नक्षत्राणि पुरीषं स्यत्तृतीयां चितिं पुरीषेण प्रच्छादयति दिवं तन्नक्षत्रैः प्रच्छादयति ॥ १४ ॥ यज्ञ ऽएव चतुर्थी चितिः । दक्षिणाः पुरीषं स्यच्चतुर्थीं चितिं पुरीषेण प्रच्छादयति यज्ञं तद्दक्षिणाभिः प्रच्छादयति ॥ १५ ॥ यजमान ऽएव पञ्चमी चितिः । प्रजा पुरीषं स्यत्पञ्चमीं चितिं पुरीषेण प्रच्छादयति यजमानं तत्प्रजया प्रच्छादयति ॥ १६ ॥ स्वर्ग्ग ऽएव लोकः षष्ठी चितिः । देवाः पुरीषं स्यत्षष्ठीं चितिं पुरीषेण प्रच्छादयति स्वर्गं तल्लोकं देवैः प्रच्छादयति ॥ १७ ॥ अमृतमेव सप्तमी चितिः । तामुत्तमामुपदधात्यमृतं तदस्य सर्वस्यो-त्तमं दधाति तस्मादस्य सर्वस्यामृतमुत्तमं तस्माद्देवा-

(१) शु० य० सं० अ० १४ क० १७ ।

ऽअनन्तर्हितास्तस्माद्ु तेऽमृता ऽइत्यधिदेवतम् ॥ १८ ॥ अथाध्यात्मम् । यैवेयं प्रतिष्ठा युश्चायमवाङ् प्राणस्तत्प्रथमा चितिर्म्माᳫ्ँसं पुरीषं स्यत्प्रथमां चितिं पुरीषेण प्रच्छादयत्ये-तुदस्य तुदात्मनो माᳫ्ँसैः सञ्छादयतीष्टका ऽउपधायास्थी-ष्टका ऽअस्थि तन्माᳫ्ँसैः सञ्छादयति नाधस्तात्सञ्छा-दयति तस्मादिमे प्राणा ऽअधस्ताद्सञ्छन्ना ऽउप-रिष्टात्तु प्रच्छादयत्येतदस्य तुदात्मन ऽउपरिष्टान्माᳫ्ँ-सैः सञ्छादयति तस्मादस्यैतदात्मन ऽउपरिष्टान्मा-ᳫ्ँसैः सञ्छन्नं नावकाशते ॥ १९ ॥ यदूर्ध्वं प्रति-ष्ठाया ऽअवाचीनं मध्यात् । तद् द्वितीया चिति-र्म्माᳫ्ँसं पुरीषं ऽयद् द्वितीयां चितिं पुरीषेण प्रच्छादय-त्येतदस्य तुदात्मनो माᳫ्ँसैः सञ्छादयतीष्टका ऽउपधाया-स्थीष्टका ऽअस्थि तन्माᳫ्ँसैः सञ्छादयति पुरीष ऽउप-दधाति पुरीषेण प्रच्छादयत्येतदस्य तदात्मन ऽउभयतो माᳫ्ँसैः सञ्छादयति तस्मादस्यैतदात्मन ऽउभयतो माᳫ्ँसैः सञ्छन्नं नावकाशते ॥ २० ॥ मध्यमेव तृतीया चितिः । यदूर्ध्वं मध्यादवाचीनं ग्रीवाभ्यस्तच्चतुर्थी चितिर्ग्रीवा ऽएव पञ्चमी चितिः शिर ऽएव षष्ठी चितिः प्राणा ऽएव सप्तमी चितिस्तामुत्तमामुपदधाति प्राणाँस्तदस्य सर्वस्योत्तमान्दधाति तस्मादस्य सर्वस्य प्राणा ऽउत्तमाः पुरीष ऽउपदधाति माᳫ्ँसं वै पुरीषं * माᳫ्ँसे तत्प्राणा-

* 'माᳫ्ँसेन' इति 'ग-ञ' पुस्तकयोः ।

न्प्रतिष्ठापयति नोपरिष्टात्प्रच्छादयति तस्मादिमे प्राणा ऽउपरिष्टादसञ्छन्नाः ॥ २१ ॥ (D)

सप्तमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥ ४ ॥ कण्डिकासंख्या १०९॥

इति सप्तमोऽध्यायः ॥ ७.॥

* चितिनामाष्टमं काण्डं समाप्तम् ॥ ८ ॥



( D ) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श्रा० ११ २ ४।

* अस्मिन्काण्डे कण्डिकासंख्या ४३७।

# अथ साग्निचितिनाम नवमं काण्डम्

अस्मिन् काण्डे प्रतिपाद्या विषयाः— शतरुद्रियहोमविधानम्, चित्यपरिषेकः, वसोर्धाराहोमः, वाजप्रसवीयहोमः राष्ट्रभृद्धोमादि, धिष्ण्यचयनम्, पुनश्चितिः, चित्युपस्थानं चेति।

[ शतरुद्रियहोमः ]

ॐ ॥ अथातः शतरुद्रियं * जुहोति। अत्रैष सर्वोऽग्निः संस्कृतः स एषोऽत्र रुद्रो देवता तस्मिन्देवा एतदमृतः रूपमुत्तममदधुः स एषोऽत्र दीप्यमानोऽतिष्ठदन्नमिच्छमानस्तस्माद्देवा अबिभयुर्यद्वै नोऽयं, न हिंस्यादिति ॥ १ ॥ तेऽब्रुवन्। अन्नमस्मै सम्भराम तेनैनः शमयामेति तस्मा एतदन्नः समभरञ्छान्तदेवत्यं तेनैनमशमयँस्तद्यदेतं देवमेतेनाशमयँस्तस्माच्छान्तदेवत्यः शान्तदेवत्यः ह वै तच्छतरुद्रियमित्याचक्षते परोक्षं परोक्षकामा हि देवास्तथैवास्मिन्नयमेतदमृतः रूपमुत्तमं दधाति स एषोऽत्र दीप्यमानस्तिष्ठत्यन्नमिच्छमानस्तस्मा एतदन्नः सम्भरति शान्तदेवत्यं तेनैनः शमयति ॥ २ ॥ जर्तिलैर्जुहोति। जायत एष एतद्य-

---

* शतरुद्रियहोम उत्तरपक्षस्याऽपरस्यां स्रक्त्यां परिश्रित्स्वर्कपर्णेनाऽर्कपर्णेन जुह्वन् सन्ततमर्तिलमिश्रान् गवेधुकासक्तूनाक्षीरमेके तिष्ठन्नुदङ् 'नमस्त' इत्यध्यायेन ( का० श्रौ० सू० १८ १. १ )।

चीयते स ऽएष सर्वस्मा ऽअन्नाय जायत ऽउभयम्वेतदन्नं यज्जर्तिला यच्च ग्राम्यं यच्चारण्यं यदह तिलास्तेन ग्राम्यं यदकृष्टे पच्यन्ते तेनारण्यमुभयेनैवैनमेतदन्नेन प्रीणाति ग्राम्येण चारण्येन च ॥३॥ अर्कपर्णेन जुहोति। अन्नमर्कोऽन्नेनैवैनमेतत्प्रीणाति ॥ ४ ॥ परिश्रित्सु जुहोति। अग्नय ऽएते यत्परिश्रितस्तथो हास्यैता ऽअग्निमत्येवाहुतयो हुता भवन्ति ॥ ५ ॥ यद्वेवैतच्छतरुद्रियं जुहोति। प्रजापतेर्विस्रस्ताद्देवता ऽउदक्रामँस्तमेक ऽएव देवो नाजहान्मन्युरेव सोऽस्मिन्नन्तर्विततोऽतिष्ठत्सोऽरोदीत्तस्य यान्यश्रूणि प्रास्कन्दँस्तान्यस्मिन्मन्यौ प्रत्यतिष्ठन्स ऽएव शतशीर्षा रुद्रः समभवत्सहस्राक्षः शतेषुधिरथ या ऽअन्या विप्रुषोऽपतँस्ता ऽअसङ्ख्याता सहस्राणीमाँल्लोकाननुप्राविशँस्तद्यद्रुदितात्समभवँस्तस्माद्रुद्राः सोऽयं शतशीर्षा रुद्रः सहस्राक्षः शतेषुधिरधिज्यधन्वा प्रतिहिताषीभीषयमाणोऽतिष्ठदन्नमिच्छमानस्तस्माद्देवा ऽअबिभयुः ॥ ६ ॥ ते प्रजापतिमब्रुवन्। अस्माद्वै बिभीमो यद्वै नोऽयं न हिनसदिति सोऽब्रवीदन्नमस्मै सम्भरत तेनैनः शमयतेति तस्मा ऽएतदन्नः समभरञ्छतरुद्रियं तेनैनमशमयँस्तद्यदेतः शतशीर्षाणः रुद्रमेतेनाशमयँस्तस्माच्छतशीर्षरुद्रशमनीयः शतशीर्षरुद्रशमनीयः ह वै तच्छतरुद्रियमित्याचक्षते परोक्षं परोक्षकामा हि देवास्तथैवास्मा ऽअयमेतदन्नः सम्भरति शतरुद्रियं तेनैनः

शमयति ॥ ७ ॥ गवेधुकासक्तुभिर्जुहोति । यत्र वै सा देवता विस्रस्ताशयत्ततो गवेधुकाः समभवन्त्स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति ॥ ८ ॥ अर्कपर्णेन जुहोति । एतस्य वै देवस्याशयादर्कः समभवत्स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति ॥ ९ ॥ परिश्रित्सु जुहोति । लोमानि वै परिश्रितो न वै लोमसु विषं न किंचन हिनस्त्युत्तरार्द्धेऽग्नेरुदङ् तिष्ठञ्जुहोत्येतस्याᳪं ह दिश्येतस्य देवस्य गृहाः स्वायामेवैनमेतद्दिशि तत्प्रीणाति स्वायां दिश्यवयजते ॥ १० ॥ स वै जानुदघ्ने. प्रथमᳪं स्वाहाकरोति । अध ऽइव वै तद्यज्जानुदघ्नमध ऽइव तद्यदयं लोकस्तद्य ऽइमं लोकᳪं रुद्राः प्राविशᳫँस्ताᳫँस्तत्प्रीणाति ॥ ११ ॥ अथ नाभिदघ्ने । मध्यमिव वै तद्यन्नाभिदघ्नं मध्यमिवान्तरिक्षलोकस्तद्येऽन्तरिक्षलोकᳪं रुद्राः प्राविशᳫँस्ताᳫँस्तत्प्रीणाति ॥ १२ ॥ अथ * मुखदघ्ने । उपरीव वै तद्यन्मुखदघ्नमुपरीव तद्यदसौ लोकस्तद्येऽमुं लोकᳪं रुद्राः प्राविशᳫँस्ताᳫँस्तत्प्रीणाति स्वाहाकारेणान्नं वै स्वाहाकारोऽन्नेनैवैनानेतत्प्रीणाति ॥ १३ ॥ 'नमस्ते रुद्र मन्यव' ऽइति । य ऽएवास्मिन्त्सोऽन्तर्मन्युर्वितितोऽतिष्ठत्तस्मा ऽएतन्नमस्करो[1]त्युतो त ऽइषवे नमो बाहुभ्यामुत ते नम' ऽइतीष्वा च हि बाहुभ्यां च भीषयमाणोऽतिष्ठत् ॥ १४ ॥ स ऽएष क्षत्रं देवः । यः स शतशीर्षा समभवद्विश-

* 'मुखदघ्न । उउ' इति 'ख-ज' पु० । 'मुखदघ्ने । त' इति 'क-घ' पुस्तकयोः ।

(१) शु० य० सं० अ० १६ क० १ । (२) शु० य० सं० अ० १६ क० १

ऽइम ऽइतरे ये विप्रुड्भ्यः समभवँस्तस्मा ऽएतस्मै क्षत्रायैता विश ऽएतं पुरस्तादुद्धारमुदहरन्न्य ऽएष प्रथमोऽनुवाकस्तेनैनमप्रीणँस्तथैवास्मा ऽअयमेतं पुरस्तादुद्धारमुद्धरति तेनैनं प्रीणाति तस्मादेष ऽएकदेवत्यो भवति रौद्र ऽएतᳬं ह्येतेन प्रीणाति ॥ १५ ॥ चतुर्दशैतानि यजूᳬंषि भवन्ति त्रयोदश मासाः संवत्सरः प्रजापतिश्चतुर्दशः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति नमो नम ऽइति यज्ञो वै नमो यज्ञेनैवैनमेतन्नमस्कारेण नमस्यति तस्मादु ह नायज्ञियं ब्रूयान्नमस्त ऽइति यथा हैनं ब्रूयाद्यज्ञस्त ऽइति तादृक्तत् ॥ १६ ॥ अथ द्वन्द्विभ्यो जुहोति । नमोऽमुष्मै चामुष्मै चेति तद्यथा वै ब्रूयादसौ त्वं च न ऽएष च मा हिᳬंसिष्टमित्त्येवमेतदाह नतराᳬं हि विदितऽआमन्त्रितो हिनस्ति ॥ १७ ॥ 'नमो हिरण्यबाहवे । सेनान्ये दिशां च पतये नम' ऽइत्येष ऽएव हिरण्यबाहुः सेनानीरेष दिशां पतिस्तद्यत्किंचात्रैकदेवत्यमेतमेव तेन प्रीणाति क्षत्रमेव तद्विश्यपि भागं करोति तस्माद्यद्विशस्तस्मिन्क्षत्रियोऽपि भागोऽथ या ऽअसङ्ख्याता सहस्राणीमाँल्लोकाननुप्राविशन्नेतास्ता देवता याभ्य ऽएतज्जुहोति ॥१८॥ अथ जातेभ्यो जुहोति । एतानि ह जातान्येते रुद्राऽअनुप्रविविशुर्यत्र-यत्रैते तदु वैनानेतत्प्रीणात्यथो ऽएवᳬं हैतानि रुद्राणां जातानि देवानां वै विधामनु मनुष्यास्त-

(१) शु॰ य॰ सं॰ अ॰ १६ क॰ १७।

स्मादु हेमानि मनुष्याणां जातानि यथाजातमेवैनानेतत्प्रीणाति ॥१९॥ तेषां वा ऽउभयतो नमस्कारा * ऽअन्ये । अन्यतरतो नमस्कारा ऽअन्ये ते ह ते घोरतरा ऽअशान्ततरा य ऽउभयतो नमस्कारा ऽउभयत ऽएवैनानेतद्यज्ञेन नमस्कारेण शमयति ॥ २० ॥ स वा ऽअशीत्यां च स्वाहाकरोति । प्रथमे चानुवाकेऽथाशीत्यामथाशीत्यां च यानि चोर्द्ध्वानि यजूᳪष्यावतानेभ्योऽन्नमशीतयोऽन्नेनैवैनानेतत्प्रीणाति ॥ २१ ॥ अथैतानि यजूᳪषि जपति । 'नमो वः किरिकेभ्य' ऽइत्येतद्धास्य प्रतिज्ञाततमं धाम यथा प्रियो वा पुत्रो हृदयं वा तस्मायत्रैतस्माद्देवाच्छङ्केत तदेताभिर्व्याहृतिभिर्जुहुयादुप हैवैतस्य देवस्य प्रियं धाम गच्छति तथो हैनमेष देवो न हिनस्ति ॥ २२ ॥ 'नमो वः किरिकेभ्य' ऽइति । एते हीदᳪ सर्वं कुर्वन्ति 'देवानाᳪ हृदयेभ्य' ऽइत्यग्निर्वायुरादित्य ऽएतानि ह तानि देवानाᳪ हृदयानि 'नमो विचिन्वत्केभ्य' ऽइत्येते हीदᳪ सर्वं विचिन्वन्ति 'नमो विक्षिणत्केभ्य' ऽइत्येते वै तं विक्षिणन्ति यं विचिक्षीषन्ति 'नम ऽआनिर्हतेभ्य' ऽइत्येते ह्येभ्यो लोकेभ्योऽनिर्हताः ॥ २३ ॥ अथोत्तराणि जपति । 'द्रापे ऽअन्धसस्पत' ऽइत्येष वै द्रापिरेष ह्येतं द्रापयति यं दिद्रापयिषत्यन्धसस्पत ऽइति सोमस्य पत·

---

* 'ऽअन्ये । ऽन्य' इति 'ग-ज' पु० । 'ऽअन्य । अन्य' इति 'क-ख' पुस्तकयोः ।

(१) शु० य० सं० अ० १६ क० ४६ । (२) शु० य० सं० अ० १६ क० ४६ ।
(३) शु० य० सं० अ० १६ क० ४६ । (४) शु० य० सं० अ० १६ क० ४६ ।
(५) शु० य० सं० अ० १६ क० ४६ । (६) शु० य० सं० अ० १६ क० ४७ ।

ऽइत्येत'द्वरिद्र नीललोहिते'ति नामानि चास्यैतानि रूपाणि च नामग्राहमेवैनमेतत्प्रीणा'त्यासां प्रजानामेषां पशूनां मा भेर्म्मा रोङ्मो च नः किंचनाममदि'ति यथैव यजुस्तथा बन्धुः ॥ २४ ॥ स ऽएष क्षत्रं देवः । तस्मा ऽएतस्मै क्षत्रायैता ब्रिशोऽमुं पुरस्तादुद्धारमुदहरन्न्योऽसौ प्रथमोऽनुवाकोऽथास्मा ऽएतमुपरिष्टादुद्धारमुदहरँस्तेनैनमप्रीणँस्तथैवास्मा ऽअयमेतमुपरिष्टादुद्धारमुद्धरति तेनैनं प्रीणाति तस्मादुष्येष ऽएकदेवत्यो भवति रौद्र ऽएवैतछ्ं ह्येवैतेन प्रीणाति ॥२५॥ सप्तैतानि यजूछ्ंषि भवन्ति । सप्तचितिकोऽग्निः सप्तर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति तान्युभयाऽन्येकविछ्ंशतिः सम्पद्यन्ते द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविछ्ंश ऽएतामभिसम्पदम् ॥ २६ ॥ अथावतानाञ्जुहोति । एतद्वा ऽएनान्देवा ऽएतेनान्नेन प्रीत्वाथैषामेतैरवतानैर्द्धनूछ्ंष्यवातन्वँस्तथैवैनानयमेतदेतेनान्नेन प्रीत्वाथैषामेतैरवतानैर्द्धनूछ्ंष्यवतनोति न ह्यवततेन धनुषा कञ्चन हिनस्ति ॥ २७ ॥ तद्वै सहस्रयोजन ऽइति । एतद्ध परमं दूरं यत्सहस्रयोजनं तद्यदेव परमं दूरं तदेवैषामेतद्धनूछ्ंष्यवतनोति ॥ २८ ॥ यद्वेवाह सहस्रयोजन ऽइति । अयमग्निः सहस्रयोजनं न ह्येतस्मादिति नेत्यन्न्यत्परमस्ति तद्यदग्नौ जुहोति तदेवैषाछ्ं सहस्रयोजने धनूछ्ंष्यवतनोति ॥ २९ ॥ 'असंख्याता

( १ ) शु० य० सं० अ० १६ क० ४७ । ( २ ) शु० य० सं० अ० १६ क० ४० ।
( ३ ) शु० य० सं० अ० १६ क० ५४,५५ ।

सहस्राणि । अस्मिन्महत्यर्णव' इति यत्र-यत्र ते तदेवैषामेतद्धनूꣳष्यवतनोति ॥ ३० ॥ दशैतानवताना-ञ्जुहोति । दशाक्षरा विराड्विराडग्निर्दश दिशो-दिशोऽग्निर्दश प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैषा-मेतद्धनूꣳष्यवतनोति ॥ ३१ ॥ अथ *प्रत्यवरोहाञ्जुहोति । एतद्वा एतदिमाँल्लोकानित ऊर्ध्वो रोहति स स पराङिव रोह इयमु वै प्रतिष्ठा ते देवा इमां प्रतिष्ठामभिप्रत्या-यँस्तथैवैतद्यजमान इमां प्रतिष्ठामभिप्रत्यैति ॥ ३२ ॥ यद्वेव प्रत्यवरोहति । एतद्वा एनानेतत्प्रीणन्नन्वैति तत एवैतदात्मानमपोद्धरते जीवात्वै तथो ह्यनेनात्मना सर्वमायुरेति ॥ ३३ ॥ यद्वेव प्रत्यवरोहति । एतद्वा एत-देताननुद्यन्नित ऊर्ध्वान्प्रीणाति तान्पुनरमुतोऽर्वाचः ॥ ३४ ॥ 'नमोऽस्तु रुद्रेभ्यो ये दिवी'ति । तद्येऽमुष्मिँल्लोके रुद्रास्तेभ्य एतन्नमस्करोति 'येषां वर्षमिषव' इति वर्षꣳ ह तेषामिषवो वर्षेण ह ते हिꣳसन्ति यं जिहिꣳसिषन्ति ॥ ३५ ॥ 'नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्ष' इति । तद्येऽन्तरिक्षलोके रुद्रास्तेभ्य एतन्नमस्करोति 'येषां वात इषव' इति वातो ह तेषामिषवो वातेन ह ते हिꣳसन्ति यं जिहिꣳसिषन्ति ॥ ३६ ॥ 'नमोऽस्तु रुद्रेभ्यो

* प्रतिलोम प्रत्यवरोहान् जुहोति प्रमाणेषु नमोऽस्त्विति प्रतिमन्त्रम् ( का० श्रौ० सू० १८.१.५।

(१) शु० य० सं० अ० १६ क० ६४। (२) शु० य० सं० अ० १६ क० ६४। (३) शु० य० सं० अ० १६ क० ६५। (४) शु० य० सं० अ० १६ क० ६५। (५) शु० य० सं० अ० १६ क० ६६।

ये पृथिव्यामि'ति । तद्येऽस्मिँल्लोके रुद्रास्तेभ्य ऽएतन्नमस्करोति 'येषामन्नमिषव' ऽइत्यन्नꣳ ह तेषामिषवोऽन्नेन ह ते हिꣳसन्ति यं जिहिꣳसिषन्ति ॥ ३७ ॥ 'तेभ्यो दश प्राचीꣳ। दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्द्ध्वा' ऽइति * दशदशेति दशाक्षरा विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाꣳ प्राणा ऽअग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ ३८ ॥ यद्वेवाह दशदशेति । दश वा ऽअञ्जलेरङ्गुलयो दिशि-दिश्येवैतेभ्य-ऽएतदञ्जलिं करोति तस्मादु हैतद्भीतोऽञ्जलिं करोति 'तेभ्यो नमो ऽअस्त्वि'ति तेभ्य ऽएव नमस्करोति 'ते नो मृडयन्त्वि'ति त ऽएवास्मै मृडयन्ति 'ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्म' ऽइति यमेव द्वेष्टि यश्चैनं द्वेष्टि तमेषां जम्भे दधात्यमुमेषां जम्भे दधामीति ह ब्रूयाद्यं द्विष्यात्ततोऽह तस्मिन्न पुनरस्त्यपि तन्नाद्रियेत स्वयं निर्दिष्टो ह्येव स यमेवं विद्वेष्टि ॥ ३९ ॥ त्रिष्कृत्वꣳ प्रत्यवरोहति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति स्वाहाकारेणान्नं वै स्वाहाकारोऽन्नेनैवैनमेतत्प्रीणाति त्रिरित्यु ऽऊर्द्ध्वो रोहति तत्पद् तस्योक्तो बन्धुꣳ ॥ ४० ॥ यद्वेव त्रिष्कृत्वꣳ प्रत्यवरोहति । त्रिर्हि कृत्व ऽऊर्द्ध्वो रोहति

* 'दश दशेति' पाठोऽयं 'ब–ज' पुस्तकयोर्नास्ति ।

(१) शु० य० सं० अ० १६ क० ६६ । (२) शु० य० सं० अ० १६ क० ६६ । (३) शु० य० सं० अ० १६ क० ६६ । (४) शु० य० सं० अ० १६ क० ६६ । (५) शु० य० सं० अ० १६ क० ६६ ।

तद्यावत्कृत्व ऽऊर्द्ध्वो रोहति तावत्कृत्वः प्रत्यवरोहति ॥४१॥
अथ तदर्कपर्णं * चात्वाले प्रास्यति। एतद्वा ऽएनेनैत-
द्रौद्रं कर्म्म करोति तदेतदशान्तं तदेतत्तिरः करोति नेदि-
दमशान्तं कश्चिदभितिष्ठात्तं नेद्धिनसदिति तस्माच्चात्वाले
यद्वेव चात्वालेऽग्निरेष यच्चात्वालस्तथो हैनदेषोऽग्निः
सन्दहत्यथातः सम्पदेव ॥ ४२ ॥ तदाहुः । कथमस्यैतच्छ-
तरुद्रियꣳ संवत्सरमग्निमाप्नोति कथꣳ संवत्सरेणाग्निना
सम्पद्यत ऽइति षष्टिश्च ह वै त्रीणि च शतान्येतच्छ-
तरुद्रियमथ त्रिꣳशदथ पञ्चत्रिꣳशत्ततो यानि षष्टिश्च
त्रीणि च शतानि तावन्ति संवत्सरस्याहानि तत्संवत्सरस्या-
हान्याप्नोत्यथ यानि त्रिꣳशत्त्रिꣳशन्मासस्य रात्रयस्त-
न्मासस्य रात्रीराप्नोति तदुभयानि संवत्सरस्याहोरात्रा-
ण्याप्नोत्यथ यानि पञ्चत्रिꣳशत्स त्रयोदशो मासः स
ऽआत्मा त्रिꣳशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर ऽएव
पञ्चत्रिꣳशमेतावान्वै संवत्सर ऽएवमु हास्यैतच्छतरुद्रियꣳ
संवत्सरमग्निमाप्नोत्येवꣳ संवत्सरेणाग्निना सम्पद्यत ऽएता-
वन्त्य ऽउ वै † शाण्डिलेऽग्नौ मध्यतो यजुष्मत्य ऽइष्टका
ऽउपधीयन्तेऽग्नयो हैते पृथग्यदेता ऽइष्टका ऽएवमु
हास्यैतेऽग्नयः पृथक् शतरुद्रियेणाभिहुता भवन्ति ॥ ४३ ॥
तदाहुः । कथमस्यैतच्छतरुद्रियं महदुक्थमाप्नोति

* "अग्न्यर्थेरिणिपदार्थे यत्र भूप्रदेशे मृद् खनति स प्रदेशश्चात्वाल इष्यते" (का० श्रौ० सू० १८ १ ६)।

† शाण्डिलेऽग्नौ = शाण्डिल्यदृष्टेऽग्नौ मध्यचेतौ षष्ट्युत्तरशतत्रयसंख्यया यजुष्मत्य इष्टका उपधीयन्त इत्यर्थः।

कथं महतोक्थेन सम्पद्यत ऽइति यान्यमूनि पञ्चविꣳशतिर्य्यजूꣳष्यभितोऽशीतीः स पञ्चविꣳश ऽआत्मा यत्र वाऽ आत्मा तदेव शिरस्तत्पक्षपुच्छान्यथ या ऽअशीतयः सैवाशीतीनामासिरशीतिभिर्हि महदुक्थमाख्यायतेऽथ यदूर्द्ध्वमशीतिभ्यो यदेवादो महत ऽउक्थस्योर्द्ध्वमशीतिभ्य ऽएतदस्य तदेवमु हास्यैतच्छतरुद्रियं महदुक्थमाप्नोत्येवं महतोक्थेन सम्पद्यते ॥ ४४ ॥ (A)

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ चित्यायाः परिषेकादिविधिः ]

अथैनमतः * परिषिञ्चति । एतद्वा ऽएनं देवाः शतरुद्रियेण शमयित्वाथैनमेतद्भूय ऽएवाशमयꣳस्तथैवैन†मयमेतच्छतरुद्रियेण शमयित्वाथैनमेतद्भूय ऽएव शमयति ॥ १ ॥ अद्भिः परिषिञ्चति । शान्तिर्वा ऽआपः शमयत्येवैनमेतत्सर्वतः परिषिञ्चति सर्वत ऽएवैनमेतच्छमयति त्रिष्कृत्वः परिषिञ्चति त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतच्छमयति ॥ २ ॥ यद्वेवैनं परिषिञ्चति । इमे वै लोका ऽएषोऽग्निरिमाꣳस्तल्लोकानद्भिः परितनोति समुद्रेण

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. ३. १; कठ० १०. ११, १९, १६ कपिष्ठ० २७. १, २, ६; मै० सं० १०. ५. २, ३, ५; तै० सं० ४. ५. १, २, ५ ।

* अग्नीद् दक्षिणपक्षस्याऽपरसन्धिसमीपवर्तिन्यात्मभागेऽद्रिं निधाय, तत आरभ्य 'अश्मन्नूर्जम्' इति मन्त्रेणाऽग्निं प्रदक्षिणं सपक्षपुच्छं जलधारया परितः सिञ्चतीति ( का० श्रौ० सू० १८. २. १ ) ।

† 'मेवयेत' इति 'ग-घ' पुस्तकयोः ।

ह्येनाँस्तत्परितनोति सर्वतस्तस्मादिमाँल्लोकान्त्सर्वतः समुद्रः पर्य्येति दक्षिणावृत्तस्मादिमाँल्लोकान्दक्षिणावृत्समुद्रः पर्य्येति ॥ ३ ॥ अग्नीत्परिषिञ्चति । अग्निरेष यदाग्नीध्रो नो वा ऽआत्मात्मानꣳ हिनस्त्यहिꣳसाया ऽअश्मनोऽध्यश्मनो ह्यापः प्रभवन्ति निकक्षान्निकक्षाद्ध्यापः प्रभवन्ति दक्षिणान्निकक्षाद्दक्षिणाद्धि निकक्षादापः प्रभवन्ति ॥ ४ ॥ 'अश्मन्नूर्जं पर्वते शिश्रियाणामि'ति । अश्मनि वा ऽएषोर्क्पर्वतेषु शिश्रिता यदापो'ऽद्भ्य ऽओषधीभ्यो वनस्पतिभ्योऽअधि सम्भृतं पय' ऽइत्येतस्माद्ध्येतत्सर्वस्मादधि सम्भृतं पय'स्तान्न ऽइषमूर्जं धत्त मरुतः सꣳरराणा' ऽइति मरुतो वै वर्षस्येशते'ऽश्मँस्ते क्षुद्'ति निदधाति * तदश्मनि क्षुधं दधाति तस्मादश्मानाद्योऽथो स्थिरो वा ऽअश्मा स्थिरा क्षुत्स्थिर ऽएव तत्स्थिरं दधाति 'मयि ते ऽऊर्ग्'इत्यपादत्ते तदात्मन्नूर्जं धत्ते तथा द्वितीयं तथा तृतीयम् ॥ ५ ॥ निधायोदहरणं त्रिर्विपल्ययते । एतद्वा ऽएनमेतद्धूयतीव यदेनꣳ समन्तं पर्य्येति तस्मा ऽएवैतन्निह्नुतेऽहिꣳसायै ॥ ६ ॥ यद्वेव विपल्ययते । एतद्वा ऽएनमेतदन्वैति तत ऽएवैतदात्मानमपोद्धरते जीवात्वै तथो ह्यनेनात्मना सर्वमायुरेति ॥ ७ ॥ † त्रिर्विपल्ययते ।

---

(१) शु० य० सं० अ० १७ क० १। (२) शु० य० सं० अ० १७ क० १।
(३) शु० य० सं० अ० १७ क० १। (४) शु० य० सं० अ० १७ क० १।
* का० श्रौ० सू० १८. २. २।
(५) शु० य० सं० अ० १७ क० १।
† का० श्रौ० सू० १८. २. ३।

त्रिर्हि कृत्वः पर्य्येति तद्यावत्कृत्वः पर्य्येति तावत्कृत्वो विपल्ययते ॥ ८ ॥ अथ तमश्मानमुदहुरणेऽवधाय । एतां दिशꣳ हरन्त्येषा वै नैर्ऋती दिङ् नैर्ऋत्यामेव तद्दिशि शुचं दधाति ॥ ९ ॥ एतद्वा ऽएनं देवाः । शतरुद्रियेण चाद्भिश्च शमयित्वाथास्यैतेन शुचं पाप्मानमपाघ्नꣳस्तथै-वैनमयमेतच्छतरुद्रियेण चाद्भिश्च शमयित्वाथास्यैतेन शुचं पाप्मानमपहन्ति ॥१०॥ बाह्येनाग्निꣳ हरति । इमे वै लोका ऽएषोऽग्निरेभ्यस्तल्लोकेभ्यो बहिर्द्धा शुचं दधाति बहिर्वेदीयं वै वेदिरस्यै तद् बहिर्द्धा शुचं दधाति ॥११॥ [अर्धप्रपाठकः ५५॥] स * वेदेर्दक्षिणायाꣳ श्रोणौ । प्राङ् तिष्ठन्दक्षिणा निरस्यति 'यं द्विष्मस्तं ते शुगृच्छत्वि'ति यमेव द्वेष्टि तमस्य शुग्-ऋच्छत्यमुं ते शुगृच्छत्विति ह ब्रूयाद्यं द्विष्यात्ततो ह तस्मिन्न पुनरस्त्यपि तन्नाद्रियेत स्वयं निर्दिष्टो ह्येव स यमेवं विद्वेष्टि यदि न भिद्येत भेत्तवै ब्रूयाद्यदा ह्येव † स भिद्यतेऽथ तꣳ शुगृच्छति यं द्वेष्ट्यप्रतीक्षमायन्त्यप्रतीक्षमेव तच्छुचं पाप्मानं जहति ॥ १२ ॥ प्रत्येत्येष्टका धेनूः कुरुते । एतद्वा ऽएनं देवाः शतरुद्रियेण चाद्भिश्च शमयित्वा शुचमस्य पाप्मानमपहृत्य प्रत्येत्येष्टका धेनूरकुर्वत तथैवैनमयमेतच्छतरुद्रियेण चाद्भिश्च शमयित्वा शुचमस्य पाप्मानमपहृत्य प्रत्येत्येष्टका धेनूः कुरुते ॥१३॥ आसीनः

* कुम्भेऽग्निं कृत्वा दक्षिणस्यां वेदिश्रोणौ प्राङ् तिष्ठन् दक्षिणाऽस्यति 'यं द्विष्म' इति (का० श्रौ० सू० १८. २ ४)।

(१) शु० य० सं० अ० १७ क० १ ।

† 'न भिद्यते' इति 'क' पुस्तके ।

कुर्वीतेत्यु हैक ऽआहुः । आसीनो वै धेनुं दोग्धीति तिष्ठँ-
स्त्वेव कुर्वीतेमे वै लोका ऽएषोऽग्निस्तिष्ठन्तीव वा ऽइमे लोका-
ऽअथो तिष्ठन्वै वीर्य्यवत्तरः ॥१४॥ उदङ् प्राङ् * तिष्ठन् ।
पुरस्ताद्वा ऽएषा प्रतीची यजमानं धेनुरुपतिष्ठते दक्षि-
णतो वै प्रतीचीं धेनुं तिष्ठन्तीमुपसीदन्ति ॥ १५ ॥
स यत्राभ्याप्नोति । तदभिमृश्यैतद्यजुर्जपती'मा मे ऽअग्न-
ऽइष्टका धेनवः सन्त्वि'त्यग्निर्हैतासां धेनुकरणस्येष्टे तस्मा-
देतावतीनां देवतानामग्निमेवामन्त्रयत 'ऽएका च दश
चा'न्तश्च परार्द्धश्चेत्येष ह्यावरार्द्ध्यो भूमा यदेका च दश
चाथ हैष परार्द्ध्यो भूमा यदन्तश्च परार्द्धश्चावरार्द्धतश्चैवैना-
ऽएतत्परार्द्धतश्च परिगृह्य देवा धेनूरकुर्वत तथैवैना ऽअय-
मेतदवरार्द्धतश्चैव परार्द्धतश्च परिगृह्य धेनूः कुरुते तस्मा-
दुपि नाद्रियेत बह्वीः कर्त्तुममुत्र वा ऽएष ऽएता ब्रह्मणा
यजुषा बह्वीः कुरुतेऽथ यत्सन्तनोति कामानेव तत्सन्तनोति
॥ १६ ॥ यद्वेवेष्टका धेनूः कुरुते । वाग्वा ऽअयमग्निर्वाचा
हि चितः स यदाहैका च दश चान्तश्च परार्द्धश्चेति
वाग्वा ऽएका वाग्दश वागन्तो वावपरार्द्धो वाचमेव तद्देवा
धेनुमकुर्वत तथैवैतद्यजमानो वाचमेव धेनुं कुरुतेऽथ
यत्सन्तनोति वाचमेव तत्सन्तनो'त्येता 'मे ऽअग्न ऽइष्टका
धेनवः सन्त्वमुत्रामुष्मिँल्लोक ऽइत्येतद्वा ऽएना ऽअस्मिँल्लोके
धेनूः कुरुतेऽथैना ऽएतदमुष्मिँल्लोके धेनूः कुरुते तथो

* का० श्रौ० सू० १८_२ १।

(१) शु० य० सं० अ० १७ क० २। (२) शु० य० सं० अ० १७ क० २।
(३) शु० य० सं० अ० १७ क० २।

हैनमेता ऽउभयोर्लोकयोर्भुञ्जन्त्यस्मिँश्चामुष्मिँश्च ॥ १७ ॥ 'ऋतव स्थे'ति । ऋतवो ह्येता 'ऋतावृध' ऽइति स-त्यवृध ऽइत्येत'द्घृतश्चुतो स्थ ऽऋतावृध', ऽइत्यहोरात्राणि वा ऽइष्टका ऽऋतुषु वा ऽअहोरात्राणि तिष्ठन्ति 'घृतश्चुतो मधुश्चुत' ऽइति तदेना घृतश्चुतश्च मधुश्चुतश्च कुरुते ॥ १८ ॥ 'विराजो नामे'ति । एतद्वै देवा, ऽएता इष्टका नामभिरुपाह्वयन्त यथा-यथैना ऽएतदाचक्षते ता ऽएनान-भ्युपावर्त्तन्ताथ लोकम्पृणा ऽएव पराच्यस्तस्थुरहित-नाम्न्यो निमिमिहत्यस्ता विराजो नामाकुर्वत ता ऽएनान-भ्युपावर्त्तन्त तस्माद्दश-दशेष्टका ऽउपधाय लोकम्पृण-याभिमन्त्रयते तदेना विराजः कुरुते दशाक्षरा हि विराट् 'कामदुघा ऽअक्षीयमाणा' ऽइति तदेनाः कामदुघा ऽअक्षी-यमाणाः कुरुते ॥ १९ ॥ अथैनं विकर्षति । मण्डूकेनावकया वेतसशाखयैतद्वा ऽएनं देवाः शतरुद्रियेण चाद्भिश्च शमयित्वा शुचमस्य पाप्मानमपहत्याथैनमेतद्भूय ऽएवा-शमयँस्तथैवैनमयमेतच्छतरुद्रियेण चाद्भिश्च शमयित्वा शुचमस्य पाप्मानमपहत्याथैनमेतद्भूय ऽएव शमयति सर्वतो विकर्षति सर्वत ऽएवैनमेतच्छमयति ॥ २० ॥ यद्वेवैनं विकर्षति । एतद्वै यत्रैतं प्राणा ऽऋषयोऽग्रेऽग्निं समस्कुर्वंस्तमद्भिरवोक्षँस्ता ऽआपः समस्कन्दँस्ते मण्डूका-

(१) शु० य० सं० अ० १७ कं० २। (२) शु० य० सं० अ० १७ कं० ३। (३) शु० य० सं० अ० १७ कं० ३। (४) शु० य० सं० अ० १७ कं० ३। (५) शु० य० सं० अ० १७ कं० २। (६) शु० य० सं० अ० १७ कं० २।

ऽअभवन् ॥ २१ ॥ ताः प्रजापतिमब्रुवन् । यद्वै नः कम-
भूद्वाकुदगादिति सोऽब्रवीदेष व ऽएतस्य वनस्पतिर्वे-
त्विति वेत्तु संवेत्तु सोऽह वै तं वेतस ऽइत्याचक्षते परोक्षं
परोक्षकामा हि देवा ऽअथ यदब्रुवन्नवाङ् नः कमगादिति
ता ऽअवाका ऽअभवन्नवाका ह वै ता ऽअवका ऽइत्याचक्षते
परोक्षं परोक्षकामा हि देवास्ता हैतास्त्रय्य ऽआपो यन्म-
ण्डूकोऽवका वेतसशाखैताभिरेवैनमेतत्त्रयीभिरद्भिः शम-
यति ॥ २२ ॥ यद्वेवैनं विकर्षति । जायत ऽएष ऽएत-
द्यच्चीयते स ऽएष सर्वस्मा ऽअन्नाय जायते सर्वम्वेतदन्नं
यन्मण्डूकोऽवका वेतसशाखा पशवश्च हैता ऽआपश्च
वनस्पतयश्च सर्वेणैवैनमेतदन्नेन प्रीणाति ॥२३॥ * मण्डू-
केन पशूनाम् । तस्मान्मण्डूकः पशूनामनुपजीवनीयतमो
यातयामा हि सोऽवकाभिरपां तस्मादवका ऽअपामनुप-
जीवनीयतमा यातयाम्न्यो हि ता वेतसेन वनस्पतीनां
तस्माद्वेतसो वनस्पतीनामनुपजीवनीयतमो यातयामा
हि सः॥ २४ ॥ तानि वंशे प्रबध्य । दक्षिणार्द्धेनाग्ने-
रन्तरेण परिश्रितः प्राग्ग्रे विकर्षति 'समुद्रस्य त्वावक-
याग्ने परिव्ययामसि । पावको ऽअस्मभ्यं शिवो भवे'ति
समुद्रियाभिस्त्वाद्भिः शमयाम ऽइत्येतत् ॥ २५ ॥ अथ
जघनार्द्धेनोदक् । 'हिमस्य त्वा जरायुणाग्ने परिव्यया-
मसि । पावको ऽअस्मभ्यं शिवो भवे'ति यद्वै शीतस्य

---

* "मण्डूकावकावेतसशाखा वेणौ बद्ध्वाऽऽकर्षति समुद्रस्य त्वेति प्रत्यृचम्" का० श्रौ० सू० १८ २ १०।

(१) शु० य० सं० अ० १७ क० ४। (२) शु० य० सं० अ० १७ क० ५।

प्रशीतं तद्धिमस्य जरायु शीतस्य त्वा प्रशीतेन शमयाम-
ऽइत्येतत् ॥ २६ ॥ अथोत्तरार्द्धेन प्राक्। 'उप ज्मन्नुप-
वेतसेऽवतर नदीष्वा। अग्ने पित्तमपामसि मण्डूकि
ताभिरागहि सेमन्नो यज्ञं पावकवर्णꣳ शिवङ्कृधी'ति
यथैव यजुस्तथा बन्धुः॥ २७ ॥ * अथ पूर्वार्द्धेन दक्षिणा।
'अपामिदन्न्ययनꣳ समुद्रस्य निवेशनम्। अन्याँस्ते-
ऽअस्मत्तपन्तु हेतयः पावको ऽअस्मभ्यꣳ शिवो भवे'ति
यथैव यजुस्तथा बन्धुरित्यग्रे विकर्षत्यथेति। अथेत्यथेति
तद्दक्षिणावृत्तद्धि देवत्रा ॥ २८ ॥ आत्मानमग्रे विकर्षति।
आत्मा ह्येवाग्रे सम्भवतः सम्भवत्यथ दक्षिणं पक्षमथ
पुच्छमथोत्तरं तद्दक्षिणावृत्तद्धि देवत्रा ॥ २९ ॥ अभ्यात्मं †
पक्षपुच्छानि विकर्षति। अभ्यात्ममेव तच्छान्तिं धत्ते
परस्तादर्वाक्परस्तादेव तदर्वाचीꣳ शान्तिं धत्ते'ऽग्ने पावक
रोचिषे'ति दक्षिणं पक्षꣳ 'स नꣳ पावक दीदिव' ऽइति
पुच्छं 'पावकया यश्चित्तयन्त्या कृपे'त्युत्तरं पावकं पावक-
मिति यद्वै शिवꣳ शान्तं तत्पावकꣳ शमयत्येवैनमेतत् ॥३०॥
सप्तभिर्विकर्षति। सप्तचितिकोऽग्निः सप्तर्तवः संवत्सरः
संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्विक-
र्षति तं वꣳशमुत्करे न्यस्य ॥३१॥ अथैनꣳ सामभिः परि-

(१) शु० य० सं० अ० १७ क० ६।
* अत्र शतम् ४८०० ॥
(२) शु० य० सं० अ० १७ क० ७।
† का० श्रौ० सू० १८ १, ११।
(३) शु० य० सं० अ० १७ क० ८। (४) शु० य० सं० अ० १७ क० ९।
(५) शु० य० सं० अ० १७ क० १०।

गायति । अत्रैष सर्वोऽग्निः संस्कृतस्तस्मिन्देवा ऽएतदमृतꣳ रूपमुत्तममदधुस्तथैवास्मिन्नयमेतदमृतꣳ रूपमुत्तमं दधाति सामानि भवन्ति प्राणा वै सामान्यमृतमु वै प्राणा ऽअमृतमेवास्मिन्नेतद्रूपमुत्तमं दधाति सर्वतः परिगायति सर्वत ऽएवास्मिन्नेतदमृतꣳ रूपमुत्तमं दधाति ॥३२॥ यद्वेवैनꣳ सामभिः परिगायति । एतद्वै देवा ऽअकामयन्तानस्थिकमिममृतमात्मानं कुर्वीमहीति तेऽब्रुवन्नुप तज्जानीत यथेममात्मानमनस्थिकममृतं करवामहा ऽइति तेऽब्रुवँश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्तदिच्छत यथेममात्मानमनस्थिकममृतं करवामहा ऽइति ॥ ३३ ॥ ते चेतयमानाः । एतानि सामान्यपश्यँस्तैरेनं पर्यगायँस्तैरेनमात्मानमनस्थिकममृतमकुर्वत तथैवैतद्यजमानो यदेनꣳ सामभिः परिगायत्येतमेवैतदात्मानमनस्थिकममृतं कुरुते सर्वतः परिगायति सर्वत ऽएवैतदेतमात्मानमनस्थिकममृतं कुरुते तिष्ठन्गायति तिष्ठन्तीव वा ऽइमे लोका ऽअथो तिष्ठद्वै वीर्यवत्तरो हिङ्कृत्य गायति तत्र हि सर्वं कृत्स्नꣳ साम भवति ॥ ३४ ॥ * गायत्रं पुरस्ताद्गायति । अग्निर्वै गायत्रमग्निमेवास्यैतच्छिरः करोत्यथो शिर ऽएवास्यैतदनस्थिकममृतं करोति ॥ ३५ ॥ रथन्तरं † दक्षिणे पक्षे । इयं वै रथन्तरमियमु वा ऽएषां लोकानाꣳ रसतमोऽस्याꣳ हीमे सर्वे रसा रसन्तमꣳ ह वै

* का० श्रौ० सू० १८ ३. १।
† का० श्रौ० सू० १८ ३ २।

तद्रथन्तरमित्याचक्षते परोक्षं परोक्षकामा हि देवा-ऽइमामेवास्यैतद्दक्षिणं पक्षं करोत्यथो दक्षिणमेवास्यैतत्प-क्षमनस्थिकममृतं करोति ॥ ३६ ॥ बृहदुत्तरे पक्षे। द्यौर्वै बृहद् द्यौर्हि बर्हिष्ठा दिवमेवास्यैतदुत्तरं पक्षं करोत्यथो ऽउत्तरमेवास्यैतत्पक्षमनस्थिकममृतं करोति ॥ ३७ ॥ वामदेव्यमात्मन्। प्राणो वै वामदेव्यं वायुरु प्राणः सर्वेषामु हैष देवानामात्मा यद्वायुर्वायुमेवास्यै-तदात्मानं करोत्यथो ऽआत्मानमेवास्यैतदनस्थिकममृतं करोति ॥ ३८ ॥ यज्ञायज्ञियं * पुच्छे। चन्द्रमा वै यज्ञायज्ञियं यो हि कश्च यज्ञः सन्तिष्ठत ऽएत-मेव तस्याहुतीनाꣳ रसोऽप्येति तद्देतं यज्ञो-यज्ञोऽ-प्येति तस्माच्चन्द्रमा यज्ञायज्ञियं चन्द्रमसमेवास्यैतत्पुच्छं करोत्यथो पुच्छमेवास्यैतदनस्थिकममृतं करोति ॥ ३९ ॥ अथ प्रजापतेर्हृदयं गायति। असौ वा ऽआदित्यो हृदयꣳ श्लक्ष्ण ऽएष श्लक्ष्णꣳ हृदयं परिमण्डल ऽएष परिमण्डलꣳ हृदयमात्मन्गायत्यात्मन्हि हृदयं निकक्षे निकक्षे हि हृदयं दक्षिणे निकक्षेऽतो हि हृदयं नेदीय-ऽआदित्यमेवास्यैतद्धृदयं करोत्यथो हृदयमेवास्यैतदन-स्थिकममृतं करोति ॥ ४० ॥ प्रजासु च प्रजापतौ च गायति। तद्यत्प्रजासु गायति तत्प्रजासु हृदयं दधात्यथ यत्प्रजापतौ गायति तदग्नौ हृदयं दधाति ॥ ४१ ॥ यद्वेव प्रजासु च प्रजापतौ च गायति। अयं वा ऽअग्निः

* 'पुच्छम्' इति 'ग-ज' पुस्तकयोः।

प्रजाश्च प्रजापतिश्च तद्यदग्नौ गायति तदेव प्रजासु च प्रजापतौ च हृदयं दधाति ॥ ४२ ॥ ता हैता ऽअमृतेष्टकाः । ता ऽउत्तमा ऽउपदधात्यमृतं तदस्य सर्वस्योत्तमं दधाति तस्मादस्य सर्वस्यामृतमुत्तमं नान्यो ऽध्वर्योर्गायेदिष्टका वा ऽएता विचितो ह स्याद्यदन्यो ऽध्वर्योर्गायेत् ॥ ४३ ॥ (B)

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



[ चित्यारोहणम्, तत्र होमादि-विधिः, प्रवर्ग्योत्सादनं च ]

* उपवसथीये ऽहन्प्रातरुदित ऽआदित्ये । वाचं विसृजते वाचं विसृज्य पञ्चगृहीतमाज्यं गृह्णीते तत्र पञ्च हिरण्यशकलान्प्रास्यत्यथैतत्त्रयः समासिक्तं भवति दधि मधु घृतं पात्र्यां वा स्थाल्यां वोरुविल्यां तदुपरिष्टाद्दर्भमुष्टिं निदधाति ॥ १ ॥ † अथाग्निमारोहति । 'नमस्ते हरसे शोचिषे नमस्ते ऽअस्त्वर्चिषे' इत्यत्रैष सर्वोऽग्निः संस्कृतः स ऽएषोऽत्र तस्मा ऽअलं यद्धिंस्यावं जिहिंसिषेद्धमु वा ऽएष हिनस्ति हरसा वैनं शोचिषा वार्चिषा वा हिनस्ति तथो हैनमेष ऽएतैर्न हिन'स्त्यन्यांस्ते ऽअस्मत्तपन्तु हेतयः पावको ऽअस्मभ्यं शिवो भवे'ति

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० सं० ११. ३. ३, कठ० १०. १७, कपिष्ठ० २८. १, मै० सं० ११. १० १, तै० सं० ४. ६, १ ।

* का० श्रौ० सू० १८. ३. ३ ।

† का० श्रौ० सू० १८. ३. ४ ।

(१) शु० य० सं० अ० १८ कं० ११ । (२) शु० य० सं० अ० १८ कं० ११ ।

यथैव यजुस्तथा बन्धुः ॥ २ ॥ आरुह्याग्निꣳ स्वयमा-
तृण्णां व्याघारयति । आज्येन पञ्चगृहीतेन तस्योक्तो
बन्धुः ॥ ३ ॥ स्वयमातृण्णां व्याघारयति । प्राणः स्वयमा-
तृण्णा प्राणे तदन्नं दधाति ॥ ४ ॥ यद्वेव स्वयमातृण्णां *
व्याघारयति । उत्तरवेदिꣳ ह्युपाग्नेरथ यामम्ं पूर्वां व्याघा-
रयत्यङ्गरस्य साथ हैपाग्नेस्तामेतद् व्याघारयति ॥ ५ ॥
पश्यꣳस्तत्र हिरण्यं व्याघारयति । प्रत्यक्षं वै तद्यत्पश्यति
प्रत्यक्षः सोत्तरवेदिः प्रास्ता ऽएवेह भवन्ति परोक्षं
वै तद्यत्प्रास्ताः परोक्षमियमुत्तरवेदिः ॥ ६ ॥ स्वाहा-
कारेण तां व्याघारयति । प्रत्यक्षं वै तद्यत्स्वाहाकारः
प्रत्यक्षः सोत्तरवेदिर्वषट्कारेणेमां परोक्षं वै तद्यद्वषट्कारः
परोक्षमियमुत्तरवेदिराज्येनाज्येन ह्युत्तरवेदिं व्याघारयन्ति
पञ्चगृहीतेन पञ्चगृहीतेन ह्युत्तरवेदिं व्याघारयन्ति व्यतिहारं
व्यतिहारꣳ ह्युत्तरवेदिं व्याघारयन्ति ॥ ७ ॥ 'नृषदे वेडि'-
ति । प्राणो वै नृषन्मनुष्या नरस्तद्योऽयं मनुष्येषु प्राणोऽ-
ग्निस्तमेतत्प्रीणा'त्यप्सुषदे वेडि'ति योऽप्स्वग्निस्तमेत-
त्प्रीणाति 'बर्हिषदे वेडि'ति य ऽओषधिष्वग्निस्तमेतत्प्री-
णाति 'वनसदे वेडि'ति यो वनस्पतिष्वग्निस्तमेत-
त्प्रीणाति 'स्वर्विदे वेडि'त्ययमग्निः स्वर्विदिममेवैतदग्निं
प्रीणाति ॥ ८ ॥ यद्वेवाह । नृषदे वेडप्सुषदे वेडित्यस्यै

* का० श्रौ० सू० १८. ३. ५ ।
(१) शु० य० सं० अ० १७ क० १२ । (२) शु० य० सं० अ० १७ क० १२ ।
(३) शु० य० सं० अ० १७ क० १ । (४) शु० य० सं० अ० १७ क० १२ ।
(५) शु० य० सं० अ० १७ क० १२ ।

वैताह्यग्नेर्नामानि तान्येतत्प्रीणाति तानि हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यतेऽथो ऽएतान्येवैतदग्नीनस्मिन्नग्नौ नामग्राहं दधाति ॥ ९ ॥ पञ्चैता ऽआहुतीर्जुहोति । पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ १० ॥ अथैनः * समुक्षति । दध्ना मधुना घृतेन जायत ऽएषऽएतद्यच्चीयते स ऽएष सर्वस्मा ऽअन्नाय जायते सर्वम्वेतदन्नं यद्दधि मधु घृतः सर्वेणैवैनमेतदन्नेन प्रीणाति सर्वतः समुक्षति सर्वत ऽएवैनमेतत्सर्वेणान्नेन प्रीणाति ॥ ११ ॥ यद्वेवैनः समुक्षति । अत्रैष सर्वोऽग्निः संस्कृतस्तस्मिन्देवा ऽएतद्रूपमुत्तममदधुस्तथैवास्मिन्नयमेतद्रूपमुत्तमं दधात्यन्नं वै रूपमेतदु परममन्नं यद्दधि मधु घृतं तद्यदेव परमः रूपं तदस्मिन्नेतदुत्तमं दधाति सर्वतः समुक्षत्यपि बाहेन परिश्रितः सर्वतऽएवास्मिन्नेतद्रूपमुत्तमं दधाति दर्भैस्ते हि शुद्धा मेध्या ऽअग्रैरग्रः हि देवानाम् ॥ १२ ॥ यद्वेवैनः समुक्षति । एतद्वै यत्रैतं प्राणा ऽऋषयोऽग्रेऽग्निः समस्कुर्वःस्तदस्मिन्नदोऽमुं पुरस्ताद्भागमकुर्वताद्दः सजूरब्दीयमथास्मिन्नेतः सञ्चित ऽउपरिष्टाद्भागमकुर्वत तद्यत्समुक्षति य ऽएवास्मिँस्ते प्राणा ऽऋषयः सञ्चित ऽउपरिष्टाद्भागमकुर्वत तानेवैतत्प्रीणाति दध्ना मधुना घृतेन

* का० श्रौ० सू० १८. ३. ६ ।

तस्योक्तो बन्धुः ॥ १३ ॥ 'ये देवा देवानाम् । यज्ञिया यज्ञियानामि'ति देवा ह्येते देवानां यज्ञिया ऽउ यज्ञियानाꣳ 'संवत्सरीणमुप भागमासत' ऽइति संवत्सरीणꣳ ह्येत ऽएतं भागमुपासते'ऽहुतादो हविषो यज्ञे ऽअस्मिन्नि'त्यहुतादो हि प्राणाः 'स्वयं पिबन्तु मधुनो घृतस्ये'ति स्वयमस्य पिबन्तु मधुनश्च घृतस्य चेत्येतत् ॥ १४ ॥ 'ये देवा देवेषु । अधि देवत्वमायन्नि'ति देवा ह्येते देवेष्वधि देवत्वमाय'न्ये ब्रह्मणः पुर ऽएतारो ऽअस्ये'त्ययमग्निर्ब्रह्म तस्यैते पुर ऽएतारो 'येभ्यो न ऽऋते पवते धाम किञ्चने'ति न हि प्राणेभ्य ऽऋते पवते धाम किञ्चन 'न ते दिवो न पृथिव्या ऽअधि स्नुष्वि'ति नैव ते दिवि न पृथिव्यां यदेव प्राणभृत्तस्मिꣳस्त ऽइत्येतत् ॥ १५ ॥ द्वाभ्याꣳ समुक्षति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्समुक्षति ॥ १६ ॥ अथ * प्रत्यवरोहति । 'प्राणदा ऽअपानदा' ऽइति सर्वे हैते प्राणा योऽयमग्निश्चितः स यदेतामत्रात्मनः परिदां न वदेतात्र हैवास्यैष प्राणान्वृञ्जीताथ यदेतामत्रात्मनः परिदां वदते तथो हास्यैष प्राणान्न वृङ्क्ते 'प्राणदा ऽअपानदा

(१) शु० य० सं० अ० १७ क० १३। (२) शु० य० स० अ० १७ क० १३।
(३) शु० य० सं० अ० १७ क० १३। (४) शु० य० स० अ० १७ क० १३।
(५) शु० य० स० अ० १७ क० १४। (६) शु० य० सं० अ० १७ क० १४।
(७) शु० य० स० अ० १७ क० १४। (८) शु० य० सं० अ० १७ क० १४।
* का० श्रौ० सू० १८. ३. ७।
(९) शु० य० सं० अ० १७ क० १५। (१०) शु० य० सं० अ० १७ क० १५।

ऽव्यानदा वर्चोदा वरिवोदा' ऽइत्येतद्वा मेऽसीत्येवैतदा-
'हान्न्याँस्ते ऽअस्मत्तपन्तु हेतयः पावको ऽअस्मभ्यः शिवो
भवे'ति यथैव यजुस्तथा बन्धुः ॥ १७ ॥ अथैत्य प्रव-
र्ग्योपसद्भ्यां प्रचरति । प्रवर्ग्योपसद्भ्यां प्रचर्य्याथास्मै
व्रतं वार्द्धव्रतं वा प्रयच्छत्यथ प्रवर्ग्योपसद्भ्यामथ प्रव-
र्ग्यमुत्सादयत्याप्त्वा तं कामं यस्मै कामायैनं प्रवृणक्ति
॥ १८ ॥ तं वै परिष्यन्द ऽउत्सादयेत् । तप्तो वा ऽएष
शुशुचानो भवति तं यदस्यामुत्सादयेदिमामस्य शुग्-
च्छेद्यदप्सूत्सादयेदपोऽस्य शुगृच्छेदथ यत्परिष्यन्द-
ऽउत्सादयति तथो ह नैवापो हिनस्ति नेमां यदुह्याप्सु
न प्रास्यति तेनापो न हिनस्त्यथ यत्समन्तमापः परियन्ति
शान्तिर्वा ऽआपस्तेनो ऽइमां न हिनस्ति तस्मात्परिष्यन्द-
ऽउत्सादयेत् ॥ १९ ॥ अग्नौ त्वेवोत्सादयेत् । इमे वै
लोका ऽएषोऽग्निरापः परिश्रितस्तं यदग्ना ऽउत्सादयति
तदेवैनं परिष्यन्द ऽउत्सादयति ॥ २० ॥ यद्वेवाग्ना ऽउत्सा-
दयति इमे वै लोका ऽएषोऽग्निरग्निर्वायुरादित्यस्तदेते
प्रवर्ग्याः स यदन्यत्राग्नेरुत्सादयेदेताँस्तद्देवान्बहिर्द्धेभ्यो
लोकेभ्यो दध्यादथ यदग्ना ऽउत्सादयत्येतानेवैतद्देवानेषु
लोकेषु दधाति ॥ २१ ॥ यद्वेवाग्ना ऽउत्सादयति । शिर-
ऽएतद्यज्ञस्य यत्प्रवर्ग्यं ऽआत्मायमग्निश्चितः स यद-
न्यत्राग्नेरुत्सादयेद्बहिर्द्धास्माच्छिरो दध्यादथ यदग्ना-
ऽउत्सादयत्यात्मानमेवास्यैतत्संस्कृत्य शिरः प्रतिदधाति

(१) शु० य० सं० अ० १७ क० १५।

॥ २२ ॥ स्वयमातृणया सᳬस्पृष्टं प्रथमं प्रवर्ग्यमुत्सादयति। प्राणः स्वयमातृण्णा शिरः प्रवर्ग्यं ऽआत्मायमग्निश्चितः शिरश्च तदात्मानं च प्राणेन सन्तनोति सन्दधात्युत्साद्य प्रवर्ग्यं यथा तस्योत्सादनम् ॥२३॥ (A)

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या ॥ ११० ॥

[ प्रवर्ग्योत्सादनविधिः ]

प्रत्येत्याग्निं प्रहरिष्यन्। आहुतीश्च जुहोति समिधश्चादधात्येतद्वा ऽएनं देवा ऽएष्यन्तं पुरस्तादन्नेनाप्रीणन्नाहुतिभिश्च समिद्भिश्च तथैवैनमयमेतदेष्यन्तं पुरस्तादन्नेन प्रीणात्याहुतिभिश्च समिद्भिश्च स वै पञ्चगृहीतं गृह्णीते तस्योक्तो बन्धुः ॥ १ ॥ अथ षोडशगृहीतं गृह्णीते। षोडशकलः प्रजापतिः प्रजापतिरग्निरात्मसम्मितेनैवैनमेतदन्नेन प्रीणाति यदु वा ऽआत्मसम्मितमन्नं तदवति तन्न हिनस्ति यद् भूयो हिनस्ति तद्यत्कनीयो न तदवति समान्याᳬ स्रुचि गृह्णीते समानो हि स यमेतत्प्रीणाति वैश्वकर्मणाभ्यां जुहोति विश्वकर्मायमग्निस्तमेवैतत्प्रीणाति तिस्र ऽआहुतीर्जुहोति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ २ ॥ अथ

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११ ४. १; कठ० १७. १७, कपिष्ठ० २८. १, मै० स० ११. १०. १, तै० सं० ४. ६. १।

समिध ऽआदधाति । यथा तर्प्पयित्वा परिवेविष्यात्तादृक्त-द्यौदुम्बर्य्यो भवन्त्यूर्ग्वै रस ऽउदुम्बर ऽऊर्ज्जैवैनमेतद्रसेन प्रीणात्यार्द्रा भवन्त्येतद्वै वनस्पतीनामनार्त्तं जीवं यदार्द्रं तद्यदेव वनस्पतीनामनार्त्तं जीवं तेनैनमेतत्प्रीणाति घृते न्युत्ता भवन्त्याग्नेयं वै घृतꣳ स्वेनैवैनमेतद् भागेन स्वेन रसेन प्रीणाति सर्वांꣳ रात्रिं वसन्ति तत्र हि ता रसेन सम्पद्यन्ते तिस्रः समिध ऽआदधाति त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥३॥ यद्वेवैता ऽआहुती-र्ज्जुहोति । एतद्वा ऽएनं देवा ऽएष्यन्तं पुरस्तादन्नेन सम-स्कुर्वन्नेताभिराहुतिभिस्तथैवैनमयमेतदेष्यन्तं पुरस्तादन्नेन संस्करोत्येताभिराहुतिभिः ॥ ४ ॥ स वै पञ्चगृहीतं गृह्णीते । पञ्चधाविहितो वा ऽअयꣳ शीर्षन्प्राणो मनो वाक् प्राण-श्चक्षुः श्रोत्रमेतमेवास्मिन्नेतत्पञ्चधाविहितꣳ शीर्षन्प्राणं दधा'त्यग्निस्तिग्मेन शोचिषे'ति तिग्मवत्या शिर ऽएवास्यै-तया सꣳश्यति तिग्मतायै ॥ ५ ॥ अथ षोडशगृहीतं गृह्णीते । अष्टौ प्राणा ऽअष्टावङ्गान्येतामभि सम्पदꣳ समान्याꣳ स्रुचि गृहीते समाने ह्येवास्मन्नङ्गानि च प्राणाश्च भवन्ति नाना जुहोत्यङ्गेभ्यश्च तत्प्राणेभ्यश्च विधृतिं करोति वैश्वकर्म्मणाभ्यां जुहोति विश्वकर्म्मा-यमग्निस्तमेवैतत्संस्करोति तिस्र ऽआहुतीर्ज्जुहोति त्रिवृ-दग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन संस्क-रोति सप्तदशभिर्ऋग्भिः सप्तदशः प्रजापतिः प्रजापति-

(१) शु॰ य॰ सं॰ अ॰ १५ क॰ ११।

रग्निर्ष्योवानग्निर्ष्योवत्यस्य मात्रा तावतैवैनमेतत्संस्करोत्ये-
कविꣳशतिगृहीतेन द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे
लोका ऽअसावादित्य एकविꣳश ऽएतामभिसम्पदम्
॥ ६ ॥ यद्वेवैताः समिध ऽआदधाति । एतद्वा ऽएनं देवाः
सर्वं कृत्स्नꣳ संस्कृत्याथैनमेतेनान्नेनाप्रीणन्नेताभिः समि-
द्भिस्तथैवैनमयमेतत्सर्वं कृत्स्नꣳ संस्कृत्याथैनमेतेनान्नेन
प्रीणात्येताभिः समिद्भिरौदुम्बर्यो भवन्त्यार्द्रा घृते न्युत्ताः
सर्वाꣳ रात्रिं वसन्ति तस्योक्तो बन्धु रुदेनेमुत्तरां नयेन्द्रेमं
प्रतरान्नय, यस्य कुम्भो गृहे हविरि'ति * यथैव यजुस्तथा
बन्धुस्तिस्रः समिध ऽआदधाति त्रिवृदग्निर्ष्योवानग्निर्ष्यो-
वत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति तिस्र ऽआहुती-
र्जुहोति तस्यद् तस्योक्तो बन्धुः ॥ ७ ॥ (B)

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ अप्रतिरथजपादि ]

अथातः सम्प्रेष्यति । उद्यच्छेध्ममुपयच्छोपयमनी-
रग्नये प्रह्रियमाणायानुब्रूह्यग्नीदेकस्फ्ययानूदेहि ब्रह्म-
न्नप्रतिरथं जपेति ॥ १ ॥ एतद्वै देवानुपप्रैष्यतः । एतं
स्यज्ञं तꣳस्यमानान्दक्षिणतोऽसुरा रक्षाꣳसि नाष्ट्रा-
ऽअजिघाꣳसन्न यक्ष्यद्ध्वे न यज्ञं तꣳस्यद्ध्व ऽइति ॥ २ ॥
ते देवा ऽइन्द्रमब्रुवन् । त्वं वै नः श्रेष्ठो बलिष्ठो वीर्यव-

( १ ) शु० य० स० अ० १५ क० ५०—५१ ।

* 'यथा यजु' इति 'ग-ज' पुस्तकयो ।

(B) एतत्प्रसगस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ११. ४ १ ।

चमोऽसि त्वमिमानि रक्षाᳪंसि प्रतियतस्वेति तस्य वै मे ब्रह्म द्वितीयमस्त्विति तथेति तस्मै वै बृहस्पतिं द्वितीयमकुर्वन्ब्रह्म वै बृहस्पतिस्त ऽइन्द्रेण चैव बृहस्पतिना च दक्षिणतोऽसुरान्रक्षाᳪंसि नाष्ट्रा ऽअपहत्याभयेऽनाष्ट्र ऽएतं यज्ञमतन्वत ॥ ३ ॥ तद्वा ऽएतत्क्रियते । यद्देवा ऽअकुर्वन्निदन्नु तानि रक्षाᳪंसि देवैरेवापहतानि यत्त्वेतत्करोति यद्देवा ऽअकुर्वंस्तत्करवाणीत्यथो ऽइन्द्रेण चैवैतद् बृहस्पतिना च दक्षिणतोऽसुरान्रक्षाᳪंसि नाष्ट्राऽअपहत्याभयेऽनाष्ट्र ऽएतं यज्ञं तनुते ॥ ४ ॥ स यः स ऽइन्द्रः । एष सोऽप्रतिरथोऽथ * यः स बृहस्पतिरेष स ब्रह्मा तद्यद् ब्रह्माऽप्रतिरथं जपतीन्द्रेण चैवैतद् बृहस्पतिना च दक्षिणतोऽसुरान्रक्षाᳪंसि नाष्ट्रा ऽअपहत्याभयेऽनाष्ट्र ऽएतं यज्ञं तनुते तस्माद् ब्रह्माऽप्रतिरथं जपति ॥ ५ ॥ 'आशुः शिशानो वृषभो न भीम' (१) † ऽइति । ऐन्द्र्योऽभिरूपा द्वादश भवन्ति द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैतद्दक्षिणतोऽसुरान्रक्षाᳪंसि नाष्ट्रा ऽअपहन्ति त्रिष्टुग्भिर्वज्रो वै त्रिष्टुब्वज्रेणैवैतद्दक्षिणतोऽसुरान्रक्षाᳪंसि नाष्ट्रा ऽअपहन्ति ता द्वाविᳪंशतिर्गायत्र्यः सम्पद्यन्ते तदाग्नेय्यो भवन्त्यग्निकर्म्म हि ॥ ६ ॥ ‡ अथैनमुद्यच्छति । 'उदु

* का॰ श्रौ॰ सू॰ १८. ३. १७ ।

(१) शु॰ य॰ सं॰ अ॰ १७ क॰ ३३ ।

† 'क' पुस्तके 'इत्यैन्द्र्यो' इति पाठो लभ्यते ।

‡ का॰ श्रौ॰ सू॰ स॰ अ॰ १८. ३. १८ ।

त्वां विश्वे देवा ऽअग्ने भरन्तु चित्तिभिरि'ति तस्योक्तो
बन्धुः ॥ ७ ॥ अथाभिप्रयन्ति । 'पञ्च दिशो दैवीर्यज्ञ-
मवन्तु देवीरि'ति देवाश्चासुराश्चोभये प्राजापत्या
दिक्ष्वस्पर्द्धन्त ते देवा ऽअसुराणां दिशोऽवृञ्जत तथैवै-
तद्यजमानो द्विषतो भ्रातृव्यस्य दिशो वृङ्क्ते दैवीरिति
तदेना दैवीः कुरुते यज्ञमवन्तु देवीरिति यज्ञमिममवन्तु
देवीरित्येत'दपामतिं दुर्म्मतिं बाधमाना' ऽइत्यशनाया वा-
ऽअमतिरशनायामपबाधमाना ऽइत्येत'द्रायस्पोषे यज्ञ-
पतिमाभजन्ती'रिति रय्यां च पोषे च यज्ञपतिमाभजन्ती-
रित्येत'द्रायस्पोषे ऽअधि यज्ञो ऽअस्थादि'ति रय्यां च
पोषे चाधि यज्ञोऽस्थादित्येतत् ॥ ८ ॥ 'समिद्धे ऽअग्ना-
वधि मामहान' ऽइति । यजमानो वै मामहान 'ऽउक्थ-
पत्र' ऽइत्युक्थानि ह्येतस्य पत्त्रा'णीड्य' ऽइति यज्ञिय-
ऽइत्ये'तद्गृभीत' इति धारित ऽइत्येत'त्तप्तं घर्म्मं परि-
गृह्यायजन्ते'ति तप्तꣳ ह्येतं घर्म्मं परिगृह्यायजन्तो'र्जं
यद्यज्ञमयजन्त देवा' ऽइत्यूर्ज्जं ह्येतं यज्ञमयजन्त देवाः
॥ ९ ॥ 'दैव्याय[12] धर्त्रे जोष्ट्र' ऽइति । दैवो ह्येष धर्त्ता
जोषयितृतमो 'देवश्रीः[13] श्रीमनाः शतपया' ऽइति

(१) शु० य० सं० अ० १६ क० ५३ । (२) शु० य० सं० अ० १६ क० ५४ ।
(३) शु० य० सं० अ० १७ क० ५४ । (४) शु० य० सं० अ० १७ क० ५४ ।
(५) शु० य० सं० अ० १७ क० ५५ । (६) शु० य० सं० अ० १७ क० ५५ ।
(७) शु० य० सं० अ० १७ क० ५५ । (८) शु० य० सं० अ० १७ क० ५५ ।
(९) शु० य० सं० अ० १७ क० ५५ । (१०) शु० य० सं० अ० १७ क० ५५ ।
(११) शु० य० सं० अ० १७ क० ५६ । (१२) शु० य० सं० अ० १७ क० ५६ ।
(१३) शु० य० सं० अ० १६ क० ५६ ।

देवश्रीर्ह्येष श्रीमनाः शतपयाः 'परिगृह्य देवा यज्ञमा-
यन्नि'ति परिगृह्य ह्येतं देवा यज्ञमाय'न्देवो देवेभ्यो-
ऽअध्वर्यन्तो ऽअस्थुरि'त्यध्वरो वै यज्ञो देवा देवेभ्यो
यज्ञियन्तोऽस्थुरित्येतत् ॥ १० ॥ 'वीतꣳ हविः शमितꣳ
शमिता यजध्या' ऽइति । इष्टꣳ स्विष्टमित्येत'त्तुरीयो
यज्ञो यत्र हव्यमेती'त्यध्वर्युः पुरस्ताद्यजूꣳषि जपति
होता पश्चादृचोऽन्वाह ब्रह्मा दक्षिणतोऽप्रतिरथं जपत्येष
ऽएव तुरीयो यज्ञ'स्ततो वाका ऽआशिषो नो जुषन्तामि'ति
ततो नो वाकाश्चाशिषश्च जुषन्तामित्येतत् ॥ ११ ॥
'सूर्यरश्मिर्हरिकेशः पुरस्तात् । सविता ज्योतिरुदयाँ२-
ऽअजस्रमि'त्यसौ वा ऽआदित्य ऽएषोऽग्निः स ऽएष
सूर्यरश्मिर्हरिकेशः पुरस्तात्सवितैतज्ज्योतिरुद्यच्छत्यजस्रं
'तस्य पूषा प्रसवे याति विद्वानि'ति पशवो वै पूषा त-
ऽएतस्य प्रसवे प्रेरते 'सम्पश्यन्विश्वा भुवनानि गोपा'
ऽइत्येष वा ऽइदꣳ सर्वꣳ सम्पश्यत्येष ऽउ ऽएवास्य
सर्वस्य भुवनस्य गोप्ता ॥ १२ ॥ तद्वा ऽअमुष्मादादि-
त्यादर्वाच्यः पञ्चदिशः । ता ऽएतद्देवा ऽअसुराणाम-
वृञ्जताथो ता ऽएवैतत्समारोहँस्ता ऽउ ऽएवैतद्यजमानो
द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ता ऽएवैतत्समारो-
हत्यथो ऽएतद्वा ऽएताभिर्देवा ऽआप्तः सम्प्राप्नुवँस्त-

---

(१) शु० य० सं० अ० १७ क० ५६। (२) शु० य० सं० अ० १७ क० ५६।
(३) शु० य० सं० अ० १७ क० ५६। (४) शु० य० सं० अ० १७ क० ५७।
(५) शु० य० सं० अ० १७ क० ५७। (६) शु० य० सं० अ० १७ क० ५८।
(७) शु० य० सं० अ० १७ क० ५८। (८) शु० य० सं० अ० १७ क० ५८।

थैवाभिरुयमेतद्वातः सम्प्राप्नोति ॥ १३ ॥ अथाश्मानं *
पृश्निमुपदधाति । असौ वा ऽआदित्योऽश्मा पृश्नि-
रमुमेवैतदादित्यमुपदधाति पृश्निर्भवति रश्मिभिर्हि मण्डलं
पृश्नि तमन्तरेणाहवनीयं च गार्हपत्यं चोपदधात्ययं वै लोको
गार्हपत्यो द्यौराहवनीय ऽएतं तदिमौ लोकावन्तरेण दधाति
तस्मादेष ऽइमौ लोकावन्तरेण तपति ॥ १४ ॥ आग्नीध्रवे-
लायाम् । अन्तरिक्षं वा ऽआग्नीध्रमेतं तदन्तरिक्षे दधाति
तस्मादेषोऽन्तरिक्षायतनो ऽव्यद्धेऽव्यद्धे ह्येष ऽइतः
॥ १५ ॥ स ऽएष प्राणः । प्राणमेवैतदात्मन्धत्ते तदे-
तदायुरायुरेवैतदात्मन्धत्ते तदेतदन्नमायुर्ह्येतदन्नमु वा-
ऽआयुरश्मा भवति स्थिरो वा ऽअश्मा स्थिरं तदायुः
कुरुते पृश्निर्भवति पृश्नीव ह्यन्नः ॥ १६ ॥ स ऽउप-
दधाति । 'विमान ऽएष दिवो मध्य ऽआस्त' ऽइति
विमानो ह्येष दिवो मध्य ऽआस्त 'ऽआपप्रिवान्रोदसी-
ऽअन्तरिक्षमि'त्युद्यन्वा ऽएष ऽइमाँल्लोकानापूरयति 'स
विश्वाचीरभिचष्टे घृताचीरि'ति स्रुचश्चैतद्वेदीश्चा'हा-
न्तरा पूर्वमपरं च केतुमि'त्यन्तरेमं च लोकममुं चेत्ये-
तदुथो यच्चेदमेतर्हि चीयते यच्चादः पूर्वमचीयतेति ॥ १७ ॥
'उक्षा समुद्रो ऽअरुणः सुपर्ण' ऽइति । उक्षा ह्येष समुद्रोऽ-
रुणः सुपर्णः 'पूर्वस्य योनिं पितुराविवेशे'ति पूर्वस्य

---

* का० श्रौ० सू० १८. ३. २० ।

(१) शु० य० स० अ० १७ क० ५९ । (२) शु० य० स० अ० १७ क० ५९ ।
(३) शु० य० सं० अ० १७ क० ५९ । (४) शु० य० स० अ० १७ क० ५९ ।
(५) शु० य० सं० अ० १७ क० ६० । (६) शु० य० स० अ० १७ क० ६० ।

ह्येष ऽएतं स्योनिं पितुराविशति 'मध्ये दिवो निहितः पृश्निरश्मे'ति मध्ये ह्येष दिवो निहितः पृश्निरश्मा 'विचक्रमे रजसस्पात्यन्ता'विति विक्रममाणो वा ऽएष ऽएषां लोकानामन्तान्पाति ॥ १८ ॥ द्वाभ्यामुपदधाति * । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदुपदधाति त्रिष्टुब्भ्यां त्रैष्टुभो ह्येष न सादयत्यसन्नो ह्येष न सूददोहसाधिवदति प्राणो वै सूददोहाः प्राण ऽएष किं प्राणे प्राणं दध्यामिति तं निधाय यथा न नश्येत् ॥ १९ ॥ † अथोपातियन्ति । 'इन्द्रं विश्वा ऽअवीवृधन्नि'ति तस्योक्तो 'बन्धु'र्देवहूर्यज्ञ ऽआ च वक्षत्सुम्नहूर्यज्ञ ऽआ च वक्षदि'ति देवहूश्चैव यज्ञः सुम्नहूश्च 'यक्षदग्निर्देवो देवाँ२ ऽआ च वक्षदि'ति यक्षच्चैवाग्निर्देवो देवाना च वहत्वित्येतत् ॥ २१ ॥ 'वाजस्यमा प्रसवः । उद्ग्राभेणोदग्रभीत् । अधा सपत्नानिन्द्रो मे निग्राभेणाधराँ२ ऽअकरि'ति यथैव यजुस्तथा बन्धुः ॥ २१ ॥ 'उद्ग्राभं च निग्राभं च ब्रह्म देवा ऽअवीवृधन् । अधा सपत्नानिन्द्राग्नी मे विषूचीना न्व्यस्यतामि'ति यथैव यजुस्तथा बन्धुः ॥ २२ ॥ तद्या ऽअमुष्मादादित्यादूर्ध्वाश्चतस्रो दिशः । ता ऽएतद्देवा-

(१) शु० य० सं० अ० १७ क० ६० । (२) शु० य० सं० अ० १७ क० ६० ।
* का० श्रौ० सू० १८ ३ २१ ।
† 'अथोपायन्ति' इति 'म ज' पुस्तकयोर्दृश्यते ।
(३) शु० य० सं० अ० १७ क० ६१ । (४) शु० य० सं० अ० १७ क० ६२ ।
(५) शु० य० सं० अ० १७ क० ६२ । (६) शु० य० सं० अ० १७ क० ६३ ।
(७) शु० य० सं० अ० १७ क० ६४ ।

ऽअसुराणामवृञ्जताथो ता ऽएवैतत्समारोहँस्ता ऽउ ऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ता ऽएवैतत्समारोहत्यथो ऽएतद्वा ऽएताभिर्देवा ऽआतः सम्प्राप्नुवँस्तथैवाभिरयमेतदातः सम्प्राप्नोति ॥ २३ ॥ अथाग्निमारोहन्ति * । 'क्रमद्ध्वमग्निना नाकमि'ति स्वर्गो वै लोको नाकः क्रमद्ध्वमनेनाग्निनैतꣳ स्वर्गं लोकमित्येत 'दुख्यः हस्तेषु बिभ्रत' ऽइत्युख्यꣳ ह्येत ऽएतः हस्तेषु बिभ्रति 'दिवस्पृष्ठꣳ स्वर्गत्वा मिश्रा देवेभिराद्ध्वमि'ति दिवस्पृष्ठꣳ स्वर्गं लोकं गत्वा मिश्रा देवेभिराद्ध्वमित्येतत् ॥ २४ ॥ 'प्राचीमनु प्रदिशं प्रेहि विद्वानि'ति । प्राची वै दिगग्नेः स्वामनु प्रदिशं प्रेहि विद्वानित्येत'दग्नेरग्ने पुरो ऽअग्निर्भवेहे'त्यस्य त्वमग्नेरग्ने पुरोऽग्निर्भवेहेत्येत 'द्विश्वा ऽआशा दीद्यानो विभाही'ति सर्वा ऽआशा दीप्यमानो विभाहीत्येत'दूर्जं नो धेहि द्विपदे चतुष्पद' ऽइत्याशिषमाशास्ते ॥ २५ ॥ 'पृथिव्या ऽअहम् । उदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहमि'ति गार्हपत्यादाग्नीध्रीयमागच्छन्त्याग्नीध्रीयादाहवनीयं 'दिवो नाकस्य पृष्ठात्स्वर्ज्योतिरगामहमि'ति दिवो नाकस्य पृष्ठात्स्वर्गं लोकमगामहमित्येतत् ॥ २६ ॥ 'स्वर्यन्तो नापेक्षन्ते । आ द्याꣳ

* का० श्रौ० सू० १८. ४. १।

(१) शु० य० सं० अ० १७ क० ६५। (२) शु० य० सं० अ० १७ क० ६५। (३) शु० य० सं० अ० १७ क० ६५। (४) शु० य० सं० अ० १७ क० ६६। (५) शु० य० सं० अ० १७ क० ६६। (६) शु० य० सं० अ० १७ क० ६६। (७) शु० य० सं० अ० १७ क० ६७। (८) शु० य० सं० अ० १७ क० ६७। (९) शु० य० सं० अ० १७ क० ६८। (१०) शु० य० सं० अ० १७ क० ६८।

रोहन्ति रोदसी' ऽइति न हैव तेऽपेक्षन्ते ये स्वर्गं लोकं यन्ति '[1]यज्ञं ये विश्वतोधारꣳ सुविद्वाꣳसो वितेनिर' ऽइत्येष ऽएव यज्ञो विश्वतोधार ऽएत ऽउ ऽएव सुविद्वाꣳसो य ऽएतं वितन्वते ॥ २७ ॥ '[2]अग्ने प्रेहि प्रथमो देवयतामि'ति । इममेतदग्निमाह त्वमेषां प्रेहि प्रथमो देवयतामिति 'चक्षुर्देवा[3]नामुत मर्त्यानामि'त्युभयेषाꣳ ह्येतद्देवमनुष्याणां चक्षु'रियक्ष[4]माणा भृगुभिः सजोषा' इति यजमाना भृगुभिः सजोषा ऽइत्येत'त्स्वर्यन्तु[5] यजमानाः स्वस्ती'ति स्वर्गं लोकं यन्तु यजमानाः स्वस्तीत्येतत् ॥२८॥ तद्या ऽअमुष्मिँल्लोके पञ्च दिशः । ता ऽएतद्देवा ऽअसुराणामवृञ्जताथो ता ऽएवैतत्समारोहँस्ता ऽउ ऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ता ऽएवैतत्समारोहत्यथो ऽएतद्वा ऽएताभिर्देवा ऽआतꣳ सम्प्राप्नुवँस्तथैवाभिरयमेतदातꣳ सम्प्राप्नोति ॥ २९ ॥ अथैनमभिजुहोति । एतद्वा ऽएनं देवा ऽईयिवाꣳसमुपरिष्टादन्नेनाप्रीणन्नेतयाहुत्या तथैवैनमयमेतदीयिवाꣳसमुपरिष्टादन्नेन प्रीणात्येतयाहुत्या कृष्णायै शुक्लवत्सायै पयसा रात्रिर्वै कृष्णा शुक्लवत्सा तस्या ऽअसावादित्यो वत्सः स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणात्युपरि धार्यमाण ऽउपरि हि स यमेतत्प्रीणाति दोहनेन दोहनेन हि पयः प्रदीयते ॥ ३० ॥ यद्वेवैनमभिजुहोति ।

---

(१) शु० य० सं० अ० १७ कं० ६१। (२) शु० य० सं० अ० १७ कं० ६९।
(३) शु० य० सं० अ० १७ कं० ६९। (४) शु० य० सं० अ० १७ कं० ६९
(५) शु० य० सं० अ० १७ कं० ६९।

शिर एतद्यज्ञस्य यदग्निः प्राणः पयः शीर्षंस्तत्प्राणं दधाति यथा * स्वयमातृण्णामभिप्रक्षरेदेवमभिजुहुया-त्प्राणः स्वयमातृण्णा रस एष शिरश्च तत्प्राणं च रसेन सन्तनोति सन्दधाति 'नक्तोषासा समनसा विरूपे' इति तस्योक्तो बन्धुः ॥ ३१ ॥ 'अग्ने सहस्रा-क्षे'ति । हिरण्यशकलैर्वा एष सहस्राक्षः 'शतमूर्द्धन्नि'ति यदद्वः शतशीर्षा रुद्रोऽसृज्यत 'शतं ते प्राणाः सहस्रं व्याना' इति शतं हैव तस्य प्राणाः सहस्रं व्याना यः शतशीर्षा 'त्वं साहस्रस्य राय ईशिष' इति त्वं सर्वस्य रय्या ईशिष इत्येत'त्तस्मै ते विधेम वाजाय स्वाहे'त्येष वै वाजस्तमेतत्प्रीणाति ॥ ३२ ॥ द्वाभ्यामभिजुहोति । द्विपाद्यजमानो यजमानोऽग्निर्यावान-ग्निर्यावत्यस्य मात्रा तावतैवेनमेतदभिजुहोति॥३३॥ अथैनं † निदधाति । 'सुपर्णोऽसि गरुत्मानि'त्येतद्वा एनमदो विकृत्या सुपर्णं गरुत्मन्तं विकरोति तं सुपर्णं गरुत्मन्तं चिनोति तं सुपर्णं गरुत्मन्तं कृत्वान्ततो निदधाति 'पृष्ठे पृथिव्याः सीद । भासान्तरिक्षमापृण ज्योतिषा दिव-मुत्तभान तेजसा दिश उद्दृंहे'त्येवं ह्येष एतत्सर्वं

---

* का० श्रौ० सू० १८, ४ २ ।

(१) शु० य० सं० अ० १७ क० ७० । (२) शु० य० सं० अ० १७ क० ७१ ।
(३) शु० य० सं० अ० १७ क० ७१ । (४) शु० य० सं० अ० १७ क० ७२ ।
(५) शु० य० सं० अ० १७ क० ७२ । (६) शु० य० सं० अ० १७ क० ७१ ।
† का० श्रौ० सू० १८. ४. ४ ।
(७) शु० य० सं० अ० १७ क० ७२ । (८) शु० य० सं० अ० १७ क० ७२ ।

करोति ॥ ३४ ॥ 'आजुह्वानः सुप्रतीकः पुरस्तादि'ति । आजुह्वानो नः सुप्रतीकः पुरस्तादित्येत'दग्ने स्वं योनिमासीद साधुये'त्येष वा ऽअस्य स्वो योनिस्तद्ध साध्वासीदेत्येत'दस्मिन्त्सधस्थे ऽअध्युत्तरस्मिन्नि'ति द्यौर्वा ऽउत्तरः सधस्थं 'विश्वे देवा यजमानश्च सीदते'ति तद्विश्वैर्देवैः सह यजमानः सादयति द्वाभ्यां निदधाति तस्योक्तो बन्धुर्वषट्कारेण तस्योपरि बन्धुः ॥ ३५ ॥ अथास्मिन्त्समिध ऽआदधाति । एतद्वा ऽएनं देवा ऽईयिवाꣳसमुपरिष्टादन्नेनाप्रीणन्त्समिद्भिश्चाहुतिभिश्च तथैवैनमयमेतदीयिवाꣳसमुपरिष्टादन्नेन प्रीणाति समिद्भिश्चाहुतिभिश्च ॥ ३६ ॥ स वै * शमीमयीं प्रथमामादधाति । एतद्वा ऽएष ऽएतस्यामाहुत्याꣳ हुतायां प्रादीप्यतोदज्वलत्तस्माद्देवा ऽअबिभयुर्यद्वै नोऽयं न हिꣳस्यादिति त ऽएताꣳ शमीमपश्यꣳस्तयैनमशमयꣳस्त†यदेनꣳ शम्याशमयꣳस्तस्माच्छमी तथैवैनमयमेतच्छम्या शमयति शान्त्या ऽएव न जग्ध्यै ॥ ३७ ॥ 'ताꣳ सवितुर्वरेण्यस्य । चित्रामाहं वृणे सुमतिं विश्वजन्याम् । यामस्य कण्वो ऽअदुहत्प्रपीनाꣳ सहस्रधारां पयसा महीं गामि'ति कण्वो हैनां ददर्श सा हास्मै सहस्रधारा सर्वान्कामान्दुदुहे तथैवैतद्यजमानाय सहस्रधारा सर्वान्कामान्दुहे ॥ ३८ ॥ अथ

(१) शु० य० स० अ० १७ क० ७३ । (२) शु० य० स० अ० १७ क० ७३ ।
(३) शु० य० स० अ० १७ क० ७३ । (४) शु० य० स० अ० १७ क० ७३ ।
* का० श्रौ० सू० १८. ४. ६ ।
† 'यदेत०' इति 'ग' पुस्तके ।
(५) शु० य० स० अ० १७ क० ७४ ।

वैकङ्कतीमादधाति । तस्या ऽउक्तो बन्धु'र्विधेम ते परमे जन्मन्नग्न' ऽइति द्यौर्वा ऽअस्य परमं जन्म 'विधेम स्तोमै-रवरे सधस्थ' ऽइत्यन्तरिक्षं वा ऽअवरः सधस्थं 'यस्मा-द्योनेरुदारिथा यजे तमि'त्येष वा ऽअस्य स्वो योनिस्तं यज ऽइत्येत'त्प्र त्वे हवींषि जुहुरे समिद्ध' ऽइति यदा वा ऽएष समिध्यतेऽथैतस्मिन्हवींषि प्रजुह्वति ॥ ३९ ॥
अथौदुम्बरीमादधाति । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्जैवैनमेत-द्रसेन प्रीणाति कर्ण्णकवती भवति पशवो वै कर्ण्णकाः पशुभिरेवैनमेतदन्नेन प्रीणाति यदि कर्ण्णकवतीं न विन्दे-द्दधिद्रप्सानुपहृत्यादध्यात्तद्यद्दधिद्रप्सा ऽउपतिष्ठते तदेव पशुरूपं 'प्रेद्धो ऽअग्ने दीदिहि पुरो न' ऽइति विराजा दधा-त्यन्नं विराडन्नेनैवैनमेतत्प्रीणाति तिस्रः समिध ऽआदधाति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्री-णाति ॥४०॥ [अर्धप्रपाठकः४७॥] अथाहुतीर्जुहोति * । यथा परिविष्यानुपाययेत्तादृक्तत्स्रुवेण पूर्वां स्रुचोत्तरा'मग्ने तम-द्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम् । ऋध्यामा त ऽओहै'रि'ति यस्ते हृदिस्पृक्स्तोमस्तं त ऽऋध्यासमि-त्येतत्पङ्क्त्या जुहोति पञ्चपदा पङ्क्तिः पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ ४१ ॥ अथ वैश्वकर्म्मणीं

(१) शु० य० सं० अ० १७ क० ७४। (२) शु० य० सं० अ० १७ क० ७५।
(३) शु० य० सं० अ० १७ क० ७५। (४) शु० य० सं० अ० १७ क० ७६।
* का० श्रौ० सू० १८ ४, ८।
(५) शु० य० सं० अ० १७ क० ७६। (६) शु० य० सं० अ० १७ क० ७७।

जुहोति। विश्वकर्म्मायमग्निस्तमेवैतत्प्रीणाति 'चित्तिं जुहोमि मनसा घृतेने'ति चित्तमेषां जुहोमि मनसा च घृतेन चेत्येत- 'द्यथा देवा ऽइहागमन्नि'ति यथा देवा ऽइहागच्छानित्ये- त'द्वीतिहोत्रा ऽऋतावृध' ऽइति सत्यवृध ऽइत्येत'त्पत्ये विश्वस्य भूमनो जुहोमि विश्वकर्म्मण' ऽइति यो ऽस्य सर्वस्य भूतस्य पतिस्तस्मै जुहोमि विश्वकर्म्मण- ऽइत्येत'द्विश्वाहादाभ्यᳪ हविरि'ति सर्वदैवाक्षितᳪ हविरित्येतत् ॥ ४२ ॥ अथ † पूर्णाहुतिं जुहोति। सर्व- मेतद्यत्पूर्णᳪ सर्वेणैवैनमेतत्प्रीणाति ॥ ४३ ॥ 'सप्त ते- ऽअग्ने समिध' ऽइति। प्राणा वै समिधᳪ प्राणा ह्येतᳪ समिन्धते 'सप्त जिह्वा' ऽइति यानमून्त्सप्त पुरुषानेकं पुरुषमकुर्वंस्तेषामेतदाह 'सप्त ऽऋषय' ऽइति सप्त हि त- ऽऋषय ऽआस'न्त्सप्त धाम प्रियाणी'ति छन्दाᳪस्येतदाह छन्दाᳪसि वा ऽअस्य सप्त धाम प्रियाणि 'सप्त होत्राᳪ सप्तधा त्वा यजन्ती'ति सप्त ह्येतᳪ होत्राᳪ सप्तधा यजन्ति 'सप्त योनीरि'ति चितीरेतदा'हापृणस्वे'त्या प्रजायस्वेत्येतद् 'घृतेने'ति रेतो वै घृतᳪ रेत ऽएवैतदेषु लोकेषु दधाति 'स्वाहे'ति यज्ञो वै स्वाहाकारो यज्ञियमे-

(१) शु० य० सं० अ० १७ कं० ७८। (२) शु० य० सं० अ० १७ कं० ७८।
(३) शु० य० सं० अ० १७ कं० ७८। (४) शु० य० सं० अ० १७ कं० ७८।
(५) शु० य० सं० अ० १७ कं० ७८।

† "पूर्णाहुतिं जुहोति सप्तत इति" का० श्रौ० सू० १८, ४ ९।

(६) शु० य० सं० अ० १७ कं० ७९। (७) शु० य० सं० अ० १७ कं० ७९।
(८) शु० य० सं० अ० १७ कं० ७९। (९) शु० य० सं० अ० १७ कं० ७९।
(१०) शु० य० सं० अ० १७ कं० ७९। (११) शु० य० सं० अ० १७ कं० ७९।
(१२) शु० य० सं० अ० १७ कं० ७९। (१३) शु० य० सं० अ० १७ कं० ७९।
(१४) शु० य० सं० अ० १७ कं० ७९।

वैतदिदꣳ सक्कृत्स्वं करोति ॥ ४४ ॥ सप्त सप्तेति । सप्तचितिकोऽग्निꣳ सप्तर्त्तवꣳ संवत्सरꣳ संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्प्रीणाति तिस्र ऽआहुतीर्जुहोति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति तिस्रꣳ समिध ऽआदधाति तस्यद्दस्योक्तो बन्धुꣳ ॥ ४५ ॥ तिष्ठन्त्समिध ऽआदधाति । अस्थीनि वै समिधस्तिष्ठन्तीव वा ऽअस्थीन्यासीनऽआहुतीर्जुहोति माꣳसानि वा ऽआहुतय ऽआसत ऽइव वै माꣳसान्यन्तराꣳ समिधो भवन्ति बाह्या ऽआहुतयोऽन्तराणि ह्यस्थीनि बाह्यानि माꣳसानि ॥ ४६ ॥ अथातꣳ सम्पदेव । षट् पुरस्ताज्जुहोति षड्डुपरिष्टात्षड्भिराश्मनꣳ पृश्नेर्य्यन्ति द्वाभ्यामश्मानं पृश्निमुपदधाति चतुर्भिराग्नेर्य्यन्ति पञ्चभिरग्निमारोहन्ति तदेकां न त्रिꣳशदाहुतिरेव त्रिꣳशत्तमी द्वाभ्यामग्निं निदधाति तद् द्वात्रिꣳशद् द्वात्रिꣳशदक्षरानुष्टुप्प्सैषानुष्टुप् ॥ ४७ ॥ तद्या ऽअमूस्तिस्रोऽनुष्टुभꣳ । गार्हपत्ये सम्पादयन्ति तासामेतामन्त्रैकामाहरन्ति तद्यदेतामत्राहरन्त्यत्रैष सर्वोऽग्निꣳ संस्कृतꣳ स ऽएषोऽत्र तस्मै नालमासीद्यदन्नमात्स्यत् ॥ ४८ ॥ सोऽग्निमब्रवीत् । त्वयान्नमदानीति तथेति तस्म्माद्यदुवैतमत्राहरन्त्यथैषोऽलमन्नायालमाहुतिभ्यो भवति ॥ ४९ ॥ अथो ऽआहुꣳ । प्रजापतिरेवैतं प्रियं पुत्रमुरस्याधत्त ऽइति स यो हैतदेवं वेदा हैवं प्रियं पुत्रमुरसि धत्ते ॥ ५० ॥ यद्वेवैतमत्राहरन्ति । याश्वै तान्त्सप्त

पुरुषानेकं पुरुषमकुर्वंस्तयमेव स योऽयमग्निश्चीयतेऽथ यामेषां तामूर्द्ध्वाᳬं श्रियꣳ रसꣳ समुदौहन्नेष स यमेतमत्राग्निमाहरन्ति तद्यदेतमत्राहरन्ति यैवैतेषाᳬं सप्तानां पुरुषाणाᳬं श्रीर्यो रसस्तमेतदूर्द्ध्वꣳ समुदूहन्ति तदस्यैतच्छिर ऽआत्मायमग्निश्चित ऽआत्मानमेवास्यैतत्संस्कृत्य शिरꣳ प्रतिदधाति ॥ ५१ ॥ (C)

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥

[ वैश्वानरमारुतयोर्होमविध्यादि ]

अथातो * वैश्वानरं जुहोति । अत्रैष सर्वोऽग्निꣳ संस्कृतꣳ स ऽएषोऽत्र वैश्वानरो देवता तस्मा ऽएतद्धविर्जुहोति तदेनꣳ हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यते द्वादशकपालो द्वादश मासाꣳ संवत्सरꣳ संवत्सरो वैश्वानरꣳ ॥ १ ॥ यद्वेवैतं वैश्वानरं जुहोति । वैश्वानरं वा ऽएतमग्निं जनयिष्यन्भवति तमदꣳ पुरस्ताद्दीक्षणीयायाᳬं रेतो भूतꣳ सिञ्चति यादृग्वै योनौ रेतꣳ सिच्यते तादृग्जायते तद्यत्तत्र वैश्वानरꣳ रेतो भूतꣳ सिञ्चति तस्मादयमिह वैश्वानरो जायत ऽउपाᳬंशु तत्र भवति रेतो वै तत्र यज्ञ-

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११. ४. २, कठ० सं० १८. ३ ५, १८. ४, कपिष्ठ० २८. ३ ५, २८. ४, मै० सं० ११. १०. ४, ६; तै० सं० ४. ६ ३, ५।

* का० श्रौ० सू० १६. ४ १६–१९।

ऽउपाꣳशु वै रेतः सिच्यते निरुक्त ऽइह निरुक्तꣳ हि
रेतो जातं भवति ॥ २ ॥ * स यः स वैश्वानरः । इमे
स लोका ऽइयमेव पृथिवी विश्वमग्निर्नरोऽन्तरिक्षमेव
विश्वं वायुर्नरो द्यौरेव विश्वमादित्यो नरः ॥ ३ ॥ ते
ये त ऽइमे लोकाः । इदं तच्छिर ऽइदमेव पृथिव्यो-
षधयः श्मश्रूणि तदेतद्विश्वं वागेवाग्निः स नरः
सोपरिष्टादस्य भवत्युपरिष्टाद्ध्यस्या ऽअग्निः ॥ ४ ॥ इद-
मेवान्तरिक्षम् । तस्मादेतदलोमकमलोमकमिव ह्यन्तरिक्षं
तदेतद्विश्वं प्राण ऽएव वायुः स नरः स मध्येनास्य
भवति मध्येन ह्यन्तरिक्षस्य वायुः ॥ ५ ॥ शिर ऽएव
द्यौः । नक्षत्राणि केशास्तदेतद्विश्वं चक्षुरेवादित्यः स
नरस्तदवस्ताच्छीर्ष्णो भवत्यवस्ताद्धि दिव ऽआदित्य-
स्तदस्यैतच्छिरो वैश्वानर ऽआत्मायमग्निश्चित ऽआत्मा-
नमेवास्यैतत्संस्कृत्य शिरः प्रतिदधाति ॥ ६ ॥ अथ
मारुताञ्जुहोति । प्राणा वै मारुताः प्राणानेवास्मिन्नेत-
द्दधाति वैश्वानरꣳ हुत्वा शिरो वै वैश्वानरः शीर्षंस्तत्प्रा-
णान्दधाति ॥ ७ ॥ एक ऽएष भवति । एकमिव हि
शिरः सप्तेतरे सप्तकपाला यदु वा ऽअपि बहुकृत्वः सप्त-
सप्त सप्तैव तच्छीर्षण्येव तत्सप्त प्राणान्दधाति ॥ ८ ॥
निरुक्त ऽएष भवति । निरुक्तमिव हि शिरोऽनिरुक्ता ऽइतरेऽ-
निरुक्ता ऽइव हि प्राणास्तिष्ठन्नेतं जुहोति तिष्ठतीव हि
शिर ऽआसीन ऽइतरानासत ऽइव हि प्राणाः ॥ ९ ॥ तयौ

* शतम् ४६०० ॥

प्प्रथमौ मारुतौ जुहोति । इमौ तौ प्प्राणौ तौ मद्ध्ये वैश्वानरस्य जुहोति मद्ध्ये हीमौ शीर्ष्णः प्प्राणौ ॥ १० ॥ अथ यौ द्वितीयौ । इमौ तौ तौ समन्तिकतरं जुहोति समन्तिकतरमिव हीमौ प्प्राणौ ॥ ११ ॥ अथ यौ तृतीयौ । इमौ तौ तौ समन्तिकतरं जुहोति समन्तिकतरमिव हीमौ प्प्राणौ वागेवारण्ण्येऽनूच्च्यः सोऽरण्ण्येऽनूच्च्यो भवति वहु हि वाचा घोरं निगच्छति ॥ १२ ॥ यद्वेव वैश्वानरमारुताञ्जुहोति । क्षत्रं वै वैश्वानरो विण्मारुताः क्षत्रं च तद्विशं च करोति वैश्वानरं पूर्वं जुहोति क्षत्रं तत्कृत्वा विशं करोति ॥ १३ ॥ एक ऽएष भवति । एकस्थं तत्क्षत्रमेकस्थाथ्रे श्रियं करोति वहुव ऽइतरे विशि तद्भूमानं दधाति ॥ १४ ॥ निरुक्त ऽएष भवति । निरुक्तमिव हि क्षत्रमनिरुक्ता ऽइतरेऽनिरुक्तेव हि विट् तिष्ठन्नेतं जुहोति तिष्ठतीव हि क्षत्रमासीन ऽइतरानासीन ऽइव हि विट् ॥ १५ ॥ तं वा ऽएतम् । पुरोऽनुवाक्यवन्तं याज्यवन्तं वषट्कृते स्रुचा जुहोति हस्तेनैवेतरानासीनः स्वाहाकारेण क्षत्रायैव तद्विशं कृतानुकरामनुवर्त्मानं करोति ॥ १६ ॥ तदाहुः । कथमस्यैते पुरोऽनुवाक्यवन्तो याज्यवन्तो वषट्कृते स्रुचा हुता भवन्तीत्येतेषां वै सप्तपदानां मारुतानां यानि त्रीणि प्प्रथमानि पदानि सा त्रिपदा गायत्त्री पुरोऽनुवाक्याथ यानि चत्वार्युत्तमानि सा चतुष्पदा त्रिष्टुब्याज्येदमेव * कपुत्सलमयं दण्डः स्वाहाकारो

* 'कपुच्छलमयम्' इति 'ग ज' पुस्तकयो ।

वषट्कार उएवमु हास्यैते पुरोऽनुवाक्यवन्तो याज्यवन्तो वषट्कृते स्रुचा हुता भवन्ति ॥ १७ ॥ तद्यं प्रथमं दक्षिणतो मारुतं जुहोति । याः सप्त प्राच्यः स्रवन्ति ताः स स सप्तकपालो भवति सप्त हि ता याः प्राच्यः स्रवन्ति ॥ १८ ॥ अथ यं प्रथममुत्तरतो जुहोति । ऋतवः स स सप्तकपालो भवति सप्त ह्यृतवः ॥ १९ ॥ अथ यं द्वितीयं दक्षिणतो जुहोति । पशवः स स सप्तकपालो भवति सप्त हि ग्राम्याः पशवस्तमन्तर्हितं पूर्वस्माज्जुहोत्यप्सु तत्पशून्प्रतिष्ठापयति ॥ २० ॥ अथ यं द्वितीयमुत्तरतो जुहोति । सप्त ऽऋषयः स स सप्तकपालो भवति सप्त हि सप्तर्षयस्तमनन्तर्हितं पूर्वस्माज्जुहोत्यृतुषु तदृषीन्प्रतिष्ठापयति ॥ २१ ॥ अथ यं तृतीयं दक्षिणतो जुहोति । प्राणाः स स सप्तकपालो भवति सप्त हि शीर्षन्प्राणास्तमनन्तर्हितं पूर्वस्माज्जुहोत्यनन्तर्हितांस्तच्छीर्ष्णः प्राणान्दधाति ॥ २२ ॥ अथ यं तृतीयमुत्तरतो जुहोति । छन्दाꣳसि स स सप्तकपालो भवति सप्त हि चतुरुत्तराणि छन्दाꣳसि तमनन्तर्हितं पूर्वस्माज्जुहोत्यनन्तर्हितानि तदृषिभ्यश्छन्दाꣳसि दधाति ॥ २३ ॥ अथ याः सप्त प्रतीच्यः स्रवन्ति । सोऽरण्येऽनूच्यः स सप्तकपालो भवति सप्त हि ता याः प्रतीच्यः स्रवन्ति सोऽस्यैषोऽवाङ् प्राण उएतस्य प्रजापतेः सोऽरण्येऽनूच्यो भवति तिर *ऽइव वै तद्यदरण्यं तिर ऽइव तद्यदवाङ् प्राणस्तस्मा-

* 'ऽइव तद्य' इति 'ग' पुस्तके ।

य्य ऽएतासां नदीनां पिबन्ति रिप्रतरा शपनतरा ऽआहनस्य- वादितरा भवन्ति तद्यदेतदाहेदं मारुता ऽइति तदस्मा- ऽअन्नं कृत्वापिदधाति तेनैनं प्रीणाति ॥ २४ ॥ स यः स वैश्वानरः । असौ स ऽआदित्योऽथ ये ते मारुता रश्म- यस्ते ते सप्त सप्तकपाला भवन्ति सप्त-सप्त हि मारुता गणाः ॥ २५ ॥ स * जुहोति । 'शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माँश्चे'ति नामान्येषामेतानि मण्ड- लमेवैतत्संस्कृत्याथास्मिन्नेतान् रश्मीन्नामग्राहं प्रतिद- धाति ॥ २६ ॥ (A)

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ वसोर्धाराहोमः ]

अथातो † वसोर्द्धारां जुहोति । अत्रैष सर्वोऽग्निः संस्कृतः स ऽएषोऽत्र वसुस्तस्मै देवा ऽएतां धारां प्राय- च्छँस्तयैनमप्रीणँस्तद्यदेतस्मै वसव ऽएतां धारां प्रायच्छँस्त- स्मादेनां वसोर्द्धारेत्याचक्षते तथैवास्मा ऽअयमेतां धारां प्रयच्छति तयैनं प्रीणाति ॥ १ ॥ यद्वेवैतां वसोर्द्धारां

* का० श्रौ० सू० १८ ४. २१।

( १ ) शु० य० सं० अ० १७ क० ८०।

( A ) एतद्ब्राह्मणस्था निविदा अन्यत्राऽप्युपलभ्यन्ते यथा—का० सं० ११. ५ १, कठ० १८. ६; कपिष्ठ० २०. ६, मै० सं० ११ ११ १; तै० सं० ४. ६, ५।

† यजमान आज्यं सहस्रस्यार्थापरिमाणया महत्यौदुम्बर्या स्रुचा महता स्रुवेण पञ्चवारं गृहीतमाज्यमग्नेरनूच्ये पुरोडाशोऽधिकरणं तदुपरि यन्तत्समवच्छिन्नधारं यथा भवति तथा वसो- र्धारारूपामाहुतिं जुहोति । घृतेऽग्निधामेति यानि 'वाजश्च' ( १८. १–२९ ) इत्यादिहोमसमन्त्रा- णां पार्श्वेऽग्निरनुवाको जयेत्यादि वेद्स्वाहान्तैरेकोनत्रिंशत्कण्डिकात्मकं ( म. भा. )।

जुहोति । अभिषेक ऽएवास्यैष ऽएतद्वा ऽएनं देवाः सर्वं कृत्स्नꣳ संस्कृत्याथैनमेतैः कामैरभ्यषिञ्चन्नेतया वसोर्धारया तथैवैनमयमेतत्सर्वं कृत्स्नꣳ संस्कृत्याथैनमेतैः कामैरभिषिञ्चत्येतया वसोर्धारयाज्येन पञ्चगृहीतेनौदुम्बर्या स्रुचा तस्योक्तो बन्धुः ॥ २ ॥ वैश्वानरꣳ हुत्वा । शिरो वै वैश्वानरः शीर्ष्णो वा ऽअन्नमद्यतेऽथो शीर्षतो वा ऽअभिषिच्यमानोऽभिषिच्यते मारुतान्हुत्वा प्राणा वै मारुताः प्राणेषु वा ऽअन्नमद्यतेऽथो प्राणेषु वा ऽअभिषिच्यमानोऽभिषिच्यते ॥ ३ ॥ तद्वा ऽअरण्येऽनूच्यं । वाग्वा ऽअरण्येऽनूच्यो वाचो वा ऽअन्नमद्यतेऽथो वाचा वा ऽअभिषिच्यमानोऽभिषिच्यते तदेतत्सर्वं वसु सर्वे ह्येते कामाः सैषा वसुमयी धारा यथा क्षीरस्य वा सर्पिषो वैवमारम्भायैवेयमाज्याहुतिर्हूयते तद्यदेषा वसुमयी धारा तस्मादेनां वसोर्धारेत्याचक्षते ॥ ४ ॥ स ऽआह । * इदं च म ऽइदं च म ऽइत्यनेन च त्वा प्रीणाम्यनेन चानेन च त्वाभिषिञ्चाम्यनेन चेत्येतदथो ऽइदं च मे देहीदं च म ऽइति सा यदेवैषा धाराशीः प्राप्नुयादथैतद्यजुः प्रतिपद्येत ॥ ५ ॥ एतद्वा ऽएनं देवाः । एतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया वसोर्धारयाथैनमेतान्कामानयाचन्त तेभ्य ऽइष्टः प्रीतोऽभिषिक्त ऽएतान्कामान्प्रायच्छत्तथैवैनमयमेतदेतेनान्नेन प्रीत्वैतैः कामैरभिषिच्यैतया वसोर्धारयाथैनमेतान्कामान्याचते तस्मा ऽइष्टः प्रीतोऽभिषिक्त-

* 'इदं च म इदं च म' इत्यनेन 'वाजश्च मे प्रसवश्च मे' इत्यादि-मन्त्राणां निर्देश इत्यर्थः ।

ऽएतान्कामान्प्रयच्छति द्वौ-द्वौ कामौ सँरुधुनक्त्यव्य-
वच्छेदाय यथा * व्योकसौ सँयुञ्ज्यादेवं स्यज्ञेन कल्प-
न्तामिति ॥ ६ ॥ एतद्वै देवा ऽअब्रुवन् । केनेमान्कामा-
न्प्रतिग्रहीष्याम ऽइत्यात्मनैवेत्यब्रुवन्यज्ञो वै देवानामात्मा
यज्ञ ऽउ ऽएव यजमानस्य स यदाह यज्ञेन कल्पन्तामित्या-
त्मना मे कल्पन्तामित्येवैतदाह ॥७॥ [ काण्डस्यार्थम् २०१ ॥ ]
द्वादशसु कल्पयति । द्वादश मासाः संवत्सरः संवत्सरोऽग्नि-
र्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणात्यथो
तावतैवैनमेतदन्नेनाभिषिञ्चति चतुर्दशसु कल्पयत्यष्टासु
कल्पयति दशसु कल्पयति त्रयोदशसु कल्पयति ॥ ८ ॥
अथार्द्धेन्द्राणि जुहोति । सर्वमेतद्यदर्द्धेन्द्राणि सर्वेणैवैन-
मेतत्प्रीणात्यथो सर्वेणैवैनमेतदभिषिञ्चति ॥ ९ ॥ अथ ग्रहा-
ञ्जुहोति । यज्ञो वै ग्रहा यज्ञेनैवैनमेतदन्नेन प्रीणात्यथो
यज्ञेनैवैनमेतदन्नेनाभिषिञ्चति ॥ १० ॥ (B).

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या ॥ ९४ ॥

[ यज्ञक्रतुहोमस्यार्थवादः ]

अथैतान्यज्ञक्रतूञ्जुहोति । 'अग्निश्च मे घर्मश्च
म' ऽइत्येतैरेवैनमेतद्यज्ञक्रतुभिः प्रीणात्यथो ऽएतैरेवैन-

* व्योकसौ भिन्नस्थानस्थितावपि इत्यर्थः ।
(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ११. ५ २ ।
( १ ) शु० य० मा० अ० १८ क० २२ ।

मेतज्ञयक्रतुभिरभिषिञ्चति ॥ १ ॥ अथायुज *स्तोमाञ्जुहोति । एतद्वै देवाः सर्वान्कामानाप्त्वायुग्भि स्तोमैः स्वर्गं लोकमायँस्तथैवैतद्यजमानः सर्वान्कामानाप्त्वायुग्भि स्तोमैः स्वर्गं लोकमेति ॥ २ ॥ तद्वै त्रयस्त्रिंशशादिति । अन्तो वै त्रयस्त्रिंशशोऽयुजाᳫं स्तोमानामन्तत ऽएव तद्देवाः स्वर्गं लोकमायँस्तथैवैतद्यजमानोऽन्तत ऽएव स्वर्गं लोकमेति ॥ ३ ॥ अथ † युग्मतो जुहोति । एतद्वै छन्दाᳫंस्यब्रुवन्यातयामा वा ऽअयुज स्तोमा युग्मभिर्वयᳫं स्तोमैः स्वर्गं लोकमयामेति तानि युग्मभि स्तोमैः स्वर्गं लोकमायँस्तथैवैतद्यजमानो युग्मभिं स्तोमैः स्वर्गं लोकमेति ॥ ४ ॥ तद्वा ऽअष्टाचत्वारिंशशादिति । अन्तो वा ऽअष्टाचत्वारिंशशो युग्मताᳫं स्तोमानामन्तत ऽएव तच्छन्दाᳫंसि स्वर्गं लोकमायँस्तथैवैतद्यजमानोऽन्तत ऽएव स्वर्गं लोकमेति ॥ ५ ॥ स ऽआह । 'एका च मे तिस्रश्च मे, . चतस्रश्च मेऽष्टौ च म' ऽइति यथा वृक्षᳪ रोहन्नुत्तरामुत्तराᳫं शाखाᳫं समालम्भᳪ रोहेत्तादृक्तद्वेष स्तोमाञ्जुहोत्यन्नं वै स्तोमा ऽअन्नेनैवैनमेतदभिषिञ्चति ॥ ६ ॥ अथ ‡ वयाᳫंसि जुहोति । पशवो वै वयाᳫंसि

* एकामादाय द्वितीयां विहाय तृतीयामादाय चतुर्थीं विहाय परित्यक्तमध्यसंख्याकेनान्तिमसंख्याकेन 'एका च मे' इत्यादि मन्त्रेणायुग्मस्तोमाञ्जुहुयात् । अयुग्मस्तोमहोमैः सर्वकामावाप्तिरिति भावः ।

† 'चतस्रश्च मे' इत्यनया कण्डिकया युग्मस्तोमाञ्जुहोति । तद्यथा—प्रथमं चतस्र इत्येतां संख्यामादाय चतुरुत्तरत्वेन स्थितान् युग्मान् स्तोमान् अष्टाचत्वारिंशत्पर्यन्तं ताञ्जुहुयात् । युग्मस्तोमहोमैः स्वर्गप्राप्तिरित्यर्थः ।

( १ ) शु० य० मा० अ० १८ कं० २४, २५ ।

‡ 'त्र्यविश्च, पष्ठवाट् च' आभ्यां कण्डिकाभ्यां विहितो होमो वयोहोम इत्युच्यते ।

पशुभिरेवैनमेतदन्नेन प्रीणात्यथो पशुभिरेवैनमेतदन्नेनाभिषिञ्चति ॥ ७ ॥ अथ * नामग्राहं जुहोति । एतद्वै देवाः सर्वान्कामानाप्त्वाथैतमेव प्रत्यक्षमप्रीणँस्तथैवैतद्यजमानः सर्वान्कामानाप्त्वाथैतमेव प्रत्यक्षं प्रीणाति 'वाजाय स्वाहा प्रसवाय स्वाहे'ति नामान्यस्यैतानि नामग्राहमेवैनमेतत्प्रीणाति ॥ ८ ॥ त्रयोदशैतानि नामानि भवन्ति । त्रयोदश मासाः संवत्सरस्त्रयोदशाग्नेश्चितिपुरीषाणि यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतत्प्रीणाति यद्वेव नामग्राहं जुहोति नामग्राहमेवैनमेतदभिषिञ्चति ॥९॥ अथाह । 'इयं ते राण्मित्राय यन्तासि यमन ऽऊर्ज्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाधिपत्याये'त्यन्नं वा ऽऊर्गन्नं वृष्टिरन्नेनैवैनमेतत्प्रीणाति ॥ १० ॥ यद्वेवाह । 'इयं ते राण्मित्राय यन्तासि यमन ऽऊर्ज्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाधिपत्याये'तीदं ते राज्यमभिषिक्तोऽसीत्येतन्मित्रस्य त्वं यन्तासि यमन ऽऊर्ज्जे च नोऽसि वृष्ट्यै च नोऽसि प्रजानां च न ऽआधिपत्यायासीत्युपब्रुवत ऽएवैनमेतदेतस्मै नः सर्वस्मा ऽअस्येतस्मै त्वा सर्वस्मा ऽअभ्यषिचामहीति तस्मादु हेदं मानुषः राजानमभिषिक्तमुपब्रुवते ॥ ११ ॥ अथ † कल्पाञ्जुहोति । प्राणा वै कल्पाः प्राणानेवास्मिन्नेतद्दधा'त्यायुर्यज्ञेन कल्पतां प्राणो यज्ञेन

कल्पतामि'त्येतानेवास्मिन्नेतत् क्लृप्ताञ्प्राणान्दधाति ॥१२॥ द्वादश कल्पाञ्जुहोति। द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतत् क्लृप्ताञ्प्राणान्दधाति यद्वेव कल्पाञ्जुहोति प्राणा वै कल्पा ऽअमृतमु वै प्राणा ऽअमृतेनैवैनमेतदभिषिञ्चति ॥ १३ ॥ अथाह। 'स्तोमश्च यजुश्च ऽऋक्च साम च बृहच्च रथन्तरञ्चे'ति त्रयी हैषा विद्यान्नं वै त्रयी विद्यान्नेनैवैनमेतत्प्रीणात्यथो ऽअन्नेनैवैनमेतदभिषिञ्चति 'स्वर्देवा ऽअगन्मामृता ऽअभूमे'ति स्वर्हि गच्छत्यमृतो हि भवति "प्रजापतेः प्रजा ऽअभूमे'ति प्रजापतेर्हि प्रजा भवति 'वेट् स्वाहे'ति वषट्कारो हैष परोक्षं यद्वेट्कारो वषट्कारेण वा वै स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते तदेनमेताभ्यामुभाभ्यां प्रीणाति वषट्कारेण च स्वाहाकारेण चाथो ऽएताभ्यामेवैनमेतदुभाभ्यामभिषिञ्चत्यत्र ताᳬ स्रुचमनुप्रास्यति यदत्राज्यलिप्तं तदत्रेद्वहिर्धाग्नेरसदिति ॥ १४ ॥ तस्यै वा ऽएतस्यै वसोर्धारायै। द्यौरेवात्माभ्रमूधो विद्युत्स्तनो धारैव धारा दिवोऽधि गामागच्छति ॥ १५ ॥ तस्यै गौरेवात्मा। ऊध ऽएवोध स्तन स्तनो धारैव धारा गोरधि यजमानम् ॥ १६ ॥ तस्यै यजमान ऽएवात्मा। बाहूऽऊधः स्रुक्स्तनो धारैव धारा यजमानादधि देवान्देवेभ्योऽधि गां गोरधि यजमानं तदेतदनन्तमक्षय्यं देवाना-

(१) शु० य० सं० अ० १८ क० २९। (२) शु० य० सं० अ० १८ क० २९। (३) शु० य० सं० अ० १८ क० २९। (४) शु० य० सं० अ० १८ क० २९।

मन्नं परिप्लवते स यो हैतदेवं वेदैवᳪ हैवास्यैतदनन्तमक्षय्यमन्नं भवत्यथातः सम्पदेव ॥ १७ ॥ तदाहुः । कथमस्यैषा वसोर्धारा संवत्सरमग्निमाप्नोति कथᳪ संवत्सरेणाग्निना सम्पद्यत ऽइति षष्टिश्च ह वै त्रीणि च शतान्येषा वसोर्धाराथ षडथ पञ्चत्रिᳪशत्ततो यानि षष्टिश्च त्रीणि च शतानि तावन्ति संवत्सरस्याहानि तत्संवत्सरस्याहान्याप्नोत्यथ यानि षट् षड् वा ऽऋतवस्तदृतूनाप्नोति रात्रीराप्नोति तदुभयानि संवत्सरस्याहोरात्राण्याप्नोत्यथ यानि पञ्चत्रिᳪशत्स त्रयोदशो मासः स ऽआत्मा त्रिᳪशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर ऽएवं पञ्चत्रिᳪशमेतावान्वै संवत्सरऽएवमु हास्यैषा वसोर्धारा संवत्सरमग्निमाप्नोत्येवᳪ संवत्सरेणाग्निना सम्पद्यत ऽएतावत्य ऽउ वै शाण्डिलेऽग्नौ मध्यतो यजुष्मत्य ऽइष्टका ऽउपधीयन्तेऽग्नयो हैते पृथग्यदेता ऽइष्टका ऽएवमु हास्यैतेऽग्नयः पृथग्वसोर्धारयाभिहुता भवन्ति ॥ १८ ॥ तदाहुः । कथमस्यैषा वसोर्धारा महदुक्थमाप्नोति कथं महतोक्थेन सम्पद्यत ऽइत्येतस्या ऽएव वसोर्धाराया यानि नव प्रथमानि यजूᳪषि तत् त्रिवृच्छिरोऽथ यान्यष्टाचत्वारिᳪशत्तौ चतुर्विᳪशौ पक्षावथ यानि पञ्चविᳪशतिः स पञ्चविᳪश ऽआत्माथ यान्येकविᳪशतिस्तदेकविᳪशं पुच्छमथ यानि त्रयस्त्रिᳪशत्स वशोऽथ या ऽअशीतयः सैवाशीतीनामाप्तिरशीतिभिर्हि महदुक्थमाख्यायतेऽथ यदूर्ध्वमशीतिभ्यो यदेवादो महतऽउक्थस्योर्ध्वमशीतिभ्य ऽएतदस्य तदेवमु हास्यैषा

वसोर्द्धारा महदुक्थमाप्नोत्येवं महतोक्थेन सम्पद्यते ॥ १९ ॥ (C)

## तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ वाजप्रसवीयहोमः, पार्थहोमः, यजमानाभिषेकश्च ]

अथातो * वाजप्रसवीयं जुहोति । अन्नं वै वाजोऽन्नप्रसवीयः हास्यैतदन्नमेवास्मा ऽएतेन प्रसौति ॥ १ ॥ एतद्वा ऽएनं देवाः । एतेनान्नेन प्रीत्वैतैः कामैरभिषिच्च्यैतया वसोर्द्धारयाथैनमेतद्भूय ऽएवाप्रीणँस्तथैवैनमयमेतदेतेनान्नेन प्रीत्वैतैः कामैरभिषिच्च्यैतया वसोर्द्धारयाथैनमेतद्भूय ऽएव प्रीणाति ॥ २ ॥ यद्वेवैतद्वाजप्रसवीयं जुहोति । अभिषेक ऽएवास्यैष ऽएतद्वा ऽएनं देवा ऽएतेनान्नेन प्रीत्वैतैः कामैरभिषिच्च्यैतया वसोर्द्धारयाथैनमेतद्भूय ऽएवाभ्यषिञ्चँस्तथैवैनमयमेतदेतेनान्नेन प्रीत्वैतैः कामैरभिषिच्च्यैतया वसोर्द्धारयाथैनमेतद्भूय ऽएवाभिषिञ्चति ॥ ३ ॥ सर्वौषधं भवति । सर्वमेतदन्नं यत्सर्वौषधः सर्वेणैवैनमेतदन्नेन प्रीणात्यथो सर्वेणैवैनमेतदन्नेनाभिषिञ्चति तेषामेकमन्नमुद्धरेत्तस्य नाश्नीयाद्यावज्जीवमौदुम्बरेण चमसेनौदुम्बरेण स्रुवेण तयोरुक्तो बन्धुश्चतुःस्रक्ती भवत-

---

( C ) एतद्ब्राह्मणस्य विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११ ५ २, कठ० १८. ११, १२, कपिष्ठ० २८ ११, २९ १, मै० सं० ११ १२. ६, तै० सं० ४. ७. ६, ९–११ ।

* 'वाजस्येम' इत्यारभ्य 'पय पृथिव्याम्' ( शु० य० सं० अ० १८ कं० ३०–३६ ) इत्यन्तैर्मन्त्रैः प्रतिमन्त्रमभिहितो होमो वाजप्रसवीय इत्युच्यते ।

ऽच्युतस्तो वै दिशः सर्वाभ्य ऽएवैनमेतद्दिग्भ्योऽन्नेन प्रीणा-त्यथो सर्वाभ्य ऽएवैनमेतद्दिग्भ्योऽन्नेनाभिषिञ्चति ॥ ४ ॥ यद्वेवैतद्वाजप्रसवीयं जुहोति । एता ह देवताः सुता-ऽएतेन सवेन येनैतत्सोष्यमाणो भवति ता ऽएवैतत्प्रीणाति ता ऽअस्मा ऽइष्टाः प्रीता ऽएतछ्ठ सवमनुमन्यन्ते ताभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै न तद्यदग्नौ जुहोति तदग्निम-भिषिञ्चत्यथ यदेताभ्यो देवताभ्यो जुहोति तदु तान्दे-वान्प्रीणाति य ऽएतस्य सवस्येशते ॥ ५ ॥ अथ वा-ऽएतत्पार्थान्यपि * जुहोति । एतद्वै देवा ऽअकामयन्ता-त्रैव सर्वैः सवैः सूयेमहीति तेऽत्रैव सर्वैः सवैरसूयन्त तथैवैतद्यजमानोऽत्रैव सर्वैः सवैः सूयते ॥ ६ ॥ तद्यानि पार्थानि । तानि राजसूयस्य वाजप्रसवीयं तद्यत्तानि जुहोति तद्राजसूयेन सूयतेऽथ यानि चतुर्दशोत्तराणि ततो यानि सप्त पूर्वाणि तानि वाजपेयस्य वाजप्रसवीयं तद्यत्तानि जुहोति तद्वाजपेयेन सूयतेऽथ यानि सप्तोत्तराणि तान्य-ग्नेस्तद्यत्तानि जुहोति तदग्निसवेन † सूयते ॥ ७ ॥ स वै राजसूयस्य पूर्वाणि जुहोति । अथ वाजपेयस्य राजा वै राजसूयेनेष्ट्वा भवति सम्राड्वाजपेयेन राज्यमु वा ऽअग्रेऽथ साम्राज्यं तस्माद्वाजपेयेनेष्ट्वा न राजसूयेन यजेत प्रत्य-वरोहः स यथा सम्राट् सन्राजा स्यात्तादृक्तत् ॥ ८ ॥ अग्नेरुत्तमानि जुहोति । सर्वं ह्येते स वा यदग्निसवः सर्वछ्ठ

* का० श्रौ० सू० १८ ५ १५।

† 'सूयते' इति 'ग' पुस्तके ।

हैतदभिसवेन सुतो भवति राजा च सम्राट् च तस्मा-
दग्नेरुत्तमानि जुहोति ॥ ९ ॥ अथैनं कृष्णाजिनेऽभिषि-
ञ्चति । यज्ञो वै कृष्णाजिनं स्वयज्ञ एवैनमेतदभिषिञ्चति
लोमतश्छन्दाꣳसि वै लोमानि च्छन्दः स्वेवैनमेतदभिषि-
ञ्चत्युत्तरतस्तस्योपरि वन्तुः प्राचीनग्रीवे तद्धि देवत्रा
॥ १० ॥ तद्धैके दक्षिणतोऽग्नेरभिषिञ्चन्ति । दक्षिणतो
वा अन्नस्योपचारस्तदेनमन्नस्याद्यादभिषिञ्चाम इति न
तथा कुर्याद्देया वै दिक्पितृणां क्षिप्रे हैतां दिशं प्रैति यं
तथाभिषिञ्चन्ति ॥ ११ ॥ आहवनीय उ हैकेऽभिषि-
ञ्चन्ति । स्वर्ग्यो वै लोक आहवनीयस्तदेनꣳ स्वर्गे
लोकेऽभिषिञ्चाम इति न तथा कुर्याद्दैवो वा अस्यैष
आत्मा मानुषोऽयमनेन हास्य ते मर्त्येनात्मनैतं दैवमा-
त्मानमनुप्रसजन्ति यं तथाभिषिञ्चन्ति ॥ १२ ॥ उत्तरत
एवैनमभिषिञ्चेत् । एषा ह्योभयेषां देवमनुष्याणां दिग्यदु-
दीची प्राची स्वायामेवैनमेतद्दिश्यायत्तं प्रतिष्ठितमभि-
षिञ्चति न वै स्व आयतने प्रतिष्ठितो रिष्यति ॥ १३ ॥
आसीनं भूतमभिषिञ्चेत् । आस्त इव वै भूतस्तिष्ठन्तं
बुभूषन्तं तिष्ठतीव वै बुभूषन्नस्ताजिने पुष्टिकाममभिषि-
ञ्चेत्कृष्णाजिने ब्रह्मवर्चसकाममुभयोरुभयकामं तदुत्तरतः
पुच्छस्योत्तरलोम प्राचीनग्रीवमुपस्तृणाति ॥ १४ ॥
आस्पृष्टं * परिश्रितः । तद्यत्कृष्णाजिनमास्पृष्टं परिश्रितो
भवति तथो हास्यैष दैव आत्मा कृष्णाजिनेऽभिषिक्तो

* का० श्रौ० सू० १८. ५. ६ ।

भवत्यथ यदेनमन्वारब्धमग्निं तिष्ठन्तमभिषिञ्चति तथो हैतस्माद्दैवादभिषेकान्न व्यवच्छिद्यते ॥ १४ ॥ अग्नौ † हुत्वाथैनमभिषिञ्चति । दैवो वा ऽअस्यैष ऽआत्मा मानुषोऽयं देवा ऽउ वा ऽअग्रेऽथ मनुष्यास्तस्मादग्नौ हुत्वाथैनं तस्यैव परिशिष्टेनाभिषिञ्चत्यत्र तꣳ स्रुवमनु-प्रास्यति ॥ १६ ॥ अथैनं दक्षिणं बाहुमनुपर्यावृत्याभिषि-ञ्चति । 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येना-भिषिञ्चामी'ति वाग्वै सरस्वती तस्या ऽइदꣳ सर्वं यन्त्रꣳ सवितृप्रसूत ऽएवैनमेतदनेन सर्वेण सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चत्यत्र तं चमसमनु-प्रास्यति यद्वत्र विलितं तन्नेद्बहिर्धाग्नेरसदिति ॥ १७ ॥ तं वै मध्ये पार्थानामभिषिञ्चति । संवत्सरो वै पार्थानि संवत्सरस्यैवैनमेतन्मध्यत ऽआदधाति षट् पुरस्ताज्जुहोति षडुपरिष्टात्षड्वा ऽऋतव ऽऋतुभिरेवैनमेतत्सुपुवाणमुभयतः परिगृह्णाति बृहस्पतिः पूर्वेषामुत्तमो भवतीन्द्र ऽउत्तरेषां प्रथमो ब्रह्म वै बृहस्पतिः क्षत्रमिन्द्रो ब्रह्मणा चैवैनमेतत्क्षत्रेण च सुषुवाणमुभयतः परिगृह्णाति ॥ १८ ॥ (D)

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥

† का० श्रौ० सू० १८ ५ ९ ।

( १ ) शु० य० मा० अ० १८ कं० ३७ ।

( C ) एतद्ब्राह्मणस्था विषया अयवाऽन्यत्राम्नाये यथा— का० सं० ११ ५ १ क० सं० १८. ११, कपिष्ठ० २६. २, मै० सं० १२ १. ३; तै० सं० ४. ७ १२ ।

[ राष्ट्रभृद्धोमः ]

अथातो राष्ट्रभृतो जुहोति । राजानो वै राष्ट्रभृतस्ते हि राष्ट्राणि बिभ्रत्येता ह देवताः सुता एतेन सवेन येनैतत्सोष्यमाणो भवति ता एवैतत्प्रीणाति ता अस्मा इष्टाः प्रीता एतत्सवमनुमन्यन्ते ताभिरनुमतः *सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै न तद्यद्राजानो राष्ट्राणि बिभ्रति राजान उ एते देवास्तस्मादेता राष्ट्रभृतः ॥ १ ॥ यद्वेवैता † राष्ट्रभृतो जुहोति । प्रजापतेर्विस्रस्तान्मिथुनान्युदक्रामन्गन्धर्वाप्सरसो भूत्वा तानि रथो भूत्वा पर्यगच्छत्तानि परिगत्यात्मन्नधत्तात्मन्नकुरुत तथैवैनान्ययमेतत्परिगत्यात्मन्धत्त आत्मन्कुरुते ॥ २ ॥ स यः स प्रजापतिर्व्यस्रंसत । अयमेव स योऽयमग्निश्चीयतेऽथ यान्यस्मात्तानि मिथुनान्युदक्रामन्नेतास्ता देवता याभ्य एतज्जुहोति ॥ ३ ॥ गन्धर्वाप्सरोभ्यो जुहोति । गन्धर्वाप्सरसो हि भूत्वोदक्रामन्नथो गन्धेन च वै रूपेण च गन्धर्वाप्सरसश्चरन्ति तस्माद्यः कश्च मिथुनमुपप्रैति गन्धं चैव स रूपं च कामयते ॥ ४ ॥ मिथुनानि जुहोति । मिथुनाद्वा अधि प्रजातिर्यो वै प्रजायते स राष्ट्रं भवत्यराष्ट्रं वै स भवति यो न प्रजायते तद्यन्मिथुनानि राष्ट्रं बिभ्रति मिथुना उ एते देवास्तस्मादेता राष्ट्रभृत आज्येन द्वादशगृहीतेन ता उ द्वादशैवाहुतयो भवन्ति तस्योक्तो

* 'सूयते' इति 'ग-ज' पुस्तकयो ।

† का॰ श्रौ॰ सू॰ १८-५ १६ ।

बन्धुः ॥ ५ ॥ पुंसे पूर्वस्मै जुहोति । अथ स्त्रीभ्यः पुमाꣳसं तद्वीर्य्येणात्याद्धात्येकस्मा ऽइव पुंसे जुहोति बह्वीभ्य ऽइव स्त्रीभ्यस्तस्मादप्येकस्य पुंसो बह्व्यो जाया भवन्त्युभाभ्यां वषट्कारेण च स्वाहाकारेण च पुंसे जुहोति स्वाहाकारेणैव स्त्रीभ्यः पुमाꣳसमेव तद्वी-र्य्येणात्याद्धाति ॥ ६ ॥ 'ऋताषाडृतधामे'ति । * सत्यसाडि-त्युधामेत्येत'दग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस' ऽइत्यग्निर्हि गन्धर्व ऽओषधिभिरप्सरोभिर्म्मिथुनेन सहोच्चक्राम 'मुदो नामे'त्योषधयो वै मुद ऽओषधिभिर्हीदꣳ सर्वं मोदते 'स न ऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहे'ति तस्योक्तो बन्धुः ॥ ७ ॥ 'सꣳहित' ऽइति । असौ वा-ऽआदित्यः सꣳहित ऽएष ह्यहोरात्रे सन्दधाति 'विश्वसा-मे'त्येष ह्येव सर्वꣳ साम 'सूर्य्यो गन्धर्वस्तस्य मरीचयोऽप्स-रस' ऽइति सूर्य्यो ह गन्धर्वो मरीचिभिरप्सरोभिर्म्मिथुनेन सहोच्चक्रा'मायुवो नामे'त्यायुवाना ऽइव हि मरीचयः प्लवन्ते 'स न ऽइदं ब्रह्म क्षत्रं पात्वि'ति तस्योक्तो बन्धुः ॥ ८ ॥ 'सुषुम्ण' ऽइति । सुयज्ञिय ऽइत्येत'त्सूर्य्यरश्मि-रि'ति सूर्य्यस्येव हि चन्द्रमसो रश्मय'श्चन्द्रमा गन्धर्वस्तस्य

(१) शु० य० सं० अ० १८ क० ३८ ।

* 'सत्यषाट्' इति 'ख' पुस्तके ।

(२) शु० य० सं० अ० १८ क० ३८ । (३) शु० य० सं० अ० १८ क० ३८ ।
(४) शु० य० सं० अ० १८ क० ३८ । (५) शु० य० सं० अ० १८ क० ३९ ।
(६) शु० य० सं० अ० १८ क० ३९ । (७) शु० य० सं० अ० १८ क० ३९ ।
(८) शु० य० सं० अ० १८ क० ३९ । (९) शु० य० सं० अ० १८ क० ३९ ।
(१०) शु० य० सं० अ० १८ क० ४० । (११) शु० य० सं० अ० १८ क० ४० ।
(१२) शु० य० सं० अ० १८ क० ४० ।

नक्षत्राण्यप्सरस' इति चन्द्रमा ह गन्धर्वो नक्षत्रैरप्सरोभिर्मिथुनेन सहोच्चक्राम 'भेकुरयो नामे'ति भाकुरयो ह नामैते भाथं हि नक्षत्राणि कुर्वन्ति 'स न इदं ब्रह्म क्षत्रं पात्वि'ति तस्योक्तो बन्धुः ॥ ९ ॥ 'इषिर' इति । क्षिप्र इत्येत'द्विश्वव्यचा' इत्येष हीदᳪं सर्वं व्यचः करोति 'वातो गन्धर्वस्तस्यापो अप्सरस' इति वातो ह गन्धर्वोऽद्भिरप्सरोभिर्मिथुनेन सहोच्चक्राम'मोर्जा नामे'त्यापो वा ऊर्जोऽद्भ्यो ह्यूर्ग्जायते 'स न इदं ब्रह्म क्षत्रं पात्वि'ति तस्योक्तो बन्धुः ॥ १० ॥ 'भुज्युः सुपर्ण' इति । यज्ञो वै भुज्युर्यज्ञो हि सर्वाणि भूतानि भुनक्ति 'यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरस' इति यज्ञो ह गन्धर्वो दक्षिणाभिरप्सरोभिर्मिथुनेन सहोच्चक्राम 'स्तावा नामे'ति दक्षिणा वै स्तावा दक्षिणाभिर्हि यज्ञ स्तूयतेऽथो यो वै कश्च दक्षिणां ददाति स्तूयत एव स 'स नं इदं ब्रह्म क्षत्रं पात्वि'ति तस्योक्तो बन्धुः ॥११॥ [अर्धप्रपाठकः ४८॥] 'प्रजापतिर्विश्वकर्मे'ति । प्रजापतिर्वै विश्वकर्मा स हीदᳪं सर्वमकरो'न्मनो गन्धर्वस्तस्य ऋक्सामान्यप्सरस' इति मनो ह गन्धर्व ऋक्सामैरप्सरोभिर्मिथुनेन सहोच्चक्रा-

(१) शु० य० स० अ० १८ कं० ४०। (२) शु० य० स० अ० १८ कं० ४०।
(३) शु० य० स० अ० १८ कं० ४१। (४) शु० य० स० अ० १८ कं० ४१।
(५) शु० य० स० अ० १८ कं० ४१। (६) शु० य० स० अ० १८ कं० ४१।
(७) शु० य० स० अ० १८ कं० ४२। (८) शु० य० स० अ० १८ कं० ४२।
(९) शु० य० स० अ० १८ कं० ४२। (१०) शु० य० स० अ० १८ कं० ४२।
(११) शु० य० स० अ० १८ कं० ४२। (१२) शु० य० स० अ० १८ कं० ४२।
(१३) शु० य० स० अ० १८ कं० ४२।

'मेष्टयो नामे'त्यृक्सामानि वा ऽएष्टय ऋक्सामैर्ह्याशासत ऽइति नोऽस्त्विति नोऽस्त्विति 'स न ऽइदं ब्रह्म क्षत्रं पात्वि'ति तस्योक्तो बन्धुः ॥ १२ ॥ अथ रथशीर्षे जुहोति। एष वै स सव ऽएतद्वै तत्सूयते यमस्मै तमेता देवताः सवमनुमन्यन्ते याभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै नाज्येन पञ्चगृहीतेन ता ऽउ * पूर्णाहुतयो हुता भवन्ति तस्योक्तो बन्धुः ॥१३॥ शीर्षतः। शीर्षतो वा ऽअभिषिच्यमानोऽभिषिच्यत ऽउपरि धार्यमाण ऽउपरि हि स यमेतदभिषिञ्चति समानेन मन्त्रेण समानो हि स यमेतदभिषिञ्चति सर्वतः परिहारः सर्वत ऽएवैनमेतदभिषिञ्चति ॥ १४ ॥ यद्वेव रथशीर्षे † जुहोति । असौ वा ऽआदित्य ऽएष रथ ऽएतद्वै तद्रूपं कृत्वा प्रजापतिरेतानि मिथुनानि परिगृह्यात्मन्नधत्तात्मन्नकुरुत तथैवैनान्ययमेतत्परिगृह्यात्मन्धत्त ऽआत्मन्कुरुत ऽउपरि धार्यमाण ऽउपरि हि स य ऽएतानि मिथुनानि परिगृह्यात्मन्नधत्तात्मन्नकुरुत समानेन मन्त्रेण समानो हि स य ऽएतानि मिथुनानि परिगृह्यात्मन्नधत्तात्मन्नकुरुत सर्वतः परिहारः सर्वतो हि स य ऽएतानि मिथुनानि परिगृह्यात्मन्नधत्तात्मन्नकुरुत ॥ १५ ॥ 'स नो भुवनस्य पते प्रजापत' ऽइति । भुवनस्य ह्येष पतिः प्रजापतिर्यस्य त 'ऽउपरि गृहा यस्य

(१) शु॰ य॰ सं॰ अ॰ १८ क॰ ४३। (२) शु॰ य॰ सं॰ अ॰ १७ क॰ ४१।
* 'क' पुस्तके 'पूर्णाहुतयो भवन्ति' इत्येव लभ्यते।
† का॰ श्रौ॰ सू॰ १८. ५ १७।
(३) शु॰ य॰ सं॰ अ॰ १८ क॰ ४४। (४) शु॰ य॰ सं॰ अ॰ १८ क॰ ४४।

वेहे॑त्युपरि च ह्येतस्य गृहा ऽइह चा॑स्मै ब्रह्मणेऽस्मै क्षत्राये॒॑त्ययं वा ऽअग्निर्ब्रह्म च क्षत्रं च 'महि शर्म॑ यच्छ स्वाहे॑ति महच्छर्म्म यच्छ स्वाहेत्त्येतत् ॥ १६ ॥ (A)

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ वातहोमादि ]

अथ † वातहोमाञ्जुहोति । इमे वै लोका ऽएपोऽग्निर्वायुर्वातहोमा ऽएपु तल्लोकेपु वायुं दधाति तस्मादयमेपु लोकेपु वायुः ॥ १ ॥ वाह्नेनाग्निमाहरति । आतो वा ऽअस्य स वायुर्य्य ऽएपु लोकेष्वथ य ऽइमाँल्लोकान्परेण वायुस्तमस्मिन्नेतद्दधाति ॥ २ ॥ वहिर्वेदेरियं वै वेदिः । आतो वा ऽअस्य स वायुर्योऽस्यामथ य ऽइमां परेण वायुस्तमस्मिन्नेतद्दधाति ॥ ३ ॥ अञ्जलिना । न ह्येतस्येतीवाभिपत्तिरस्ति स्वाहाकारेण जुहोति ह्यधोऽधो धुरमसौ वा ऽआदित्य ऽएष रथोऽर्वाचीनं तदादित्याद्वायुं दधाति तस्मादेपोऽर्वाचीनमेवातः पवते ॥ ४ ॥ 'समुद्रोऽसि नभस्वानि॑'ति । असौ वै लोकः समुद्रो नभस्वा'नार्द्रदानु॑रि॑'त्येप ह्यार्द्रं ददाति तद्योऽमुष्मिँल्लोके वायुस्तमस्मिन्नेतद्दधाति 'शम्भूर्म्मयोभूरभि॑ मा वाहि स्वाहे॑'ति

(१) शु० य० स० अ० १८ क० ४४ । (२) शु० य० स० अ० १८ क० ४४ ।

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श्र० ११. ६ १, कठ० १८. ४, कपिष्ठ० २९ ३, मै० स० ११ १२ ३, तै० स० ३. ४, ७ ।

† का० श्रौ० सू० १८ ६. १ ।

(३) शु० य० स० अ० १८ क० ४५ । (४) शु० य० स० अ० १८ क० ४५ ।
(५) शु० य० स० अ० १८ क० ४५ ।

शिवꣳ स्योनोऽभि मा वाहीत्येतत् ॥ ५ ॥ 'मारुतोऽसि मरुतां गण' ऽइति । अन्तरिक्षलोको वै मारुतो मरुतां गणस्तद्योऽन्तरिक्षलोके वायुस्तमस्मिन्नेतद्दधाति 'शम्भूर्म्मयोभूरभि मा वाहि स्वाहे'ति शिवꣳ स्योनोऽभि मा वाहीत्येतत् ॥ ६ ॥ 'अवस्यूरसि दुवस्वानि'ति । अयं वै लोकोऽवस्यूर्द्दुवस्वाँस्तद्योऽस्मिँल्लोके वायुस्तमस्मिन्नेतद्दधाति 'शम्भूर्म्मयोभूरभि मा वाहि स्वाहे'ति शिवꣳ स्योनोऽभि मा वाहीत्येतत् ॥ ७ ॥ त्रिभिर्ज्जुहोति । त्रय ऽइमे लोकाऽअथो त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैव तदेषु लोकेषु वायुं दधाति ॥ ८ ॥ यद्वेव वातहोमाञ्जुहोति । एतमेवैतद्रथं युनक्त्येतद्वै देवा ऽएतꣳ रथꣳ सर्वेभ्यः कामेभ्योऽयुञ्जत युक्तेन समश्नवामहा ऽइति तेन युक्तेन सर्वांꣳकामान्त्समाश्नुवत तथैवैतद्यजमान ऽएतꣳ रथꣳ सर्वेभ्यः कामेभ्यो युङ्क्ते युक्तेन समश्नवा ऽइति तेन युक्तेन सर्वांꣳकामान्त्समश्नुते ॥ ९ ॥ वातहोमैर्य्युनक्ति । प्राणा वै वातहोमाः प्राणैरेवैनमेतद्युनक्ति त्रिभिर्य्युनक्ति त्रयो वै प्राणाः प्राण ऽउदानो व्यानस्तैरेवैनमेतद्युनक्त्यधोऽधो धुरमधोऽधो हि धुरं योग्यं युञ्जन्ति हस्ताभ्याꣳ हस्ताभ्याꣳ हि योग्यं युञ्जन्ति विपरिक्रामं विपरिक्रामꣳ हि योग्यं युञ्जन्ति ॥ १० ॥ स दक्षिणायुग्यमेवाग्रे युनक्ति । अथ सव्यायुग्यमथ दक्षिणाप्रष्टिमेवं देवत्रेतरथा मानुषे तं नाभियुञ्ज्या-

(१) शु० य० सं० अ० १८ क० ४५ । (२) शु० य० सं० अ० १८ क० ४५ । (३) शु० य० सं० अ० १८ क० ४५ । (४) शु० य० सं० अ० १८ क० ४५ ।

न्नेत्युक्तमभियुनजानीति वाहनं तु दद्याद्युक्तेन भुनजाऽइति तमुपर्य्येव हरन्त्याद्ध्वर्य्योरावसथादुपरि ह्येष तमद्ध्वर्य्यवे ददाति स हि तेन करोति तं तु दक्षिणानां कालेऽनुदिशेत् ॥ ११ ॥ अथ रुक्मतीर्जुहोति * । अत्रैष सर्वोऽग्निः संस्कृतः स ऽएषोऽत्र रुचमैच्छत्तस्मिन्देवा ऽएताभी रुक्मतीभी रुचमदधुस्तथैवास्मिन्नयमेतद्दधाति ॥ १२ ॥ यद्वेव रुक्मतीर्जुहोति । प्रजापतेर्विस्रस्ताद्रुगुदक्रामत्तं ऽयत्र देवाः समस्कुर्वंस्तदस्मिन्नेताभी रुक्मतीभी रुचमदधुस्तथैवास्मिन्नयमेतद्दधाति ॥ १३ ॥ 'यास्ते ऽअग्ने सूर्य्ये रुचः । या वो देवाः सूर्य्ये रुचो, रुचं नो धेहि ब्राह्मणेष्वि'ति रुचः रुचमित्यमृतत्वं वै रुगमृतत्वमेवास्मिन्नेतद्दधाति तिस्र ऽआहुतीर्जुहोति त्रिवृदग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्रुचं दधाति ॥ १४ ॥ अथ वारुणीं जुहोति । अत्रैष सर्वोऽग्निः संस्कृतः स ऽएषोऽत्र वरुणो देवता तस्मा ऽएतद्धविर्जुहोति तदेनः हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यते वारुण्यर्चा स्वेनैवैनमेतदात्मना स्वया देवतया प्प्रीणाति ॥ १५ ॥ यद्वेव वारुणीं जुहोति । प्रजापतेर्विस्रस्ता-† द्वीर्य्यमुदक्रामत्तं ऽयत्र देवाः समस्कुर्वंस्तदस्मिन्नेतया वीर्य्यमदधुस्तथैवास्मिन्नयमेतद्दधाति वारुण्यर्चा क्षत्रं वै वरुणो वीर्य्यं वै क्षत्रं वीर्य्येणैवास्मिन्नेतद्वीर्य्यं दधाति ॥१६॥ 'तत्त्वा[2]

* अत्र शतम् ५१०० ॥

( १ ) शु॰ य॰ सं॰ अ॰ १८ क॰ ४६-४८ । ( २ ) शु॰ य॰ सं॰ अ॰ १८ क॰ ४९ ।

† "र्वीर्य्यमु" इति 'क' पुस्तके ।

यामि ब्रह्मणा वन्दमान' इति। तत्त्वा यामि ब्रह्मणा वन्दमान इत्येत'त्तदाशास्ते यजमानो हविर्भिरि'ति तदयमाशास्ते यजमानो हविर्भिरित्येत'दहेडमानो वरुणेह बोधी'त्यक्रुध्यन्नो वरुणेह बोधीत्येत'दुरुशꣳस मा न आयुः प्रमोषीरि'त्यात्मनः परिदां वदते ॥ १७ ॥ अथार्काश्वमेधयोः सन्ततीर्जुहोति । अयं वा अग्निरर्कोऽसावादित्योऽश्वमेधस्तौ सृष्टौ नानैवास्तां तौ देवा एताभिराहुतिभिः समतन्वन्त्समदधुस्तथैवैनावयमेतदेताभिराहुतिभिः सन्तनोति सन्दधाति ॥ १८ ॥ 'स्वर्ण घर्म्मः स्वाहे'ति । असौ वा आदित्यो घर्म्मोऽमुं तदादित्यमस्मिन्नग्नौ प्रतिष्ठापयति ॥ १९ ॥ 'स्वर्णार्कः स्वाहे'ति । अयमग्निरर्क इमं तदग्निममुष्मिन्नादित्ये प्रतिष्ठापयति ॥ २० ॥ 'स्वर्ण शुक्रः स्वाहे'ति । असौ वा आदित्यः शुक्रस्तं पुनरमुत्र दधाति ॥ २१ ॥ 'स्वर्ण ज्योतिः स्वाहे'ति । अयमग्निर्ज्योतिस्तं पुनरिह दधाति ॥२२॥ 'स्वर्ण सूर्य्यः स्वाहे'ति । असौ वा आदित्यः सूर्य्योऽमुं तदादित्यमस्य सर्वस्योत्तमं दधाति तस्मादेषोऽस्य सर्वस्योत्तमः ॥ २३ ॥ पञ्चैता आहुतीर्जुहोति । पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनावेतत्सन्तनोति सन्दधाति ॥ २४ ॥ यद्वेवाह । 'स्वर्ण घर्म्मः स्वाहा

---

(१) शु० य० सं० अ० १८ क० ४९ । (२) शु० य० सं० अ० १८ क० ४९ ।
(३) शु० य० सं० अ० १८ क० ४९ । (४) शु० य० सं० अ० १८ क० ५० ।
(५) शु० य० सं० अ० १८ क० ५० । (६) शु० य० सं० अ० १८ क० ५० ।
(७) शु० य० सं० अ० १८ क० ५० । (८) शु० य० सं० अ० १८ क० ५० ।

स्वुर्णाकैः स्वाहेत्यस्यैवैतान्यग्नेर्नामानि तान्येतत्प्रीणाति तानि हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यतेऽथो ऽएतानेवैतदग्नीनस्मिन्नग्नौ नामग्राहं दधाति ॥ २५ ॥ पञ्चैता ऽआहुतीर्जुहोति । पञ्चचितिकोऽग्निः पञ्चर्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ २६ ॥ अथाऽत ऽआहुतीनामेवावपनस्य । यां काञ्च ब्राह्मणवतीमाहुतिं विद्यात्तामेतस्मिन्काले जुहुयात्कामेभ्यो वा ऽएतः रथं युङ्क्ते तथा काश्चाग्नाहुतिं जुहोत्यासां ताः सतीर्जुहोति ॥ २७ ॥ तदाहुः । न जुहुयान्नेदतिरेचयानीति स वै जुहुयादेव कामेभ्यो वा ऽएता ऽआहुतयो हूयन्ते न वै कामानामतिरिक्तमस्ति ॥ २८ ॥ (B)·

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ धिष्ण्यनिवापः ]

अथ प्रत्येत्य * धिष्ण्यानां काले धिष्ण्यान्निवपति । अग्नय ऽएते यद्धिष्ण्या ऽअग्नीनेवैतच्चिनोति ता ऽएता विशः क्षत्रमयमग्निश्चितः क्षत्रं च तद्विशं च करोत्यमुं पूर्वं चिनोत्यथेमान् क्षत्रं तत्कृत्वा विशं करोति ॥ १ ॥ एक ऽएव भवति । एकस्थं तत्क्षत्रमेकस्थाथं श्रियं

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ११. ६. २; कठ० १८. १४, १५, १८; कपिष्ठ० २९. २, ४; मै० सं० ११. १२. २; तै० सं० ४. ५. १२, ११।
* का० श्रौ० सू० १८. ६. ७।

करोति बहुव ऽइतरे विशि तन्नुमानं दधाति ॥ २ ॥ पञ्चचितिक ऽएष भवति। एकचितिका ऽइतरे क्षत्रं तद्वीर्य्येणात्त्यादधाति क्षत्रं विशो वीर्य्यवत्तरं करोत्यूर्द्ध्वमेतं चिनोति क्षत्रं तदूर्द्ध्वं चितिमिश्चिनोति तिरश्च ऽइतरान्क्षत्राय तद्विशमधस्तादुप*निखादिनीं करोति ॥ ३ ॥ ऽउभाभ्यां य्यजुष्मत्या च लोकम्पृणया चैतं चिनोति। लोकम्पृणयैवेमाऽक्षत्रमेव तद्वीर्य्येणात्त्यादधाति क्षत्रं विशो वीर्य्यवत्तरं करोति विशं क्षत्रादवीर्य्यतराम् ॥ ४ ॥ स यदिमाँल्लोकम्पृणयैव चिनोति क्षत्रं। वै लोकम्पृणा क्षत्रं तद्विश्यत्तारं दधात्युभयाँश्चिनोत्यङ्करस्य चाग्नेश्चाङ्करस्य पूर्वानथाग्नेस्तस्योक्तो बन्धुर्य्य—यमेवाङ्कराधिष्ण्यं निवपति तं—तं चिनोत्याग्नीध्रीयं प्रथमं चिनोति तत्ँ हि प्रथमं निवपति दक्षिणत ऽउदङ्ङासीनस्तस्योक्तो बन्धुः ॥ ५ ॥ तस्मिन्नष्टाविष्टका ऽउपदधाति। अष्टाक्षरा गायत्री गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चिनोति तासामश्मा पृश्निर्नवमो नव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ तानेवास्मिन्नेतद्दधाति यश्चितेऽग्निर्निधीयते स दशमो दश वै प्राणा मध्यमाग्नीध्रं मध्यतस्तत्प्राणान्दधाति मध्ये ह वा ऽएतत्प्राणाः सन्त ऽइति चेति चात्मानमनुव्युच्चरन्ति ॥ ६ ॥ एकविंशतिः होत्रीय ऽउपदधाति। एकविंशतिर्वै परिश्रितस्तस्योक्तो बन्धुरेकादश ब्राह्मणाच्छंसिय ऽएकादशाक्षरा वै

* 'निखादिनीं' इति 'ग' पुस्तके।

त्रिष्टुप्त्रैष्टुभ ऽइन्द्र ऽऐन्द्रो ब्राह्मणाच्छꣳसयष्ट्वावष्टा-
वितरेषु तस्योक्तो बन्धुः ॥७॥ पुण्णमाज्जालीये। षड्वा ऽऋतव-
ऽऋतवः पितरस्तद्द हैतमृतवः पितरो दक्षिणतः पर्य्यूहिरे
स ऽएयामेष दक्षिणतः स वा ऽइतीमसुपदधातीती-
मानित्यमुं विशं तत्क्षत्रमभिसम्मुखां करोति ॥ ८ ॥
अथैनाऽपरिश्रिद्भिः परिश्रयति। आपो वै परिश्रितोऽ-
द्भिरेवैनाँस्तत्परितनोति स वै पुर्य्येव निदधाति क्षत्रद्द
हैता ऽअपां याः खातेन यन्त्यथ हैता विशो यानीमानि
वृथोदकानि स यदमुं खातेन परिश्रयति क्षत्रे तत्क्षत्रं
दधाति क्षत्रं क्षत्रेण परिश्रयत्यथ यदिमान्पुर्य्येव निदधाति
विशि तद्विशं दधाति विशा विशं परिश्रयति तेषां वै
यावत्य ऽएव यजुष्मत्यस्तावत्यः परिश्रितो यावत्यो
ह्येवामुष्य यजुष्मत्यस्तावत्यः परिश्रितः क्षत्रायैव तद्विशं
कृतानुकरामनुवर्त्मानं करोति ॥ ९ ॥ अथैषु पुरीषं
निवपति। तस्योक्तो बन्धुस्तूष्णीमनिरुक्ता हि विड्था-
ग्नीषोमीयस्य पशुपुरोडाशमनुदिशामवेष्टीर्निर्वपति दिश-
ऽएषोऽग्निस्ताऽभ्य ऽएतानि हवीꣳषि निर्वपति तदेना
हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा
देवता न सा यस्यै न गृह्यते पञ्च भवन्ति पञ्च हि
दिशः ॥ १० ॥ तदाहुः। दशहविषमेवैतामिष्टिं निर्वपेत्सा
सर्वस्तोमा सर्वपृष्ठा सर्वाणि च्छन्दाꣳसि सर्वा दिशः
सर्व ऽऋतवः सर्वम्वेतदयमग्निस्तदेनꣳ हविषा देवतां
करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा

यस्मै न सूयते दश भवन्ति दशाक्षरा विराड्विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणा उअग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ ११ ॥ तद् वै देवस्वामेव । एतानि हवीꣳषि निर्वपेदेता ह देवताः सुता उएतेन सवेन येनैतत्सोष्यमाणो भवति ता उएवैतत्प्रीणाति ता उअस्मा उइष्टाः प्रीता उएतꣳ सवमनुमन्यन्ते ताभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै न तद्यदेता देवताः सुता उएतेन सवेन यद्वेनमेता देवता उएतस्मै सवाय सुवते तस्मादेता देवस्वः ॥ १२ ॥ ता वै द्विनाम्न्यो भवन्ति । द्विनामा वै सवेन सुतो भवति यस्मै वै सवाय सूयते येन वा सवेन सूयते तदस्य द्वितीयं नाम ॥ १३ ॥ अष्टौ भवन्ति । अष्टाक्षरा गायत्री गायत्रोऽग्निर्य्यावानग्निर्य्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति ॥ १४ ॥ तदाहुः । नैतानि हवीꣳषि निर्वपेन्नेदतिरेचयानीति तानि वै निर्वपेदेव कामेभ्यो वा उएतानि हवीꣳषि निरुप्यन्ते न वै कामानामतिरिक्तमस्ति यद्वै किञ्च पशुपुरोडाशमनु हविर्निरुप्यते पशावेव स मध्यतो मेधो धीयत उउभयानि निर्वपत्यग्नेश्च रस्य चाग्नेश्चाग्नेरस्य पूर्वमथाग्नेस्तस्योक्तो बन्धुरुच्चैः पशुपुरोडाशो भवत्युपाꣳशवेतानीष्टिर्हानुब्रूहि प्रेष्येति पशुपुरोडाशस्याहानुब्रूहि यजेत्येतेषामिष्टिर्हि समानः स्विष्टकृत्समानीडेष्टा दे-

( १ ) शु० य० सं० अ० ९ क० ३९-४० ।

वता भवन्त्यसमवहितत्वं स्विष्टकृते ॥ १५ ॥ अथैनं पूर्वाभिषेकेणाभिमृशति । 'सविता त्वा सवानाथं सुवता-मेष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाथं राजे'ति ब्राह्मणानेवापोद्धरत्यनाद्यान्करोति ॥ १६ ॥ (C)

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
काण्डिकासंख्या ॥ ९७ ॥

[ अग्नियोजनं कर्म, अग्निविमोचनश्च ]

अथ प्रातः * प्रातरनुवाकमुपाकरिष्यन् । अग्निं युनक्ति युक्तेन समश्नवा ऽइति तेन युक्तेन सर्वान्कामा-न्त्समश्नुते तं वै पुरस्तात्सर्वस्य कर्म्मणो युनक्ति तद्य-त्किञ्चात ऽऊर्ध्वं क्रियते युक्ते तत्सर्वं समाधीयते ॥ १ ॥ परिधिषु युनक्ति । अग्नय ऽएते यत्परिधयोऽग्निभिरेव तदग्निं युनक्ति ॥ २ ॥ स मध्यमं परिधिमुपस्पृश्य । एतद्यजुर्जप'त्यग्निं युनज्मि शवसा घृतेने'ति बलं वै शवोऽग्निं युनज्मि बलेन च घृतेन चेत्येत'द्दिव्यः सुपर्णं वयसा बृहन्तमि'ति दिव्यो वा ऽएष सुपर्णो वयसो बृहन्धूमेन 'तेन वयं गमेम ब्रध्नस्य विष्टपथ्ठ स्वो रुहाणा ऽअधि नाकमुत्तममि'ति स्वर्गो वै लोको

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा - का॰ श॰ ११ ६. ३।

* का॰ श्रौ॰ सू॰ १८. ६. १६ ।

( १ ) शु॰ य॰ सं॰ अ॰ १८ क॰ ५१ । ( २ ) शु॰ य॰ सं॰ अ॰ १८ क॰ ५१ ।
( ३ ) शु॰ य॰ सं॰ अ॰ १८ क॰ ५१ ।

नाकस्तेन वयं गमेम ब्रध्नस्य विष्टपथं स्वर्गं लोकथं रोहन्तोऽधिनाकमुत्तममित्येतत् ॥ ३ ॥ अथ दक्षिणे । 'इमौ ते पक्षावजरौ पतत्रिणौ याभ्याथं रक्षाथंस्यपहथंस्यग्ने । ताभ्यां पतेम सुकृतामु लोकं यत्र ऽऋषयो जग्मुः प्रथमजाः पुराणा' ऽइत्यमूनेतदृषीनाह ॥ ४ ॥ अथोत्तरे । 'इन्दुर्दक्षः श्येन ऽऋतावा हिरण्यपक्षः शकुनो भुरण्युरि'त्यमृतं वै हिरण्यममृतपक्षः शकुनो भर्त्तेत्येत'न्महान्त्सधस्थे ध्रुव ऽआ निषत्तो नमस्तेऽस्तु मा मा हिथंसी'रित्यात्मनः परिदां वदते ॥ ५ ॥ तद्यन्मध्यमं यजुः । स ऽआत्माथ ये ऽअभितस्तौ पक्षौ तस्मात्ते पक्षवती भवतः पक्षौ हि तौ ॥ ६ ॥ त्रिभिर्युनक्ति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्युनक्ति ॥ ७ ॥ अथ राजानमभिषुत्याग्नौ जुहोति । एष वै स सव ऽएतद्वै तत्सूयते यमस्मै तमेता देवताः सवमनुमन्यन्ते याभिरनुमतः सूयते यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति न स यस्मै न तद्यदग्नौ जुहोति तदग्निमभिषिञ्चति सोऽस्यैष दैवऽआत्मा सोमाभिषिक्तो भवत्यमृताभिषिक्तोऽथ भक्षयति तदात्मानमभिषिञ्चति सोऽस्यायमात्मा सोमाभिषिक्तो भवत्यमृताभिषिक्तः ॥ ८ ॥ अग्नौ हुत्वाथ भक्षयति । दैवो वा ऽअस्यैष ऽआत्मा मानुषोऽयं देवा ऽउ वा-

(१) शु० य० सं० अ० १८ क० ५२। (२) शु० य० सं० अ० १८ क० ५३। (३) शु० य० सं० अ० १८ क० ५३।

ऽअग्नेऽथ मनुष्यास्तस्मादग्नौ हुत्वाथ भक्षयति ॥ ९ ॥ अथैनं विमुञ्चति । आप्त्वा तं कामं स्यस्मै कामायैनं स्युङ्क्ते यज्ञायज्ञियथ्ठं स्तोत्रमुपाकरिष्यन्त्स्वर्गो वै लोको यज्ञायज्ञियमेतस्य वै गत्या ऽएनं स्युङ्क्ते तदाप्त्वा तं कामं स्यस्मै कामायैनं स्युङ्क्ते ॥१०॥ तं वै पुरस्तात्स्तोत्रस्य विमुञ्चति । स यदुपरिष्टात्स्तोत्रस्य विमुञ्चेत्पराङ् हैतह्ः स्वर्गं लोकमतिप्रणश्येदथ यत्पुरस्तात्स्तोत्रस्य विमुञ्चति तत्सम्प्रति स्वर्गं लोकमाप्त्वा विमुञ्चति ॥ ११ ॥ परिधिषु विमुञ्चति । परिधिषु ह्येनं स्युनक्ति यत्र वाव योग्यं स्युञ्जन्ति तदेव तद्विमुञ्चन्ति ॥१२॥ स सन्ध्योरुपस्पृश्य । *एते यजुषी जपति तथा द्वे यजुषी त्रीन्परिधीननुविभवतो 'दिवो मूर्द्धासि पृथिव्या नाभिरि'ति दक्षिणे 'विश्वस्य मूर्द्धन्नधि तिष्ठसि श्रित' ऽइत्युत्तरे मूर्द्धवतीभ्यां मूर्द्धा ह्यस्यैषोऽप्सुमतीभ्यामग्नेरेतद्वैश्वानरस्य स्तोत्रं यज्ञायज्ञियह्ः शान्तिर्वा ऽआपस्तस्मादप्सुमतीभ्याम् ॥ १३ ॥ द्वाभ्यां विमुञ्चति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतद्विमुञ्चति त्रिभिर्युनक्ति तत्पञ्च पञ्चचितिकोऽग्निः पञ्चर्त्तवः संवत्सरः संवत्सरोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावत्तद्भवति ॥ १४ ॥ तद्ध हैके । प्रायणीय ऽएवातिरात्रे युञ्जन्त्युदयनीये विमुञ्चन्ति सथ्ठंस्थारूपं वा ऽएतद्यद्विमोचनं किं पुरा

* 'एते यजुषी' इति 'ख–ज' पुस्तकयोः ।

(१) शु० य० सं० अ० १८ कं० ५४ । (२) शु० य० सं० अ० १८ कं० ५५ ।

सꣳस्थायै सꣳस्थारूपं कुर्य्यामेति न तथा कुर्य्यादुहरहर्ब्वा-ऽएष यज्ञस्तायतेऽहरहः सन्तिष्ठतेऽहरहरेनꣳ स्वर्गस्य लोकस्य गत्यै युङ्क्तेऽहरहरेनेन स्वर्गं लोकं गच्छति तस्मादुहरहरेव युञ्ज्यादुहरहर्व्विमुञ्चेत् ॥ १५ ॥ अथो यथा प्रायणीयेऽतिरात्रे । सामिधेनीरनूच्य ब्रूयादुदयनीय-ऽएवातोऽनुवक्तास्मीति तादृक्तत्तस्मादुहरहरेव युञ्ज्यादुहरहर्व्विमुञ्चेत् ॥ १६ ॥ तद्धैतच्छाण्डिल्यः । कङ्कतीयेभ्योऽहरहः कर्म्म प्रदिश्य प्रवव्राजाहरहरेव वो युनजानहरहर्व्विमुञ्चानिति तस्मादुहरहरेव युञ्ज्यादुहरहर्व्विमुञ्चेत् ॥ १७ ॥ (D)

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

[ पयोव्रतादिमीमांसा ]

अथातः पयोव्रततायै । पयोव्रतो दीक्षितः स्याद्देवेभ्यो ह वा ऽअमृतमपचक्राम ॥ १ ॥ ते होचुः । श्रमेण तपसेदमन्विच्छामेति तच्छ्रमेण तपसान्वैच्छꣳस्ते दीक्षित्वा पयोव्रता ऽअभवन्नेतद्धै तपो यो दीक्षित्वा पयोव्रतोऽसत्तस्य घोपमान्नुरश्नुवुः ॥ २ ॥ ते होचुः । नेदीयो वै भवति भूयस्तप ऽउपायामेति ते त्रीन्स्तनानुपेयुस्ततस्परादद्दृशुः ॥ ३ ॥ ते होचुः । नेदीयो

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११ ६ ४; कठ० १८ १४, १५, १८; कपिष्ठ० २९. १ ४; मै० सं० ११. १२. ३, तै० सं० ४ ७ १२, १३ ।

वै भवति भूयस्तप उपायामेति ते द्वौ स्तना उपेयुस्त-न्नेदीयसः परापदृशुः ॥ ४ ॥ ते होचुः । नेदीयो वै भवति भूयस्तप उपायामेति त एकः स्तनमुपेयुस्तदु-धिजगाम न त्वभिपत्तुः शेकुः ॥ ५ ॥ ते होचुः । अधि वा अगन्म त्वभिपत्तुः शक्नुमः सर्वं तप उपायामेति त उपवसथेऽनाशकमुपेयुरेतद्वै सर्वं तपो यदनाशक-स्तस्मादुपवसथे नाश्नीयात् ॥ ६ ॥ तत्प्रातरभिपद्य । अभिपुत्याग्नावजुहवुस्तदग्नावमृतमदधुः सर्वेषामु हैष देवा-नामात्मा यदग्निस्तद्यदग्नावमृतमदधुस्तदात्मन्नमृतमदधत त-तो देवा अमृता अभवन् ॥ ७ ॥ तद्यत्तदमृतः सोमः सः । तदद्यापि यजमानः श्रमेण तपसान्विच्छति स दीक्षित्वा पयोव्रतो भवत्येतद्वै तपो यो दीक्षित्वा पयो-व्रतोऽसत्तस्य घोपमाशृणोतीत्यहे क्वय इति ॥ ८ ॥ स त्रीन्त्स्तनानुपैति । तत्परापश्यति स द्वौ स्तना उपैति तन्नेदीयसः परापश्यति स एकः स्तनमुपैति तदुधि-गच्छति न त्वभिपत्तुः शक्नोति स उपवसथेऽनाश-कमुपैत्येतद्वै सर्वं तपो यदनाशकस्तस्मादुपवसथे नाश्नी-यात् ॥ ९ ॥ तत्प्रातरभिपद्य । अभिपुत्याग्नौ जुहोति तदग्नावमृतं दधात्यथ भक्षयति तदात्मन्नमृतं धत्ते सोऽ-मृतो भवत्येतद्वै मनुष्यस्यामृतत्वं स्यत्सर्वमायुरेति तथो हास्यैनेनात्मना सर्वमायुरेति ॥ १० ॥ अग्नौ हुत्वाथ भक्ष-यति । दैवो वा अस्यैष आत्मा मानुषोऽयं देवा उ वा अग्रेऽथ मनुष्यास्तस्मादग्नौ हुत्वाथ भक्षयति

॥ ११ ॥ अथातः समिष्टयजुषामेव मीमाᳪंसा । देवा-
श्चासुराश्चोभये प्राजापत्याः प्रजापतेः पितुर्दायमुपे-
युर्वाचमेव सत्यानृते सत्यं चैवानृतं च त ऽउभय ऽएव
सत्यमवदन्नुभयेऽनृतं ते ह सदृशं वदन्तः सदृशा ऽएवासुः
॥ १२ ॥ ते देवा ऽउत्सृ*ज्यानृतः । सत्यमन्वालेभिरेऽ-
सुरा ऽउ होत्सृज्य सत्यमनृतमन्वालेभिरे ॥ १३ ॥ तद्धेदᳪ
सत्यमीक्षाञ्चक्रे । यदसुरेष्वास देवा वा ऽउत्सृज्यानृतᳪ
सत्यमन्वालप्सत हन्त तदयानीति तद्देवानाजगाम
॥ १४ ॥ अनृतमु हेक्षाञ्चक्रे । यद्देवेष्वासासुरा वा-
ऽउत्सृज्य सत्यमनृतमन्वालप्सत हन्त तदयानीति
तदसुरानाजगाम ॥ १५ ॥ ते देवाः । सर्वᳪ सत्यमव-
दन्त्सर्वमसुरा ऽअनृतं ते देवा ऽआसक्ति सत्यं वदन्त-
ऽऐषावीरतरा ऽइवासुरनाढ्यतरा ऽइव तस्माद्‌ हैतद्य-
ऽआसक्ति सत्यं वदत्यैषावीरतर ऽइवैव भवत्यनाढ्यतर-
ऽइव स ह त्वेवान्ततो भवति देवा ह्येवान्ततो भवन्
॥ १६ ॥ अथ हासुराः । आसक्त्यनृतं वदन्त ऽऊष-
ऽइव पिपिसुराढ्या ऽइवासुस्तस्माद्‌ हैतद्य ऽआसक्त्यनृतं
वदत्यूष ऽइवैव पिस्यत्याढ्य ऽइव भवति परा ह त्वेवा-
न्ततो भवति परा ह्यसुरा ऽअभवन् ॥ १७ ॥ तद्यत्तत्स-
त्यम् । त्रयी सा विद्या ते देवा ऽअब्रुवन्यज्ञं कृत्वेदᳪ
सत्यं तनवामहा ऽइति ॥ १८ ॥ ते दीक्षणीयान्निरवपन् ।
तद्‌ हासुरा ऽअनुबुबुधिरे यज्ञं वै कृत्वा तद्देवाः सत्यं

* 'ज्यानृतम्' इति 'म' पुस्तके लभ्यते ।

तत्रवते प्प्रेत तदाहरिष्यामो यदस्माकं तत्रेति तस्य समिष्टयजुरहुतमासाथाजग्मुस्तस्मात्तस्य यज्ञस्य समिष्टयजुर्न्न जुह्वति ते देवा ऽअसुरान्प्रतिदृश्य समुल्लुप्य यज्ञमन्यत्कर्तुं दध्रिरेऽन्यद्वै कुर्वन्तीति पुनः प्प्रेयुः ॥ १९ ॥ तेषु, प्प्रेतेषु । प्रायणीयं निरवपँस्तदु हासुरा ऽअन्वेव बुबुधिरे तस्य * शंय्योरुक्तमासाथाजग्मुस्तस्मात्स यज्ञः शंय्वन्तस्ते देवा ऽअसुरान्प्रतिदृश्य समुल्लुप्य यज्ञमन्यदेव कर्तुं दध्रिरेऽन्यद्वै कुर्वन्तीति पुनरेव प्प्रेयुः ॥ २० ॥ तेषु प्प्रेतेषु । राजानं क्रीत्वा पर्य्युह्याथास्माऽआतिथ्यꣳ हविर्न्निरवपँस्तदु हासुरा ऽअन्वेव बुबुधिरे तस्येडोपहूतासाथाजग्मुस्तस्मात्स यज्ञ ऽइडान्तस्ते देवाऽअसुरान्प्रतिदृश्य समुल्लुप्य यज्ञमन्यदेव कर्तुं दध्रिरेऽन्यद्वै कुर्वन्तीति पुनरेव प्प्रेयुः ॥ २१ ॥ तेषु प्प्रेतेषु उपसदोऽतन्वत ते तिस्र ऽएव सामिधेनीरनूच्य देवता ऽएवायजन्न प्प्रयाजान्नानुयाजानुभयतो यज्ञस्योत्सादयन्भूयिष्ठꣳ हि तत्राह्वरन्त तस्मादुपसत्सु तिस्र ऽएव सामिधेनीरनूच्य देवता ऽएव यजति न प्प्रयाजान्नानुयाजानुभयतो यज्ञस्योत्सादयति ॥ २२ ॥ त ऽउपवसथेऽग्नीषोमीयं पशुमालेभिरे । तदु हासुरा ऽअन्वेव बुबुधिरे तस्य समिष्टयजूꣳष्यहुतान्यासुरथाजग्मुस्तस्मात्तस्य पशोः समिष्टयजूꣳषि न जुह्वति ते देवाऽअसुरान्प्रतिदृश्य समुल्लुप्य यज्ञमन्यदेव कर्तुं दध्रिरेऽ-

* 'शम्योरुक्तम्' इति 'ग-ङ पुस्तकयोर्दृश्यते ।

न्यद्वै कुर्वन्तीति पुनरेव प्रेयुः ॥ २३ ॥ तेषु प्रेतेषु । प्रातः-प्रातः सवनमतन्वत तदु हासुरा ऽअन्वेव बुबुधिरे तस्यैतावत्कृतमास यावत्प्रातःसवनमथाजग्मुस्ते देवा-ऽअसुरान्प्रति दृश्श्य समुल्लुप्य यज्ञमन्न्यदेव कर्तुं दध्रिरेऽन्यद्वै कुर्वन्तीति पुनरेव प्रेयुः ॥ २४ ॥ तेषु प्रेतेषु । माध्यंन्दिनः सवनमतन्वत तदु हासुरा ऽअ-न्वेव बुबुधिरे तस्यैतावत्कृतमास यावन्माध्यन्दिनमथा-जग्मुस्ते देवा ऽअसुरान्प्रतिदृश्श्य समुल्लुप्य यज्ञमन्न्यदेव कर्तुं दध्रिरेऽन्यद्वै कुर्वन्तीति पुनरेव प्रेयुः ॥ २५ ॥ तेषु प्रेतेषु । सवनीयेन पशुनाचरँस्तदु हासुरा ऽअन्वेव बुबुधिरे, तस्यैतावत्कृतमास यावदेतस्य पशोः क्रियतेऽ-थाजग्मुस्ते देवा ऽअसुरान्प्रतिदृश्श्य समुल्लुप्य यज्ञमन्न्य-देव कर्तुं दध्रिरेऽन्यद्वै कुर्वन्तीति पुनरेव प्रेयुः ॥ २६ ॥ तेषु प्रेतेषु ।' तृतीयसवनमतन्वत तत्समस्थाप*पयन्त्यत्स-मस्थापयँस्तत्सर्वꣳ सत्यमाप्नुवँस्ततोऽसुरा ऽअपपुप्लुविरे ततो देवा ऽअभवन्पराऽसुरा भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य ऽएवं वेद ॥ २७ ॥ ते देवा-ऽअब्रुवन् । ये न ऽइमे यज्ञाः सामि सꣳस्थिता यानि-मान्विजहतोऽगामोप तज्जानीत यथेमान्त्सꣳस्थापयामेति तेऽब्रुवँश्चेतयध्वमिति चितिमिच्छतेति वाव तदब्रुवँस्तदि-च्छत यथेमान्यज्ञान्त्सꣳस्थापयामेति ॥ २८ ॥ ते चेतय-मानाः । एतानि संमिष्टयजूꣳष्यपश्यँस्तान्यजुहवुस्तैरेता-

'' * 'पयन्त्यत्समस्था' पाठोऽयं 'क' पुस्तके नास्ति ।

न्यज्ञान्त्समस्थापयन्यत्समस्थापयँस्तस्मात्सꣳस्थितंयजूꣳष्यथ यत्समयजँस्तस्मात्समिष्टयजूꣳषि ॥ २९ ॥ ते वा ऽएते नव यज्ञाः । नवैतानि समिष्टयजूꣳषि तद्यदेतानि जुहोत्येतानेवैतद्यज्ञान्त्सꣳस्थापयत्युभयानि जुहोत्यद्धूरस्य चाग्नेश्चाद्धूरस्य पूर्वाण्यथाग्नेस्तस्योक्तो बन्धुः ॥ ३० ॥ द्वे * ऽअग्नेर्जुहोति । द्विपाद्यजमानो यजमानोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैतद्यज्ञꣳ सꣳस्थापय'तीष्टो यज्ञो भृगुभिरिष्टो ऽआग्निराहुतः पिपर्त्तु न' ऽइति ॥३१॥ तान्युभयान्येकादश सम्पद्यन्ते । एकादशाक्षरा त्रिष्टुब्वीर्यं त्रिष्टुब्वीर्यमेवैतद्यज्ञमभिसम्पादयति ॥ ३२ ॥ यद्वेवैकादश । एकादशाक्षरा वै त्रिष्टुप्त्रैष्टुभ ऽइन्द्र ऽइन्द्रो यज्ञस्यात्मेन्द्रो देवता तद्य ऽएव यज्ञस्यात्मा या देवता तस्मिन्नेवैतद्यज्ञमन्ततः प्रतिष्ठापयति ॥ ३३ ॥ [ अर्धप्रपाठकः ५० ॥ ] समिष्टयजूꣳषि हुत्वावभृथं यन्ति । अवभृथादुदेत्योदयनीयेन चरित्वानूबन्ध्यस्य पशुपुरोडाशमनु दैविकानाꣳ हवीꣳषि निर्वपति ॥ ३४ ॥ एतद्वै प्रजापतिः । प्राप्य राद्ध्वेवामन्यत स दिक्षु प्रतिष्ठायेदꣳ सर्वं दधद्विदधदतिष्ठद्यद्दधद्विदधदतिष्ठत्तस्माद्धाता तथैवैतद्यजमानो दिक्षु प्रतिष्ठायेदꣳ सर्वं दधद्विदधत्तिष्ठति ॥ ३५ ॥ यद्वेवैतानि हवीꣳषि निर्वपति । दिश ऽएषोऽग्निस्ता ऽउ ऽएवामूः पुरस्ताद्दर्भस्तम्बं च लोगेष्टका-

---

* मा॰ श्रौ॰ सू॰ १६ ६. १९।

(१) शु॰ य॰ सं॰ अ॰ १८ क॰ ५६, ५७।

इष्टका उपदधाति ताः प्राणभृतः प्रथमायां चितौ सर्वैव द्वितीया सर्वा तृतीया सर्वा चतुर्थ्यथ पञ्चम्यै चितेरसपत्ना नाकसदः पञ्चचूडास्ता ऽऊर्द्ध्वा ऽउत्क्रामन्त्य ऽआयँस्ताभ्यः प्रजापतिरबिभेत्सर्वं वा ऽइदमिमाः पराच्योऽत्येष्यन्तीति ता धाता भूत्वा पर्य्यगच्छत्तासु प्रत्यतिष्ठत् ॥ ३६ ॥ स यः स धातासौ स ऽआदित्यः । अथ यत्तद्दिशां परमं क्रान्तमेतत्तद्यस्मिन्नेष ऽएतत्प्रतिष्ठितस्तपति ॥ ३७ ॥ स यः स धातायमेव स धात्रः । द्वादशकपालः पुरोडाशो द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरः प्रजापतिः प्रजापतिर्धाताथ यत्तद्दिशां परमं क्रान्तमेतानि तानि पूर्वाणि हवीꣳष्यनुमत्यै चरू राकायै चरुः सिनीवाल्यै चरुः कुह्वै चरुस्तद्यदेतानि निर्वपति यदेव तद्दिशां परमं क्रान्तं तस्मिन्नेवैनमेतत्प्रतिष्ठापयति तः सर्वं जुहोत्येतस्यैव कृत्स्नतायै ॥ ३८ ॥ ता वा ऽएता देव्यः । दिशो ह्येताश्छन्दाꣳसि वै दिशश्छन्दाꣳसि देव्योऽथैष कः प्रजापतिस्तद्यद्देव्यश्च कश्च तस्माद्देविकाः पञ्च भवन्ति पञ्च हि दिशः ॥ ३९ ॥ तदाहुः । नैतानि हवीꣳषि निर्वपेन्नेदतिरेचयानीति तानि वै निर्वपेदेव कामेभ्यो वा ऽएतानि हवीꣳषि निरुप्यन्ते न वै कामानामतिरिक्तमस्ति यद्वै किञ्च पशुपुरोडाशमनु हविर्निरुप्यते पशावेव स मध्यतो मेधो धीयत ऽउभयानि निर्वपत्यद्धरस्य चाग्नेश्चाद्धरस्य पूर्वमथाग्नेस्तस्योक्तो बन्धुरुच्चैः पशुपुरोडाशो भवत्युपाꣳशु-

इत्येतानीष्टिर्ह्यनुब्रूहि प्रेष्येति पशुपुरोडाशस्याह्वानुब्रूहि यजेत्येतेषामिष्टिर्हि समानः स्विष्टकृत्समानीडा ॥ ४० ॥ तस्य वा ऽएतस्य पशोः। जुह्वति समिष्टयजूꣳष्यभ्यु-वयन्ति हृदयशूलेनावभृथꣳ सꣳस्था ह्येष पशुर्हृदय-शूलेन चरित्वा ॥ ४१ ॥ प्रत्येत्य वैश्वकर्म्मणानि जुहोति। विश्वानि कर्म्माण्ययमग्निस्तान्यस्यात्र सर्वाणि कर्म्माणि कृतानि भवन्ति तान्येतत्प्रीणाति तानि हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यतेऽथो विश्वकर्म्मायमग्नि-स्तमेवैतत्प्रीणाति ॥४२॥ यद्वेव * वैश्वकर्म्मणानि जुहोति। प्रायणं च ह्येतदुदयनं च सावित्राणि प्रायणं वैश्व-कर्म्मणान्युदयनꣳ स यत्सावित्राण्येव जुहुयान्न वैश्वकर्म्म-णानि यथा प्रायणमेव कुर्यान्नोदयनं तादृक्तद्य यद्वैश्व-कर्म्मणान्येव जुहुयान्न सावित्राणि यथोदयनमेव कुर्यान्न प्रायणं तादृक्तदुभयानि जुहोति प्रायणं च तदुदयनं च करोति ॥ ४३ ॥ अष्टावमूनि भवन्ति। एवमिमानि तद्यथा प्रायणं तथोदयनं करोति स्वाहाकारोऽमीषां नवमो भवत्येवमेषां तद्यथा प्रायणं तथोदयनं करोत्या-हुतिरमीषां दशमी भवत्येवमेषां तद्यथा प्रायणं तथोदयनं करोति सन्ततां तत्राहुतिं जुहोति रेतो वै तत्र यज्ञो रेतसोऽविच्छेदाय स्रुवेणेह स्वाहाकारं निरुक्तꣳ हि रेतो जातं भवति ॥ ४४ ॥ [1]यदाकूतात्। समसुस्रोद्धृदो वा

* का० श्रौ० सू० १८ ४. २२।
(१) शु० य० सं० अ० १८ क० ५८।

मनसो वा सम्भृतं चक्षुषो वे'त्येतस्माद्ध्येतत्सर्वस्मादग्रे कर्म्म समभव'त्तदनु प्रेत सुकृतामु लोकं यत्र ऽऋषयो जग्मुः प्रथमजाः पुराणा' ऽइत्यमुनेतदपीनाह ॥ ४५ ॥ 'एतꣳ सधस्थ । परि ते ददामी'ति स्वर्गो वै लोकः सधस्थस्तदेनꣳ स्वर्गाय लोकाय परिददाति 'यमावहाच्छेवधिं जातवेदाः । अन्वागन्ता यज्ञपतिर्वो ऽअत्र तꣳ स्म जानीत परमे व्योमन्नि'ति यथैव यजुस्तथा बन्धुः ॥ ४६ ॥ 'एतं जानाथ । परमे व्योमन्देवाः सधस्था विद रूपमस्य । यदा गच्छात्पथिभिर्देवयानैरिष्टापूर्त्ते कृणवाथाविरस्मा' ऽइति यथैव यजुस्तथा बन्धु'रुद्बुध्यस्वाग्ने, येन वहसी'ति तयोरुक्तो बन्धुः ॥४७॥ 'प्रस्तरेण परिधिना । स्रुचा वेद्या च बर्हिषा । ऋचेमं यज्ञं नो नय स्वर्देवेषु गन्तव' ऽइत्येतैर्वै यज्ञस्य रूपैः स्वर्गं लोकं गमयेत्येतत् ॥ ४८ ॥ 'यद्दत्तं यत्परादानम् । यत्पूर्त्तं याश्च दक्षिणाः । तदग्निर्वैश्वकर्म्मणः स्वर्देवेषु नो दधदि'ति यच्चैव सम्प्रति दद्मो यच्चासम्प्रति तन्नोऽयमग्निर्वैश्वकर्म्मणः स्वर्गे लोके दधात्वित्येतत् ॥ ४९ ॥ 'यत्र धारा ऽअनपेताः । मधोर्घृतस्य च याः । तदग्निर्वैश्वकर्म्मणः स्वर्देवेषु नो दधदि'ति यथैव यजुस्तथा बन्धुः ॥ ५० ॥ अष्टौ वैश्वकर्म्मणानि जुहोति । अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य

(१) शु० य० सं० अ० १८ क० ५८। (२) शु० य० सं० अ० १८ क० ५९।
(३) शु० य० सं० अ० १८ क० ५९। (४) शु० य० सं० अ० १८ क० ६१, ६०।
(५) शु० य० सं० अ० १८ क० ६२। (६) शु० य० सं० अ० १८ क० ६३।
(७) शु० य० सं० अ० १८ क० ६४। (८) शु० य० सं० अ० १८ क० ६५।

माद्या तावत्तैवैनमेतदन्नेन प्रीणाति ॥ ५१ ॥ वैश्वकर्म्मणानि हुत्वा नाम करोति । यदा वै सर्वः कृत्स्नो जातो भवत्यथ नाम कुर्वन्त्यत्र वा ऽएष सर्वः कृत्स्नो जातो भवति ॥ ५२ ॥ नाम कृत्वाथैनमुपतिष्ठते । सर्वेण वा ऽएष ऽएतमात्मना चिनोति स यदेतामत्रात्मनः परिदां न वदेताञ्च॰ हैवास्यैष ऽआत्मानं वृञ्जीताथ यदेतामत्रात्मनः परिदां वदते तथो हास्यैष ऽआत्मानं न वृङ्क्ते 'ये ऽअग्नयः पाञ्चजन्या ऽअस्यां पृथिव्यामधि। तेषामसि त्वमुत्तमः प्र नो जीवातवे सुवे'ति ये के चाग्नयः पञ्चचितिका ऽअस्यां पृथिव्यामधि तेषामसि त्वः सत्तमः प्रो ऽअस्मान् जीवनाय सुवेत्येतदनुष्टुभा वाग्वा ऽअनुष्टुब्वाग्घ सर्वाणि च्छन्दांसि सर्वैरेवास्मा ऽएतच्छन्दोभिर्न्निह्नुत ऽउपस्थायाग्निं समारोह्य निर्म्मथ्योदवसानीयया यजते ॥ ५३ ॥ * अथ मैत्रावरुण्या पयस्यया यजते । देवत्रा वा ऽएष भवति य ऽएतत्कर्म्म करोति दैवम्वेतन्मिथुनं यन्मित्रावरुणौ स यदेतयानिष्ट्वा मानुष्यां चरेत्प्रत्यवरोहः स यथा दैवः सन्मानुषः स्यात्तादृक्तदथ यदेतया मैत्रावरुण्या पयस्यया यजते दैवमेवैतन्मिथुनमुपेत्येतयेष्ट्वा कामं यथा प्रतिरूपं चरेत् ॥ ५४ ॥ यद्वेवैतया मैत्रावरुण्या पयस्यया यजते । प्रजापतेर्विस्रस्ताद्रेतः परापतत्तं यत्र देवाः समस्कुर्वंस्तदस्मिन्नेतया मैत्रा-

( १ ) शु० य० सं० अ० १८ कं० ६७ ।

* अत्र शतम् ५१०० ॥

वरुण्या पयस्यया रेतोऽदधुस्तथैवास्मिन्नयमेतद्दधाति ॥५५॥ स यः स प्रजापतिर्व्यस्रःसत । अयमेव स योऽयमग्निश्चीयतेऽथ यदस्मात्तद्रेतः परापतदेषा सा पयस्या मैत्रावरुणी भवति प्राणोदानौ वै मित्रावरुणौ प्राणोदाना ऽउ वै रेतः सिक्तं विकुरुतः पयस्या भवति पयो हि रेतो यज्ञो भवति यज्ञो ह्येव यज्ञस्य रेत ऽउपाꣳशु भवत्युपाꣳशु हि रेतः सिच्यतेऽन्ततो भवत्यन्ततो हि रेतो धीयते ॥५६॥ तस्यै वाजिनेन चरन्ति । तस्मिन्दक्षिणां ददाति तूपरौ मिथुनौ दद्यादित्य*भ्याम्नायेनैव मन्य ऽइति ह स्माह माहित्थिः स्नवत्सु हैषाग्निचित ऽआहुतिः सोमाहुतिर्व्यामनिष्टके जुहोति ॥ ५७ ॥ स स्वयमातृण्णा ऽएवोपदधीत । इमे वै लोकाः स्वयमातृण्णा ऽइम ऽउ लोका ऽएषोऽग्निश्चितः ॥ ५८ ॥ ऋतव्या ऽएवोपदधीत । संवत्सरो वा ऽऋतव्याः संवत्सर ऽएषोऽग्निश्चितः ॥ ५९ ॥ विश्वज्योतिष ऽएवोपदधीत । एता वै देवता विश्वज्योतिष ऽएता ऽउ देवता ऽएषोऽग्निश्चितः ॥ ६० ॥ पुनश्चितिमेवोपदधीत । पुनर्यज्ञो ह्येष ऽउत्तरा ह्येषा देवयज्या पुनर्यज्ञमेवैतदुपधत्त ऽउत्तरामेव देवयज्यामुप हैनं पुनर्यज्ञो नमतीति न तथा कुर्याद्यो वात्र चितेऽग्निर्निधीयते तामेवेष्टकामेष सर्वोऽग्निरभिसम्पद्यते तद्यदग्नौ जुहोति तद्देवास्य यथा सर्वस्मिञ्छाण्डिलेऽग्नौ सञ्चिते पक्षपुच्छवत्याहुतयो हुताः स्युरेवमस्यैता-

* 'क' पुस्तके 'स्याम्नायेनैव' इत्येव लभ्यते ।

ऽआहुतयो हुता भवन्ति ॥ ६१ ॥ सर्वाणि वा ऽएष भूतानि। सर्वान्देवाङ्गर्भी भवति योऽग्निं विभर्ति स योऽसंवत्सरभृतं चिनुत ऽएतानि ह स सर्वाणि भूतानि गर्भं भूतं निर्हते यो न्वेव मानुषं गर्भं निर्हन्ति तन्न्वेव परिचक्षतेऽथ किं य ऽएतं देवो ह्येष नासंवत्सरभृतस्यर्त्विजा भवितव्यमिति ह स्माह वात्स्यो नेदस्य देवरेतसस्य निर्हण्यमानस्य मेद्यसानीति ॥ ६२ ॥ षण्मास्यमन्तमं चिन्वीतेत्याहुः। षण्मास्या वा ऽअन्तमा गर्भा जाता जीवन्तीति स यद्यसंवत्सरभृते महदुक्थꣳ शꣳसेद्वृगशीतीꣳ शꣳसेदुसर्वं वै तयदसंवत्सरभृतोऽसर्वं तद्यद्वृगशीतयो विकृष्टं ह्येनꣳ स भूयो विकर्षेद्यदि चैव संवत्सरभृतꣳ स्याद्यदि चासंवत्सरभृतꣳ सर्वमेव महदुक्थꣳ शꣳसेत् ॥ ६३ ॥ अथ ह शाण्डिल्यायनꣳ प्राच्यां जगाम। तꣳ ह दैयाम्पातिरुवाच शाण्डिल्यायन कथमग्निश्चेतव्यो ग्लायामोऽह संवत्सरभृतायाग्निमु चिकीषामह ऽइति ॥ ६४ ॥ स होवाच। * काममन्वा ऽएनꣳ स चिन्वीत येन पुरा संवत्सरं भृतꣳ स्यात्तꣳ ह्येव तं भृतꣳ सन्तञ्चिनुत ऽइति ॥ ६५ ॥ काममन्वेवैनꣳ स चिन्वीत। यꣳ संवत्सरमभिषविष्यन्स्यादेष वा ऽएनं प्रत्यक्षमन्नेन विभर्त्येताभिराहुतिभिः ॥ ६६ ॥ काममन्वेवैनꣳ स चिन्वीत। यꣳ संवत्सरमग्निहोत्रं जुहुयाद्विभर्त्ति वा ऽएनमेष योऽग्निहोत्रं जुहोति ॥ ६७ ॥

* 'कामं न्वा' इति 'च—ज' पुस्तकयोः ।

क्काममन्वेवैनः स चिन्वीत। यः संवत्सरं जातः स्या-त्प्राणो वा ऽअग्निस्तमेतद्भिमर्त्यंथ ह वै रेतः सिक्तं प्राणोऽन्ववरोहति तद्विन्दते तद्यज्जातं-जातं विन्दुते तस्माज्जातवेदास्तस्माद्ध्प्येवंविक्कामः सद्योभूतं चि-न्वीत यद्ध ह वा ऽएवंविपिबति वा पाययति वा तदेवास्य यथा सर्वस्मिञ्छाण्डिलेऽग्नौ सञ्चिते पक्ष-पुच्छवत्याहुतयो हुताः स्युरेवमस्यैता ऽआहुतयो हुता भवन्ति ॥ ६८ ॥ (A)

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

[ चित्युपस्थानम् ]

इन्द्र ऽएतत्सप्तर्चमपश्यत्। न्यूनस्याप्त्या ऽअति-रिक्तस्यानतिरिक्त्यै व्यृद्धस्य समृद्ध्या ऽअथ ह वा ऽईश्वर-रोऽग्निं चित्वा किञ्चिद्दौरितमापत्तोर्व्हि वा ह्वलितोर्य्यद्वा यदा ह वा ऽएतच्छ्यापर्णः सायकायनः शुश्रावाथ हैतत्कर्म्मो-पदधर्षे ॥ १ ॥ सैषा त्र्यस्य समृद्धिः। अग्नेः समृद्धिर्य्योऽ-ग्निं चिनुते तस्य समृद्धिर्य्योऽग्निं चिनोति तस्य समृद्धिः ॥ २ ॥ * तद्यदेतेनोपतिष्ठते। यदेवास्यात्र विद्वान्वा-विद्वान्वाति वा रेचयति न वाऽभ्यापयति तदेवास्यैतेन

---

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० सं० ११, ७ १, कठ० १८ १४, १५ १८, कपिष्ठ० २९ ३, ४ मै० सं० ११ १२ ३, तै० सं० ७, १२, १३।
* का० श्रौ० सू० १७ ७ १,२।

सर्वेमाप्तं भवति यदस्य किञ्चानाप्तं य ऽउ 'तस्यामनुष्टु-ब्भ्यृचि कामोऽत्रैव तमाप्नोत्यथो ऽएतस्मादेवैतत्कर्म्मणो रक्षाᳪंसि नाष्ट्रा ऽअपहन्ति नो हैनमनुव्याहारिण स्तृण्वते तस्मादुप्येवंविक्रामं परस्मा ऽअग्निं चिनुया-दीश्वरो ह श्रेयान्भवितोः ॥ ३ ॥ 'व्रार्त्रहत्याय शवसे । सहुदानुं पुरुहूत' क्षियन्तमि'ति वार्त्रघ्नीभ्यां प्रथमा-भ्यामुपतिष्ठत ऽएतद्वै देवा वृत्रं पाप्मानᳪं हत्वापह-तपाप्मान ऽएतत्कर्म्माकुर्वत तथैवैतद्यजमानो वृत्रं पाप्मानᳪं हत्वापहतपाप्मैतत्कर्म्म कुरुते ॥ ४ ॥ 'वि न-ऽइन्द्र मृधो जहि । मृगो न भीमᳪं कुचरो गिरिष्ठा' ऽइति वैमृधीभ्यां द्वितीयाभ्यामेतद्वै देवा मृधᳪं पाप्मानᳪं हत्वापहतपाप्मान ऽएतत्कर्म्माकुर्वत तथैवैतद्य-जमानो मृधᳪं पाप्मानᳪं हत्वापहतपाप्मैतत्कर्म्म कुरुते ॥ ५ ॥ 'वैश्वानरो न ऽऊतये । पृष्टो दिवि पृष्टो-ऽअग्निᳪं पृथिव्यामि'ति वैश्वानरीभ्यां तृतीया-भ्यामेतद्वै देवा वैश्वानरेण पाप्मानं दग्ध्वापहत-पाप्मान ऽएतत्कर्म्माकुर्वत तथैवैतद्यजमानो वैश्वानरेण पाप्मानं दग्ध्वापहतपाप्मैतत्कर्म्म कुरुते ॥ ६ ॥ 'अश्याम तं काममग्ने तवोती'ति । एकया कामवत्यैतद्वै देवाᳪं पड्डचेन पाप्मानमपहत्यैकया कामवत्यैकधान्ततᳪं सर्वान्कामाना-

---

(१) शु० य० सं० अ० १८ कं० ६८, ६९। (२) शु० य० सं० अ० १८ कं० ७०। (३) शु० य० सं० अ० १८ कं० ७२, ७३। (४) शु० य० सं० अ० १८ कं० ७४।

स्सन्नकुर्वत तथैवैतद्यजमानः षड्चेन पाप्मानमपहत्यै-
कया कामवत्यैकधान्ततः सर्वान्कामानात्मन्कुरुते ॥ ७ ॥
सप्तर्चं भवति । सप्तचितिकोऽग्निः सप्तर्त्तवः सप्त
दिशः सप्त देवलोकाः सप्त स्तोमाः सप्त पृष्ठानि
सप्त च्छन्दाᳬसि सप्त ग्राम्याः पशवः सप्तारण्याः
सप्त शीर्षन्प्राणा यत्किञ्च सप्तविधमधिदेवतमध्यात्मं
तदेनेन सर्वमाप्नोति ता ऽअनुष्टुभमभिसम्पद्यन्ते वाग्वा-
ऽअनुष्टुब्वाचैवास्य तदाप्नोति यदस्य किञ्चानाप्तम् ॥ ८ ॥
अष्टर्चेनोपतिष्ठेतेत्यु हैक ऽआहुः । वयं ते ऽअद्य ररिमा
हि काममिति द्वितीयया कामवत्या सप्तपूर्वास्तदष्टा-
वष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा
तावतैवास्य तदाप्नोति यदस्य किञ्चानाप्तमथो ऽएवᳬ
समे देवते भजेते ऽइति न तथा कुर्य्यादेता वाव सप्ता-
ष्टावनुष्टुभो भवन्ति स यो ऽष्टर्चे कामोऽत्रैव तमाप्नोति
॥ ९ ॥ ऐन्द्राग्नीभिरुपतिष्ठते । ऐन्द्राग्नोऽग्निर्यावानग्नि-
र्यावत्यस्य मात्रा तावतैवास्य तदाप्नोति यदस्य किञ्चा-
नाप्तमिन्द्राग्नी वै सर्वे देवाः सर्वदेवत्योऽग्निर्यावानग्नि-
र्यावत्यस्य मात्रा तावतैवास्य तदाप्नोति यदस्य किञ्चा-
नाप्तम् ॥१०॥ तद्धैके । कर्म्मणः कर्म्मण ऽएवैतां प्रतिपदं
कुर्वतेऽपहतपाप्मान ऽएतत्कर्म्म करवामहा ऽइति पुरीषवतीं
चितिं कृत्वोपतिष्ठेतेत्यु हैक ऽआहुस्तत्र हि सा सर्वा
कृत्स्ना भवतीति स यथा कामयेत तथा कुर्य्यादिति नु
चयनस्याथातोऽचयनस्य ॥ ११ ॥ त्रयो ह वै समुद्राः ।

अग्निर्यजुषां महाव्रतः साम्नां महदुक्थमृचाथं स य-
ऽएतानि परस्मै करोत्येतान्ह स समुद्राञ्छोषयते ताञ्छु-
ष्यतोऽन्वस्य छन्दाथंसि शुष्यन्ति छन्दाथंस्यनुलोको
लोकमन्वात्मात्मानमनु प्रजा पशवः स ह श्वः-श्व ऽएव
पापीयान्भवति य ऽएतानि परस्मै करोति ॥ १२ ॥
अथ य ऽएतान्यकृत्वा । परस्मा ऽअपि सर्वैरन्यैर्य-
ज्ञक्रतुभिर्याजयेदेतेभ्यो हैवास्य समुद्रेभ्यश्छन्दाथंसि
पुनराप्यायन्ते छन्दाथंस्यनु लोको लोकमन्वात्मात्मान-
मनु प्रजा पशवः स ह श्वः—श्व ऽएव श्रेयान्भवति
य ऽएतानि परस्मै न करोत्यथैष ह वा ऽअस्य दैवोऽ-
मृत ऽआत्मा स य ऽएतानि परस्मै करोत्येतं ह स
दैवमात्मानं परस्मै प्रयच्छत्यथ शुष्क ऽएव स्थाणुः
परिशिष्यते ॥ १३ ॥ तद्वैके । कृत्वा कुर्वते वा प्राति वा
कारयन्त ऽएषा प्रायश्चित्तिरिति न तथा कुर्याद्यथा
शुष्कथं स्थाणुमुदकेनाभिषिञ्चेत्तादृक्तत्पूयेद्वा वै स वि
वा म्रियेन्नैतस्य प्रायश्चित्तिरस्तीत्येव विद्यात् ॥ १४ ॥
अथ ह स्माह शाण्डिल्यः । तुरो ह कावषेयः कारोत्यां
देवेभ्योऽग्निं चिकाय तं ह देवाः पप्रच्छुर्मुने यदलोक्या-
मग्निचित्यामाहुरथ कस्माद्चैषीरिति ॥ १५ ॥ स
होवाच । किं नु लोक्यं किमलोक्यमात्मा वै यज्ञस्य
यजमानोऽङ्गान्यृत्विजो यत्र वा ऽआत्मा तदङ्गानि
यत्रो ऽअङ्गानि तदात्मा यदि वा ऽऋत्विजोऽलोका
भवन्त्यलोक ऽउ तर्हि यजमान ऽउ भये हि समानलोका

भवन्ति दक्षिणासु त्वेव न संवदितव्यमः संवादेनैव र्त्विजो ऽश्लोका ऽइति ॥ १६ ॥ (B)

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या ॥१०७॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

† सञ्चितिनाम नवमं काण्ड समाप्तम् ॥ ९ ॥



(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० ११ ७, २, मै० स० ११ ११ ११ ।

† अस्मिन् काण्डे कण्डिकासंख्या ॥ ४०१ ॥

# अथाऽग्निरहस्यं *नाम दशमं काण्डम्

अस्मिन्काण्डे प्रतिपाद्या विषयाः— चितिसम्पच्चयः, चयनस्य सर्वयज्ञात्मना स्तुतिः, चित्यस्य पक्षपुच्छविचारः, सप्तविधाद्येकशतविधाग्नेर्वेदिमानादि, चयनकालादेर्विचारः, चित्याग्नेश्छन्दोभिः सहानयवसम्पत्तिः, संवत्सरादिमुहूर्तपर्यन्तं चयनसम्पत्तिः, यजुष्मतीलोकम्पृणानां सङ्ख्या, उपनिषद्रूपेणाग्न्युपासना, मनःसृष्टिविषयकविचारादि, अग्नेः सर्वतोमुखत्वम्, सम्प्रदायप्रवर्तकर्षिवंशकथनं, चेति ।

[ चित्याग्नेः सम्वत्सररूपत्वम्, तस्य प्राजापत्यात्मना स्तुतिः, स्तोत्रशस्त्रस्तुतिश्च ]

ॐ ॥ अग्निरेव पुरस्ताच्चीयते । संवत्सर उपरिष्टान्महदुक्थꣳ शस्यते प्रजापतेर्विस्रस्तस्याग्रꣳ रसोऽगच्छत् ॥ १ ॥ स यः स प्रजापतिर्व्यस्रꣳसत । संवत्सरः सोऽथ यान्यस्य तानि पर्वाणि व्यस्रꣳसन्ताहोरात्राणि तानि ॥ २ ॥ स यः स संवत्सरः प्रजापतिर्व्यस्रꣳसत । अयमेव स योऽयमग्निश्चीयतेऽथ यान्यस्य तान्यहोरात्राणि पर्वाणि व्यस्रꣳसन्तेष्टका एव तास्तद्यदेता-

* षष्ठादि-काण्डचतुष्टयेन प्रतिपादितकर्मणो भावनोपयोगितया अनुष्ठानाङ्गोपयुक्तकर्मप्रतिपादकतया च सर्वशेषत्वादस्य काण्डस्याऽग्निरहस्यमिति संज्ञा । रहसि भव रहस्यम्, अग्निविषय रहस्यज्ञानमित्यर्थः । तत्र अग्निशब्देन आहवनीयाधिकरण सप्तपुरुषाद्येकशत-पुरुषपरिमित चित क्षेत्रमभिधीयते 'इष्टकाभिरग्निं चिनोतीति श्रुते तथाऽग्निमारोहति अग्निं प्रोक्षतीति च आरोहणप्रोक्षणे स्थलस्यैवोच्येते तस्य चित्याग्नेरुपरि निधीयमान आहवनीयोऽग्निस्तत्कर्म च अग्निशब्देनोच्यते । तद्विषय पूर्वमनुक्तमग्निमानादिक तद्रहस्य च ध्यानमागोऽस्मिन् काण्डे वक्ष्यत इति अग्निरहस्यमिति नामधेय युक्तम् । ( सा० भा० )

ऽउपदधाति यान्येवास्य तान्यहोरात्राणि पर्वाणि व्यस्रꣳसन्त तान्यस्मिन्नेतत्प्रतिदधाति तदेतदत्रैव यजुश्चितमन्नासम् ॥ ३ ॥ अथ योऽस्य सोऽग्यꣳ रसोऽगच्छत् । महत्तदुक्थं तमस्य तꣳ रसमृक्सामाभ्यामनु यन्ति तद्यत्तत्र यजुः पुरस्तादेत्यभिनेतैव तदेति यथादो ... मेऽमुत्रैकं तदाहरिष्यामीत्येवं तद्यजुः पुरस्तादेति तꣳ संवत्सर ऽआप्नुवन्ति ॥ ४ ॥ तमद्ध्वर्युर्ग्रहेण गृह्णाति । यद् गृह्णाति तस्माद् ग्रहस्तस्मिन्नुद्गाता महाव्रतेन रसन्दधाति सर्वाणि हैतानि सामानि यन्महाव्रतं तदस्मिन्त्सर्वैः सामभी रसन्दधाति तस्मिन्होता महतोक्थेन रसन्दधाति सर्वा हैता ऽऋचो यन्महदुक्थं तदस्मिन्त्सर्वाभिर्ऋग्भी रसन्दधाति ॥ ५ ॥ ते यदा स्तुवते यदानुशꣳसति । अथास्मिन्नेतं वषट्कृते जुहोति तदेनमेष रसोऽप्येति न वै महाव्रतमिदꣳ स्तुतꣳशेत ऽइति पश्यन्ति नो महदिदमुक्थमित्यग्निमेव पश्यन्त्यात्मा ह्यग्निस्तदेनमेते ऽउभे रसो भूत्वापीत ऽऋक्च साम च तदुभे ऽऋक्सामे यजुरपीतः ॥ ६ ॥ स ऽएष मिथुनोऽग्निः । प्रथमा च चितिर्द्वितीया च तृतीया च चतुर्थी चाथ पञ्चम्यै चितेर्यैश्चितेऽग्निर्निधीयते तन्मिथुनं मिथुन ऽउ ऽएवायमात्मा ॥ ७ ॥ अङ्गुष्ठा ऽइति पुमाꣳसः । अङ्गुल्य ऽइति स्त्रियः कर्णाविति पुमाꣳसौ भ्रुवाविति स्त्रिया ऽओष्ठाविति पुमाꣳसौ नासिके ऽइति स्त्रियौ दन्ता ऽइति पुमाꣳसो जिह्वेति स्त्री सर्वे ऽएव मिथुनः सोऽनेन मिथुनेनात्मनैतं मिथुन-

मग्निमप्येति ॥ ८ ॥ एषाह्यापीतिः । अप्यहैवम्मिथुन-ऽइत्यहः ह त्वेवापि मिथुनो वागेवेयं योऽयमग्निश्चितो वाचा हि चीयतेऽथ यश्चितेऽग्निर्निधीयते स प्राणः प्राणो वै वाचो वृषा प्राणो मिथुनं वाग्घ्वेवायमात्माथ य ऽआत्मन्प्राणस्तन्मिथुनः सोऽनेन मिथुनेनात्मनैत-न्मिथुनमग्निमप्येति ॥ ९ ॥ एषो ऽअप्यापीतिः । न ह वा ऽअस्यापुत्रतायै का चन शङ्का भवति य ऽएवमेतौ मिथुनावात्मानञ्चाग्निञ्च वेदान्नः ह त्वेवायमात्मा-दक्षिणान्नं वनुते यो न ऽआत्मेति ह्यप्यृषिणाभ्युक्तम् ॥ १० ॥ तदिदमन्नञ्जग्धन्द्वेधा भवति । यदस्यामृतमूर्द्ध्वं तन्नाभेरूर्द्ध्वं प्राणैरुच्चरति तद्वायुमप्येत्यथ यन्मर्त्य-म्पराक् तन्नाभिमत्येति तद्दयम्भूत्वेमामप्येति मूत्रञ्च पुरीषञ्च तद्यदिमामप्येति योऽयमग्निश्चितस्तन्तदप्ये-त्यथ यद्वायुमप्येति यश्चितेऽग्निर्निधीयते तन्तदप्येत्येषो ऽएवाप्यापीतिः ॥ ११ ॥ (A)

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ चितिसम्पत्तयः ]

प्रजापतिरिमाँल्लोकानैप्सत् । स ऽएतं वयोविध-मात्मानमपश्यदग्निन्तं व्यधत्त तेनेमँल्लोकमाप्नोत्स द्वितीयं वयोविधमात्मानमपश्यन्महाव्रतन्तद्व्यधत्त ते-

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १३. १. १।

नान्तरिक्षमाप्नोत्स तृतीयं वयोविधमात्मानमपश्यन्महदुक्थं तद्व्यधत्त तेन दिवमाप्नोत् ॥ १ ॥ अयं वाव लोक ऽएषोऽग्निश्चितः । अन्तरिक्षम्महाव्रतं द्यौर्म्महदुक्थं तस्मादेतानि सर्वाणि सहोपेयाद्ग्निम्महाव्रतम्महदुक्थः सह ह्येमे लोका ऽअसृज्यन्त तद्यदग्निः प्रथमश्चीयतेऽयᳫं ह्येषाँल्लोकानाम्प्रथमोऽसृज्यतेत्यधिदेवतम् ॥ २ ॥ अथाध्यात्मम् । मन ऽएवाग्निः प्राणो महाव्रतं वाङ्महदुक्थन्तस्मादेतानि सर्वाणि सहोपेयात्सह हि मनः प्राणो वाक्तद्यदग्निः प्रथमश्चीयते मनो हि प्रथमम्प्राणानाम् ॥ ३ ॥ आत्मैवाग्निः । प्राणो महाव्रतं वाङ्महदुक्थन्तस्मादेतानि सर्वाणि सहोपेयात्सह ह्यात्मा प्राणो वाक्तद्यदग्निः प्रथमश्चीयत ऽआत्मा हि प्रथमः सम्भवतः सम्भवति ॥ ४ ॥ शिर ऽएवाग्निः । प्राणो महाव्रतमात्मा महदुक्थन्तस्मादेतानि सर्वाणि सहोपेयात्सह हि शिरः प्राण ऽआत्मा तद्यदग्निः प्रथमश्चीयते शिरो हि प्रथमञ्जायमानस्य जायते तस्माद्यत्रैतानि सर्वाणि सह क्रियन्ते महद्देवोक्थमातमां ध्यायत ऽआत्मा हि महदुक्थम् ॥ ५ ॥ तदाहुः । यदेतानि सर्वाणि सह दुरुपापानि केनैतेषामुपाप्तिरिति ज्योतिष्टोम ऽएवाग्निष्टोमे ज्योतिष्टोमेनैवाग्निष्टोमेन यजेत ॥ ६ ॥ तस्य वा ऽएतस्य ज्योतिष्टोमस्याग्निष्टोमस्य । त्रिवृद्वहिष्पवमानं तद् व्रतस्य शिरः पञ्चदशसप्तदशा ऽउत्तरौ पवमानौ तौ पक्षौ पञ्चदशः होतु-

राज्यदः सप्तदशं पृष्ठमेकविंशँ स्त्रयस्त्रिंशमेकविंशं तत्पुच्छम् ॥ ७ ॥ तयोर्वा ऽएतयोः । पञ्चदशसप्तदशयोर्द्वात्रिंशच्छतस्तोत्रियास्ततो याः पञ्चविंशतिः स पञ्चविंश ऽआत्माथ याः सप्तातियन्ति ताः परिमादः पशवो हैताः पशवः परिमाद ऽएतावद्वै महाव्रतन्तदेतदत्रैव महाव्रतमाप्नोति ॥ ८ ॥ अथ होता सप्त छन्दाᳬसि शᳬसति । चतुरुत्तराण्येकस्यानि विराडष्टमानि तेषां तिस्रश्चाशीतयोऽक्षराणि पञ्च चत्वारिᳬशच्च ततो या ऽअशीतयः सैवाशीतीनामाप्तिरशीतिभिर्हि महदुक्थमाख्यायतेऽथ यानि पञ्चचत्वारिᳬशत्ततो यानि पञ्चविंशतिः स पञ्चविंश ऽआत्मा यत्र वा ऽआत्मा तदेव शिरस्तत्पक्षपुच्छाऽन्यथ यानि विंशतिस्तदावपनमेतावद्वै महदुक्थन्तदेतदत्रैव महदुक्थमाप्नोति तानि वा ऽएतानि सर्वाणि ज्योतिष्टोम ऽएवाग्निष्टोम ऽआप्यन्ते तस्माद्दु ज्योतिष्टोमेनैवाग्निष्टोमेन यजेत ॥ ९ ॥ (B)

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

---

[ प्रजापतेर्मर्त्यामृतादि कृत्स्नशरीरसम्पादकत्वेन स्तुतिः ]

प्रजापतिः प्रजा ऽअसृजत । स ऽऊर्द्ध्वेभ्य ऽएव प्राणेभ्यो देवानसृजत येऽवाञ्चः प्राणास्तेभ्यो मर्त्याः प्रजा ऽअथोर्द्ध्वमेव मृत्युम्प्रजाभ्योऽत्तारमसृजत ॥ १ ॥

---

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२ ११ ।

तस्य ह प्रजापतेः । अर्द्धमेव मर्त्यमासीदर्द्धममृतन्तद्यदस्य मर्त्यमासीत्तेन मृत्योरबिभेत्स बिभ्यदिमाम्प्राविशद्द्वयम्भूत्वा मृच्चापश्च ॥ २ ॥ स मृत्युर्देवानब्रवीत् । क्व नु सोऽभूद्यो नोऽसृष्टेति त्वद्बिभ्यदिमाम्प्राविक्षदिति सोऽब्रवीत्सँ [illegible]ा ऽअग्निच्छाम तꣳ सम्भराम न वा ऽअहं तꣳ हिꣳसिष्यामीति तन्देवा ऽअस्या ऽअधि समभरन्यदस्याप्स्वासीत्ता ऽअपः समभरन्नथ यदस्यान्ताम्मृदं तदुभयꣳ सम्भृत्य मृदश्चापश्चेष्टकामकुर्वꣳस्तस्मादेतदुभयमिष्टका भवति मृच्चापश्च ॥ ३ ॥ तदेता वा ऽअस्य ताः । पञ्च मर्त्यास्तन्व ऽआसँल्लोम त्वङ्मांꣳसमस्थि मज्जाथैता ऽअमृता मनो वाक्प्राणश्चक्षुः श्रोत्रम् ॥ ४ ॥ स यः स प्रजापतिः । अयमेव स योऽयमग्निश्चीयतेऽथ या ऽअस्य ताः पञ्च मर्त्यास्तन्व ऽआसन्नेतास्ताः पुरीषचितयोऽथ या ऽअमृता ऽएतास्ता ऽइष्टकाचितयः ॥ ५ ॥ ते देवा ऽअब्रुवन् । अमृतमिमं करवामेति तस्यैताभ्याममृताभ्यान्तनूभ्यामेताम्मर्त्यान्तनूम्परिगृह्यामृतामकुर्वन्निष्टकाचितिभ्याम्पुरीषचितिन्तथा द्वितीयान्तथा तृतीयान्तथा चतुर्थीम् ॥६॥ अथ पञ्चमीञ्चितिमुपधाय । पुरीषन्निवपति तत्र विकर्णीञ्च स्वयमातृण्णाञ्चोपदधाति हिरण्यशकलैः प्रोक्षत्यग्निमभ्यादधाति सा सप्तमी चितिस्तदमृतमेवमस्यैताभ्याममृताभ्यान्तनूभ्यामेताम्मर्त्यान्तनूम्परिगृह्यामृतामकुर्वन्निष्टकाचितिभ्याम्पुरीषचितिं ततो वै प्रजापतिरमृतोऽभवत्तथैवैतद्यजमान ऽएतममृतमात्मानङ्कृत्वा सोऽमृतो भवति ॥७॥

ते वै देवास्तन्नाविदुः । यद्येनः सर्वं वाकुर्वन्न वा सर्वं ऽयद्यति वारेचयन्न वाऽभ्यापयँस्त ऽएतामृचमपश्यं(१)न्धामच्छद्ग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः सचेतसो विश्वे देवा यज्ञम्प्रावन्तु नः शुभ' ऽइति ॥ ८ ॥ तस्या ऽअस्त्येवाग्नेयम् । अस्त्यैन्द्रमस्ति वैश्वदेवन्तद्यदस्या ऽआग्नेयं ऽयदुवैतस्याग्नेराग्नेयन्तदस्य तेन समस्कुर्वन्यदैन्द्रं तदैन्द्रेण यद्वैश्वदेवन्तद्वैश्वदेवेन तमत्रैव सर्वङ्कृत्स्नः समस्कुर्वन् ॥ ९ ॥ * तद्यदेतयोपतिष्ठते । यदेवास्यात्र विद्वान्वाविद्वान्वाति वा रेचयति न वाऽभ्यापयति तदेवास्यैतया सर्वमाप्नोति यदस्य किञ्चानाप्तमनुष्टुब्धामच्छद्भवति वाग्वा ऽअनुष्टुब्वाग्धामच्छद्वाचैवास्य तदाप्नोति यदस्य किञ्चानाप्तम्पुरीषवतीञ्चितिङ्कृत्वोपतिष्ठेतेत्यु हैक ऽआहुस्तत्र हि सा सर्वा कृत्स्ना भवतीति ॥ १० ॥ तदु वा ऽआहुः । यविष्ठवत्यैवोपतिष्ठेतैतद्वास्य प्रियन्धाम यद्यविष्ठ ऽइति तद्यदस्य प्रियन्धाम तेनास्य तदाप्नोति यदस्य किञ्चानाप्तमाग्नेय्याग्निकर्म्म हि गायत्र्या गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्य तदाप्नोति यदस्य किञ्चानाप्तमनिरुक्तया सर्वं वा ऽअनिरुक्तः सर्वेणैवास्य तदाप्नोति यदस्य किञ्चानाप्तं 'त्वं ऽयविष्ठ दाशुष' ऽइति तस्योक्तो बन्धुः

( १ ) शु० य० सं० अ० १८ कं० ७६ ।

* "एष च त्वं यविष्ठेति चित्योपस्थानम्" ( का० श्रौ० सू० १७. ६. १ ) ।

( २ ) शु० य० सं० अ० १८ कं० ७७ ।

पुरीषवतीञ्चितिङ्कृत्स्नोपतिष्ठेत तत्र हि सा सर्वा कृत्स्ना भवति ॥ ११ ॥ (C)

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ प्रजापतेर्मरणधर्मकस्थूलशरीरगतमज्जादिरूपत्वेन हिरण्यरूपत्वेन देवानामन्नरूपत्वेन च स्तुतिः, पक्षिभक्षणवर्जनं व्रतञ्च ]

उभयꣳ हैतदग्रे प्रजापतिरास । मर्त्यञ्चैवामृतञ्च तस्य प्राणा ऽएवामृता ऽआसुः शरीरम्मर्त्यꣳ स ऽएतेन कर्मणैतयावृतैकधाजरममृतमात्मानमकुरुत तथैवैतद्यजमान ऽउभयमेव भवति मर्त्यञ्चैवामृतञ्च तस्य प्राणा ऽएवामृता भवन्ति शरीरम्मर्त्यꣳ स ऽएतेन कर्मणैतया वृतैकधाजरममृतमात्मानङ्कुरुते ॥ १ ॥ स प्रथमाञ्चितिञ्चिनोति । सा हास्यैषा प्राण ऽएव तद्वै तदमृतममृतꣳ हि प्राणः सैषामृतचितिरथ पुरीषन्निवपति तद्धास्यैतन्मज्जैव तद्वै तन्मर्त्यम्मर्त्यो हि मज्जा तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतम्भवति ॥ २ ॥ द्वितीयाञ्चितिञ्चिनोति । सा हास्यैषापान ऽएव तद्वै तदमृतममृतꣳ ह्यपानः सैषामृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतम्भवत्यथ पुरीषन्निवपति तद्धास्यैतदस्थ्येव तद्वै तन्मर्त्यम्मर्त्यꣳ ह्यस्थि तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतम्भवति ॥ ३ ॥ तृतीयाञ्चितिञ्चिनोति । सा हास्यैषा व्यान ऽएव तद्वै

(C) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२. १. १; मै० स० ११. १२. ११; तै० स० १. ५. ११,१, ऋ० स० ६८. १ ।

तदमृतममृतꣳ हि व्यानः सैषामृतचितिस्तदेतन्म- र्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतम्भवत्यथ पुरीप- न्निवपति तद्वास्यैतत्स्नावैव तद्वै तन्मर्त्यम्मर्त्यꣳ हि स्नाव तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृत- म्भवति ॥ ४ ॥ चतुर्थीञ्चितिञ्चिनोति । सा हास्यैषो- दान एव तद्वै तदमृतममृतꣳ ह्युदानः सैषामृतचिति- स्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृत- म्भवत्यथ पुरीपन्निवपति तद्वास्यैतन्माꣳसमेव तद्वै तन्मर्त्यम्मर्त्यꣳ हि माꣳसं तदेतस्मिन्नमृते प्रतिष्ठाप- यति तेनास्यैतदमृतम्भवति ॥ ५ ॥ पञ्चमीञ्चिति- ञ्चिनोति । सा हास्यैषा समान एव तद्वै तदमृतममृतꣳ हि समानः सैषामृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतम्भवत्यथ पुरीपन्निवपति तद्वास्यैतन्मेद एव तद्वै तन्मर्त्यम्मर्त्यꣳ हि मेदस्तदे- तस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतम्भवति ॥ ६ ॥ षष्ठीञ्चितिञ्चिनोति । सा हास्यैषा वागेव तद्वै तदमृतम- मृतꣳ हि वाक्सैषामृतचितिस्तदेतन्मर्त्यमुभयतोऽमृतेन परिगृह्णाति तेनास्यैतदमृतम्भवत्यथ पुरीपन्निवपति तद्वा- स्यैतदस्थ्येव त्वगेव तद्वै तन्मर्त्यम्मर्त्यꣳ ह्यस्थ्यङ्ङ्मर्त्या त्वक्तदेतस्मिन्नमृते प्रतिष्ठापयति तेनास्यैतदमृतम्भवति ॥ ७ ॥ ता वा एताः । षडिष्टकाचितयः षट् पुरीप- चितयस्तद् द्वादश द्वादश मासाः संवत्सरः संवत्सरो- ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैव तत्प्रजापतिरेक-

धाजरममृतमात्मानमकुरुत तथैवैतद्यजमान ऽएकधाजरममृतमात्मानङ्कुरुते ॥ ८ ॥ अथ विकर्ण्णीञ्च स्वयमातृण्णाञ्चोपधाय । हिरण्यशकलैः प्प्रोक्षत्यग्निमभ्यादधाति रूपमेव तत्प्रजापतिर्हिरण्मयमन्तत ऽआत्मनोऽकुरुत तद्यदन्ततस्तस्मादिदमन्त्यमात्मनो रूपन्तस्मादाहुर्हिरण्मयः प्प्रजापतिरिति तथैवैतद्यजमानो रूपमेव हिरण्मयमन्तत ऽआत्मनः कुरुते तद्यदन्ततस्तस्मादिदमन्त्यमात्मनो रूपं तस्माद्ये चैतद्विदुर्य्ये च न हिरण्मयोऽग्निचिदमुष्मिँल्लोके सम्भवतीत्येवाहुः ॥ ९ ॥ तद्धैतच्छाण्डिल्यश्च साप्तरथवाहणिश्च । आचार्य्यान्तेवासिनौ व्व्यूदाते रूपमेवास्यैतदिति ह स्माह शाण्डिल्यो लोमानीति साप्तरथवाहणिः ॥ १० ॥ स होवाच शाण्डिल्यः । रूपं वाव लोमवद्रूपमलोमकः रूपमेवास्यैतदिति तद्वै तत्तथा यथा तच्छाण्डिल्य ऽउवाच सञ्चितेऽग्निः प्प्रणीयते प्प्रणीतादूर्द्ध्वं समिध ऽआहुतय ऽइति हूयन्ते ॥ ११ ॥ प्प्राणेन वै देवा ऽअन्नमदन्ति । अग्निरु देवानाम्प्राणस्तस्मात्प्राग्देवेभ्यो जुह्वति प्प्राणेन हि देवा ऽअन्नमदन्त्यपानेन मनुष्या ऽअन्नमदन्ति तस्मात्प्रत्यङ्ङ्मनुष्येष्वन्नन्धीयतेऽपानेन हि मनुष्या ऽअन्नमदन्ति ॥ १२ ॥ तदाहुः । न वयसोऽग्निचिदश्नीयाद्वयो वा ऽएष रूपम्भवति योऽग्निञ्चिनुत ऽईश्वर ऽआर्तिमार्त्तोस्तस्मान्न वयसोऽग्निचिदश्नीयादिति तद्वै काममेवैवंविदश्नीयादग्नेर्वा ऽएष रूपम्भवति योऽग्निञ्चिनुते सर्वं वा ऽइदमग्नेरन्नः सर्वं म

ऽइदमन्नमित्येवैवँविद्विद्यादिति ॥ १३ ॥ तदाहुः । किन्तदग्नौ क्रियते येन यजमानः पुनर्म्मृत्युमपजयतीत्यग्निर्वा ऽएष देवता भवति योऽग्निञ्चिनुतेऽमृतमु वा ऽअग्निः श्रीर्देवाः श्रियङ्गच्छति यशो देवा यशो ह भवति य ऽएवँवेद ॥ १४ ॥ (D)

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

---

[ अग्निचयनस्य अग्न्याधेयादिसर्वयज्ञात्मकत्वम् ]

सर्वे हैते यज्ञा योऽयमग्निश्चितः । स यत्पशुमालभते तदग्न्याधेयमथ यदुखाᳬं सम्भरति ताश्यग्न्याधेयहवीᳬंष्यथ यद्दीक्षते तदग्निहोत्रमथ यद्दीक्षितः समिधावादधाति ते ऽअग्निहोत्राहुती ॥ १ ॥ ते वै सायम्प्रातराद्धाति । सायम्प्रातर्ह्यग्निहोत्राहुती जुह्वति समानेन मन्त्रेण समानेन हि मन्त्रेणाग्निहोत्राहुती जुह्वत्यथ यद्वनीवाहनञ्च भस्मनश्चाभ्यवहरणन्तौ दर्शपूर्णमासावथ यद्गार्हपत्यञ्चिनोति तानि चातुर्म्मास्यान्यथ यदूर्द्ध्वङ्गार्हपत्याद्वा सर्वौषधात्ता ऽइष्टयोऽथ यदूर्द्ध्वᳬं सर्वौषधात्प्राचीनञ्चितिभ्यस्ते पशुबन्धा य ऽएवैतेषु यज्ञेषु विष्णुक्रमास्ते विष्णुक्रमा यन्नप्यन्तद्वात्सप्रम् ॥ २ ॥ सौम्योऽध्वरः प्रथमा चितिः । यत्प्राचीनᳬं सर्वेभ्यो राजसूयो द्वितीया वाजपेयस्तृतीयाश्वमेधश्चतुर्थ्यग्निसवः पञ्चमी यैश्चितः

(D) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का॰ श॰ १३. १ ४ ।

सामभिः परिगायति तन्महाव्रतमथ यत्तत्रोद्गातुः पुरस्ता-
ज्जप्यन्तच्छतरुद्रियं बृसोद्गारा महदुक्थमथ यदूर्द्ध्वः
सामभ्यः प्राचीनं बृसोद्गारायै यदेव तत्र होतुः पुरस्ता-
ज्जप्यन्तत्तदुथ यदूर्द्ध्वं बृसोद्गारायै ते शृहमेधा ऽएतावन्तो
वै सर्वे यज्ञास्तानग्निनाप्नोति ॥ ३ ॥ अथातो यज्ञवीर्य्या-
णामेव। सायम्प्रातर्ह् वा ऽअमुष्मिँल्लोकेऽग्निहोत्रहुदश्नाति
तावती ह तस्मिन्यज्ञ ऽऊर्गर्द्धमासेऽर्द्धमासे दर्शपूर्णमा-
सयाजी चतुर्षु–चतुर्षु मासेषु चातुर्म्मास्ययाजी षट्सु
षट्सु पशुबन्धयाजी सँवत्सरे सँवत्सरे सोमयाजी
शते–शते सँवत्सरेष्वग्निचित्कामम्मश्नाति काममु तद्धै-
तथावच्छतुः सँवत्सरास्तावदमृतमनन्तमपर्य्यन्तः स
यो हैतदेवं वेदैवह् हैवास्यैतदमृतमनन्तमपर्य्यन्तम्भवति
तस्य यदुपीपीकयेवोपहन्यात्तदेवास्यामृतमनन्तमपर्य्यन्त-
म्भवति ॥ ४ ॥ (1)

प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति प्रथमोऽध्यायः ॥ १ ॥

---

[ चित्याग्नेः पक्षिरूपत्वम्, तत्पक्षपुच्छयोः प्रमाणं च ]

प्रजापतिः स्वर्गँल्लोकमजिगाꣳसत् । सर्वे वै
पशवः प्रजापतिः पुरुषोऽश्वो गौरविरजः स ऽएतै रूपैर्ना-
शक्नोत्स ऽएतं वयोविधमात्मानमपश्यदग्निन्तं व्यधत्त

(1) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा–का० श्रु० १२. १ ५।

सोऽनुपसमुह्यानुपाधायोद्‌पिपतिषन्न नाशक्नोत्स उपस-
मुह्योपाधायोदपतत्तस्मादप्येतर्हि वयाᳬसि यदैव पक्षा
उपसमूहन्ते यदा पुच्छानि विसृजन्तेऽथोत्पतितुᳬ
शक्नुवन्ति ॥ १ ॥ तं वा अङ्गुलिभिर्मिमीते। पुरुषो वै
यज्ञस्तेनेदᳬ सर्वम्मितन्तस्यैषावमा मात्रा यदङ्गुलयस्त-
द्यास्यावमा मात्रा तामस्य तदाप्नोति तयैनन्तन्मिमीते
॥ २ ॥ चतुर्विᳬशत्याङ्गुलिभिर्मिमीते। चतुर्विᳬशत्यक्षरा वै
गायत्री गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन-
न्तन्मिमीते ॥ ३ ॥ स चतुरङ्गुलमेवोभयतोऽन्तरत उप-
समूहति। चतुरङ्गुलमुभयतो बाह्यतो व्युदूहति तद्यावदे-
वोपसमूहति तावद्व्युदूहति तन्नाहैवातिरेचयति नो
कनीयः करोति तथा पुच्छस्य तथोत्तरस्य पक्षस्य ॥ ४ ॥
अथ निर्णामौ पक्षयोः करोति। निर्णामौ हि वयसः
पक्षयोर्भवतो वितृतीये वितृतीये हि वयसः पक्षयोर्निर्णामौ
भवतोऽन्तरे वितृतीयेऽन्तरे हि वितृतीये वयसः पक्षयोर्नि-
र्णामौ भवतः स चतुरङ्गुलमेव पुरस्तादुदूहति चतुरङ्गुलम्प-
श्चादुपसमूहति तद्यावदेवोदूहति तावदुपसमूहति तन्नाहैवा-
तिरेचयति नो कनीयः करोति ॥ ५ ॥ स तस्मिन्निर्णामे।
एकामिष्टकामुपदधाति तयेयं वयसः पततो निर्णामादेका
नाड्युपशेते तान्तत्करोत्ययो ऽइदम् ॥ ६ ॥ अथ वक्रौ
पक्षौ करोति। वक्रौ हि वयसः पक्षौ भवतः स चतु-
रङ्गुलमेव पश्चादुदूहति चतुरङ्गुलम्पुरस्तादुपसमूहति
तद्यावदेवोदूहति तावदुपसमूहति तन्नाहैवातिरेचयति

नो कनीयः करोति ॥ ७ ॥ अथ रूपमुत्तमङ्करोति । अत्रैष सर्वोऽग्निः संस्कृतस्तस्मिन्देवा ऽएतद्रूपमुत्तममदधुस्तथैवास्मिन्नयमेतद्रूपमुत्तमन्दधाति स सहस्रमृज्ज्वालिखिता ऽइष्टका: करोति सहस्रमित्यालिखिता: सहस्रमित्यलिखिता: ॥ ८ ॥ अथ पञ्चमीञ्चितिमुपधाय । त्रेधाग्निं विमिमीते स मध्यमे वितृतीये सहस्रमृज्ज्वालिखिता ऽइष्टका ऽउपदधाति तद्यानीमानि वयसः प्रत्यञ्चि शीर्ष्ण ऽआपुच्छादृजूनि लोमानि तानि तत्करोति ॥९॥ अथ सहस्रमित्यालिखिता दक्षिणत ऽउपदधाति । तद्यानीमानि वयसो दक्षिणतो वक्राणि लोमानि तानि तत्करोति ॥ १० ॥ अथ सहस्रमित्यालिखिता ऽउत्तरत ऽउपदधाति । तद्यानीमानि वयस ऽउत्तरतो वक्राणि लोमानि तानि तत्करोति सहस्रेण सर्वं वै सहस्रः सर्वेणैवास्मिन्नेतद्रूपमुत्तमन्दधाति त्रिभिः सहस्रैस्त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवास्मिन्नेतद्रूपमुत्तमन्दधाति ॥ ११ ॥ (A)

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



चित्याग्नेः सप्तपुरुषप्रमाणत्वम्, पक्षपुच्छयोश्चारत्नि वितस्तिप्रमाणत्वम् ]

यान्वै तान्त्सप्त पुरुषान् । एकम्पुरुषमकुर्वंस्स प्रजापतिरभवत्स प्रजा ऽअसृजत स प्रजाः सृष्ट्वोर्द्ध्व ऽउदक्रामत्स ऽएतँल्लोकमगच्छद्यत्रैष ऽएतत्तपति नो ह तर्ह्यन्य ऽएतस्मादत्र यज्ञिय ऽआस तन्देवा यज्ञेनैव

(A) एतद्ब्राह्मणस्थाविषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श्रौ० १३. २ १ ।

यण्ड्रमद्रियन्त ॥ १ ॥ तस्मादेतदृषिणाऽभ्यनूक्तम् । 'यज्ञेन यज्ञमयजन्त देवा, ऽइति यज्ञेन हि तँऽयज्ञमयजन्त 'देवास्तानि धर्म्माणि प्रथमान्यासन्नि'ति ते हि धर्म्माः प्रथमेऽक्रियन्त 'ते ह नाकम्महिमानः सचन्ते'ति स्वर्गो वै लोको नाको देवा महिमानस्ते देवाः स्वर्गँल्लोकः सचन्त ये तँऽयज्ञमयजन्नित्येतत् ॥ २ ॥ 'यत्र पूर्वे साध्याः सन्ति देवा' ऽइति । प्राणा वै साध्या देवास्त ऽएतमग्र ऽएवमसाधयन्नेतदेव बुभूषन्तस्त ऽउ ऽएवाप्येतर्हि साधयन्ति पश्चेदमन्यदभवद्यजत्रममर्त्यस्य भुवनस्य भूनेति पश्चाद्धैवेदमन्यद्यज्ञियमास यत्किञ्चामृतम् ॥ ३ ॥ ॥ ३ ॥ सुपर्णो ऽअङ्ग सवितुर्गरुत्मान् । पूर्वो जातः स ऽउ ऽअस्यानु धर्मेति प्रजापतिर्वै सुपर्णो गरुत्मानेष सवितैतस्य प्रजापतिरनु धर्म्ममित्येतत् ॥ ४ ॥ स वै सप्तपुरुषो भवति । सप्तपुरुषो ह्ययम्पुरुषो यच्चत्वार ऽआत्मा त्रयः पक्षपुच्छानि चत्वारो हि तस्य पुरुषस्यात्मा त्रयः पक्षपुच्छानि ॥ ५ ॥ तँवा ऽउद्बाहुना पुरुषेण मिमीते । पुरुषो वै यज्ञस्तेनेदः सर्वम्मितन्तस्यैषा परमा मात्रा यदुद्बाहुस्तद्यास्य परमा मात्रा तामस्य तदाप्नोति तयैनन्तन्मिमीते तत्रोप यत्प्रपदेनाभ्युच्छ्रितो भवति तत्परिश्रिद्भिराप्नोति तस्मादु बाह्येनैव लेखाम्परिश्रिद्भ्यः खनेत् ॥ ६ ॥ अथ पक्षयोररत्नी ऽउपादधाति ।

---

(१) शु० य० सं० अ० ३१ क० १६। (२) शु० य० सं० अ० ३१ क० १६। (३) शु० य० सं० अ० ३१ क० १६। (४) शु० य० सं० अ० ३१ क० ११।

पक्षयोस्तद्वीर्य्यं दधाति बाहू वै पक्षौ बाहुभ्यामु वा ऽअन्नमद्यते ऽन्नायैव तमवकाशङ्करोति तद्यत्पक्षयोररत्नी ऽउपादधात्यरत्निमात्राद्ध्यन्नमद्यते ॥ ७ ॥ अथ पुच्छे वितस्तिमुपादधाति । प्रतिष्ठायान्तद्वीर्य्यं दधाति प्रतिष्ठा वै पुच्छꣳ हस्तो वितस्तिर्हस्तेन वा ऽअन्नमद्यते ऽन्नायैव तमवकाशङ्करोति तद्यत्पुच्छे वितस्तिमुपादधात्यन्न ऽएवैनन्तत्प्रतिष्ठापयति तद्यत्तत्र कनीय ऽउपादधात्यन्ने ह्येवैनन्तत्प्रतिष्ठापयत्यथो ऽएतावद्द्वा ऽइदुम्मितम्भवत्येतावदिदन्तद्यदेवम्मिमीत ऽएतस्यैवाप्त्यै ॥ ८ ॥ (B)

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ प्राकृतस्य सप्तविधस्यैकशतविधाग्नेश्च वेदिमानम् ]

या वा ऽइयँवेदिः सप्तविधस्य । एषा वेदेर्म्मात्रा स देवयजनमध्यवसाय पूर्वया द्वारा पत्नीशालम्प्रपद्य गार्हपत्यायोद्धत्यावोक्षति गार्हपत्यस्योद्धताः सप्त प्राचः प्रक्रमान्प्रक्रामति ततः प्राञ्चं व्यामं विमिमीते तस्य मध्य ऽआहवनीयायोद्धत्यावोक्षति पूर्वार्द्धाद्व्यामस्य त्रीन्प्राचः प्रक्रमान्प्रक्रामति स वेद्यन्तः ॥ १ ॥ *

ते वा ऽएते । व्यामैकादशाः प्रक्रमा ऽअन्तरा वेद्यन्तञ्च गार्हपत्यञ्चैकादशाक्षरा त्रिष्टुप्त्रिष्टुभन्त्रिष्टुब्वीर्य्यं त्रिष्टुब्वज्रे-

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—ता० ब्रा० १२ १, २, ऋ० सं० १ ३ २२ ॥

* अक्षरातम् ५२०० ।

णैवैतद्वीर्य्येण यजमानः पुरस्ताद्यज्ञमुखाद्रक्षाꣳसि नाष्ट्रा ऽअपहन्ति ॥ २ ॥ सैषा वेदेर्य्योनिः । एतस्यै वै योनेर्देवा वेदिम्प्राजनयन्नथ य ऽएष ऽच्यामः सा गार्हपत्यस्य योनिरेतस्यै वै योनेर्देवा गार्हपत्यम्प्राजनयन्गार्हपत्यादा- हवनीयम् ॥ ३ ॥ स वेद्यन्तात् । पदत्रिꣳशत्प्रक्रमाम्प्राचीं वेदिं विमिमीते त्रिꣳशतम्पश्चात्तिरश्चीꣳ चतुर्विꣳशति- म्पुरस्तात्तन्नवतिः सैषा नवतिप्रक्रमा वेदिस्तस्याꣳ सप्त- विधमग्निं विदधाति ॥ ४ ॥ तदाहुः । कथमेष सप्तविध ऽएतया वेद्या सम्पद्यत ऽइति दश वा ऽइमे पुरुषे प्राणा- श्चत्वार्य्यङ्गान्यात्मा पञ्चदश ऽएवन्द्वितीय ऽएवन्तृतीये पट्सु पुरुषेषु नवतिरथैकः पुरुषोऽत्येति पाङ्क्तो वै पुरुषो लोम त्वङ्माꣳसमस्थि मज्जा पाङ्क्तो ऽइयं वेदिश्चतस्रो दिश ऽआत्मा पञ्चम्येवमेष सप्तविध ऽएतया वेद्या सम्प- द्यते ॥ ५ ॥ तद्धैके । उत्तरा विधा विधास्यन्त ऽएताꣳश्च प्रक्रमानेतञ्च ऽच्याममनुवर्द्धयन्ति योनिमनुवर्द्धयाम ऽइति न तथा कुर्य्यान्न वै जातङ्गर्भं योनिरनुवर्द्धते यावद्वाव योनावन्तर्गर्भो भवति तावदेव योनिर्वर्द्धत ऽएतावत्युं वा ऽअत्र गर्भस्य वृद्धिः ॥ ६ ॥ ते ये ह तथा कुर्वन्ति । एतꣳ ह ते पितरम्प्रजापतिꣳ सम्पदश्च्यावयन्ति त ऽइष्ट्वा पापीयाꣳसो भवन्ति पितरꣳ हि प्रजापतिꣳ सम्पदश्च्यावयन्ति सा यावत्येषा सप्तविधस्य वेदिस्तावतीꣳ चतुर्दश कृत्व ऽएकशतविधस्य वेदिं विमि- मीते ॥ ७ ॥ अथ पदत्रिꣳशत्प्रक्रमाꣳ रज्जुम्मिमीते ।

तान्ᳬ सप्तधा समस्यति तस्यै त्रीन्भागान्प्राच ऽउपदधाति निःसृजति चतुरः ॥ ८ ॥ अथ त्रिꣳशत्प्रक्रमाम्मिमीते। तान्ᳬ सप्तधा समस्यति तस्यै त्रीन्भागान्पश्चादुपदधाति निःसृजति चतुरः ॥ ९ ॥ अथ चतुर्विंꣳशतिप्रक्रमाम्मिमीते। तान्ᳬ सप्तधा समस्यति तस्यै त्रीन्भागान्पुरस्तादुपदधाति निः सृजति चतुर ऽइति नु वेदिविमानम् ॥ १० ॥ अथाग्नेर्विधाः। अष्टाविꣳशतिः प्राश्चः पुरुषा ऽअष्टाविꣳशतिस्तिर्य्यश्चः स ऽआत्मा चतुर्दश पुरुषा दक्षिणः पक्षश्चतुर्दशोत्तरश्चतुर्दश पुच्छश्चतुर्दशारत्नीन्दक्षिणे पक्ष ऽउपदधाति चतुर्दशोत्तरे चतुर्दश वितस्तीः पुच्छ ऽइति न्वष्टानवतेः पुरुषाणाम्मात्रा साधिमानानाम् ॥ ११ ॥ अथ त्रिपुरुषान्ᳬ रज्जुम्मिमीते। तान्ᳬ सप्तधा समस्यति तस्यै चतुरो भागानात्मन्नुपदधाति त्रीन्पक्षपुच्छेषु ॥ १२ ॥ अथारत्निमात्रीम्मिमीते। तान्ᳬ सप्तधा समस्यति तस्यै त्रीन्भागान्दक्षिणे पक्ष ऽउपदधाति त्रीनेवोत्तरे निःसृजति चतुरः ॥ १३ ॥ अथ वितस्तिमात्रीम्मिमीते। तान्ᳬ सप्तधा समस्यति तस्यै त्रीन्भागान्पुच्छ ऽउपदधाति निःसृजति चतुर ऽएवमेष ऽएकशतविध ऽएतया वेद्या सम्पद्यते ॥ १४ ॥ तदाहुः। यत्त्रयोदश पुरुषा ऽअतियन्ति कथमेते सम्पदो न च्यवन्त ऽइति या वा ऽएतस्य सप्तमस्य पुरुषस्य सम्पत्सैवैतेषान्ᳬ सर्वेषान्ᳬ सम्पत् ॥ १५ ॥ अथो ऽआहुः। प्रजापतिरेवात्मानं विधाय तस्य यत्र-यत्र न्यूनमासीत्तदेतैः समा-

पूरयत तेनो ऽएवापि सम्पन्न ऽइति॥ १६ ॥ तद्धैके । एकविधम्प्रथमं विदधत्यथैकोत्तरमापरिमितविधान्न तथा कुर्यात् ॥ १७ ॥ सप्तविधो वा ऽअग्रे प्रजापतिरसृज्यत । स ऽआत्मानं विदधान ऽऐत्स ऽएकशतविधेऽतिष्ठत स योऽर्वाचीनः सप्तविधाद्विधत्त ऽएतद्ध ह स पितरम्प्रजापतिं विच्छिनत्ति स ऽइष्ट्वा पापीयान्भवति यथा श्रेयाꣳसꣳ हिꣳसित्वाथ य ऽएकशतविधमतिविधत्तेऽस्मात्स सर्वस्मादहिर्द्धा निष्पद्यते सर्वꣳ हीदम्प्रजापतिस्तस्माद्ध सप्तविधमेव प्रथमं विदधीताथैकोत्तरमैकशतविधादेकशतविधन्तु नातिविदधीत नाहैतम्पितरम्प्रजापतिं विच्छिनत्ति नो ऽअस्मात्सर्वस्माद्बहिर्द्धा निष्पद्यते ॥ १८ ॥ (c)

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ एकशतविधस्याग्नेरादित्यात्मना स्तुतिः, तस्य प्राकृताभिसङ्ख्यया सम्पत्तिप्रकारादिश्च ]

सँवत्सरो वै प्रजापतिः । अग्निरु सर्वे कामाः सोऽयꣳ सँवत्सरः प्रजापतिरकामयताग्निः सर्वान्कामानात्मानमभिसꣳस्कुर्वीयेति स ऽएकशतधात्मानं व्यधत्त स ऽएकशतधात्मानं विधायाग्निः सर्वान्कामानात्मानमभिसमचिनुत स सर्वे कामा ऽअभवत्तस्मान्न कश्चन बहिर्द्धा कामोऽभवत्तस्मादाहुः सँवत्सरः सर्वे कामा ऽइति न ह सँवत्सरात्कश्चन बहिर्द्धा कामोऽस्ति ॥ १ ॥

(c) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा – श॰ ब्रा॰ १२. २ । १ ।

तथैवैतद्यजमानः । एकशतधात्मानं विधायाग्निः सर्वां-
न्कामानात्मानमभिसञ्चिनुते स सर्वं कामा भवति
तस्मान्न कश्चन बहिर्द्धा कामो भवति ॥ २ ॥ स यः
स सँवत्सरोऽसौ स ऽआदित्यः । स ऽएष ऽएकशत-
विधस्तस्य रश्मयः शतं विधा ऽएष ऽएवैकशततमो य
ऽएष तपत्यस्मिन्त्सर्वस्मिन्प्रतिष्ठितस्तथैवैतद्यजमान
ऽएकशतधात्मानं विधायास्मिन्त्सर्वस्मिन्प्रतितिष्ठति
॥ ३ ॥ अथ वा ऽएकशतविधः । सप्तविधमभिसम्पद्यत
ऽएकशतधा वा ऽअसावादित्यो विहितः सप्तसु देवलोकेषु
प्रतिष्ठितः सप्त वै देवलोकाश्चतस्रो दिशस्त्रय ऽइमे
लोका ऽएते वै सप्त देवलोकास्तेष्वेष प्रतिष्ठितस्तथैवैतद्य-
जमान ऽएकशतधात्मानं विधाय सप्तसु देवलोकेषु
प्रतितिष्ठति ॥ ४ ॥ यद्वेवैकशतविधः । सप्तविधमभि-
सम्पद्यत ऽएकशतधा वा ऽअसावादित्यो विहितः सप्तस्वृ-
तुषु सप्तसु स्तोमेषु सप्तसु पृष्ठेषु सप्तसु छन्दःसु
सप्तसु प्राणेषु सप्तसु दिक्षु प्रतिष्ठितस्तथैवैतद्य-
जमान ऽएकशतधात्मानं विधायैतस्मिन्त्सर्वस्मिन्प्रतिति-
ष्ठति ॥ ५ ॥ यद्वेवैकशतविधः । सप्तविधमभिसम्पद्यत
ऽएकशतधा वा ऽअसावादित्यो विहितः सप्ताक्षरे ब्रह्म-
न्प्रतिष्ठितः सप्ताक्षरं वै ब्रह्मर्गित्येकमक्षरं यजुरिति
द्वे सामेति द्वे ऽअथ यदतोऽन्यद्ब्रह्मैव तद्व्यक्षरं वै
ब्रह्म तदेतत्सर्वं सप्ताक्षरं ब्रह्म तस्मिन्नेष प्रतिष्ठित-
स्तथैवैतद्यजमान ऽएकशतधात्मानं विधाय सप्ताक्षरे

न्ब्रह्मन्प्रतितिष्ठतीति ॥ ६ ॥ तस्मादु सप्तभिः सप्तभिः परिश्रयन्ति । तस्मादेकशतविधः सप्तविधमभिसम्पद्यतेऽथ वै सप्तविध एकशतविधमभिसम्पद्यते ॥ ७ ॥ सप्तविधो वा अग्रे प्रजापतिरसृज्यत । स एतमेकशतधात्मानं विहितमपश्यत्प्राणभृत्सु पञ्चाशदिष्टकाः पञ्चाशद्यजूंष्यपि तच्छतः सादनञ्च सूददोहाश्चैकशततमे तस्मात्ताः सादयित्वा हि सूददोहसाधिवदति स एतेनैकशतविधेनात्मनेमाञ्जितिमजयदिमां व्यष्टिं व्याश्नुत तथैवैतद्यजमान एतेनैकशतविधेनात्मनेमाञ्जितिञ्जयतीमां व्यष्टिं व्यश्नुत एवमु सप्तविध एकशतविधमभिसम्पद्यते स य एवैकशतविधः स सप्तविधो यः सप्तविधः स एकशतविध इति नु विधानाम् ॥ ८ ॥ (D)

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥१॥
कण्डिकासंख्या ॥ ९४ ॥

---

[ चित्याग्नेः कालविध्यादि ]

अथातश्चयनस्यैव । अन्तरोपसदौ चिनोत्येतद्वै देवा अबिभयुर्यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति त एताः पुरोऽपश्यन्नुपसद इमानेव लोकानिमे वै लोकाः पुरस्ताः प्रापद्यन्त ताः प्रपद्याभयेऽनाष्ट्र एतमात्मानः समस्कुर्वत तथैवैतद्यजमान एताः पुरः प्रपद्या-

---

(D) एतद्ब्राह्मणगता विधा अन्यत्राऽप्युपलभ्यन्ते यथा—का० श्रौ० १२. २. ४ ।

भयेऽनाष्ट्र ऽएतमात्मानꣳ संस्कुरुते ॥ १ ॥ यद्वेवान्तरोपसदौ चिनोति । एतद्वै देवा ऽअबिभयुर्यद्वै न ऽइममिह रक्षाꣳसि नाष्ट्रा न हन्न्युरिति त ऽएतान्वज्रान्पश्यन्नुपसदो वज्रा वा ऽउपसदस्तान्प्रापद्यन्त तान्प्रपद्याभयेऽनाष्ट्र ऽएतमात्मानꣳ समस्कुर्वत तथैवैतद्यजमान ऽएतान्वज्रान्प्रपद्याभयेऽनाष्ट्र ऽएतमात्मानꣳ संस्कुरुते ॥ २ ॥ एतदु ह यज्ञे तपः । यदुपसदस्तपो वा ऽउपसदस्तद्यत्तपसि चीयते तस्मात्तापश्चितस्तद्वै यावद्देवोपसद्भिश्चरन्ति तावत्प्रवर्ग्येण सँवत्सरमेवोपसद्भिश्चरन्ति सँवत्सरम्प्रवर्ग्येण ॥ ३ ॥ अहोरात्राणि वा ऽउपसदः । आदित्यः प्रवर्ग्योऽमुन्तदादित्यमहोरात्रेषु प्रतिष्ठापयति तस्मादेषोऽहोरात्रेषु प्रतिष्ठितः ॥ ४ ॥ अथ यदि चतुर्विꣳशतिः । चतुर्विꣳशतिर्वा ऽअर्द्धमासा ऽअर्द्धमासा ऽउपसद ऽआदित्यः प्रवर्ग्योऽमुन्तदादित्यमर्द्धमासेषु प्रतिष्ठापयति तस्मादेषोऽर्द्धमासेषु प्रतिष्ठितः ॥ ५ ॥ अथ यदि द्वादश । द्वादश वै मासा मासा ऽउपसद ऽआदित्यः प्रवर्ग्योऽमुन्तदादित्यम्मासेषु प्रतिष्ठापयति तस्मादेष मासेषु प्रतिष्ठितः ॥ ६ ॥ अथ यदि षट् । षड्वा ऽऋतव ऽऋतव ऽउपसद ऽआदित्यः प्रवर्ग्योऽमुन्तदादित्यमृतुषु प्रतिष्ठापयति तस्मादेष ऽऋतुषु प्रतिष्ठितः ॥ ७ ॥ अथ यदि तिस्रः । त्रयो वा ऽइमे लोका ऽइमे लोका ऽउपसद ऽआदित्यः प्रवर्ग्योऽमुन्तदादित्यमेषु लोकेषु प्रतिष्ठापयति तस्मादेष ऽएषु लोकेषु

ष्प्रतिष्ठितः ॥ ८ ॥ अथातश्चितिपुरीषाणामेव मीमाᳬसा । मासम्प्रथमा चितिम्मासम्पुरीषमेतावान्वासन्तिक ऽऋतौ कामस्तद्यावान्वासन्तिक ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥ ९ ॥ मासन्द्वितीया । मासम्पुरीषमेतावान्ग्रैष्म ऽऋतौ कामस्तद्यावान्ग्रैष्म ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥ १० ॥ मासन्तृतीया । मासम्पुरीषमेतावान्वार्षिक ऽऋतौ कामस्तद्यावान्वार्षिक ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥ ११ ॥ मासञ्चतुर्थी । मासम्पुरीषमेतावाञ्छारद ऽऋतौ कामस्तद्यावाञ्छारद ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥१२॥ अथ पञ्चम्यै चितेः । असपत्ना विराजश्च प्रथमाहमुपदधाति स्तोमभागा ऽएकैकामन्वहन्ताः सकृत्सादयति सकृत्सूददोहसाधिवदति तूष्णीम्मासथ स्तोमभागापुरीषमभिहरन्त्येतावान्हैमन्तिक ऽऋतौ कामस्तद्यावान्हैमन्तिक ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥ १३ ॥ मासः षष्ठी । मासम्पुरीषमेतावाञ्छैशिर ऽऋतौ कामस्तद्यावाञ्छैशिर ऽऋतौ कामस्तन्तत्सर्वमात्मानमभिसञ्चिनुत ऽएतावान्वै द्वादशसु मासेषु कामः षट्स्वृतुषु तद्यावान्द्वादशसु मासेषु कामः षट्स्वृतुषु तन्तत्सर्वमात्मानमभिसञ्चिनुते ॥ १४ ॥ अथ त्रीण्यहान्युपातियन्ति । यदहः शतरुद्रियञ्जुहोति यदहरुपवसथो यदहः प्रसुतस्तद्यत्ते ष्व्यहःसूपसदा चरन्ति तानि तस्य मासस्याहोरात्राण्यथ यत्प्रवर्ग्येण तद्ध तस्मिन्नृतावादित्यम्प्रतिष्ठापयत्येतावान्वै

त्रयोदशसु मासेषु कामः सप्तस्वृतुषु तद्यावाँस्त्रयोदशसु मासेषु कामः सप्तस्वृतुषु तन्तत्सर्व्वमात्मानमभिसञ्चिनुते ॥ १५ ॥ स सँवत्सरम्प्रसुतः स्यात् । सर्वं वै सँवत्सरः सर्वमेकशतविधः सर्व्वेणैव तत्सर्वमाप्नोति यदि सँवत्सरन्न शक्नुयाद्विश्वजिता सर्वपृष्ठेनातिरात्रेण यजेत तस्मिन्त्सर्ववेदसन्दद्यात्सर्वं वै विश्वजित्सर्वपृष्ठोऽतिरात्रः सर्वः सर्ववेदसः सर्वमेकशतविधः सर्व्वेणैव तत्सर्वमाप्नोति ॥ १६ ॥ (E)

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ प्रजापतेः प्रकारान्तरेणैकशतसंख्याकत्वादिविधानम् ]

सँवत्सरो वै प्रजापतिरेकशतविधः । तस्याहोरात्राण्यर्द्धमासा मासा ऋतवः षष्टिर्म्मासस्याहोरात्राणि मासि वै सँवत्सरस्याहोरात्राण्याप्यन्ते चतुर्विंशतिरर्द्धमासास्त्रयोदश मासास्त्रय ऋतवस्ताः शतं विधाः सँवत्सर एवैकशततमी विधा ॥ १ ॥ स ऋतुभिरेव सप्तविधः । षडृतवः सँवत्सर एव सप्तमी विधा तस्यैतस्य सँवत्सरस्यैतत्तेजो य एष तपति तस्य रश्मयः शतं विधा मण्डलमेवैकशततमी विधा ॥ २ ॥ स दिग्भिरेव सप्तविधः । ये प्राच्यान्दिशि रश्मयः सैका विधा ये दक्षिणायाᳫं सैका ये प्रतीच्याᳫं सैका य उदीच्याᳫं सैका य ऊर्द्ध्वायाᳫं

(F) एतत्प्रकरणस्था विषया अन्यशाखाऽप्युपलभ्यन्ते यथा—का० श० १३.१ ४।

सैका येऽवाच्याथं सैका मण्डलमेव सप्तमी विधा ॥ ३ ॥
तस्यैतस्य परस्तात्कामप्रो लोकः । अमृतं वै कामप्रममृत-
मेवास्य तत्परस्तात्तद्यत्तदमृतमेतत्तद्यदेतदर्चिर्दीप्यते ॥ ४ ॥
तदेतद्ब्रह्मचित्रः राधः । तदेष सविता विभक्ताभ्यः
प्रजाभ्यो विभजत्यप्योषधिभ्योऽपि वनस्पतिभ्यो
भूय ऽइव ह त्वेकाभ्यः प्रयच्छति कनीय ऽइवैकाभ्य-
स्तद्याभ्यो भूयः प्रयच्छति ता ज्योक्तमाञ्जीवन्ति
याभ्यः कनीयः कनीयस्ताः ॥ ५ ॥ तदेतदृचाभ्युक्तम् ।
'विभक्तारः हवामहे वसोश्चित्रस्य राधसः । सवितारन्नृच-
क्षसमि'ति तदेतत्सर्वमायुर्दीर्घमनन्तः हि तद्यद्विदुमाहु-
र्दीर्घन्त ऽआयुरस्तु सर्वमायुरिहीत्येष ते लोक ऽएतत्ते-
ऽस्त्विति हैवैतत् ॥ ६ ॥ पश्यन्ती वाग्वदति । तदेतदे-
कशतविधेन वैवाप्त्व्यः शतायुतया वा य ऽएवैकशतविधं
विधत्ते यो वा शतं वर्षाणि जीवति स हैवैतदमृतमाप्नोति
तस्माद्ये चैतद्विदुर्ये च न लोक्या शतायुतेत्येवाहुस्त-
स्मादु ह न पुरायुषः स्वकामी प्रेयादलोक्यः हैत ऽउ वाव
लोका यदहोरात्राण्यर्द्धमासा मासा ऽऋतवः संवत्सरः
॥ ७ ॥ तद्येऽर्वाग्विःशेषु वर्षेषु प्रयन्ति । अहोरात्रेषु
ते लोकेषु सज्यन्तेऽथ ये परोविःशेप्ववार्क्चत्वारिः-
शेप्वर्द्धमासेषु तेऽथ ये परश्चत्वारिःशेप्ववार्क्षष्ट्रेषु मासेषु
तेऽथ ये परः षष्ट्रेप्ववागशीतेष्वृतुषु तेऽथ ये परोऽशीते-
ष्ववार्क्शतेषु सँवत्सरे तेऽथ य ऽएव शतं वर्षाणि यो वा

(१) शु॰ य॰ सं॰ अ॰ ३॰ क॰ ४ ।

भूयाꣳसि जीवति स हैवैतदमृतमाप्नोति ॥ ८ ॥ बहुभिर्ह वै यज्ञैः । एकमहरेका रात्रिर्मिता स य ऽएवैकशतविधं विधत्ते यो वा शतं वर्षाणि जीवति स हैवैनदद्धातमामाप्नोत्येष वा ऽएकशतविधं विधत्ते य ऽएनꣳ सँवत्सरं बिभर्त्ति तस्मादेनꣳ सँवत्सरभृतमेव चिन्वीतेत्यधिदेवतम् ॥ ९ ॥ अथाधियज्ञम् । एनमूनेकशतमुद्बाहून्पुरुषान्मिमीते स विधैकशतविधः स चितिभिरेव सप्तविधः षड्डतव्यवरपश्चितयोऽग्निरेव सप्तमी विधा ॥ १० ॥ स ऽउ वा ऽइष्टकैकशतविधः । याः पञ्चाशत्प्रथमा ऽइष्टका याश्चोत्तमास्ताः शतं विधा ऽअथ या ऽएतदन्तरेणेष्टका ऽउपधीयन्ते सैवैकशततमी विधा ॥ ११ ॥ स ऽउ ऽएव यजुस्तेजाः । यजुरेकशतविधो यानि पञ्चाशत्प्रथमानि यजूꣳषि यानि चोत्तमानि ताः शतं विधा ऽअथ यान्येतदन्तरेण यजूꣳषि क्रियन्ते सैवैकशततमी विधैतमु सप्तविध ऽएकशतविधो भवति स यः शतायुतायाङ्कामो य ऽएकशतविधे सप्तविधेन हैव तमेवंविद्याप्नोति ॥ १२ ॥ एवं वाव सर्वे यज्ञाः । एकशतविधा ऽअग्निहोत्रादग्निभिर्यजुर्भिः पदैरक्षरैः कर्म्मभिः सामभिः स यः शतायुतायाङ्कामो य ऽएकशतविधे यः सप्तविधे यज्ञेन-यज्ञेन हैव तमेवंविदाप्नोतीत्यु ऽएवाधियज्ञम् ॥ १३ ॥ अथाध्यात्मम् । पञ्चेमाश्चतुर्विधा ऽअङ्गुलयो द्वे कल्कषी दोरःसफलकश्चाक्षश्च तत्पञ्चविंशतिः

विधोक्तः सप्तविधतायै ॥ १४ ॥ स ऽउ ऽएव प्प्राणतेजाः ।
प्प्राणैकशतविधोऽन्वङ्गमङ्गेऽङ्गे हि प्प्राणः स यः शतायु-
तायाङ्कामो य ऽएकशतविधे यः सप्तविधे यः सर्वेषु यज्ञेषु
विद्यया हैव तमेवंविदाप्नोति सर्वैर्हि यज्ञैरात्मानः सम्पन्नं
विदे ॥१५॥ त्रीणि वा ऽइमानि पञ्चविधानि । सँवत्सरोऽग्निः
पुरुषस्तेषाम्पञ्चविधा ऽअन्नम्पानॅं श्रीर्ज्योतिरमृतं यदेव
सँवत्सरेऽन्नन्तदन्नं या ऽआपस्तत्पानं रात्रिरेव श्रीः
श्रियाॅं हैतद्रात्र्याॅं सर्वाणि भूतानि सँवसन्त्यहर्ज्योति-
रादित्योऽमृतमित्यधिदैवतम् ॥ १६ ॥ अथाधियज्ञम् । यदेवा-
ग्नावन्नमुपधीयते तदन्नं या ऽआपस्तत्पानम्परिश्रित ऽएव
श्रीस्तद्धि रात्रीणाॅं रूपं यजुष्मत्यो ज्योतिस्तद्ध्यह्नाॅं
रूपमग्निरमृतन्तद्ध्यादित्यस्य रूपमित्यु ऽएवाधियज्ञम्
॥ १७ ॥ अथाध्यात्मम् । यदेव पुरुषेऽन्नन्तदन्नं या ऽआप-
स्तत्पानमस्थीन्येव श्रीस्तद्धि परिश्रिताॅं रूपम्मज्जानो
ज्योतिस्तद्धि यजुष्मतीनाॅं रूपम्प्राणोऽमृतन्तद्ध्यग्ने
रूपम्प्राणोऽग्निः प्प्राणोऽमृतमित्यु वा ऽआहुः ॥ १८ ॥
अन्नाद्वा ऽअशनाया निवर्त्तते । पानात्पिपासा श्रियै पाप्मा
ज्योतिषस्तमोऽमृतान्मृत्युर्न्नि ह वा ऽअस्मादेतानि
सर्वाणि वर्त्तन्तेऽप पुनर्मृत्युञ्जयति सर्वमायुरेति य ऽएवं
वेद तदेतदमृतमित्येवामुत्रोपासीतायुरितीह प्प्राण ऽइति
हैक ऽउपासते प्प्राणोऽग्निः प्प्राणोऽमृतमिति वदन्तो न तथा
विद्याद्ध्रुवं वै तद्यत्प्राण'स्तन्ते विष्याम्यायुषो न मध्यादि'ति-

(१) शु॰ य॰ सं॰ अ॰ १२ क॰ ६५ ।

स्यपि युजुपाऽभ्युक्तन्तस्मादेनदमृतमित्येवामुत्रोपासीतायु
रितीह तथो ह स सर्वमायुरेति ॥ १९ ॥ (F)

द्वितीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥
इति द्वितीयोऽध्यायः ॥ २ ॥

[ गायत्र्यादि-सप्तच्छन्दसां वीर्यरूपत्वेन स्तुतिः ]

प्राणो गायत्री । चक्षुरुष्णिग्वागनुष्टुम्मनो बृह
तीऽश्श्रोत्रम्पङ्क्तिर्य्य ऽएवायम्प्रजननं प्राण ऽएष
त्रिष्टुबथ योऽयमवाङ् प्राण ऽएष जगती तानि वा
ऽएतानि सप्त च्छन्दाᳬसि चतुरुत्तराण्यग्नौ क्रियन्ते
॥ १ ॥ प्राणो गायत्रीति । तद्य ऽएव प्राणस्य महिमा
यद्वीर्य्यन्तदेतत्सहस्रम्प्राणस्यैवैतद्वीर्य्यᳬय्यव्वयस्य चिन्वतं
प्राण ऽउत्क्रामेत्तत ऽएवैषोऽग्निर्न्न चीयेतैतेनैवास्य
रूपेण सहस्रमेष गायत्रीं सञ्चितो भवति ॥ २ ॥
चक्षुरुष्णिगिति । तद्य ऽएव चक्षुषो महिमा यद्वीर्य्य
न्तदेतत्सहस्रञ्चक्षुषऽएवैतद्वीर्य्यᳬय्यव्वयस्य चिन्वतश्चक्षु
रुत्क्रामेत्तत ऽएवैषोऽग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्र
मेष ऽउष्णिहं सञ्चितो भवति ॥ ३ ॥ वागनुष्टुबिति ।
तद्य ऽएव वाचो महिमा यद्वीर्य्यन्तदेतत्सहस्रं वाच
ऽएवैतद्वीर्य्यᳬय्यव्वयस्य चिन्वतो वागुत्क्रामेत्तत ऽएवैषो
ऽग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेषोऽनुष्टुभं सञ्चितो

(1) [illegible]

भवति ॥४॥ मनो बृहतीति । तस्य ऽएव मनसो महिमा यद्वीर्यन्तदेतत्सहस्रम्मनस ऽएवैतद्वीर्यॅं यज्ञस्य चिन्वतो मन ऽउत्क्रामेत्तत ऽएवैषोऽग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष बृहतीः सञ्चितो भवति ॥५॥ श्रोत्रम्पङ्क्तिरिति । तस्य ऽएव श्रोत्रस्य महिमा यद्वीर्यन्तदेतत्सहस्रꣳ श्रोत्रस्यैवैतद्वीर्यं यज्ञस्य चिन्वतः श्रोत्रमुत्क्रामेत्तत ऽएवैषोऽग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष पङ्क्तीः सञ्चितो भवति ॥ ६ ॥ यऽएवायम्प्रजननः प्राणः । एष त्रिष्टुबिति तस्य ऽएवैतस्य प्राणस्य महिमा यद्वीर्यन्तदेतत्सहस्रमेतस्यैवैतत्प्राणस्य वीर्यं यज्ञस्य चिन्वत ऽएष प्राण ऽआलुभ्येत्तत ऽएवैषोऽग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष त्रिष्टुभः सञ्चितो भवति ॥ ७ ॥ अथ योऽयमवाङ् प्राणः । एष जगतीति तस्य ऽएवैतस्य प्राणस्य महिमा यद्वीर्यन्तदेतत्सहस्रमेतस्यैवैतत्प्राणस्य वीर्यं यज्ञस्य चिन्वत ऽएष प्राण ऽआलुभ्येत्तत ऽएवैषोऽग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष जगतीः सञ्चितो भवति ॥ ८ ॥ तानि वा ऽएतानि । सप्त च्छन्दाꣳसि चतुरुत्तराण्यन्योऽन्यस्मिन्प्रतिष्ठितानि सप्तेमे पुरुषे प्राणा ऽअन्योऽन्यस्मिन्प्रतिष्ठितास्तद्यावन्तमेवँविच्छन्दसाङ्गणमन्वाह च्छन्दसश्छन्दसो हैवास्य सोऽनूक्तो भवति स्तुतो वा शस्तो वोपहितो वा ॥ ९ ॥ (E)

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

(E) एतद्ब्राह्मणस्था विषया अन्यत्राप्युपलभ्यन्ते यथा— का० श० १२ २ ३ ।

ह्यपि यजुषाऽभ्युक्तन्तस्मादेनदमृतमित्येवामुत्रोपासीताथ‐
रितीह तथो ह स सर्वमायुरेति ॥ १९ ॥ (F)

द्वितीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥

---

[ गायत्र्यादि-सप्तच्छन्दसां वीर्यरूपत्वेन स्तुतिः ]

प्राणो गायत्री । चक्षुरुष्णिग्वागनुष्टुम्मनो बृह‐
तीश्श्रोत्रम्पङ्क्तिर्य्य ऽएवायम्प्रजननः प्राण ऽएष
त्रिष्टुबथ योऽयमवाङ् प्राण ऽएष जगती तानि वा
ऽएतानि सप्त च्छन्दाꣳसि चतुरुत्तराण्यग्नौ क्रियन्ते
॥ १ ॥ प्राणो गायत्रीति । तद्य ऽएव प्राणस्य महिमा
यद्वीर्य्यन्तदेतत्सहस्रम्प्राणस्यैवैतद्वीर्य्यꣳ᳚ यद्यस्य चिन्वतः
प्राण ऽउत्क्रामेत्तत ऽएवैषोऽग्निर्न्न चीयेतैतेनैवास्य
रूपेण सहस्रमेष गायत्रीः सञ्चितो भवति ॥ २ ॥
चक्षुरुष्णिगिति । तद्य ऽएव चक्षुषो महिमा यद्वीर्य्य‐
न्तदेतत्सहस्रञ्चक्षुषऽएवैतद्वीर्य्यꣳ᳚ यद्यस्य चिन्वतश्चक्षु‐
रुत्क्रामेत्तत ऽएवैषोऽग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्र‐
मेष ऽउष्णिहः सञ्चितो भवति ॥ ३ ॥ वागनुष्टुबिति ।
तद्य ऽएव वाचो महिमा यद्वीर्य्यन्तदेतत्सहस्रं वाच
ऽएवैतद्वीर्य्यꣳ᳚ यद्यस्य चिन्वतो वागुत्क्रामेत्तत ऽएवैषो‐
ऽग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेषोऽनुष्टुभः सञ्चितो

(१) एतद्ब्राह्मणस्था विषया अन्यत्राप्युपलभ्यन्ते यथा—शा० ब्रा० ११ . . .

भवति ॥४॥ मनो बृहतीति । तद्य ऽएव मनसो महिमा यद्वीर्य्यन्तदेतत्सहस्रम्मनस ऽएवैतद्वीर्य्यँव्यद्धस्य चिन्वतो मन ऽउत्क्रामेत्तत ऽएवैषोऽग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष बृहतीः सञ्चितो भवति ॥५॥ श्रोत्रम्पङ्क्तिरिति । तद्य ऽएव श्रोत्रस्य महिमा यद्वीर्य्यन्तदेतत्सहस्रछं श्रोत्रस्यैवैतद्वीर्य्यं व्यद्धस्य चिन्वतः श्रोत्रमुत्क्रामेत्तत ऽएवैषोऽग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष पङ्क्तीः सञ्चितो भवति ॥ ६ ॥ यऽएवायम्प्रजननः प्राणः । एष त्रिष्टुबिति तद्य ऽएवैतस्य प्राणस्य महिमा यद्वीर्य्यन्तदेतत्सहस्रमेतस्यैवैतत्प्राणस्य वीर्य्यं व्यद्धस्य चिन्वत ऽएष प्राण ऽआलुभ्येत्तत ऽएवैषोऽग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष त्रिष्टुभः सञ्चितो भवति ॥ ७ ॥ अथ योऽयमवाङ् प्राणः । एष जगतीति तद्य ऽएवैतस्य प्राणस्य महिमा यद्वीर्य्यन्तदेतत्सहस्रमेतस्यैवैतत्प्राणस्य वीर्य्यं व्यद्धस्य चिन्वत ऽएष प्राण ऽआलुभ्येत्तत ऽएवैषोऽग्निर्न्न चीयेतैतेनैवास्य रूपेण सहस्रमेष जगतीः सञ्चितो भवति ॥ ८ ॥ तानि वा ऽएतानि । सप्त च्छन्दाᳬसि चतुरुत्तराण्यन्योऽन्यस्मिन्प्रतिष्ठितानि सप्तेमे पुरुषे प्राणा ऽअन्योऽन्यस्मिन्प्रतिष्ठितास्तद्यावन्तमेवँविच्छन्दसाङ्गणमन्वाह च्छन्दसश्छन्दसो हैवास्य सोऽनूक्तो भवति स्तुतो वा शस्तो वोपहितो वा ॥ ९ ॥ (F)

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

(F) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२ ३ १ ।

[ वेदवादिप्रश्नोत्तराभ्यां शिरोग्रीवादीनां छन्दोमयत्वनिरूपणम् ]

तदाहुः । किञ्छन्दः का देवताग्नेः शिर ऽइति गायत्री च्छन्दोऽग्निर्देवता शिरः ॥ १ ॥ किञ्छन्दः । का देवता ग्रीवा ऽइत्युष्णिक्छन्दः सविता देवता ग्रीवाः ॥ २ ॥ किञ्छन्दः । का देवतानूकमिति बृहती च्छन्दो बृहस्पतिर्देवतानूकम् * ॥ ३ ॥ किञ्छन्दः । का देवता पक्षाविति बृहद्रथन्तरे च्छन्दो द्यावापृथिवी देवते पक्षौ ॥४॥ किञ्छन्दः का देवता मध्यमिति त्रिष्टुप्छन्द ऽइन्द्रो देवता मध्यम् ॥ ५ ॥ किञ्छन्दः । का देवता श्रोणी ऽइति जगती च्छन्द ऽआदित्यो देवता श्रोणी ॥ ६ ॥ किञ्छन्दः । का देवता यस्मादिदम्प्राणाद्रेतः सिच्यत ऽइत्यतिच्छन्दाश्छन्दः प्रजापतिर्देवता ॥ ७ ॥ किञ्छन्दः । का देवता योऽयमवाङ् प्राण ऽइति यज्ञायज्ञियञ्छन्दो वैश्वानरो देवता ॥ ८ ॥ किञ्छन्दः । का देवतोरूऽइत्यनुष्टुप्छन्दो विश्वे देवा देवतोरू ॥ ९ ॥ किञ्छन्दः । का देवताष्ठीवन्ताविति पङ्क्तिश्छन्दो मरुतो देवताष्ठीवन्तौ (A) ॥ १० ॥ किञ्छन्दः । का देवता प्रतिष्ठेऽइति द्विपदा च्छन्दो विष्णुर्देवता प्रतिष्ठे ॥ ११ ॥ किञ्छन्दः । का देवता प्राणा ऽइति विच्छन्दाश्छन्दो वायुर्देवता प्राणाः ॥ १२ ॥ किञ्छन्दः । का देवतोनातिरिक्तानीति न्यूनाक्षरा च्छन्द ऽआपो देवतोनातिरिक्तानि सैपात्म-

---

* अनूकशब्दस्य पक्षयोर्मध्यदेहस्य सन्धि ।
पुच्छपक्षयोश्च सन्धिरित्यर्थः ॥

( A ) ष्ठीवन्तौ जानुप्रदेशावित्यर्थः । सा० भा० ॥

विद्ध्यैवैतन्मयो हैवैता देवता ऽएतमात्मानमभिसम्भवति न ह्यान्या लोक्यताया ऽआशीरस्ति ॥ १३ ॥ (B)

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ धीरमहाशालनाम्नोर्मह्र्ष्योः प्रश्नप्रतिवचनाभ्यामग्नेः सर्वदेवतासमष्टिरूपप्राणवाय्वात्मकत्वप्रतिपादनम् ]

धीरो ह शातपर्णेयः । महाशालञ्जाबालमुपोत्ससाद तꣳ होवाच किम्मा विद्वाननुपोदसद ऽइत्यग्निं वेदेति * कमग्निं वेत्थेति वाचमिति यस्तमग्निं वेद किꣳ स भवतीति वाग्मी भवतीति होवाच नैनं वाग्जहातीति ॥ १ ॥ वेत्थाग्निमिति होवाच । किमेव मा विद्वाननुपोदसद ऽइत्यग्निं वेदेति कमग्निं वेत्थेति चक्षुरिति यस्तमग्निं वेद किꣳ स भवतीति चक्षुष्मान्भवतीति होवाच नैनञ्चक्षुर्जहातीति ॥ २ ॥ वेत्थाग्निमिति होवाच । किमेव मा विद्वाननुपोदसद ऽइत्यग्निं वेदेति कमग्निं वेत्थेति मन ऽइति यस्तमग्निं वेद किꣳ स भवतीति मनस्वी भवतीति होवाच नैनम्मनो जहातीति ॥ ३ ॥ वेत्थाग्निमिति होवाच । किमेव मा विद्वाननुपोदसद ऽइत्यग्निं वेदेति कमग्निं वेत्थेति श्रोत्रमिति यस्तमग्निं वेद किꣳ स भवतीति श्रोत्रवान्भवतीति होवाच नैनꣳ श्रोत्रञ्जहातीति ॥४॥ वेत्थाग्निमिति होवाच । किमेव मा विद्वाननुपोदसद

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १४ १. २ ।

* सर्वत्र प्रश्नप्रतिवचनसमाप्तिद्योतका इतिशब्दाः ।

ऽइत्यग्निं वेदेति कमग्निं वेत्थेति य ऽएतत्सर्वमग्निस्तं वेदेति तस्मिन्न्होक्तऽउपावरुरोहाधीहि भोस्तमग्निमिति ॥ ५ ॥ स होवाच । प्राणो वाव सोऽग्निर्यदा वै पुरुषः स्वपिति प्राणन्तर्हि वागप्येति प्प्राणश्चक्षुः प्राणम्मनः प्राणꣳ श्रोत्रं स्यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्त ऽइत्यध्यात्मम् ॥ ६ ॥ अथाधिदेवतम् । या वै सा वागग्निरेव स यत्तच्चक्षुरसौ स ऽआदित्यो यत्तन्मन ऽएष स चन्द्रमा यत्तच्छ्रोत्रन्दिश ऽएव तदुथ यः स प्राणोऽयमेव स वायुर्योऽयम्पवते ॥ ७ ॥ यदा वा ऽअग्निरनुगच्छति । वायुन्तर्ह्यनूद्वाति तस्मादेनमुदवासीदित्याहुर्वायुꣳ ह्यनूद्वाति यदादित्योऽस्तमेति वायुन्तर्हि प्रविशति वायुश्चन्द्रमा वायौ दिशः प्रतिष्ठिता वायोरेवाधि पुनर्जायन्ते स यदैवं विदस्माल्लोकात्प्रैति वाचैवाग्निमप्येति चक्षुषादित्यम्मनसा चन्द्रꣳश्रोत्रेण दिशः प्राणेन वायुꣳ स ऽएतन्मय ऽएव भूत्वैतासान्देवतानांय्यांय्याङ्कामयते सा भूत्वेलयति ॥ ८ ॥ (M)

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

---

[ अनेकैः प्रश्नप्रतिवचनैः पुरुषस्यार्करूपत्वेन स्तुतिः ]

श्वेतकेतुर्हारुणेयः । यक्ष्यमाण ऽआस तꣳ ह पितोवाच कानृत्विजोऽवृथा ऽइति स होवाचायन्न्वेव मे वैश्वा-

---

(१) "अग्निर्वाग्भूत्वा मुखं प्राविशद्" इति श्रुतेः । ऐ० उ० २ । ४ ।

(M) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२, १, १ ।

वसव्यो होतेति तं ह पप्रच्छ वेत्थ ब्राह्मण वैश्वाव-सव्य ॥ १ ॥ चत्वारि महान्ती३ ऽइति । वेद भो३ ऽइति होवाच वेत्थ चत्वारि महताम्महान्ती३ ऽइति वेद भो३ ऽइति होवाच वेत्थ चत्वारि व्रतानी३ ऽइति वेद भो३ ऽइति होवाच वेत्थ चत्वारि व्रतानां व्रतानी३ ऽइति वेद भो३ ऽइति होवाच वेत्थ चत्वारि क्षय्यानी३ ऽइति वेद भो३ ऽइति होवाच वेत्थ चत्वारि क्षय्याना-ङ्क्षय्यानी३ इति वेद भो३ इति होवाच वेत्थ चतुरोऽर्क्का३न्निति वेद भो३ ऽइति होवाच वेत्थ चतुरोऽर्क्काणामर्क्का३न्निति-वेद भो३ ऽइति होवाच ॥ २ ॥ वेत्थार्क्कमिति । अथ वै नो भवान्वक्ष्यतीति वेत्थार्क्कपर्णे ऽइत्यथ वै नो भवान्व-क्ष्यतीति वेत्थार्क्कपुष्पे ऽइत्यथ वै नो भवान्वक्ष्यतीति वेत्थार्क्ककोश्यावित्यथ वै नो भवान्वक्ष्यतीति वेत्थार्क्कस-मुद्गावित्यथ वै नो भवान्वक्ष्यतीति वेत्थार्क्कधाना ऽइत्यथ वै नो भवान्वक्ष्यतीति वेत्थार्क्काष्ठीलामित्यथ वै नो भवा-न्वक्ष्यतीति वेत्थार्क्कमूलमित्यथ वै नो भवान्वक्ष्यतीति ॥ ३ ॥ स ह वै यत्तदुवाच । वेत्थ चत्वारि महान्ति वेत्थ चत्वारि महताम्महान्तीत्यग्निर्म्महाँस्तस्य महतो महदोषधयश्च वनस्पतयश्च तद्धस्यान्नं वायुर्म्महाँस्तस्य महतो महदापस्तद्धस्यान्नमादित्यो महाँस्तस्य महतो महच्चन्द्रमास्तद्धस्यान्नम्पुरुषो महाँस्तस्य महतो मह-त्पशवस्तद्धस्यान्नमेतान्येव चत्वारि महान्त्येतानि चत्वारि

(१) क. प्रज्ञापति, तस्मै दितानि क्षयानि ।

महतान्महान्त्येव चत्वारि व्रतान्येतानि चत्वारि व्रतानां व्रतान्येतान्येव चत्वारि वय्यान्येतानि चत्वारि वय्यानां वय्यान्येतऽएव चत्वारोऽर्का ऽएते चत्वारोऽर्काणामर्कः ॥ ४ ॥ अथ ह वै यत्तदुवाच वेत्थार्कमिति पुरुषꣳ हैव तदुवाच । वेत्थार्कपर्णे ऽइति कर्णौ हैव तदुवाच वेत्थार्कपुष्पे इत्यऽक्षिणी हैव तदुवाच वेत्यार्ककोश्यावितिर्नासिके हैव तदुवाच वेत्थार्कसमुद्गावित्योष्ठौ हैव तदुवाच वेत्थार्कधाना ऽइति दन्तान्हैव तदुवाच वेत्थार्काष्ठीलामिति जिह्वाꣳ हैव तदुवाच वेत्थार्कमूलमित्यन्नꣳ हैव तदुवाच स ऽएषोऽग्निरर्को यत्पुरुषः स यो हैतमेवमग्निमर्कम्पुरुषमुपास्तेऽयमहमग्निरर्कोऽस्मीति विद्यया हैवास्यैषऽआत्मन्नग्निरर्कश्चितो भवति ॥ ५ ॥ (A)

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ यजुषो विधायकब्राह्मणयोर्निर्वचनम् ]

( तत्राधिदेवाध्यात्मभेदेनार्थप्रतिपादनम्, उपनिषदः स्तुतिः, तत्स्वरूपनिर्वचनादि, उपांश्वनुष्ठानप्रतिपादनं च )

अयं वाव यजुर्योऽयम्पवते । एष हि यन्नेवेदꣳ सर्वञ्जनयत्येतं यन्तमिदमनु प्रजायते तस्माद्वायुरेव यजुः ॥ १ ॥ अयमेवाकाशो जूः । यदिदमन्तरिक्षमेतꣳ ह्याकाशमनु जवते तदेतद्यजुर्वायुश्चान्तरिक्षञ्च यच्च जूश्च तस्माद्यजुरेष ऽएव यदेष एति तदेतद्यजुर्ऋक्सामयोः

(A) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा—का० श० १२ ४ ४ ।

प्रतिष्ठितमृक्सामे वहतस्तस्मात्समानैरेवाध्वर्युर्ग्रहैः कर्म्म करोत्यन्यान्यन्यानि स्तुतशस्त्राणि भवन्ति यथा पूर्वाभ्यां स्यत्त्वापराभ्यां धावयेत्तादृक्तत् ॥ २ ॥ अग्निरेव पुरः । अग्निं हि पुरस्कृत्येमाः प्रजा उपासत आदित्य एव चरणं यदा ह्येवैष उदेत्यथेदं सर्वञ्चरति तदेतद्यजुः सपुरश्चरणमधिदेवतम् ॥ ३ ॥ अथाध्यात्मम् । प्राण एव यजुः प्राणो हि यन्नेवेदं सर्वञ्जनयति प्राणं यन्तमिदमनु प्रजायते तस्मात्प्राण एव यजुः ॥ ४ ॥ अयमेवाकाशो जूः । योऽयमन्तरात्मन्नाकाश एतं ह्याकाशमनु जवते तदेतद्यजुः प्राणश्चाकाशश्च यच्च जूश्च तस्माद्यजुः प्राण एव यत्प्राणो ह्येति ॥ ५ ॥* अन्नमेव यजुः । अन्नेन हि जायतेऽन्नेन जवते तदेतद्यजुरन्ने प्रतिष्ठितमन्नँ वहति तस्मात्समान एव प्राणेऽन्यदन्यदन्नन्धीयते ॥ ६ ॥ मन एव पुरः । मनो हि प्रथमम्प्राणानाञ्चक्षुरेव चरणञ्चक्षुषा ह्ययमात्मा चरति तदेतद्यजुः सपुरश्चरणमधिदेवतञ्चाध्यात्मञ्च प्रतिष्ठितः स यो हैतदेवं यजुः सपुरश्चरणमधिदेवतञ्चाध्यात्मञ्च प्रतिष्ठितं वेद ॥ ७ ॥ अरिष्टो हैवानार्त्तः । स्वस्ति यज्ञस्योदृचमश्नुतेऽथो[2] स्वानां श्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य एवं वेद ॥ ८ ॥ य उ हैवँविदं स्वेषु प्रतिप्रति-

(१) 'ज' पुस्तके 'स्यत्वा' इत्यत्र 'स्यन्त्वा' इति पाठो दृश्यते । स तु न समीचीन, 'स्यन्दू' प्रस्रवणे इत्यस्मात्, क्त्वा प्रत्यये, उदितोऽऽदिड्भावपक्षे 'नित्य स्कन्दिस्यन्दो' (पा० ६।४।३१) इति नकारलोपात् ।

* अत्र शतम् ५३०० ।

(२) 'ज' पुस्तके 'ऽथो' नास्ति ।

र्व्वुभूयति न हैवालम्भार्व्येभ्यो भवत्यथ य ऽएवैतमनु-
भवति यो वै तमनु भार्य्यान्बुभूर्षति स हैवालम्भा-
र्य्येभ्यो भवति ॥ ९ ॥ तदेतज्ज्येष्ठम्ब्रह्म । न ह्येतस्मा-
त्किञ्चन ज्यायोऽस्ति ज्येष्ठो ह वै श्रेष्ठः स्वानाम्भवति
य ऽएवं वेद ॥ १० ॥ तदेतद्ब्रह्मापूर्वमपरवत् । स यो
हैतदेवम्ब्रह्मापूर्वमपरवद्वेद न हास्मात्कश्चन श्रेयान्त्स-
मानेषु भवति श्रेयाꣳसः श्रेयाꣳसो हैवास्मादपरपुरुषा
जायन्ते तस्माद्योऽस्माज्ज्यायान्त्स्याद्दिशोऽस्मात्पूर्वा
ऽइत्युपासीत तथो हैनन्न हिनस्ति ॥ ११ ॥ तस्य वा
ऽएतस्य यजुषः । रस ऽएवोपनिषत्तस्माद्यावन्मात्रेण
यजुषाद्ध्वर्युर्ग्रहङ्गृह्णाति स ऽउभे स्तुतशस्त्रे ऽअनुविभव-
त्युभे स्तुतशस्त्रे ऽअनुव्यश्नुते तस्माद्यावन्मात्रऽइवा-
न्नस्य रसः सर्वमन्नमवति सर्वमन्नमनुव्येति ॥ १२ ॥
तृप्तिरेवास्य गतिः । तस्माद्यदान्नस्य तृप्यत्यथ स गत
ऽइव मन्यत ऽआनन्द ऽएवास्य विज्ञानमात्मानन्दात्मानो
हैव सर्वे देवाः स हैषैव देवानामद्धाविद्या स ह स न
मनुष्यो य ऽएवंविद्देवानाꣳ हैव स एकः ॥ १३ ॥ एतद्ध
स्म वै तद्विद्वान्प्रियव्रतो रौहिणायन ऽआह । वायुं वान्त-
मानन्दस्त ऽआत्मेतो वा वाहीतो वेति स ह स्म तथैव
वाति तस्माद्यान्देवेष्वाशिषमिच्छेदेतेनैवोपतिष्ठेतानन्दो व
ऽआत्मासौ मे कामः स मे समृध्यतामिति सद्ध हैवास्मै
स काम ऽऋध्यते यत्कामो भवत्येताꣳ ह वै तृप्तिमेताङ्ग-
तिमेतमानन्दमेतमात्मानमभिसम्भवति य ऽएवं वेद

॥ १४ ॥ तदेतद्यजुरुपाᳬंश्वनिरुक्तम् । प्राणो वै यजुरुपाᳬंश्वायतनो वै प्राणस्तद्य एनन्निरब्रुवन्तम्ब्रूयादनिरुक्तान्देवताम्निरवोचत्प्राण एनꣳ हास्यतीति तथा हैव स्यात् ॥ १५ ॥ तस्य ह यो निरुक्तमाविर्भावं वेद । आविर्भवति कीर्त्या यशसोपाᳬंशु यजुषाद्धस्थुंग्रहं गृह्णाति गृहीतꣳ सन्न आविर्भवत्युपाᳬंशु यजुषाग्निञ्चिनोति चितꣳ सञ्चित आविर्भवत्युपाᳬंशु यजुषा हविर्निर्वपति शृतन्निष्ठितमाविर्भवत्येवं यत्किञ्चोपाᳬंशु करोति कृतन्निष्ठितमाविर्भवति तस्य ह य एतमेवन्निरुक्तमाविर्भावं वेदाविर्भवति कीर्त्या यशसा ब्रह्मवर्चसेन क्षिप्र उ हैवाविदङ्गच्छति स ह यजुरेव भवति यजुषैनमाचक्षते ॥१६॥(B)

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ प्रजापतेर्मोक्तृत्वमाहवनीयरूपत्वम् , रुक्मपुरुषयोरिन्द्राग्न्यात्मना स्तुत्यादिकञ्च ]

प्रजापतिं विस्रस्तम् । यत्र देवाः समस्कुर्वꣳस्तमुखायां योनौ रेतो भूतमसिञ्चन्योनिर्वा उखा तस्मा एतꣳ संवत्सरेऽन्नꣳ समस्कुर्वन्त्योऽयमग्निश्चितस्तदात्मना पर्यदधुस्तदात्मना परिहितमात्मैवाभवत्तस्मादन्नमात्मना परिहितमात्मैव भवति ॥ १ ॥ तथैवैतद्यजमानः । आत्मा-

(B) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० ११. ३. ५ ।

नमुखायां स्योनौ रेतो भूतꣳ सिञ्चति योनिर्वा ऽउखा तस्मा ऽएतत्सꣳवत्सरेऽन्नꣳ संस्करोति योऽयमग्निश्चितस्तदात्मना परिदधाति तदात्मना परिहितमात्मैव भवति तस्मादन्नमात्मना परिहितमात्मैव भवति ॥ २ ॥ तन्निदधाति । वौषडिति वौगिति वा ऽएष षडितीदꣳ षड्चितिकमन्नङ्कृत्वास्मा ऽअपिदधात्यात्मसम्मितं यद्वै वा ऽआत्मसम्मितमन्नन्तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥ ३ ॥ स ऽएष ऽएवार्कः । यमेतमत्राग्निमाहरन्ति तस्यैतदन्नङ्क्यं योऽयमग्निश्चितस्तदुक्थ्यं यजुष्ट ऽएष ऽएव महाँस्तस्यैतदन्नं व्रतन्तन्महाव्रतꣳ साम त ऽएष ऽउ ऽएवोक्तस्यैतदन्नन्थन्तदुक्थमर्कस्तदेतदेकꣳ स त्रेधा ख्यायते ॥ ४ ॥ अथेन्द्राग्नी वा ऽअसृज्येताम् । ब्रह्म च क्षत्रञ्चाग्निरेव ब्रह्मेन्द्रः क्षत्रन्तौ सृष्टौ नानेवास्तान्तावब्रूतान्न वा ऽइत्थꣳ सन्तौ शक्ष्यावः प्रजाः प्रजनयितुमेकꣳ रूपमुभावसावेति तावेकꣳ रूपमुभावभवताम् ॥ ५ ॥ तौ यौ ताविन्द्राग्नी । एतौ तौ रुक्मश्च पुरुषश्च रुक्म ऽएवेन्द्रः पुरुषोऽग्निस्तौ हिरण्मयौ भवतो ज्योतिर्वै हिरण्यञ्ज्योतिरिन्द्राग्नी ऽअमृतꣳ हिरण्यममृतमिन्द्राग्नी ॥ ६ ॥ तावेताविन्द्राग्नी ऽएव चिन्वन्ति । यद्धि किञ्चेष्टकमग्निरेव तत्तस्मात्तदग्निना पचन्ति यद्धि किञ्चाग्निना पचन्त्यग्निरेव तदथ यत्पुरीषꣳ स ऽइन्द्रस्तस्मात्तदग्निना न पचन्ति नेदग्निरेवासन्नेन्द्र ऽइति तस्मादेताविन्द्राग्नी ऽएव चितौ ॥ ७ ॥

अथ यश्चितेऽग्निर्निधीयते । तदेकᳪ रूपमुभौ भवतस्त-
स्मात्तावेतेनैव रूपेणेमाः प्रजाः प्रजनयतः सैषैकैवेष्ट-
काग्निरेव तामेष सर्वोऽग्निरभिसम्पद्यते सैवेष्टकासम्पत्त-
देतदेकमेवाक्षरं वौगिति तदेष सर्वोऽग्निरभिसम्पद्यते
सैवाक्षरसम्पत् ॥ ८ ॥ तद्धैतत्पश्यन्नृषिरभ्यनूवाद । भूत-
म्भविष्यत्प्रस्तौमि महद्ब्रह्मैकमक्षरम्बहु ब्रह्मैकमक्षरमित्ये-
तद्ध्येवाक्षरᳪ सर्वे देवाः सर्वाणि भूतान्यभिसम्पद्यन्ते
तदेतद्ब्रह्म च क्षत्रञ्चाग्निरेव ब्रह्मेन्द्रः क्षत्रमिन्द्राग्नी वै
विश्वे देवा विड् विश्वे देवास्तदेतद्ब्रह्म क्षत्रं विट्
॥ ९ ॥ एतद्ध स्म वै तद्विद्वाञ्छ्यापर्णः सायका-
यन ऽआह । यद्वै म ऽइदङ्कर्म्म समाप्स्यत ममैव
प्रजा सल्वानाᳪ राजानोऽभविष्यन्मम ब्राह्मणा
मम वैश्या यत्तु म ऽएतावत्कर्म्मणः समापि तेन
म ऽउभयथा सल्वान्प्रजातिरेक्ष्यत ऽइति स ऽएष
ऽएव श्श्रीरेष यश ऽएषोऽन्नादः ॥ १० ॥ एतद्ध वै तच्छा-
ण्डिल्यः । वामकक्षायणाय प्रोच्योवाच श्रीमान्यशस्व्य-
न्नादो भविष्यसीति श्श्रीमान्ह वै यशस्व्यन्नादो भवति
य ऽएवं वेद ॥ ११ ॥ स ऽएषोऽग्निः प्रजापतिरेव । ते
देवा ऽएतमग्निम्प्रजापतिᳪ सᳪस्कृत्याथास्मा ऽएतत्सᳪव-
त्सरेऽन्नᳪ समस्कुर्वंस्त्य ऽएष महाव्रतीयो ग्रहः ॥ ॥ १२ ॥
तमदश्युर्ग्रहेण गृह्णाति । यद्गृहणाति तस्माद् ग्रहस्त-

॥ कात्यायनमहर्षिणा महाव्रतीयग्रहण सूत्रितम्, महाव्रतयज्ञिनश्चेत् ' 'प्राजापत्य उपयामगृहीत' 'गृह गृह्णाति 'स्वन ऽअन्न आयवसं विश्वकर्मेन्नती' वा' का० श्रौ० सू० अ० १२ । कं० २ सू० ११, १२, १३ ।

स्मिन्नुद्गाता महाव्रतेन रसन्दधाति सर्वाणि हैतानि सामानि यन्महाव्रतन्तदस्मिन्त्सर्वैः सामभी रसन्दधाति तस्मिन्होता महतोक्थेन रसन्दधाति सर्वा हैता ऽऋचो यन्महदुक्थन्तदस्मिन्त्सर्वाभिर्ऋग्भी रसन्दधाति ॥ १३ ॥ ते यदा स्तुवते यदानुशꣳसति । अथास्मिन्नेतं वषट्कृते जुहोति वौगिति वा ऽएष षडितीदꣳ षड्विधमन्नꣳ कृत्वास्मा ऽअपिदधात्यात्मसम्मितं यदु वा ऽआत्मसम्मितमन्नन्तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥ १४ ॥ स ऽएष ऽएवार्कः । योऽयमग्निश्चितस्तस्यैतदन्नꣳ क्यमेव महाव्रतीयो ग्रहस्तदुक्थ्यं यजुष्ट ऽएष ऽएव महाँस्तस्यैतदन्नं व्रतन्तन्महाव्रतꣳ सामत ऽएष ऽउ ऽएवोक्तस्यैतदन्नं* थन्तदुक्थमृक्तस्तदेतदेकꣳ स त्रेधा ख्यायते ॥ १५ ॥ स ऽएष सँवत्सरः प्रजापतिरग्निः । तस्यार्द्धमेव साविञ्जाण्यर्द्धं वैश्वकर्म्मणान्यष्टावेवास्य कलाः साविञ्जाण्यष्टौ वैश्वकर्म्मणान्यथ यदेतदन्तरेण कर्म्म क्रियते स ऽएव सप्तदशः प्रजापतिर्यो वै कला मनुष्याणामक्षरन्तद्देवानाम् ॥ १६ ॥ तद्वै लोमेति द्वे ऽअक्षरे । त्वगिति द्वे ऽअसृगिति द्वे मेद ऽइति द्वे माꣳसमिति द्वे स्नावेति द्वे ऽअस्थीति द्वे मज्जेति द्वे ताः षोडश कला ऽअथ य ऽएतदन्तरेण प्राणः सञ्चरति स ऽएव सप्तदशः प्रजापतिः ॥ १७ ॥ तस्मा ऽएतस्मै प्राणाय । एताः षोडश कला ऽअन्नमभिह-

* 'ग-अ' पुस्तकयो 'एवोक्तद्यं' इति पाठ समुपलभ्यते ।

रन्ति ता यदानभिहृत्तुन्भ्रियन्तेऽथैता ऽएव जग्ध्वोत्क्रामति तस्माद्धैतदुशिशिपतस्तृप्रमिव भवति प्राणैरद्यमानस्य तस्माद्धैतदुपतापी कृश ऽइव भवति प्राणैर्हि जग्धो भवति ॥ १८ ॥ तस्मा ऽएतस्मै सप्तदशाय प्रजापतये । एतत्सप्तदशमन्नꣳ समस्कुर्वन्य ऽएष सौम्योऽध्वरोऽथ या ऽअस्य ताः षोडश कला ऽएते ते षोडशर्त्विजस्तस्मान्न सप्तदशमृत्विजङ्कुर्वीत नेदतिरेचयानीत्यथ य ऽएवात्र रसो या ऽआहुतयो हूयन्ते तदेव सप्तदशमन्नम् ॥ १९ ॥ ते यदा स्तुवते यदानुशꣳसति । अथास्मिन्नेतं वषट्कृते जुहोति वौगिति वा ऽएष षडितीदꣳ षड्विधमन्नङ्कृत्वास्मा ऽअपिदधात्यात्मसम्मितं य्यद्वा ऽआत्मसम्मितमन्नन्तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति ॥ २० ॥ स ऽएष ऽएवार्कः । योऽयमग्निश्चितस्तस्यैतदन्नङ्क्यमेष सौम्योऽध्वरस्तदुक्थꣳ य्यजुष्ट ऽएष ऽएव महाꣳस्तस्यैतदन्नं व्रतन्तन्महाव्रतꣳ सामत ऽएष ऽउ ऽएवोक्थतस्यैतदन्नन्थन्तदुक्थमृक्तस्तदेतदेकꣳ स त्रेधा रख्यायते स ऽएतेनान्नेन सहोर्द्ध्व ऽउदक्रामत्स यः स ऽउदक्रामदसौ स ऽआदित्योऽथ येन तेनान्नेन सहोदक्रामदेष स चन्द्रमाः ॥ २१ ॥ स ऽएष ऽएवार्को य ऽएष तपति । तस्यैतदन्नङ्क्यमेष चन्द्रमास्तदुक्थꣳ य्यजुष्ट ऽएष ऽएव महाꣳस्तस्यैतदन्नं व्रतन्तन्महाव्रतꣳ सामत ऽएष

(१) "षोडशर्त्विजो महोदयात् होत्रध्वर्यु ब्राह्मणच्छꣳसि-प्रस्तोतृ-मैत्रावरुण-अतिप्रस्थातृ-पोतृ-प्रतिहर्त्रच्छावाक-नेष्ट्राग्नीध्र-सुब्रह्मण्य-ग्रावस्तुदुन्नेतॄन् वृणीते" का० श्रौ० सू० ५. १. ७ ।

ऽउ ऽएवोक्तस्यैतदन्नन्थन्तदुक्क्थमृक्तस्तदेतद्वेकंः स त्रेधा व्ख्यायत ऽइत्यधिदेवतम् ॥ २२ ॥ अथाद्ध्यात्मम् । प्प्राणो वा ऽअर्कस्तस्यान्नमेव क्क्यन्तदुक्क्यं व्ख्यजुष्ट्टं प्प्राण ऽएव महाँस्तस्यान्नमेव व्व्रतन्तन्महाव्रतं सामतं प्प्राण ऽउ ऽएवोक्क्तस्यान्नमेव थन्तदुक्क्थमृक्तस्तदेतद्वेकं स त्रेधा व्ख्यायते स ऽएष ऽएवैषोऽधिदेवतमयमद्ध्यात्मम् ॥ २३ ॥ (B)

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥

कण्डिकासंख्या ॥ १०९ ॥



सँवत्सरो वै प्प्रजापतिरग्ग्निः । सोमो राजा च...
स ह स्वयमेवात्मानम्प्रोचे यज्ञवचसे राजस्तम्बायनाय यावन्ति वात्र मे ज्योतीꣳषि तावत्यो मऽइष्टका इति ॥ १ ॥ तस्य वा ऽएतस्य सँवत्सरस्य प्प्रजापतेः । सप्त च शतानि विꣳशतिश्चाहोरात्राणि ज्योतीꣳषि ता ऽइष्टकाः षष्टिश्च त्रीणि च शतानि परिश्रितः षष्टिश्च त्रीणि च शतानि यजुष्मत्यः सोऽयꣳ सँवत्सरः प्प्रजापतिः सर्वाणि भूतानि ससृजे यच्च प्प्राणि यच्चाप्प्राणमुभयान्देवमनुष्यान्त्स सर्वाणि भूतानि सृष्ट्वा रिरिचान ऽइव मेने स मृत्योर्व्विभयाञ्चकार ॥ २ ॥ स हेक्षाञ्चक्रे । कथ-

(B) एतद्ब्राह्मणस्य विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १२ ४ १ ।

न्न्वहुमिमानि सर्वाणि भूतानि पुनरात्मन्नावपेय पुनरात्मन्दधीय कथन्न्वहमेवैषाथं सर्वेषाम्भूतानाम्पुनरात्मा स्यामिति ॥ ३ ॥ स द्वेधात्मानं व्यौहत् । पष्टिश्च त्रीणि च शतान्यन्यतरस्येष्टका ऽअभवन्नेवमन्यतरस्य स न व्याप्नोत् ॥ ४ ॥ त्रीनात्मनोऽकुरुत । तिस्रस्तिस्रोऽशीतय ऽएकैकस्येष्टका ऽअभवन्स नैव व्याप्नोत् ॥ ५ ॥ चतुर ऽआत्मनोऽकुरुत । अशीतिशतेष्टकान्स नैव व्याप्नोत् ॥ ६ ॥ पञ्चात्मनोऽकुरुत । चतुश्चत्वारिꣳशद्दशतमेकैकस्येष्टका ऽअभवन्स नैव व्याप्नोत् ॥ ७ ॥ षडात्मनोऽकुरुत । विꣳशतिशतेष्टकान्स नैव व्याप्नोन्न सप्तधा व्यभवत् ॥ ८ ॥ अष्टावात्मनोऽकुरुत । नवतीष्टकान्स नैव व्याप्नोत् ॥ ९ ॥ नवात्मनोऽकुरुत । अशीतीष्टकान्स नैव व्याप्नोत् ॥ १० ॥ दशात्मनोऽकुरुत । द्वासप्ततीष्टकान्स नैव व्याप्नोन्नैकादशधा व्यभवत् ॥ ११ ॥ द्वादशात्मनोऽकुरुत । षष्टीष्टकान्स नैव व्याप्नोन्न त्रयोदशधा व्यभवन्न चतुर्दशधा ॥ १२ ॥ पञ्चदशात्मनोऽकुरुत । अष्टाचत्वारिꣳशदिष्टकान्स नैव व्याप्नोत् ॥ १३ ॥ षोडशात्मनोऽकुरुत । पञ्चचत्वारिꣳशदिष्टकान्स नैव व्याप्नोन्न सप्तदशधा व्यभवत् ॥ १४ ॥ अष्टादशात्मनोऽकुरुत । चत्वारिꣳशदिष्टकान्स नैव व्याप्नोन्नैकान्न विꣳशतिधा व्यभवत् ॥ १५ ॥ विꣳशतिमात्मनोऽकुरुत । षट्त्रिꣳशदिष्टकान्स नैव व्याप्नोन्नैक-

विꣳशतिधा व्व्यभवन्न द्वाविꣳशतिधा न त्रयोविꣳशतिधा ॥ १६ ॥ चतुर्विꣳशतिमात्मनोऽकुरुत । त्रिꣳशदिष्टकान्त्सोऽत्यतिष्ठत पञ्चदशे व्व्यूहे तद्यत्पञ्चदशे व्व्यूहेऽतिष्ठत तस्मात्पञ्चदशापूर्य्यमाणस्य रूपाणि पञ्चदशापक्षीयमाणस्य ॥ १७ ॥ अथ यच्चतुर्विꣳशतिमात्मनोऽकुरुत । तस्माच्चतुर्विꣳशत्यर्द्धमासः सँव्वत्सरः स एतैश्चतुर्विꣳशत्या त्रिꣳशदिष्टकैरात्मभिर्न व्व्यभवत्स पञ्चदशाह्नो रूपाण्यपश्यदात्मनस्तन्वो मुहूर्त्ताँल्लोकम्पृणाः पञ्चदशैव रात्रेस्तद्यन्मुहु त्रायन्ते तस्मान्मुहूर्त्ता अथ यत्क्षुद्राः सन्त इमाँल्लोकानापूरयन्ति तस्माल्लोकम्पृणाः ॥ १८ ॥ एष वा इदꣳ सर्वम्पचति । अहोरात्रैरर्द्धमासैर्म्मासैरृतुभिः सँव्वत्सरेण तदमुना पक्वमयम्पचति पक्वस्य पक्तेति ह स्माह भारद्वाजोऽग्निममुना हि पक्वमयम्पचतीति ॥ १९ ॥ तानि सँव्वत्सरे । दश च सहस्राण्यष्टौ च शतानि समपद्यन्त सोऽत्यतिष्ठत दशसु च सहस्रेष्वष्टासु च शतेषु ॥ २० ॥ अथ सर्वाणि भूतानि पर्य्यैक्षत् । स त्रय्यामेव विद्यायाꣳ सर्वाणि भूतान्यपश्यदत्र हि सर्वेषाञ्छन्दसामात्मा सर्वेषाꣳ स्तोमानाꣳ सर्वेषाम्प्राणानाꣳ सर्वेषान्देवानामेतद्वा अस्त्येतद्ध्यमृतं यद्ध्यमृतन्तद्ध्यस्त्येतदु तद्यन्मर्त्यम् ॥ २१ ॥ स ऐक्षत प्रजापतिः । त्रय्यां वाव विद्यायाꣳ सर्वाणि भूतानि हन्त त्रयीमेव विद्यामात्मानमभिसंस्करवा इति ॥ २२ ॥ स ऋचो व्व्यौहत् । द्वादश बृहतीसहस्राण्येतावत्यो हर्चो

याः प्रजापतिसृष्टास्तास्त्रिंशत्तमे व्यूहे पङ्क्तिष्वतिष्ठन्त
ता यत्त्रिंशत्तमे व्यूहेऽतिष्ठन्त तस्मात्त्रिंशन्मासस्य
रात्रयोऽथ यत्पङ्क्तिषु तस्मात्पाङ्क्तः* प्रजापतिस्ता अष्टा-
शतं शतानि पङ्क्तयोऽभवन् ॥ २३ ॥ अथेतरौ वेदौ
व्यौहत् । द्वादशैव बृहतीसहस्राण्यष्टौ यजुषां चत्वारि
साम्नामेतावद्धैतयोर्वेदयोर्यत्प्रजापतिसृष्टं तौ त्रिंशत्तमे
व्यूहे पङ्क्तिष्वतिष्ठेतां तौ यत्त्रिंशत्तमे व्यूहेऽतिष्ठेतां त-
स्मात्त्रिंशन्मासस्य रात्रयोऽथ यत्पङ्क्तिषु तस्मात्पाङ्क्तः
प्रजापतिस्ता अष्टाशतमेव शतानि पङ्क्तयोऽभवन्
॥ २४ ॥ ते सर्वे त्रयो वेदाः । दश च सहस्राण्यष्टौ च
शतान्यशीतीनामभवन्त्स मुहूर्त्तेन-मुहूर्त्तेनाशीतिमाप्नो-
न्मुहूर्त्तेन-मुहूर्त्तेनाशीतिः समपद्यत ॥ २५ ॥ स एषु
त्रिषु लोकेषूखायाम् । योनौ रेतो भूतमात्मानमसिञ्च
च्छन्दोमयं स्तोममयं प्राणमयं देवतामयं तस्यार्द्धमासे
प्रथम आत्मा समस्क्रियत दवीयसि परो दवीयसि
परः संवत्सर एव सर्वः कृत्स्नः समस्क्रियत
॥ २६ ॥ तद्यत्परिश्रितमुपाधत्त । तद्रात्रिमुपाधत्त
तदनु पञ्चदश मुहूर्त्तान्मुहूर्त्ताननु पञ्चदशाशीतीरथ यद्य-
जुष्मतीमुपाधत्त तदहरुपाधत्त तदनु पञ्चदश मुहूर्त्ता-
न्मुहूर्त्ताननु पञ्चदशाशीतीरेवमेतान्त्रयीं विद्यामात्मन्ना-
वपतात्मन्नकुरुत सोऽत्रैव सर्वेषाम्भूतानामात्माभवच्छन्दोमयः
स्तोममयः प्राणमयो देवतामयः स एतन्मय एव

* पाङ्क्तः नाम पाङ्क्तसंख्यापन्नम् [illegible] प्रजापति[illegible] [illegible] पङ्क्तिचितय इति पद्य [illegible] । (१) ॥ 'अ' पुस्तके 'ऽशी०'

भूत्वोर्द्ध्व ऽउदक्क्रामत्स यः स ऽउदक्क्रामदेष स चन्द्रमाः
॥ २७ ॥ तस्यैषा प्रतिष्ठा । य ऽएष तपत्येतस्मा-
देवाध्यचीयतैतस्मिन्नध्यचीयतात्मन ऽएवैनन्तन्निरमि-
मीतात्मनः प्राजनयत् ॥ २८ ॥ स यदग्निञ्चेष्यमाणो
दीक्षते । यथैव तत्प्रजापतिरेषु त्रिषु लोकेषूखायां योनौ
रेतो भूतमात्मानमसिञ्चदेवमेवैष ऽएतदात्मानमुखायां
योनौ रेतो भूतं सिञ्चति छन्दोमयं स्तोममयं प्राण-
मयन्देवतामयन्तस्यार्द्धमासे प्रथम ऽआत्मा संस्क्रियते द्वी-
यसि परो द्वीयसि परः संवत्सर ऽएव सर्वः कृत्स्नः संस्क्रि-
यते ॥ २९ ॥ तद्यत्परिश्रितमुपधत्ते । तद्रात्रिमुपधत्ते तदनु
पञ्चदश मुहूर्त्तान्मुहूर्त्तानन्नु पञ्चदशाशीतीरथ यद्यजुष्मती-
रुपधत्ते तदहरुपधत्ते तदनु पञ्चदश मुहूर्त्तान्मुहूर्त्तानन्नु पञ्च-
दशाशीतीरेवमेतान्त्रयीं विद्यामात्मन्नावपत ऽआत्मन्कुरुते
सोऽत्रैव सर्वेषाम्भूतानामात्मा भवति छन्दोमय स्तोम-
मयः प्राणमयो देवतामयः स ऽएतन्मय ऽएव भूत्वोर्द्ध्व
ऽउत्क्रामति ॥ ३० ॥ तस्यैषा प्रतिष्ठा । य ऽएष तपत्ये-
तस्मादेवाधिचीयत ऽएतस्मिन्नधिचीयत ऽआत्मन ऽएवै-
नन्तन्निर्म्मिमीत ऽआत्मनः प्रजनयति स यदैवंविदस्माल्लो-
कात्प्रैत्यथैतमेवात्मानमभिसम्भवति छन्दोमयं स्तोमम-
यम्प्राणमयन्देवतामयं स ऽएतन्मय ऽएव भूत्वोर्द्ध्व ऽउत्क्रा-
मति य ऽएवं विद्वानेतत्कर्म्म कुरुते यो वैतदेवं वेद ॥३१॥(E)

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



(E) एतद्ब्राह्मणगता विषया अन्यत्राप्युपलभ्यन्ते यथा—श० ब्रा० ११. ४. १ ।

[ संवत्सररूपप्रजापतेर्मृत्य्वन्तरूपत्वम् , तद्रूपोपासनस्य फलम् , अग्निचयनस्यामृतलक्षणं फलं, परिश्रिद्यजुष्मती-लोकम्पृणेष्टकानां संख्या च ] .

एष वै मृत्युर्यत्संवत्सरः । एष हि मर्त्यानामहोरात्राभ्यामायुः क्षिणोत्यथ म्रियन्ते तस्मादेष एव मृत्युः स यो हैतम्मृत्युं संवत्सरं वेद न हास्यैष पुरा जरसोऽहोरात्राभ्यामायुः क्षिणोति सर्वं हैवायुरेति ॥ १ ॥ एष उ एवान्तकः । एष हि मर्त्यानामहोरात्राभ्यामायुषोऽन्तङ्गच्छत्यथ म्रियन्ते तस्मादेष एवान्तकः स यो हैतमन्तकम्मृत्युं संवत्सरं वेद न हास्यैष पुरा जरसोऽहोरात्राभ्यामायुषोऽन्तङ्गच्छति सर्वं हैवायुरेति ॥ २ ॥ ते देवाः । एतस्मादन्तकान्मृत्योः संवत्सरात्प्रजापतेर्बिभयाञ्चक्रुर्यद्वै नोऽयमहोरात्राभ्यामायुषोऽन्तन्न गच्छेदिति ॥ ३ ॥ त एतान्यज्ञक्रतूंस्तेनिरे । अग्निहोत्रन्दर्शपूर्णमासौ चातुर्मास्यानि पशुबन्धं सौम्यमध्वरन्त एतैर्यज्ञक्रतुभिर्यजमाना नामृतत्वमानशिरे ॥ ४ ॥ ते हाप्यग्निञ्चिक्यिरे । ते ऽपरिमिता एव परिश्रित उपदधुरपरिमिता यजुष्मतीरपरिमिता लोकम्पृणा यथेदमप्येतर्ह्येक उपदधतीति देवा अकुर्वन्निति ते [redacted] नैवामृतत्वमानशिरे ॥ ५ ॥ तेऽर्चन्तः श्राम्यन्तश्चेरुः । अमृतत्वमवरुरुत्समानास्तान्ह प्रजापतिरुवाच न वै मे सर्वाणि रूपाण्युपधत्थेति वैव रेचयथ न वाभ्यापयथ तस्मान्नामृता भवथेति ॥ ६ ॥ ते होचुः । तेभ्यो वै

( १ ) अवरोद्धुकामाः । ( २ ) 'ग' 'ज' पुस्तकयोः 'पतथा' इति पाठः समुपलभ्यते ।

नस्त्वमेव तद् ब्रूहि यथा ते सर्वाणि रूपाण्युपदधामेति ॥७॥
स होवाच । षष्टिश्च त्रीणि च शतानि परिश्रित ऽउप-
धत्त षष्टिश्च त्रीणि च शतानि यजुष्मतीरधि षट्त्रिंश-
शतमथ लोकम्पृणा दश च सहस्राण्यष्टौ च शतान्युप-
धत्ताथ मे सर्वाणि रूपाण्युपधास्यथाथामृता भविष्य-
थेति ते ह तथा देवा ऽउपदधुस्ततो देवा ऽअमृता ऽआसुः
॥ ८ ॥ स मृत्युर्देवानब्रवीत् । इत्थमेव सर्वे मनुष्या
ऽअमृता भविष्यन्त्यथ को मह्यम्भागो भविष्यतीति ते
होचुर्नातोऽपरः कश्चन सह शरीरेणामृतोऽसद्यदैवत्वमेत-
म्भागः हरासा ऽअथ व्यावृत्य शरीरेणामृतोऽसद्योऽमृतो-
ऽसद्विद्यया वा कर्म्मणा वेति यद्वै तदब्रुवन्विद्यया वा
कर्म्मणा वेत्येषा हैव सा विद्या यदग्निरेतदु हैव तत्कर्म्म
यदग्निः ॥ ९ ॥ ते य ऽएवमेतद्विदुः । ये वैतत्कर्म्म
कुर्वते मृत्वा पुनः सम्भवन्ति ते सम्भवन्त ऽएवामृतत्व-
मभिसम्भवन्त्यथ य ऽएवन्न विदुर्ये वैतत्कर्म्म न कुर्वते
मृत्वा पुनः सम्भवन्ति त ऽएतस्यैवान्नम्पुनः पुनर्भवन्ति
॥ १० ॥ स यदग्निञ्चिनुते । एतमेव तदन्तकम्मृत्युः
सँवत्सरम्प्रजापतिमग्निमाप्नोति यन्देवा ऽआप्नुवन्नेत-
मुपधत्ते यथैवैनमदो देवा ऽउपादधत ॥ ११ ॥ परिश्रि-
द्भिरेवास्य रात्रीराप्नोति । यजुष्मतीभिरहान्यर्द्धमासान्मा-
सानृतूँल्लोकम्पृणाभिर्म्मुहूर्त्तान् ॥ १२ ॥ तद्याः परिश्रितः ।
रात्रिलोकास्ता रात्रीणामेव साप्तिः क्रियते रात्रीणाम्प्रतिमा
ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै

त्रीणि च शतानि सँवत्सरस्य रात्रयस्तासामेकविꣳशतिङ्गार्हपत्ये परिश्रयति द्वाभ्यान्नाशीतिन्धिष्ण्येषु द्वे ऽएकषष्टे शते ऽआहवनीये ॥ १३ ॥ अथ यजुष्मत्यः दर्भस्तम्बो लोगेष्टकाः पुष्करपर्णꣳ रुक्मपुरुषौ स्रुचौ स्वयमातृण्णा दूर्वेष्टका द्वियजू रेतःसिचौ विश्वज्ज्योतिर्ऋतव्ये ऽअषाढा कूर्म्म ऽउलूखलमुसले ऽउखा पञ्च पशुशीर्षाणि पञ्चदशापस्याः पञ्च छन्दस्याः पञ्चाशत्प्राणभृतस्ता द्वाभ्यान्न शतम्प्रथमा चितिः ॥ १४ ॥ [अर्धप्रपाठः ४५] अथ द्वितीया । पञ्चाश्विन्यो द्वे ऽऋतव्ये पञ्च वैश्वदेव्यः पञ्च प्राणभृतः पञ्चापस्या ऽएकया न विꣳशतिर्वयस्यास्ता ऽएकचत्वारिꣳशद्द्वितीया चितिः ॥ १५ ॥ अथ तृतीया । स्वयमातृण्णा पञ्च दिश्या विश्वज्ज्योतिश्चतस्र ऽऋतव्या दश प्राणभृतः षट्त्रिꣳशच्छन्दस्याश्चतुर्दश वालखिल्यास्ता ऽएकसप्ततिस्तृतीया चितिः ॥ १६ ॥ अथ चतुर्थी । अष्टादश प्रथमा ऽअथ द्वादशाऽथ सप्तदश ताः सप्तचत्वारिꣳशच्चतुर्थी चितिः ॥ १७ ॥ अथ पञ्चमी । पञ्चासपत्नाश्चत्वारिꣳशद्विराज ऽएकया न त्रिꣳशत्स्तोमभागाः पञ्च नाकसदः पञ्च पञ्चचूडा ऽएकत्रिꣳशच्छन्दस्या ऽअष्टौ गार्हपत्या चितिरष्टौ पुनश्चितिर्ऋतव्ये विश्वज्ज्योतिर्विकर्णी च स्वयमातृण्णा चाश्मा पृश्निरग्निश्चितेऽग्निर्निधीयते ता ऽअष्टात्रिꣳशद् शतम्पञ्चमी चितिः ॥ १८ ॥ ताः सर्वाः पञ्चभिर्न चत्वारि शतानि । ततो याः षष्टिश्च त्रीणि च शतान्युद्धलोकास्ता

ऽअह्नामेव साप्तिः क्रियतेऽह्नाम्प्रतिमा ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि सँवत्सरस्याहान्यथ याः षट्त्रिंशत्पुरीषन्तासाᳪं षट्त्रिंशी ततो याश्चतुर्विंशतिरर्द्धमासलोकास्ता ऽअर्द्धमासानामेव साप्तिः क्रियतेऽर्द्धमासानाम्प्रतिमाथ या द्वादश मासलोकास्ता मासानामेव साप्तिः क्रियते मासानाम्प्रतिमा ता ऽउ द्वे-द्वे सहर्त्तुलोका ऽऋतूनाम-शून्यतायै ॥ १९ ॥ अथ या लोकम्पृणाः । मुहूर्त्तलो-कास्ता मुहूर्त्तानामेव साप्तिः क्रियते मुहूर्त्तानाम्प्रतिमा ता दश च सहस्राण्यष्टौ च शतानि भवन्त्येतावन्तो हि सँवत्सरस्य मुहूर्त्तास्तासामेकविंशतिङ्गार्हपत्य ऽउपदधाति द्वाभ्यान्नाशीतिन्धिष्ण्येष्वाहवनीय ऽइतरा ऽएतावन्ति वै सँवत्सरस्य रूपाणि तान्यस्यात्राप्तान्युपहितानि भवन्ति ॥ २० ॥ तद्धैके । आहवनीय ऽएवैताᳪं सम्पदमा-पिपयिपन्त्यन्ये वा ऽएतेऽग्नयश्चिताः किमन्यत्रोपहि-ता ऽइह सम्पदश्येमेति न तथा कुर्य्याद्दश वा ऽएतानग्नीं-श्चिनुतेऽष्टौ धिष्ण्ययानाहवनीयञ्च गार्हपत्यञ्च तस्मादा-हुर्विराडग्निरिति दशाक्षरा हि विराट् तानु सर्वानेकमिवै-वाचक्षतेऽग्निरित्येतस्य ह्येवैतानि सर्वाणि रूपाणि यथा सँवत्सरस्याहोरात्राण्यर्द्धमासा मासा ऽऋतव ऽएवमस्यै-तानि सर्वाणि रूपाणि ॥ २१ ॥ ते ये ह तथा कुर्वन्ति एतानि हास्य ते रूपाणि बहिर्द्धा कुर्वन्त्यथो पापवस्यसं कुर्वन्ति क्षत्राय विशम्प्रतिप्रतिनीम्प्रत्युद्यामिनीमाग्नी-

द्वीये वा ऽअश्मानम्पृश्निमुपदधात्यथ तं सम्पश्यति किमुतं सम्पश्यश्चितरा न सम्पश्येद्येनैव निर्ऋतिम्पाप्मानमपहते स ऽएकादशः ॥ २२ ॥ तदाहुः । कथमु ता ऽअत्र न सम्पश्यतीति न ह्येना ऽअभिजुहोत्याहुत्या वा ऽइष्टका सर्वा कृत्स्ना भवतीति ॥ २३ ॥ तदाहुः । कथमस्यैता ऽअनतिरिक्ता ऽउपहिता भवन्तीति वीर्य्यं वा ऽअस्यैता ऽअनतिरिक्तं वै पुरुषं वीर्य्यं स ह वा ऽएतं सर्वं कृत्स्नम्प्रजापतिं संस्करोति य ऽएवं विद्वानेतत्कर्म्म कुरुते यो वैतदेवं वेद ॥ २४ ॥ (A)

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ संवत्सररूपाग्नेः, तदवयवानाञ्च सहस्ररूपत्वेनोपासनम् , तत्फलञ्च ]

प्रजापतिं वै प्रजाः सृजमानम् । पाप्मा मृत्युरभिपरिजघान स तपोऽतप्यत सहस्रं सँवत्सरान्पाप्मानं विजिहासन् ॥१॥ तस्य तपस्तेपानस्य । एभ्यो लोमगर्त्तेभ्य ऽऊर्द्ध्वानि ज्योतीᳬष्यायँस्तद्यानि तानि ज्योतीᳬष्येतानि तानि नक्षत्राणि यावन्त्येतानि नक्षत्राणि तावन्तो लोमगर्त्ता यावन्तो लोमगर्त्तास्तावन्तः सहस्रसँवत्सरस्य मुहूर्त्ताः ॥ २ ॥ स सहस्रतमे सँवत्सरे । सर्वोऽत्यपवत स यः सोऽत्यपवतायमेव स वायुर्योऽयम्पवतेऽथ यन्तम्पाप्मानमत्यपवतेदन्तच्छरीरं ऽउ तस्मै मनुष्यो यः सहस्रसँवत्सरमवरुन्धीत विद्यया ह वा ऽएवंवित्सहस्रसँवत्सर·

(A) एतत्प्रदर्शयत्या विधया अन्यत्राऽप्युपलभ्यन्ते यथा— का० श० १९. ४ १ ।

मवरुन्द्धे ॥ ३ ॥ सर्वा ऽएवैता ऽइष्टकाः साहस्रीरुपासीत। रात्रिसहस्रेण रात्रिसहस्रेणैकैकाम्परिश्रितः सम्पन्नामुपासीताहःसहस्रेणाहःसहस्रेणैकैकामहर्भाजमर्द्धमाससहस्रेणार्द्धमाससहस्रेणैकैकामर्द्धमासभाजम्माससहस्रेण माससहस्रेणैकैकाम्मासभाजमृतुसहस्रेणर्तुसहस्रेणैकैकामृतुभाजम्मुहूर्त्तसहस्रेण मुहूर्त्तसहस्रेणैकैकाम्मुहूर्त्तभाजः सँवत्सरसहस्रेण सँवत्सरन्ते य ऽएतमेवमग्निः सँवत्सरेण सम्पन्नं विदुः सहस्रतमीᳬ हास्य ते कलां विदुरथ य ऽएनमेवन्न विदुर्न्न हास्य ते सहस्रतमीञ्चन कलां विदुरथ य ऽएवैवं वेद यो वैतत्कर्म्म कुरुते स हैवैतः सर्वङ्कृत्स्नम्प्राजापत्यमग्निमाप्नोति यम्प्रजापतिराप्नोत्तस्मादेवंवित्तप ऽएव तप्येत यद्वु ह वा ऽएवंवित्तपस्तप्यत ऽआमैथुनात्सर्वः हास्य तत्स्वर्ग्यँल्लोकमभिसम्भवति ॥ ४ ॥ तदेतदृचाभ्युक्तम् । 'न मृषाऽश्रान्तं यदवन्ति देवा' ऽइति न हैवैवं विदुषः किञ्चन मृषाऽश्रान्तम्भवति तथो हास्यैतत्सर्वन्देवा ऽअवन्ति ॥ ५ ॥ (B)

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

[ व्यष्टिरूपाग्निविषयोपासना ]

अथादेशा ऽउपनिषदाम् । वायुरग्निरिति ह शाकायनिन ऽउपासत ऽआदित्योऽग्निरित्यु हैक ऽआहुरथ ह स्माह श्लोमत्यो वा ह्यालिङ्ग्यो वा वायुरेवाग्निस्तस्माद्य-

(१) ऋ० सं० म० १, अ० ४ सू० ११ ।

(B) [illegible] सहस्रस्तम्भा [illegible] मधुमन्त्यनुते यथा—ऋ० सं० १२ ४, ४ ।

दैवाद्दर्ध्युरुत्तमङ्कुर्म्मं करोत्यथैतमेवाप्येतीति ॥ १ ॥ शाव्यायनिरु ह स्माह । सँवत्सर ऽएवाग्निस्तस्य वसन्तः शिरो ग्रीष्मो दक्षिणः पक्षो वर्षा ऽउत्तरः शरदृतुर्म्मध्यमात्मा हेमन्तशिशिरावृतू पुच्छम्प्रतिष्ठा वागग्निः प्राणो वायुश्चक्षुरादित्यो मनश्चन्द्रमाः श्रोत्रन्दिश ऽआपो मिथुनन्तपः प्रतिष्ठा मासाः पर्वाण्यर्द्धमासा नाड्योऽहोरात्राणि रजतसुवर्णानि पत्राणि स ऽएवन्देवानप्येतीति सँवत्सरोऽग्निरित्यु हैव विद्यादेतन्मयो भवतीति त्वेव विद्यात् ॥ २ ॥ चेलक ऽउ ह स्माह शाण्डिल्यायनः । इम ऽएव लोकास्तिस्रः स्वयमातृण्णवत्यश्चितयो यजमानश्चतुर्थी सर्वे कामाः पञ्चमीमाँश्च लोकान्त्संस्कुर्व्व ऽआत्मानञ्च सर्वाँश्च कामानित्येव विद्यादिति ॥ ३ ॥ (C)

चतुर्थाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

---

[ त्रयीमयादित्येऽग्न्युपासना ]

तस्य वा ऽएतस्याग्नेः । वागेवोपनिषद्वाचा हि चीयत ऽऋचा यजुषा साम्नेति नु दैव्याऽथ यन्मानुष्या वाचाहेतीदुङ्कुरुतेतीदुङ्कुरुतेति तदु ह तया चीयते ॥ १ ॥ सा वा ऽएषा वाक्त्रेधाविहिता । ऋचो यजूंषि सामानि तेनाग्निस्त्रेधाविहित ऽएतेन हि त्रयेण चीयतेऽप्युहैव-

(C) एतद्ब्राह्मणस्था विषया अन्यत्रापि समुपलभ्यन्ते यथा—का० श० १२. ४. ५।

न्त्रेधाविहित ऽइत्थꣳ ह त्वेवापि त्रेधाविहितो यदस्मिँ-
स्त्रेधाविहिता ऽइष्टका ऽउपधीयन्ते पुन्नाम्न्य स्त्रीनाम्न्यो
नपुꣳसकनाम्न्यस्त्रेधाविहितान्यु ऽएवेमानि पुरुषस्याङ्गानि
पुन्नामानि स्त्रीनामानि नपुꣳसकनामानि ॥ २ ॥ * सो-
ऽयमात्मा त्रेधाविहित एव । सोऽनेन त्रेधाविहितेना-
त्मनैतन्त्रेधाविहितन्दैवममृतमाप्नोति ता ऽउ सर्वा ऽइष्टका
ऽइत्येवाचक्षते नेष्टक ऽइति नेष्टकमिति वाचो रूपेण
वागध्येवैतत्सर्वं यत्स्त्री पुमान्नपुꣳसकं वाचा ह्येवैतत्सर्व-
माप्तन्तस्मादेना 'ऽअङ्गिरस्वद्ध्रुवा सीद'त्येव सर्वाः साद-
यति नाङ्गिरस्वद्ध्रुवः सीदेति नाङ्गिरस्वद्ध्रुवꣳ सीदेति
वाचꣳ ह्येवैताꣳ संस्कुरुते ॥ ३ ॥ सा या सा वागसौ स
ऽआदित्यः । स ऽएष मृत्युस्तद्यत्किञ्चार्वाचीनमादित्या-
त्सर्वन्तन्मृत्युनाप्तꣳ स यो हैनमतोऽर्वाचीनञ्चिनुते
मृत्युना हैनꣳ स ऽआप्तञ्चिनुते मृत्यवे ह स ऽआत्मा-
नमपिदधात्यथ य ऽएनमत ऽऊर्द्ध्वञ्चिनुते स पुनर्मृत्यु-
मपजयति विद्यया ह वा ऽअस्यैषोऽत ऽऊर्द्ध्वञ्चितो
भवति ॥ ४ ॥ सा वा ऽएषा वाक्त्रेधाविहिता । ऋचो
यजूꣳषि सामानि मण्डलमेवर्चोऽर्चिः सामानि पुरुषो
यजूꣳष्यथैतदमृतं यदेतदर्चिर्दीप्यत ऽइदन्तत्पुष्करपर्णन्त-
द्यत्पुष्करपर्णमुपधायाग्निञ्चिनोत्येतस्मिन्नेवैतदमृत ऽऋद्-

* अत्र शतम् ५४०० ।

(१) शु० य० सं० अ० १२ क० ५३ ।

मयं यजुर्मयꣳ साममयमात्मानꣳ संस्कुरुते सोऽमृतो भवति ॥ ५ ॥ (D)

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ सूर्यमण्डलार्चिःपुरुषत्रयस्याधिदैवाधियज्ञाध्यात्मपरत्वेनार्थप्रतिपादनम् ]

यदेतन्मण्डलन्तपति । तन्महदुक्थन्ता ऽऋचः स ऽऋचाँल्लोकोऽथ यदेतदर्चिर्द्दीप्यते तन्महाव्रतन्तानि सामानि स साम्नाँल्लोकोऽथ य ऽएष ऽएतस्मिन्मण्डले पुरुषः सोऽग्निस्तानि यजूꣳषि स यजुषाँल्लोकः ॥ १ ॥ सैषा त्रय्येव विद्या तपति । तद्धैतदप्यविद्वाꣳस ऽआहुस्त्रयी वा ऽएषा विद्या तपतीति वाग्घैव तत्पश्यन्ती वदति ॥ २ ॥ स ऽएष ऽएव मृत्युः । य ऽएष ऽएतस्मिन्मण्डले पुरुषोऽथैतदमृतं यदेतदर्चिर्दीप्यते तस्मान्मृत्युर्न्न म्रियतेऽमृते ह्यन्तस्तस्मादु न दृश्यतेऽमृते ह्यन्तः ॥ ३ ॥ तदेष श्लोको * भवति । अन्तरम्मृत्योरमृतमित्यवरꣳ ह्येतन्मृत्योरमृतम्मृत्यावमृतमाहितमित्येतस्मिन्हि पुरुष ऽएतन्मण्डलम्प्रतिष्ठितन्तपति मृत्युर्व्विवस्वन्तं वस्त ऽइत्यसौ वा ऽआदित्यो विवस्वानेष ह्यहोरात्रे विवस्ते तमेष वस्ते सर्वतो ह्येनेन परिवृतो मृत्योरात्मा विवस्वतीत्येतस्मिन्हि मण्डल ऽएतस्य पुरुषस्यात्मैतदेष श्लोको भवति ॥ ४ ॥ तयोर्वा ऽएतयोः । उभयोरेतस्य चार्चिष ऽएतस्य च

(D) एतद्ब्राह्मणस्था विषया अन्यत्रापि ... यथा—का० श० ११. ५ ११

* श्लोक —मन्त्र पादबद्धस्ताध्याय।

"अर्धो वा एष आत्मनो यत्पत्नी" इति तैत्तिरीयश्रुतेः ॥

पुरुषस्यैतन्मण्डलम्प्रतिष्ठा तस्मान्महदुक्थम्परस्मै न
शꣳसेन्नेदेतम्प्रतिष्ठाञ्छिनदा इत्येतꣳ ह स प्रतिष्ठा-
ञ्छिन्ते यो महदुक्थम्परस्मै शꣳसति तस्मादुक्थश-
सम्भूयिष्ठम्परिचक्षते प्रतिष्ठाच्छिन्नो हि भवतीत्यधि-
दैवतम् ॥ ५ ॥ अथाधियज्ञम् । यदेतन्मण्डलन्तपत्ययꣳ स
रुक्मोऽथ यदेतदर्चिर्दीप्यत इदन्तत्पुष्करपर्णमापो ह्येताः
आपः पुष्करपर्णमथ य एष एतस्मिन्मण्डले पुरुषो-
ऽयमेव स योऽयꣳ हिरण्मयः पुरुषस्तदेतदेवैतत्त्रयꣳ
सꣳस्कृत्येहोपधत्ते तद्यज्ञस्यैवानु सꣳस्थामूर्द्ध्वमुत्क्रामति
तदेतमप्येति य एष तपति तस्मादग्निचिन्नाद्रियेत परि-
हन्तुममुष्य ह्येष तदा भवतीत्यु एवाधियज्ञम् ॥ ६ ॥
अथाध्यात्मम् । यदेतन्मण्डलन्तपति यश्चैष रुक्म
इदन्तच्छुक्लमक्षन्नथ यदेतदर्चिर्दीप्यते यच्चैतत्पुष्करप-
र्णमिदन्तत्कृष्णमक्षन्नथ य एष एतस्मिन्मण्डले पुरुषो
यश्चैष हिरण्मयः पुरुषोऽयमेव स योऽयन्दक्षिणेऽक्ष-
न्पुरुषः ॥ ७ ॥ स एष एव लोकम्पृणा । तामेष
सर्वोऽग्निरभिसम्पद्यते तस्यैतन्मिथुनं योऽयꣳ सव्ये-
ऽक्षन्पुरुषोऽर्द्धमु हैतदात्मनो यन्मिथुनं यदा वै सह
मिथुनेनाथ सर्वोऽथ कृत्स्नः कृत्स्नतायै तद्यत्ते द्वे भवतो
द्वन्द्वꣳ हि मिथुनम्प्रजननन्तस्माद्द्वे द्वे लोकम्पृणे उप-
धीयेते तस्माद् द्वाभ्यान्द्वाभ्याश्चितिम्प्रणयन्ति ॥ ८ ॥
स एष एवेन्द्रः । योऽयन्दक्षिणेऽक्षन्पुरुषोऽथेयमिन्द्राणी
ताभ्यान्देवा एतां विधृतिमकुर्वन्नासिकान्तस्माज्जायाया

ऽअन्ते नाश्नीयाद्वीर्य्यवाङ्हास्माज्जायते वीर्य्यवन्तमु ह सा जनयति यस्या ऽअन्ते नाश्नाति ॥ ९॥ तदेतद्देवव्रतᳪ राजन्यबन्धवो मनुष्याणामनुतमाङ्गोपायन्ति तस्मादु तेषु वीर्य्यवाञ्जायतेऽमृतवाका वयसाᳪ साक्षिप्रश्श्येनञ्जनयति ॥ १० ॥ तौ हृदयस्याकाशम्प्रत्यवेत्य । मिथुनीभवतस्तौ यदा मिथुनस्यान्तङ्गच्छतोऽथ हैतत्पुरुषᳪ स्वपिति तद्यथा हैवेदम्मानुषस्य मिथुनस्यान्तङ्गत्वासंविद्ऽइव भवत्येवᳪ हैवैतदसंविद् ऽइव भवति दैवᳪ ह्येतन्मिथुनम्परमो ह्येष ऽआनन्दः ॥ ११ ॥ तस्मादेवंवित्स्वप्यात् । लोक्यᳪ हैते ऽएव तद्देवते मिथुनेन प्रियेण धाम्ना समर्द्धयति तस्मादु ह स्वपन्तन्धुरेव न बोधयेन्नेदेते देवते मिथुनीभवन्त्यौ हिनसानीति तस्मादु हैतत्सुषुपुषᳪ श्लेष्मणमिव मुखम्भवत्येते ऽएव तद्देवते रेतᳪ सिञ्चतस्तस्माद्रेतस ऽइदᳪ सर्वᳪ सम्भवति यदिदङ्किञ्च ॥१२॥ स ऽएष ऽएव मृत्युः । य ऽएष ऽएतस्मिन्मण्डले पुरुषो यश्चायन्दक्षिणेऽक्षन्पुरुषस्तस्य हैतस्य हृदये पादावतिहितौ तौ हैतदाच्छिद्योत्क्रामति स यदोत्क्रामत्यथ हैतत्पुरुषो म्रियते तस्मादु हैतत्प्रेतमाहुराच्छेद्यस्येति ॥ १३ ॥ एष ऽउ ऽएव प्राणः । एष हीमाः सर्वाः प्रजाः प्रणयति तस्यैते प्राणाः स्वाः स यदा स्वपित्यथैनमेते प्राणाः स्वा ऽअपियन्ति तस्मात्स्वाप्ययः स्वाप्ययो ह वै तᳪ स्वप्न ऽइत्याचक्षते परोऽक्षम्परोऽक्षकामा हि देवाः ॥१४॥ स ऽएतैः सुप्तः । न कस्य चन वेद न मनसा सङ्कल्प-

यति* न वाचान्नस्य रसं विजानाति न प्राणेन गन्धं
विजानाति न चक्षुषा पश्यति न श्रोत्रेण शृणोत्येतᳬं
ह्येते तदापीता भवन्ति स ऽएष ऽएकः सन्प्रजासु बहुधा
व्याविष्टस्तस्मादेका सती लोकम्पृणा, सर्वमग्निमनु-
विभवत्यथ यदेक ऽएव तस्मादेका ॥ १५ ॥ तदाहुः ।
एको मृत्युर्बहवा ३ इत्येकश्च बहवश्चेति ह ब्रूयाद्यदहा-
सावमुत्र तेनैकोऽथ यदिह प्रजासु बहुधा व्याविष्टस्तेनो
बहवः ॥ १६ ॥ तदाहुः । अन्तिके मृत्युर्दूरा३इत्यन्तिके
च दूरे चेति ह ब्रूयाद्यदहायमिहाध्यात्मन्तेनान्तिकेऽथ
यदसावमुत्र तेनो दूरे ॥ १७ ॥ तदेष श्लोको भवति ।
अन्ने भात्यपश्रितो रसानाᳬं संक्षरेऽमृत ऽइति यदेत-
न्मण्डलन्तपति तदन्नमथ य ऽएष ऽएतस्मिन्मण्डले
पुरुषः सोऽत्ता स ऽएतस्मिन्नन्नेऽपश्रितो भातीत्यधि-
देवतम् ॥ १८ ॥ अथाध्यात्मम् । इदमेव शरीरमन्नमथ
योऽयन्दक्षिणेऽक्षन्पुरुषः सोऽत्ता स ऽएतस्मिन्नन्नेऽप-
श्रितो भाति ॥ १९ ॥ तमेतमग्निरित्यध्वर्यव ऽउपासते ।
यजुरित्येष हीदᳬं सर्वं युनक्ति सामेति छन्दोगा ऽएतस्मि-
न्हीदᳬं सर्वᳬं समानमुक्थमिति बह्वृचा † ऽएष हीदᳬं
सर्वमुत्थापयति यातुरिति यातुविद ऽएतेन हीदᳬं
सर्वं यतं विषमिति सर्पाः सर्प ऽइति सर्पविद
ऽऊर्गिति देवा रयिरिति मनुष्या मायेत्यसुराः स्वधेति
पितरो देवजन ऽइति देवजनविदो रूपमिति गन्धर्वा

* सङ्कल्पोऽप्यवसाय ।
† यदत ऋचो मेयो हि बह्वृचा ऋग्वेदिन ।

गन्ध ऽइत्यप्सरसस्तं यथा यथोपासते तदेव भवति तद्धैनान्भूत्वावति तस्मादेतमेवंवित्सर्वैरेवैतैरुपासीत सर्वं ह हैतद्भवति सर्वं ह हैनमेतद्भूत्वावति ॥ २० ॥ स ऽएष त्रीष्टकोऽग्निः । ऋगेका यजुरेका सामैका तद्यामेवात्रऽर्चोपदधाति रुक्मम् ऽएव तस्या ऽआयतनमथ यां यजुषा पुरुष ऽएव तस्या ऽआयतनमथ यां साम्ना पुष्करपर्णमेव तस्या ऽआयतनमेवं त्रीष्टकः ॥ २१ ॥ ते वा ऽएते । उभे ऽएव च रुक्म ऽएतच्च पुष्करपर्णमेतं पुरुषमपीत ऽउभे ह्यृक्सामे यजुरपीत ऽएवमु त्वेवैकेष्टकः ॥ २२ ॥ स ऽएष ऽएव मृत्युः । य ऽएष ऽएतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः स ऽएष ऽएवंविद ऽआत्मा भवति स यदैवंविदस्माल्लोकात्प्रैत्यथैतमेवात्मानमभिसम्भवति सोऽमृतो भवति मृत्युर्ह्यस्यात्मा भवति ॥ २३ ॥ (A)

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यंन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या ॥ ९१ ॥

[ सकलपुरुषवर्तिमनोवाक्प्राणचक्षुःश्रोत्रकर्माग्निदृष्टिसम्पाद्य-
चित्याग्निविषयोपासनाकथनम् ]

नेव वा ऽइदमग्रेऽसदासीन्नेव सदासीत् । आसीदिव वा ऽइदमग्रे नेवासीत्तद्ध तन्मन ऽएवास ॥ १ ॥ तस्मा-

(A) एतद्ब्राह्मणस्था विषया अन्यत्रापि समुपलभ्यन्ते यथा—का० सं० १२. ५ २ ।

देतदृषिणाभ्यनूक्तम् । नासदासीन्नो सदासीत्तदानी-
मिति नैव हि सन्मनो नैवासत् ॥ २ ॥ तदिदम्मनः
सृष्टमाविरबुभूषत् । निरुक्ततरम्मूर्त्ततरन्तदात्मानमन्वै-
च्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्त्रिꣳशतꣳ सहस्राण्य-
पश्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चितस्ते मनसैवा-
धीयन्त मनसाचीयन्त मनसैषु ग्रहा ऽअगृह्यन्त मनसा-
स्तुवत मनसा शꣳसन्यत्किञ्च यज्ञे कर्म्म क्रियते यत्किञ्च
यज्ञियङ्कर्म्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु मनो-
मयमक्रियत तद्यत्किञ्चेमानि भूतानि मनसा सङ्कल्पयन्ति
तेषामेव सा कृतिस्तानेवादधति ताँश्चिन्वन्ति तेषु ग्रहा-
न्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वै मनसो
विभूतिरेतावती विसृष्टिरेतावन्मनः षट्त्रिꣳशत्सहस्रा-
ण्यग्नयोऽर्कास्तेषामेकैक ऽएव तावान्यावानसौ पूर्वः
॥ ३ ॥ तन्मनो वाचमसृजत । सेयं वाक्सृष्टाविर-
बुभूषन्निरुक्ततरा मूर्त्ततरा सात्मानमन्वैच्छत्सा तपोऽ-
तप्यत सा प्रामूर्च्छत्सा षट्त्रिꣳशतꣳ सहस्राण्यपश्य-
दात्मनोऽग्नीनर्कान्वाङ्मयान्वाक्चितस्ते वाचैवाधीयन्त
वाचाचीयन्त वाचैषु ग्रहा ऽअगृह्यन्त वाचास्तुवत वाचाशꣳ-
सन्यत्किञ्च यज्ञे कर्म्म क्रियते यत्किञ्च यज्ञियङ्कर्म्म
वाचैव तेषु तद्वाङ्मयेषु वाक्चित्सु वाङ्मयमक्रियत तद्य-
त्किञ्चेमानि भूतानि वाचा वदन्ति तेषामेव सा कृति-
स्तानेवादधति ताँश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु
स्तुवते तेषु शꣳसन्त्येतावती वै वाचो विभूतिरेतावती

विसृष्टिरेतावती वाक्षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक ऽएव तावान्यावानसौ पूर्वः ॥ ४ ॥ सा वाक्प्राणमसृजत । सोऽयम्प्राणः सृष्ट ऽआविर्बुभूषन्निरुक्ततरो मूर्त्ततरः स ऽआत्मानमन्वैच्छत्स तपोऽतप्यत स प्राम्मूर्च्छत्स षट्त्रिꣳशतꣳ सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्प्राणमयान्प्राणचितस्ते प्राणेनैवाधीयन्त प्राणेनाचीयन्त प्राणेषु ग्रहा ऽअगृह्यन्त प्राणेनास्तुवत प्राणेनाशꣳसन्यत्किञ्च यज्ञे कर्म्म क्रियते यत्किञ्च यज्ञियङ्कर्म्म प्राणेनैव तेषु तत्प्राणमयेषु प्राणचित्सु प्राणमयमक्रियत तद्यत्किञ्चेमानि भूतानि प्राणेन प्राणन्ति तेषामेव सा कृतिस्तानेवादधति ताँश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वै प्राणस्य विभूतिरेतावती विसृष्टिरेतावान्प्राणः षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक ऽएव तावान्यावानसौ पूर्वः ॥ ५ ॥ स प्राणश्चक्षुरसृजत । तदिदञ्चक्षुः सृष्टमाविर्बुभूषन्निरुक्ततरम्मूर्त्ततरन्तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्राम्मूर्च्छत्तत्षट्त्रिꣳशतꣳ सहस्राण्यपश्यदात्मनोऽग्नीनर्काँश्चक्षुर्म्मयाँश्चक्षुश्चितस्ते चक्षुषैवाधीयन्त चक्षुषाचीयन्त चक्षुष्षु ग्रहा ऽअगृह्यन्त चक्षुषास्तुवत चक्षुषाशꣳसन्यत्किञ्च यज्ञे कर्म्म क्रियते यत्किञ्च यज्ञियङ्कर्म्म चक्षुषैव तेषु तच्चक्षुर्म्मयेषु चक्षुश्चित्सु चक्षुर्म्मयमक्रियत तद्यत्किञ्चेमानि भूतानि चक्षुषा पश्यन्ति तेषामेव सा कृतिस्तानेवादधति ताँश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येता-

वती वै चक्षुषो विभूतिरेतावती विसृष्टिरेतावच्चक्षुः षट्त्रिᳪशत्सहस्राण्यग्नयोऽर्क्कास्तेषामेकैक एव तावान्यावानसौ पूर्वः ॥ ६ ॥ तच्चक्षुः श्रोत्रमसृजत । तदिदᳪ श्रोत्रᳪ सृष्टमाविरबुभूषन्निरुक्ततरम्मूर्त्ततरन्तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्त्रिᳪशतᳪ सहस्राण्यपश्यदात्मनोऽग्नीनर्क्काञ्छ्रोत्रमयाञ्छ्रोत्रचितस्ते श्रोत्रेणैवाधीयन्त श्रोत्रेणाचीयन्त श्रोत्रेणैषु ग्रहा ऽअगृह्णन्त श्रोत्रेणास्तुवत श्रोत्रेणाशᳪसन्यत्किञ्च यज्ञे कर्म्म क्रियते यत्किञ्च यज्ञियङ्कर्म्म श्रोत्रेणैव तेषु तच्छ्रोत्रमयेषु श्रोत्रचित्सु श्रोत्रमयमक्रियत तद्यत्किञ्चेमानि भूतानि श्रोत्रेण शृण्वन्ति तेषामेव सा कृतिस्तानेवादधति ताँश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शᳪसन्त्येतावती वै श्रोत्रस्य विभूतिरेतावती विसृष्टिरेतावच्छ्रोत्रᳪ षट्त्रिᳪशत्सहस्राण्यग्नयोऽर्क्कास्तेषामेकैक एव तावान्यावानसौ पूर्वः ॥ ७ ॥ तच्छ्रोत्रङ्कर्म्मासृजत । तत्प्राणानभिसममूर्च्छदिमᳪ सन्देहमन्नसन्देहᳪ ह्येतत्कृत्स्नं वै कर्म्म ऽर्ते प्राणेभ्योऽकृत्स्ना ऽउ वै प्राणा ऽऋते कर्म्मणः ॥ ८ ॥ तदिदङ्कर्म्म सृष्टमाविरबुभूषत् । निरुक्ततरम्मूर्त्ततरन्तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्तत्षट्त्रिᳪशतᳪ सहस्राण्यपश्यदात्मनोऽग्नीनर्क्कान्कर्म्ममयान्कर्म्मचितस्ते कर्म्मणैवाधीयन्त कर्म्मणाचीयन्त कर्म्मणैषु ग्रहा ऽअगृह्णन्त कर्म्मणास्तुवत कर्म्मणाशᳪसन्यत्किञ्च यज्ञे कर्म्म क्रियते यत्किञ्च यज्ञियङ्कर्म्म कर्म्मणैव तेषु

तत्कर्म्ममयेषु कर्म्मचित्सु कर्म्ममयमक्रियत तद्यत्किञ्चेमानि भूतानि कर्म्म कुर्व्वते तेषामेव सा कृतिस्तानेवादधति ताँश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु शꣳसन्त्येतावती वै कर्म्मणो विभूतिरेतावती विसृष्टिरेतावत्कर्म्म षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक ऽएव तावान्यावानसौ पूर्व्वः ॥ ९ ॥ तत्कर्म्माग्निमसृजत । आविस्तरां वा ऽअग्निः कर्म्मणः कर्म्मणा ह्येनञ्जनयन्ति कर्म्मणेन्धते ॥ १० ॥ सोऽयमग्निः सृष्ट ऽआविर्बुभूषत् । निरुक्ततरो मूर्त्ततरः स ऽआत्मानमैच्छत्स तपोऽतप्यत स प्रामूर्च्छत्स षट्त्रिꣳशतꣳ सहस्राण्यपश्यदात्मनोऽग्नीनर्कानग्निमयानग्निचितस्तेऽग्निनैवाधीयन्ताग्निनाचीयन्ताग्निनैषु ग्रहा ऽअगृह्यन्ताग्निनास्तुवताग्निनाशꣳसन्यत्किञ्च यज्ञे कर्म्म क्रियते यत्किञ्च यज्ञियङ्कर्म्माग्निनैव तेषु तदग्निमयेष्वग्निचित्स्वग्निमयमक्रियत तद्यत्किञ्चेमानि भूतान्यग्निमिन्धते तेषामेव सा कृतिस्तानेवादधति ताँश्चिन्वन्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शꣳसन्त्येतावती वा ऽअग्नेर्विभूतिरेतावती विसृष्टिरेतावानग्निः षट्त्रिꣳशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक ऽएव तावान्यावानसौ पूर्व्वः ॥ ११ ॥ ते हैते विद्याचित ऽएव । तान्हैतानेवंविदे सर्व्वदा सर्व्वाणि भूतानि चिन्वन्त्यपि स्वपते विद्यया हैवैत ऽएवंविदश्चिता भवन्ति ॥ १२ ॥ (A)

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

(A) एतद्ब्राह्मणस्था विषया अन्यत्रापि समुपलभ्यन्ते यथा—का॰ श॰ १२. ५. १।

[ भूम्यादिलोकत्रयादित्यनक्षत्रछन्दःसंवत्सरात्मावित्याग्निविषयोपासनाप्रतिपादनम् ]

अयं वाव लोक ऽएषोऽग्निश्चितः । तस्याप ऽएव परिश्रितो मनुष्या यजुष्मत्य ऽइष्टकाः पशवः सूददोहा ऽओषधयश्च वनस्पतयश्च पुरीषमाहुतयः समिधोऽग्निर्लोकम्पृणा तद्वा ऽएतत्सर्वमग्निमेवाभिसम्पद्यते तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनम्भूतमेतत्सर्वमभिसम्पद्यते ॥ १ ॥ अन्तरिक्षं हत्वेवैषोऽग्निश्चितः । तस्य द्यावापृथिव्योरेव सन्धिः परिश्रितः पुरेण ह्यन्तरिक्षन्द्यावापृथिवी सन्धत्तस्ताः परिश्रितो वयांसि यजुष्मत्य ऽइष्टका वर्षः सूददोहा मरीचयः पुरीषमाहुतयः समिधो वायुर्लोकम्पृणा तद्वा ऽएतत्सर्वं वायुमेवाभिसम्पद्यते तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनम्भूतमेतत्सर्वमभिसम्पद्यते ॥ २ ॥ द्यौर्ह त्वेवैषोऽग्निश्चितः । तस्याप ऽएव परिश्रितो यथा ह वा ऽइदङ्कोशः समुब्जित ऽएवमिमे लोका ऽअप्स्वन्तस्तद्या ऽइमाँल्लोकान्परेणापस्ताः परिश्रितो देवा यजुष्मत्य ऽइष्टका यदेवैतस्मिँल्लोकेऽन्नन्तत्सूददोहा नक्षत्राणि पुरीषमाहुतयः समिध ऽआदित्यो लोकम्पृणा तद्वा ऽएतत्सर्वमादित्यमेवाभिसम्पद्यते तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनम्भूतमेतत्सर्वमभिसम्पद्यते ॥ ३ ॥ आदित्यो ह त्वेवैषोऽग्निश्चितः । तस्य दिश ऽएव परिश्रितस्ताः

षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यन्दिशः समन्तम्परियन्ति रश्मयो यजुष्मत्य ऽइष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यस्य रश्मयस्तद्यत्परिश्रितस्तु यजुष्मतीः प्रत्यर्प्पयति रश्मीँ स्तद्दिक्षु प्रत्यर्प्पयत्यथ यदन्तरा दिशश्च रश्मीँश्च तत्सूददोहा ऽअथ यद्दिक्षु च रश्मिषु चान्नन्तत्पुरीषन्ता ऽआहुतयस्ताः समिधोऽथ यद्दिश ऽइति च रश्मय ऽइति चाख्यायते तल्लोकम्पृणा तद्वा ऽएतत्सर्वन्दिश ऽइति चैव रश्मय ऽइति चाख्यायते तत्सर्वोऽग्निर्लोकम्पृणा-मभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनम्भूत-मेतत्सर्वमभिसम्पद्यते ॥ ४ ॥ नक्षत्राणि ह त्वेवैषोऽग्नि-श्चितः । तानि वा ऽएतानि सप्तविंशतिर्नक्षत्राणि सप्तविंशतिः सप्तविंशतिर्होपनक्षत्राण्येकैकन्नक्षत्रमनू-पतिष्ठन्ते तानि सप्त च शतानि विंशतिश्चाधि षट्त्रिंशत्ततो यानि सप्त च शतानि विंशतिश्चेष्टका ऽएव ताः षष्टिश्च त्रीणि च शतानि परिश्रितः षष्टिश्च त्रीणि च शतानि यजुष्मत्योऽथ यान्यधि षट्त्रिंशत्स त्रयोदशो मासः स ऽआत्मा त्रिंशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर ऽएव षट्त्रिंशयौ तद्यत्ते द्वे भवतो द्व्यक्षरं हि शिरोऽथ यदन्तरा नक्षत्रे तत्सूद-दोहा ऽअथ यन्नक्षत्रेष्वन्नन्तत्पुरीषन्ता ऽआहुतयस्ताः समिधोऽथ यन्नक्षत्राणीत्याख्यायते तल्लोकम्पृणा तद्वा

ऽएतत्सर्वन्नक्षत्राणीत्येवाख्यायते तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनम्भूतमेतत्सर्वमभिसम्पद्यते ॥ ५ ॥ ता वा ऽएताः । एकविꣳशतिर्बृहत्य ऽएकविꣳशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेषु स्वर्गँल्लोकमभिसम्पद्यत ऽएकविꣳशश्च स्तोमं बृहतीश्च च्छन्दः ॥ ६ ॥ छन्दाꣳसि ह त्वेवैषोऽग्निश्चितः तानि वा ऽएतानि सप्त च्छन्दाꣳसि चतुरुत्तराणि त्रिचानि तेषाꣳ सप्त च शतानि विꣳशतिश्चाक्षराण्यधि षट्त्रिꣳशत्ततो यानि सप्त च शतानि विꣳशतिश्चेष्टका ऽएव ताः षष्टिश्च त्रीणि च शतानि परिश्रितः षष्टिश्च त्रीणि च शतानि यजुष्मत्योऽथ यान्यधि षट्त्रिꣳशत्स त्रयोदशो मासः स ऽआत्मा त्रिꣳशदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर ऽएव षट्त्रिꣳशयौ तद्यत्ते द्वे भवतो द्व्यक्षरꣳ हि शिरः ॥ ७ ॥ तस्यै वा ऽएतस्यै षट्त्रिꣳशदक्षरायै बृहत्यै यानि दश प्रथमान्यक्षराणि सा दशाक्षरैकपदाऽथ यानि विꣳशतिः सा विꣳशत्यक्षरा द्विपदाऽथ यानि त्रिꣳशत्सा त्रिꣳशदक्षरा विराडथ यानि त्रयस्त्रिꣳशत्सा त्रयस्त्रिꣳशदक्षराथ यानि चतुस्त्रिꣳशत्सा चतुस्त्रिꣳशदक्षरा स्वराडथ यत्सर्वैश्छन्दोभिरयमग्निश्चितस्तदतिच्छन्दास्ता ऽउ सर्वा ऽइष्टका ऽएवेष्टकेति त्रीण्यक्षराणि त्रिपदा गायत्री तेनेष गायत्रोऽग्निर्मृदाप ऽइति त्रीण्यक्षराणि त्रिपदा गायत्री तेनो ऽएवैष गायत्रोऽथ यदन्तरा च्छन्दसी तत्सुददोहा ऽअथ

यच्छन्दः स्वन्नन्तरपुरीषन्ता ऽआहुतयस्ताः समिधोऽथ यच्छन्दाꣳसीत्याख्यायते तल्लोकम्पृणा तद्वा ऽएतत्सर्वं च्छन्दाꣳसीत्येवाख्यायते तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनम्भूतमेतत्सर्वमभिसम्पद्यते ॥ ८ ॥ ता वा ऽएताः । एकविꣳशतिर्व्यूहत्य ऽएकविꣳशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेष स्वर्गँल्लोकमभिसम्पद्यत ऽएकविꣳशश्च स्तोमम्बृहतीञ्च च्छन्दः ॥ ९ ॥ सँवत्सरो ह त्वेवैषोऽग्निश्चितः । तस्य रात्रय ऽएव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि सँवत्सरस्य रात्रयोऽहानि यजुष्मत्य ऽइष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि सँवत्सरस्याहान्यथ या ऽअमूः षट्त्रिꣳशदिष्टका ऽअतियन्ति यः स त्रयोदशो मास ऽआत्मार्द्धमासाश्च ते मासाश्च चतुर्विꣳशतिरर्द्धमासा द्वादश मासा ऽअथ यदन्तराहोरात्रे तत्सूददोहा ऽअथ यदहोरात्रेष्वन्नन्तरपुरीषन्ता ऽआहुतयस्ताः समिधोऽथ यदहोरात्राणीत्याख्यायते तल्लोकम्पृणा तद्वा ऽएतत्सर्वमहोरात्राणीत्येवाख्यायते तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनम्भूतमेतत्सर्वमभिसम्पद्यते ॥ १० ॥ ता वा ऽएताः । एकविꣳशतिर्व्यूहत्य ऽएकविꣳशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेष स्वर्गँल्लोकमभिसम्पद्यत ऽएकविꣳशश्च स्तोमम्बृहतीञ्च च्छन्दः ॥ ११ ॥ आत्मा ह

त्त्वेवैषोऽग्निश्चितः । तस्यास्थीन्येव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्यास्थीनि मज्जानो यजुष्मत्य ऽइष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्य मज्जानोऽथ या ऽअमूः षट्त्रिंशदिष्टका ऽअतियन्ति यः स त्रयोदशो मास ऽआत्मा प्राणः स तस्य त्रिंशदात्मन्विधाः प्रतिष्ठायान्द्वे प्राणेषु द्वे शीर्षन्द्वे तद्यत्ते द्वे भवतो द्विकपालꣳ हि शिरोऽथ येनेमानि पर्वाणि सन्ततानि तत्सूददोहा ऽअथैतत्त्रयं व्येनायमात्मा प्रच्छन्नो लोमत्वङ्मांसमिति तत्पुरीषं व्यत्पिबति ता ऽआहुतयो यदश्नाति ताः समिधोऽथ यदात्मेत्याख्यायते तल्लोकम्पृणा तद्वा ऽएतत्सर्वमात्मेत्येवाख्यायते तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोकम्पृणामेनम्भूतमेतत्सर्वमभिसम्पद्यते ॥ १२ ॥ ता वा ऽएताः । एकविंशतिर्बृहत्य ऽएकविंशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेषु स्वर्गँल्लोकमभिसम्पद्यत ऽएकविंशश्च स्तोमम्बृहतीश्च च्छन्दः ॥ १३ ॥ सर्वाणि ह त्वेव भूतानि । सर्वे देवा ऽएषोऽग्निश्चित ऽआपो वै सर्वे देवाः सर्वाणि भूतानि ता हैता ऽआप ऽएवैषोऽग्निश्चितस्तस्य नाड्या ऽएव परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यन्नाड्याः समन्तम्परियन्ति नाड्या ऽउ ऽएव यजुष्मत्य ऽइष्टकास्ताः

षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यस्याऽऽन्ध्या ऽअभिक्षरन्त्यथ यदन्तरा नाऽऽन्ध्ये तस्सूददोहा ऽअथ या ऽअमूः षट्त्रिंशदिष्टका ऽअतियन्ति यः स त्रयोदशो मास ऽआत्मायमेव स योऽयः हिरण्मयः पुरुषः ॥ १४ ॥ तस्यैते प्रतिष्ठे । रुक्मश्च पुष्करपर्णञ्चापश्चादित्यमण्डलञ्च स्रुचौ बाहू ताविन्द्राग्नी द्वे स्वयमातृण्णे ऽइयञ्चान्तरिक्षञ्च तिस्रो विश्वज्योतिष ऽएता देवता ऽअग्निर्वायुरादित्य ऽएता ह्येव देवता विश्वज्ज्योतिर्द्वादशर्त्तव्याः स संवत्सरः स ऽआत्मा पञ्च नाकसदः पञ्च पञ्चचूडाः स यज्ञस्ते देवा ऽअथ यद्विकर्णी च स्वयमातृण्णा चाश्मा पृश्निर्य्यश्चितेऽग्निरधिधीयते सा पञ्चत्रिंशी लोकम्पृणायै यजुः षट्त्रिंशी सोऽस्यैष सर्वस्यान्तमेवात्मा स ऽएष सर्वासामपाम्मध्ये स ऽएष सर्वैः कामैः सम्पन्न ऽआपो वै सर्वे कामाः स ऽएषोऽकामः सर्वकामो न ह्येतङ्कञ्चन कामः ॥ १५ ॥ तदेष श्लोको भवति । विद्यया तदारोहन्ति यत्र कामाः परागताः ॥ न तत्र दक्षिणा यन्ति नाविद्वाथंसस्तपस्विन ऽइति न हैव तँल्लोकन्दक्षिणाभिर्न तपसानेवंविदश्नुत ऽएवंविदाथं हैव स लोकः ॥ १६ ॥ अथाम्पुरीषम् । चन्द्रमा ऽआहुतयो नक्षत्राणि समिधो यच्चन्द्रमा नक्षत्रे वसत्याहुतिस्तत्समिधि वसत्येतद्वा ऽआहुतेरन्नमेषा प्रतिष्ठा तस्माद्दाहुतिर्न क्षीयत ऽएतस्यस्या ऽअन्नमेषा प्रतिष्ठाथ यद्देवा ऽहुत्यात्यायते

तल्लोकम्पृणा तद्वा ऽएतत्सर्वन्देवा ऽइत्येवाख्यायते ॥ १७ ॥ तदेतदृचाभ्युक्तम् । विश्वे देवा ऽअनु तत्ते यजुर्गुरिति सर्वाणि ह्यत्र भूतानि सर्वे देवा यजुरेव भवन्ति तत्सर्वो-ऽग्निर्लोकम्पृणामभिसम्पद्यते स यो हैतदेवं वेद लोक-म्पृणामेनम्भूतमेतत्सर्वमभिसम्पद्यते ॥१८॥ ता वा ऽएताः। एकविꣳशतिर्बृहत्य ऽएकविꣳशो वै स्वर्गो लोको बृहती स्वर्गो लोकस्तदेष स्वर्गँल्लोकमभिसम्पद्यत ऽएकविꣳशश्च स्तोमम्बृहतीश्च च्छन्दः ॥ १९ ॥ (E)

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

[ चित्याग्नेः सर्वदिगभिमुखत्वम्, पृथक् शिरसो निरूहणाभावश्च ]

कुश्रिर्ह वाजश्रवसोऽग्निञ्चिक्ये । तꣳ होवाच सुश्रवाः कौश्यो गौतम यदग्निमचैषीः प्राञ्चमेनमचैषीः प्रत्यञ्चमेनमचैषीन्न्यञ्चमेनमचैषीरुत्तानमेनमचैषीः ॥ १ ॥ यद्यहैनम्प्राञ्चमचैषीः । यथा पराच ऽआसीनाय पृष्ठतो-ऽन्नाद्यमुपाहरेत्तादृक्तन्न ते हविः प्रतिग्रहीष्यति ॥ २ ॥ यद्यु वा ऽएनम्प्रत्यञ्चमचैषीः कस्मादस्य तर्हि पश्चा-त्पुच्छमकार्षीः ॥ ३ ॥ यद्यु वा ऽएनन्न्यञ्चमचैषीः । यथा नीचः शयानस्य पृष्ठेऽन्नाद्यम्प्रतिष्ठापयेत्तादृक्तन्नैव ते हविः प्रतिग्रहीष्यति ॥ ४ ॥ यद्यु वा ऽएनमुत्तानम-चैषीः । न वा ऽउत्तानं वयः स्वर्गँल्लोकमभिवहति न त्वा

(E) एतद्ब्राह्मणस्था विषया अन्यत्रापि समुपलभ्यन्ते यथा—का० ब्रा० १२. ५. ४ ।

स्वर्गँल्लोकमभिवक्षत्यस्वर्ग्य उ ते भविष्यतीति ॥ ५ ॥ स होवाच प्राञ्चमेनमचैषम्प्रत्यञ्चमेनमचैषन्न्यञ्चमेनमचैषमुत्तानमेनमचैषᳶ सर्वा अनुदिश एनमचैषमिति ॥ ६ ॥ स यत्प्राञ्चम्पुरुषमुपदधाति । प्राच्यौ स्रुचौ तत्प्राङ् चीयतेऽथ यत्प्रत्यञ्चङ्कूर्मंमुपदधाति प्रत्यञ्चि पशुशीर्षाणि तत्प्रत्यङ् चीयतेऽथ यन्न्यञ्चङ्कूर्म्ममुपदधाति न्यञ्चि पशुशीर्षाणि नीचीरिष्टकास्तन्न्यङ् चीयतेऽथ यदुत्तानम्पुरुषमुपदधात्युत्ताने स्रुचा उत्तानमुलूखलमुत्तानामुखान्तदुत्तानश्चीयतेऽथ यत्सर्वा अनुदिशः परिसर्पमिष्टका उपदधाति तत्सर्वतश्चीयते ॥ ७ ॥ [ अर्धप्रपाठकः ३८ ] अथ ह कोपा धावयन्तः । निरूढशिरसमग्निमुपाधावयाञ्चक्रुस्तेपाथं हैक उवाच श्रीर्वै शिरः श्रियमस्य निरौहीत्सर्वज्यानिञ्ज्यास्यत इति स ह तथैवास ॥ ८ ॥ अथ हैक उवाच । प्राणा वै शिरः प्राणानस्य निरौहीत्क्षिप्रेऽमुँल्लोकमेष्यतीति स उ ह तथैवास ॥ ९ ॥ ऊर्ध्वो वा एष एतच्चीयते । यद्दर्भस्तम्बो लोगेष्टकाः पुष्करपर्णᳶ रुक्मपुरुषौ स्रुचौ स्वयमातृण्णा दूर्वेष्टका द्वियजू रेतःसिचौ विश्वज्योतिर्ऋतव्ये अषाढा कूर्म्मोऽथ हास्यैतदेव प्रत्यक्षतमाᳶ शिरो यच्चितेऽग्निर्निधीयते तस्मान्न निरूहेत् ॥ १० ॥ (F)

पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

(F) एतद्ब्राह्मणगता विषया अन्यत्रापि समुपलभ्यन्ते यथा—का० श्रौ० ११.५.५।

[ वैश्वानरविद्या ]

अथ हैतेऽरुणे। औपवेशौ समाजग्मुः सत्ययज्ञः पौलुषिर्म्महाशालो जाबालो बुडिल ऽआश्वतराश्विरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यस्ते ह वैश्वानरे समासत तेषाᳪं ह वैश्वानरे न समियाय ॥ १ ॥ ते होचुः। अश्वपतिर्व्वा ऽअयङ्कैकेयः सम्प्रति वैश्वानरं वेद तङ्गच्छामेति ते हाश्वपतिङ्कैकेयमाजग्मुस्तेभ्यो ह पृथगावसथान्पृथगपचितीः पृथक्सहस्रान्त्सोमान्प्रोवाच ते ह प्रातरसंविदाना ऽएव समित्पाणयः प्रतिचक्रमिर ऽउप त्वायामेति ॥ २ ॥ स होवाच। यन्नु भगवन्तोऽनूचाना ऽअनूचानपुत्राः किमिदमिति ते होचुर्वैश्वानरᳪं ह भगवान्त्सम्प्रति वेद तन्नो ब्रूहीति स होवाच सम्प्रति खलु त्वा ऽअहं वैश्वानरं वेदाभ्याधत्त समिध ऽउपेता स्थेति ॥ ३ ॥ स होवाचारुणमौपवेशिम्। गौतम कन्त्वं वैश्वानरं वेत्थेति पृथिवीमेव राजन्निति होवाचोमिति होवाचैष वै प्रतिष्ठा वैश्वानर ऽएतᳪं हि वै त्वम्प्रतिष्ठां वैश्वानरं वेत्थ तस्मात्त्वम्प्रतिष्ठितः प्रजया पशुभिरसि यो वा ऽएतम्प्रतिष्ठां वैश्वानरं वेदाप पुनर्म्मृत्युञ्जयति सर्व्वमायुरेति पादौ त्वा ऽएतौ वैश्वानरस्य पादौ तेऽम्लास्यतां स्यदि ह नागमिष्य ऽइति पादौ तेऽविदितावभविष्यतां स्यदि ह नागमिष्य ऽइति वा ॥ ४ ॥ अथ होवाच सत्ययज्ञम्पौलुषिम्। प्राचीनयोग्य कन्त्वं वैश्वानरं वेत्थेत्यप ऽएव राजन्निति होवाचोमिति होवाचैष वै

रयिर्वैश्वानर ऽएतꣳ हि वै त्वꣳ रयिं वैश्वानरं वेत्थ तस्मात्त्वꣳ रयिमान्पुष्टिमानसि यो वा ऽएतꣳ रयिं वैश्वानरं वेदाप पुनर्मृत्युञ्जयति सर्वमायुरेति बस्तिस्त्वा ऽएष वैश्वानरस्य बस्तिस्त्वाहास्यद्यदि ह नागमिष्य ऽइति बस्तिस्तेऽविदितोऽभविष्यद्यदि ह नागमिष्य इति वा ॥ ५ ॥ अथ होवाच महाशालञ्जाबालम् । औपमन्यव कन्त्वं वैश्वानरं वेत्थेत्याकाशमेव राजन्निति होवाचोमिति होवाचैष वै बहुलो वैश्वानर ऽएतꣳ हि वै त्वम्बहुलं वैश्वानरं वेत्थ तस्मात्त्वम्बहुः प्रजया पशुभिरसि यो वा ऽएतम्बहुलं वैश्वानरं वेदाप पुनर्मृत्युञ्जयति सर्वमायुरेत्यात्मा त्वा ऽएष वैश्वानरस्यात्मा त्वाहास्यद्यदि ह नागमिष्य ऽइत्यात्मा तेऽविदितोऽभविष्यद्यदि ह नागमिष्य ऽइति वा ॥ ६ ॥ अथ होवाच बुडिलमाश्वतराश्विम् । वैयाघ्रपद्य कन्त्वं वैश्वानरं वेत्थेति वायुमेव राजन्निति होवाचोमिति होवाचैष वै पृथग्वर्त्मा वैश्वानर ऽएतꣳ हि वै त्वम्पृथग्वर्त्मानं वैश्वानरं वेत्थ तस्मात्त्वाम्पृथग्रथश्रेणयोऽनुयान्ति यो वा ऽएतम्पृथग्वर्त्मानं वैश्वानरं वेदाप पुनर्मृत्युञ्जयति सर्वमायुरेति प्राणस्त्वा ऽएष वैश्वानरस्य प्राणस्त्वाहास्यद्यदि ह नागमिष्य ऽइति प्राणस्तेऽविदितोऽभविष्यद्यदि ह नागमिष्य ऽइति वा ॥ ७ ॥ अथ होवाचेन्द्रद्युम्नम्भाल्लवेयम् । वैयाघ्रपद्य कन्त्वं वैश्वानरं वेत्थेत्यादित्यमेव राजन्निति होवाचोमिति होवाचैष वै सुततेजा वैश्वानर ऽएतꣳ हि वै त्वꣳ सुत-

तेजसं वैश्वानरं वेत्थ तस्मात्तवैष सुतोऽम्रमानः पच्य्-
मानोऽक्षीयमाणो गृहेषु तिष्ठति यो वा ऽएतम् सुततेजसं
वैश्वानरं वेदाप पुनर्मृत्युञ्जयति सर्वमायुरेति चक्षुस्त्वा
ऽएतद्वैश्वानरस्य चक्षुस्त्वाहास्यद्यदि ह नागमिष्य इति
चक्षुस्तेऽविदितमभविष्यद्यदि ह नागमिष्य इति वा ॥८॥
अथ होवाच जनः शार्कराक्ष्यम्। सायवस कन्त्वं वैश्वा-
नरं वेत्थेति दिवमेव राजन्निति होवाचोमिति होवाचैष
वा ऽअतिष्ठा वैश्वानर ऽएतः हि वै त्वमतिष्ठां वैश्वा-
नरं वेत्थ तस्मात्त्वम् समानानतितिष्ठसि यो वा ऽएत-
मतिष्ठां वैश्वानरं वेदाप पुनर्मृत्युञ्जयति सर्वमायुरेति
मूर्द्धा त्वा ऽएष वैश्वानरस्य मूर्द्धा त्वाहास्यद्यदि ह नाग-
मिष्य इति मूर्द्धा तेऽविदितोऽभविष्यद्यदि ह नागमिष्य
इति वा ॥ ९ ॥ तान्होवाच। एते वै यूयम्पृथग्वैश्वा-
नरान्विद्वाꣳसः पृथगन्नमघस्त प्रादेशमात्रमिव ह वै देवाः
सुविदिता ऽअभिसम्पन्नास्तथा तु व ऽएनान्वक्ष्यामि यथा
प्रादेशमात्रमेवाभिसम्पादयिष्यामीति ॥ १० ॥ स होवाच।
मूर्द्धानमुपदिशन्नेष वा ऽअतिष्ठा वैश्वानर ऽइति
चक्षुषी ऽउपदिशन्नुवाचैष वै सुततेजा वैश्वानर ऽइति ना-
सिके ऽउपदिशन्नुवाचैष वै पृथग्वर्त्मा वैश्वानर ऽइति
मुख्यमाकाशमुपदिशन्नुवाचैष वै बहुलो वैश्वानर ऽइति
मुख्या ऽअप ऽउपदिशन्नुवाचैष वै रयिर्वैश्वानर ऽइति
चुबुकमुपदिशन्नुवाचैष वै प्रतिष्ठा वैश्वानर ऽइति स
ऽएषोऽग्निर्वैश्वानरो यत्पुरुषः स यो हैतमेवमग्निं वैश्वा-

नरम्पुरुषविधम्पुरुषेऽन्तः प्रतिष्ठितं वेदाप पुनर्म्मृत्युञ्जयति सर्वमायुरेति न हास्य ब्रुवाणञ्चन वैश्वानरो हिनस्ति ॥११॥(A)

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ पुरुषस्याग्निविधार्कविधोक्थविधत्वनिरूपणम् ]

इयं वा ऽइदमत्ता चैवाद्यञ्च । तद्यदोभयः समागच्छत्यत्तैवाख्यायते नाद्यम् ॥ १ ॥ स वै यः सोऽत्ताग्निरेव सः । तस्मिन्यत्किञ्चाभ्यादधत्याहितय ऽएवास्य ता ऽआहितयो ह वै ता ऽआहुतय ऽइत्याचक्षते परोऽक्षम्परोऽक्षकामा हि देवाः ॥ २ ॥ आदित्यो वा ऽअत्ता । तस्य चन्द्रमा ऽएवाहितयश्चन्द्रमसꣳ ह्यादित्य ऽआदधतीत्यधिदेवतम् ॥ ३ ॥ अथाध्यात्मम् । प्राणो वा ऽअत्ता तस्यान्नमेवाहितयोऽन्नꣳ हि प्राण ऽआदधतीति न्वग्नेः ॥ ४ ॥ अथार्कस्य । अग्निर्वा ऽअर्कस्तस्याहुतय ऽएव कमाहुतयो ह्यग्नये कम् ॥ ५ ॥ आदित्यो वा ऽअर्कः । तस्य चन्द्रमा ऽएव कञ्चन्द्रमा ह्यादित्याय कमित्यधिदेवतम् ॥ ६ ॥ अथाध्यात्मम् । प्राणो वा ऽअर्कस्तस्यान्नमेव कमन्नꣳ हि प्राणाय कमिति न्वेवार्कस्य ॥ ७ ॥ अथोक्थस्य । अग्निर्वा ऽउक्थन्तस्याहुतय ऽएव थमाहुतिभिर्ह्यग्निरुत्तिष्ठति ॥ ८ ॥ आदित्यो वा ऽउक् । तस्य चन्द्रमा ऽएव थञ्चन्द्रमसा ह्यादित्य ऽउत्तिष्ठतीत्य-

(A) अदोब्राह्मणस्था विषदा अन्यत्रापि दृश्यन्ते यथा—का० श० १२, ६ १ ।

धिदेवतम् ॥ ९ ॥ अथाध्यात्मम् । प्राणो वा ऽउक्थ- स्यान्नमेव थमन्नेन हि प्राण ऽउत्तिष्ठतीति न्वेवोक्थस्य स ऽएषोऽग्निविधोऽर्कविध ऽउक्थविधो यत्पुरुषः स यो हैतमेवमग्निविधमर्कविधमुक्थविधम्पुरुषमुपास्ते विदुषो हैवास्यैवम्भ्रातृव्यो म्लायति ॥ १० ॥ प्राणेन वा ऽअ- ग्निर्दीप्यते । अग्निना वायुर्वायुनादित्य ऽआदित्येन चन्द्रमाश्चन्द्रमसा नक्षत्राणि नक्षत्रैर्विद्युदेतावती वै दी- प्तिरस्मिँश्च लोकेऽमुष्मिँश्च सर्वाᳬ हैतान्दीप्तिन्दीप्यते- स्मिँश्च लोकेऽमुष्मिँश्च य ऽएवं वेद ॥ ११ ॥ (B)

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

---

[ शाण्डिल्यविद्याप्रतिपादनम् ]

सत्यम्ब्रह्मेत्युपासीत । अथ खलु क्रतुमयोऽयम्पुरुषः स यावत्क्रतुरयमस्माल्लोकात्प्रैत्येवङ्क्रतुर्हामुँल्लोकम्प्रेत्या- भिसम्भवति ॥ १ ॥ स ऽआत्मानमुपासीत । मनोमयम्प्रा- णशरीरम्भारूपमाकाशात्मानङ्कामरूपिणम्मनोजवसᳬ सत्य- सङ्कल्पᳬ सत्यधृतिᳬ सर्वगन्धᳬ सर्वरसᳬ सर्वा ऽअनु दिशः प्रभूतᳬ सर्वमिदमभ्याप्तमवाक्कमनादरं यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्म- न्पुरुषो हिरण्मयो यथा ज्योतिरधूममेवञ्ज्यायान्दिवो ज्यायानाकाशाज्ज्यायानस्यै पृथिव्यै ज्यायान्सर्वेभ्यो भूतेभ्यः स प्राणस्यात्मैष म ऽआत्मैतमित ऽआत्मानम्प्रे-

(B) अस्योदाहृतस्या विषया अन्यत्रापि दृश्यन्ते यथा—१२ ६. २।

त्याभिसम्भविष्यामीति यस्य स्यादद्धा न विचिकित्सास्तीति ह स्माह शाण्डिल्य ऽएवमेतदिति ॥ २ ॥ (E)

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ अश्वस्योपासनम् ]

उषा वा ऽअश्वस्य मेध्यस्य शिरः । सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर ऽआत्माश्वस्य मेध्यस्य द्यौष्पृष्ठमन्तरिक्षमुदरम्पृथिवी पाजस्यन्दिशः पार्श्वे ऽअवान्तरदिशः पर्शव ऽऋतवोऽङ्गानि मासाश्चार्द्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मांसान्यूवध्यः सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ऽओषधयश्च वनस्पतयश्च लोमान्युद्यन्पूर्वार्द्धो निम्लोचञ्जघनार्द्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वागहर्वा ऽअश्वम्पुरस्तान्महिमान्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेनम्पश्चान्महिमान्वजायत तस्यापरे समुद्रे योनिरेतौ वा ऽअश्वम्महिमानावभितः सम्बभूवतुर्हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वासुरानश्वो मनुष्यान्त्समुद्र ऽएवास्य बन्धुः समुद्रो योनिः ॥ १ ॥

षष्ठाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



(E) एतद्ब्राह्मणस्था विषया अन्यत्राऽप्युपलभ्यन्ते यथा— का॰ श॰ १२. ६. ३ ।

[ अर्काश्वमेधोपासना, विद्यासंप्रदायप्रवर्तकमुनिवंशकथनञ्च ]

नैवेह किंचनाग्र ऽआसीत् । मृत्युनैवेदमावृतमासीद्-शनाययाशनाया हि मृत्युस्तन्मनोऽकुरुतात्मन्वी स्यामिति सोऽर्चन्नचरत्तस्यार्चत ऽआपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्क्यस्यार्कत्वङ्कꣳह वा अस्मै भवति य ऽएव-मेतदर्क्यस्यार्कत्वं वेद ॥ १ ॥ आपो वा ऽअर्कः । तद्य-दपाꣳ शर ऽआसीत्तत्समहन्यत सा पृथिव्यभवत्त-स्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य तेजो रसो निर-वर्त्ततागिनः ॥ २ ॥ स त्रेधात्मानं व्यकुरुत । आदित्य-न्तृतीयं वायुन्तृतीयꣳ स ऽएष प्राणस्त्रेधाविहितस्तस्य प्राची दिक्शिरोऽसौ चासौ चेर्मावथास्य प्रतीची दिक्पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौष्पृष्ठमन्तरिक्षमुदरमियमुरꣳ स ऽएषोऽप्सु प्रतिष्ठितो यत्र क्व चैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥ ३ ॥ सोऽकामयत । द्वितीयो म ऽआत्मा जायेतेति स मनसा वाचम्मिथुनꣳ समभवदशनायामृत्युस्तद्रेत ऽआसीत्स संवत्सरोऽभवन्न ह पुरा ततꣳ संवत्सर ऽआस तमेतावन्तङ्कालमबिभर्यावान्त्संवत्सरस्तमेतावतꣳ कालस्य परस्तादसृजत तञ्जातमभिव्याददात्स भाणकरोत्सैव वागभवत् ॥ ४ ॥ स ऽऐक्षत । यदि वा ऽइममभिमꣳस्ये कनीयोऽन्नङ्करिष्य ऽइति स तया वाचा तेनात्मनेदꣳ सर्वम-सृजत यदिदङ्किंचर्चो यजूꣳषि सामानि च्छन्दाꣳसि यज्ञान्प्रजाम्पशून्त्स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा

ऽअत्तीति तददितेरदितित्वꣳ सर्वस्यात्ता भवति सर्वमस्यान्न-
म्भवति य ऽएवमेतददितेरदितित्वं वेद ॥५॥ सोऽकामयत।
भूयसा यज्ञेन भूयो यजेयेति सोऽश्राम्यत्स तपोऽतप्यत
तस्य श्रान्तस्य तप्तस्य यशो वीर्यमुदक्रामत्प्राणा वै यशो
वीर्यन्तत्प्राणेषूत्क्रान्तेषु शरीरꣳ श्वयितुमध्रियत तस्य
शरीर ऽएव मन ऽआसीत् ॥ ६ ॥ सोऽकामयत । मेध्यम्म
ऽइदꣳ स्यादात्मन्व्यनेन स्यामिति ततोऽश्वः समभवद्य-
दश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वमेष ह
वा ऽअश्वमेधं वेद य ऽएनमेवं वेद ॥ ७ ॥ तमनवरुध्यैवाम-
न्यत । तꣳ सँवत्सरस्य परस्तादात्मन ऽआलभत पशून्दे-
वताभ्यः प्रत्यौहत्तस्मात्सर्वदेवत्यम्प्रोक्षितम्प्राजापत्यमाल-
भन्त ऽएष वा ऽअश्वमेधो य ऽएष तपति तस्य सँवत्सर
ऽआत्मायमग्निरर्कस्तस्येमे लोका ऽआत्मानस्तावेतावर्का-
श्वमेधौ सो पुनरेकैव देवता भवति मृत्युरेवाप पुनर्मृ-
त्युञ्जयति नैनम्मृत्युराप्नोति मृत्युरस्यात्मा भवति सर्व-
मायुरेत्येतासान्देवतानामेको भवति य ऽएवं वेद ॥ ८ ॥*
अथ वꣳशः । समानमा साञ्जीवीपुत्रात्साञ्जीवीपुत्रो माण्डू-
कायनेर्म्माण्डूकायनिर्म्माण्डव्यान्माण्डव्यः कौत्सात्कौ-
त्सो माहित्थेर्म्माहित्थिर्वामकक्षायणाद्वामकक्षायणो वात्स्या-
द्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कुश्रेः कुश्रिर्यज्ञवचसो
राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायनस्तुरात्कावषेयात्तुरः

* अत्र शतम् ५५०० ।

कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥ ९ ॥

षष्ठाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या ॥७५॥

इति षष्ठोऽध्यायः ॥ ६ ॥

† अग्निरहस्य नाम दशम काण्ड समाप्तम् ॥ १० ॥ *



† अग्निरहस्यकाण्डे कण्डिकासङ्ख्या ११९ ।

# अथाष्टाध्यायीनामैकादशकाण्डम्

अस्मिन्काण्डे प्रतिपादनीया विषयाः—अन्याधानकालः, दर्शपूर्णमास-दाक्षायणयज्ञयोरनुष्ठानावधिः, दाक्षायणयज्ञः, पथिकृदिष्टिः, अभ्युदयेष्टिः, दर्शपूर्णमासार्थवादः, प्रयाजानुयाजानुमन्त्रणम्, इडा-स्विष्टकृत्-सूक्तवाक-शंयुवाक-पत्नीसंयाज-वेद्यालम्भ-समिष्टयजुः-प्रधानयागादिविषयोऽर्थवादः, अग्निहोत्रार्थवादः, ब्रह्मचारिकर्तव्यम्, मित्रविन्देष्टिः, हविषः समृद्धिः, चातुर्मास्यार्थवादः, पञ्च महायज्ञाः, स्वाध्यायप्रशंसा, प्रायश्चित्तम्, अंशदाभ्यग्रहौ, आध्यात्मिकविद्या, पशुबन्धप्रशंसा, हविर्यज्ञविषसवविध-योर्लक्षणम्, षड्ढोतारहोमः



[ यज्ञादीनां संवत्सराद्यात्मना निरूपणम् ]

॥ ॐ ॥ सँवत्सरो * वै युज्ञः प्रजापतिः † । तस्यै-तद्द्वारं यद॒मावास्या ‡ चन्द्रमा ऽएव द्वारपिधानः ॥ १ ॥

---

* संवत्सरात्मकस्तत्साध्यत्वात् । संवत्सरस्यापि 'द्वादशमासाः पञ्चर्तवो हेमन्तशिशिरयोः समासेन तावान्संवत्सरः प्रजापतिः' इति सप्तदशावयवत्वसाम्यात् प्रजापतेस्तस्य च तादात्म्य यथा—'आदित्यो यूपः' इत्यत्र तेजःसाम्याद् यूपस्यादित्यात्मना स्तुतिरेवमत्रापि संख्यासाम्यात् स्तुतिरेव मन्तव्या ।

† आ श्रावयेत्यादि सप्तदशाक्षरसाध्यत्वाद्यज्ञस्य प्रजापतित्वम् । तथा च तैत्तिरीयसंहितायाम्—"आ श्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहे इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिः" ( तै० सं० का० १ प्र० ६ अनु० ११ )

‡ अमेत्ययं शब्दः सहत्वस्यार्थे वर्तते, प्रतिपदादितिथिषु मध्ये यस्यां तिथौ अमा सूर्येण सह चन्द्रो वसति सामावास्या । अमापूर्वाद्वसेः 'अमावस्यदन्यतरस्याम्' इति ण्यत् ।

यद्वा—वसुशब्दाभिधेय इन्द्र सोमपानार्थं देवैः सह यस्यां तिथौ वसतीत्यमावास्या । तथा च तैत्तिरीयसंहिताम्—

'अमा वै नोऽद्य वसु वसतीतीन्द्रो हि देवानां वसु तदमावास्याया अमावास्यत्वम्'

स योऽमावास्यायामग्नी ऽआधत्ते । यथा विवृतायान्द्वारि
द्वारा पुरम्प्रपद्येत स ततऽएव स्वर्गं[1]ल्लोकं[2]मियादेवन्तयोऽ
मावास्यायामाधत्ते ॥ २ ॥ अथ यो नक्षत्र ऽआधत्ते ।
यथापिहितायान्द्वार्य्यद्वारा पुरम्प्रपित्सेत्स जिह्मः पुरः स्या
देवन्तद्यो नक्षत्र ऽआधत्ते तस्मान्न नक्षत्र ऽआदधीत ॥३॥
यदुहरेवैषः । न पुरस्तान्न पश्चाद्दृदृश्येत तदुहरुपवसे
त्तर्हि ह्येष ऽइमँल्लोकमागच्छति तस्मिन्निह वसति ॥ ४ ॥
सर्वे देवा वसन्ति । सर्वाणि भूतानि सर्वा देवताः सर्व
ऽऋतवः सर्वे स्तोमाः सर्वाणि पृष्ठानि सर्वाणि
च्छन्दाꣳसि ॥ ५ ॥ सर्वेषु ह वा ऽअस्य देवेषु । सर्वेषु भू
तेषु सर्वासु देवतासु सर्वेष्वृतुषु सर्वेषु स्तोमेषु सर्वेषु
पृष्ठेषु सर्वेषु च्छन्दःस्वग्नी ऽआहितौ भवतो योऽमा
वास्यायामाधत्ते तस्मादमावास्यायामेवाग्नी ऽआदधीत
॥ ६ ॥ याऽसौ वैशाखस्यामावास्या तस्यामादधीत सा
रोहिण्या सम्पद्यत ऽआत्मा वै प्रजा पशवो रोहिण्या
त्मन्येवैतत्प्रजायाम्पशुषु प्रतितिष्ठत्यमावास्या वा ऽअ
ग्न्याधेयरूपन्तस्मादमावास्यायामेवाग्नी ऽआदधीत पौर्ण
मास्यामन्वारभेतामावास्यायान्दीक्षेत ॥ ७ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

(१) सुप्त भार्यते सोमेनार्गेन गम्यत इति वा इति—सर्वज्ञनामिलप्रणीय पुरुषा
मिमिन धर्मेन्लमिन्दर्य । तथा चाहु —

यान तु येन अभिमान न च प्राज्यमन्त्यरम् ।
अभिष्ण्योपनीन च तामुभ इव यदारदम् ॥ ( वाजसा० )

(२) लोकान्त इति लोक ।

(३) वैशाखनक्षत्रयुक्ता पौर्णमासी यस्मिन्मासि स वैशाख ।

[ दर्शपूर्णमासाहुतिसम्पाविशेषकथनम् ]

घ्नन्ति वा एतद्यज्ञम् । यदेनन्तन्वते यन्न्वेव राजानमभिषुण्वन्ति तत्तं घ्नन्ति यत्पशुं संज्ञपयन्ति विशासति तत्तं घ्नन्त्युलूखलमुसलाभ्यां दृषदुपलाभ्यां हविर्यज्ञं घ्नन्ति ॥ १ ॥ स हत्वा यज्ञम् । अग्नावेव योनौ रेतो भूतं सिञ्चत्यग्निर्वै योनिर्यज्ञस्य स ततः प्रजायते तदश ता आहुतीः सम्पादयेद्याभ्यो वषट् क्रियते ॥ २ ॥ अयं वै यज्ञो योऽयम्पवते । सोऽयमेक इवैव पवते सोऽयम्पुरुषेऽन्तः प्रविष्टो दशधाविहितः स एषु दशस्वाहुतिषु प्राणेभ्यो योनेरधिजायते सैषा दशाक्षरा विराट् सैषा सम्पत्स यज्ञः ॥ ३ ॥ अथो अपि नव स्युः । तन्न्यूनां विराजं करोति प्रजननाय न्यूनाद्वा इमाः प्रजाः प्रजायन्ते सैषा सम्पत्स यज्ञः ॥ ४ ॥ अथो अप्येकातिरिक्ता स्यात् । सा प्रजापतिमभ्यतिरिच्यते सैषा सम्पत्स यज्ञः ॥ ५ ॥ अथो अपि द्वे अतिरिक्ते स्याताम् । द्वन्द्वं वै मिथुनम्प्रजननम्मिथुनमेवैतत्प्रजननं क्रियते सैषा सम्पत्स यज्ञः ॥ ६ ॥ अथो अपि तिस्रोऽतिरिक्ताः स्युः । द्वन्द्वमह मिथुनम्प्रजननमथ यज्जायते तत्तृतीयं सैषा सम्पत्स यज्ञः ॥ ७ ॥ अथो अपि चतस्रोऽतिरिक्ताः स्युः । तद्यथैवैतत्त्रयो वा इमे लोकास्तदिमानेव लोकाँस्तिसृभिराप्नोति प्रजापतिर्वा अतीमाँल्लोकाँश्चतुर्थस्तत्प्रजापतिमेव चतुर्थ्याप्नोति सैषा सम्पत्स यज्ञः ॥ ८ ॥ स यज्ञाभ्यामूनन्तदूनम् । सोऽयज्ञो

यत्पञ्चभिरतिरिक्तन्तदुतिरिक्तꣳ सोऽयज्ञꣳ सैषैव दशत्यधि सम्पदेषा विꣳशत्यामेषा सहस्रात्॰ ॥ ९ ॥ आर्जिं वा ऽएते धावन्ति। ये दर्शपूर्णमासाभ्यां यजन्ते स वै पञ्चदश वर्षाणि यजेत तेषाम्पञ्चदशानां वर्षाणान्त्रीणि च शतानि षष्टिश्च पौर्णमास्यश्चामावास्याश्च त्रीणि च वै शतानि षष्टिश्च सँवत्सरस्य रात्रयस्तद्रात्रीराप्नोति ॥ १० ॥ अथापराणि पञ्चदशैव वर्षाणि यजेत। तेषाम्पञ्चदशानां वर्षाणान्त्रीणि चैव शतानि षष्टिश्च पौर्णमास्यश्चामावास्याश्च त्रीणि च वै शतानि षष्टिश्च सँवत्सरस्याहानि तदहान्याप्नोति तदेव सँवत्सरमाप्नोति ॥ ११ ॥ मर्त्या ह वा ऽअग्रे देवा ऽआसुः। स यदैव ते सँवत्सरमापुरथामृता ऽआसुः सर्वं वै सँवत्सरः सर्वं वा ऽअक्षय्यमेतेनो हास्याक्षय्यꣳ सुकृतम्भवत्यक्षय्यो लोकः ॥ १२ ॥ स ऽआजिसृतामेकः। य ऽएवं विद्वाँस्त्रिꣳशतं वर्षाणि यजते तस्माद् त्रिꣳशत-मेव वर्षाणि यजेत यद्यु दाक्षायणयज्ञी स्यादुपो ऽअपि पञ्चदशैव वर्षाणि यजेतात्र ह्येव सा सम्पत्सम्पद्यते द्वे हि पौर्णमास्यौ यजते द्वे ऽअमावास्ये ऽअत्रो ऽएव खलु सा सम्पद्भवति ॥ १३ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ पौर्णमासयागे दर्शयागे च हविषो विधानम् ]

पौर्णमासेनेष्ट्वा । इन्द्राय विमृधेऽनुनिर्वपति तेन यथेष्टयेवं यजत ऽआमावास्येनेष्ट्वादित्यै चरुमनुनिर्वपति

तेन यथेष्ट्यैवं स्यजते ॥ १ ॥ स यत्पौर्णमासेनेष्ट्वा । इन्द्राय विमृधेऽनुनिर्वपतीन्द्रो वै यज्ञस्य देवताथैतदग्नीषोमीयम्पौर्णमासᳬ हविर्भवति तत्र नेन्द्राय त्वेति किञ्चन क्रियत ऽएतेनो हास्यैतत्सेन्द्रᳬ हविर्भवत्येतेन सेन्द्रो यज्ञोऽथ यद्विमृधे त्वेति सर्वा ऽउ हि मृधो नाष्ट्राᳬ पौर्णमासेन हन्ति ॥ २ ॥ अथ यदामावास्येनेष्ट्वा । अदित्यै चरुमनुनिर्वपत्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमाᳬ स यत्रैष ऽएतांᳬ रात्रिन्न पुरस्तान्न पश्चाद्ददृशे तेनैतदुनद्धेव हविर्भवति तेनाप्रतिष्ठितमियं वै पृथिव्यदितिᳬ सेयमद्धा सेयम्प्रतिष्ठितैतेनो हास्यैतदुद्धेव हविर्भवत्येतेन प्रतिष्ठितमेतत्तु तद्यस्मादनुनिर्वपत्यथ यस्मान्नानुनिर्वपेत् ॥ ३ ॥ स यत्पौर्णमासेनेष्ट्वा । इन्द्राय विमृधेऽनुनिर्वपति सेन्द्रो मे यज्ञोऽसदिति सर्वो वै यज्ञ ऽइन्द्रस्यैव स यत्सर्वो यज्ञ ऽइन्द्रस्यैवैतेनो हास्यैतत्सेन्द्रᳬ हविर्भवत्येतेन सेन्द्रो यज्ञᳬ ॥ ४ ॥ अथ यदामावास्येनेष्ट्वा । अदित्यै चरुमनुनिर्वपत्यामावास्यं वा ऽअनुनिर्वाप्यम्पौर्णमासेन वा ऽइन्द्रो वृत्रमहँस्तस्मा ऽएतद्वृत्रघ्नये देवा ऽएतद्धविरनुनिरवपन्यदामावास्यङ्किमनुनिर्वाप्येऽनुनिर्वपेदिति तस्मान्नानुनिर्वपेत् ॥ ५ ॥ स यत्पौर्णमासेनेष्ट्वा । अथान्यद्धविरनुनिर्वपत्यामावास्येनेष्ट्वाथान्यद्धविरनुनिर्वपति द्विषन्तᳬ ह स भ्रातृव्यम्प्रत्युच्छ्रयतेऽथ यᳬ पौर्णमासेनेष्ट्वा पौर्णमासीं यजत ऽआमावास्येनामावास्यामसपत्ना हैवास्यानुपबाधा

श्रीर्भवति ॥ ६ ॥ पौर्णमासेन वै देवाः । पौर्णमासीं स्यजमाना ऽआमावास्येनामावास्यां क्षिप्र ऽएव पाप्मानमपाघ्नत क्षिप्रे प्राजायन्त स यो हैवं विद्वान्पौर्णमासेनैष पौर्णमासीं स्यजत ऽआमावास्येनामावास्यां क्षिप्र ऽएव पाप्मानमपहते क्षिप्रे प्रजायते स यद्यनुनिर्वपेद्‌-यादक्षिणान्नादक्षिणः हविः स्यादिति ह्याहुर्दर्शपूर्णमासयोर्ह्येवैषा दक्षिणा यदन्वाहार्य्य * ऽइति न्वनुनिर्वाप्यस्याथाभ्युदितस्य ॥ ७ ॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ दर्शयागे पुरस्ताच्चन्द्रदर्शनप्रायश्चित्तेष्टिः ]

तद्धैके । दृष्ट्वोपवसन्ति । श्वो नोदेतेत्यभ्रस्य वा हेतोरनिर्ज्ञाय वाथोतोपवसन्त्युथैनमुताभ्युदेति स यद्यगृहीतः हविरभ्युदियात्प्रज्ञातमेव तदुपेत्य व्रतचर्य्या यत्पूर्वेद्युर्दुग्धन्दधि हविरातञ्चनन्तत्कुर्वन्ति प्रति प्रसुञ्चन्ति वत्सांस्तान्पुनरपाकुर्वन्ति ॥ १ ॥ तानपराह्णे पर्णशाखयापाकरोति । तद्यथैवादः प्रज्ञातमामावास्यः हविरेवमेव तद्यद्यु व्रतचर्य्या वा नोदाशङ्सेत गृहीतं वा हविरभ्युदियादितरथो तर्हि कुर्य्यादेतानेव तण्डुलान्सुफलीकृतान्कृत्वा स येऽणीयाꣳसस्तानग्नये † दात्रेऽष्टाकपालम्पुरोडाशꣳ

* अन्वाहरति—यज्ञसम्बन्धिदोषजातं परिहरति—अनेनेति अन्वाहार्यो नाम ऋत्विग्भोजनीय ओदनः सा० भा० ।

† 'निरुप्ते व्रताश्चौ [illegible] शेषं तण्डुलानामनुज्ञाय मध्यमानग्नये दात्रे, स्थविष्ठानिन्द्राय प्रदात्रे, दधनि चरुमणिष्ठान्विष्णवे शिपिविष्टाय शृते चरुम्" ( का० श्रौ० सू० २५. ४. ३८ )

श्रपयति ॥ २ ॥ अथ यत्पूर्वेद्युः । दुग्धन्दधि तदिन्द्राय प्रदायाथ तदानीन्दुग्धे विष्णवे शिपिविष्टायैतांस्तण्डुला-ञ्छृते चरुथं श्रपयति चरुर्ह्येव स यत्र क्व च तण्डु-लानावपन्ति ॥ ३ ॥ तद्यदेवम्भवति । एष वै सोमो राजा देवानामन्नं यच्चन्द्रमास्तमेतदुपैत्सीत्तमपारात्सीत्त-मस्मा ऽअग्निर्होता ददातीन्द्रः प्रदाता प्रयच्छति तम-स्मा इन्द्राग्नी यज्ञन्दत्तस्तेनेन्द्राग्निभ्यान्दत्तेन यज्ञेन यजतेऽथ यद्विष्णवे शिपिविष्टायेति यज्ञो वै विष्णु-रथ यच्छिपिविष्टायेति यमुपैत्सीत्तमपारात्सीत्तच्छिपितमिव यज्ञस्य भवति तस्माच्छिपिविष्टायेति तन्नो यच्छक्नुया-त्तद्ययान्नादक्षिणः हविः स्यादिति ह्याहुरथ यदेव नोदि-यादथोपवसेत् ॥ ४ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

---

[ पश्चाच्चन्द्रदर्शने नैमित्तिकेष्टिः ]

अथामावास्येति मन्यमान ऽउपवसति । अथैष पश्चाद्ददृशे सहैष दिव्यः श्वा स यजमानस्य पशून-भ्यवेक्षते तदपशव्यथं स्यादुप्रायश्चित्तिकृत ऽएत-स्माद्ध हैतद्भीषावचन्द्रमसादिति ॥ १ ॥ छायामुपसर्पन्ति । एतेनो हैतदुपतपद्वाचक्षते श्वलुचितमित्येतमु हैवैतद्वा-चक्षते ॥ २ ॥ शशश्चान्द्रमस ऽइति । चन्द्रमा वै सोमो देवानामन्नन्तम्पौर्णमास्यामभिषुण्वन्ति सोऽपरपक्षेऽप ऽओषधीः प्रविशति पशवो वा ऽअप ऽओषधीरदन्ति

तदेनमेतां रात्रिम्पशुभ्यः सन्नयति ॥ ३ ॥ सोऽग्न्यामावास्येति । मन्यमान ऽउपवसत्यथैष पश्चाद्ददृशे तद्यजमानो यज्ञपथादेति तदाहुः कथङ्कुर्य्यादित्वा यज्ञपथाद्यजेता३ न यजेता३ऽइति यजेत हैव न ह्यन्युदपक्रमणम्भवति श्वः श्व ऽएवैष ज्यायानुदेति स ऽआमावास्यविधेनैवेष्ट्वाथेष्टिमनुनिर्वपति तदुहैवैव श्वो वा * ॥ ४ ॥ तस्यै त्रीणि हवींष्यपि भवन्ति । अग्नये पथिकृतेऽष्टाकपालम्पुरोडाशमिन्द्राय वृत्रघ्न ऽएकादशकपालमग्नये वैश्वानराय द्वादशकपालम्पुरोडाशम् ॥ ५ ॥ स यदग्नये पथिकृते निर्वपति । अग्निर्वै पथः कर्त्ता स एवैनमस्माद्वेवादो यजमानो यज्ञपथादेति तमेनमग्निः पन्थानमापादयति ॥६॥ अथ यदिन्द्राय वृत्रघ्ने । पाप्मा वै वृत्रो यो भूतेर्वारयित्वा तिष्ठति कल्याणात्कर्म्मणः साधोस्तमेतदिन्द्रेणैव वृत्रघ्ना पाप्मानं वृत्रङ्घ्नन्ति तस्मादिन्द्राय वृत्रघ्ने ॥ ७ ॥ अथ यदग्नये वैश्वानराय । द्वादशकपालम्पुरोडाशन्निर्वपति यत्र वा ऽइन्द्रो वृत्रमहँस्तमग्निना वैश्वानरेण समदहत्तदस्य सर्वम्पाप्मानः समदहत्तथो ऽएवैष ऽएतदिन्द्रेणैव वृत्रघ्ना पाप्मानं वृत्रं हत्वा तमग्निना वैश्वानरेण सन्दहति तदस्य सर्वम्पाप्मानः सन्दहति स यो हैवं विद्वानेतयेष्ट्या यजते न हास्याल्पश्चन पाप्मा परिशिष्यते ॥ ८ ॥ तस्यै सप्तदश सामिधेन्यो भवन्ति ।

* "पश्चादभ्युद्दृष्ट आमावास्येनेष्ट्वा तदहरेव श्वो वाग्नये पथिकृत इन्द्राय वृत्रघ्न एकादशकपालो वैश्वानरश्च" का० श्रौ० सू० २५ ४ ४४ ।

उपाᳬंशु देवता यजति याᳬ कामयते ता याज्यानुवाक्ययाᳬ करोत्येवमाज्यभागावेवᳬ संख्याज्ये ॥ ९ ॥ तिसृधन्वन्दुक्षिणान्ददाति । धुन्वना वै इश्वानम्वाधन्ते तदेतमेवैतद्वाधते यत्तिसृधन्वन्दुक्षिणान्ददाति ॥ १० ॥ दण्डन्दुक्षिणान्ददाति । दण्डेन वै श्वानम्वाधन्ते तदेतमेवैतद्वाधते यद्दण्डन्दुक्षिणान्ददात्येषा न्वादिष्टा दुक्षिणा दद्यात्त्वेवास्यामप्यन्यया ऽइतरा दुक्षिणास्तासां व्यत्तम्पूर्यते सा हैषा पशव्येष्टिस्तयाप्युनभ्युद्दृष्टो यजेतैव ॥ ११ ॥

प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

[ आख्यायिकया सृष्टिप्रतिपादनम् ]

आपो ह वा ऽइदमग्ने सलिलमेवास । ता ऽअकामयन्त कथन्नु प्रजायेमहीति ता ऽअश्राम्यँस्तास्तपोऽतप्यन्त तासु तपस्तप्यमानासु हिरण्मयमाण्डᳬ सम्बभूवाजातो ह तर्हि सँवत्सर ऽआस तदिदᳬ हिरण्मयमाण्डं यावत्सँवत्सरस्य वेला तावत्पर्यप्लवत ॥ १ ॥ ततᳬ सँवत्सरे पुरुषᳬ समभवत् । स प्रजापतिस्तस्मादु सँवत्सर ऽएव स्त्री वा गौर्वा वडवा वा विजायते सँवत्सरे हि प्रजापतिरजायत स ऽइदᳬ हिरण्मयमाण्डं व्यरुजन्नाह तर्हि का चन प्रतिष्ठास तदेनमिदमेव हिरण्मयमाण्डं यावत्सँवत्सरस्य वेलासीत्ताबद्बिभ्रत्पर्यप्लवत ॥ २ ॥ स सँवत्सरे व्याजिहीर्षत् । स भूरिति व्याहरत्सेयम्पृथिव्यभवद्भुव ऽइति तदिदमन्त-

रिक्षमभवुत्स्वरि॒ति सासौ द्यौरभवत्तस्माद्ु सँवत्सर् ऽएव कुमारो व्व्याजिहीर्षति सँवत्सरे हि प्रजापतिर्व्व्याहरत् ॥३॥ स वा ऽएकाक्षरद्व्यक्षराण्येव । प्रथमं वदन्प्रजापति-रवदत्तस्मादेकाक्षरद्व्यक्षराण्येव प्रथमं वदन्कुमारो वदति ॥ ४ ॥ तानि वा ऽएतानि । पञ्चाक्षराणि तान्पञ्चऽर्त्तून-कुरुत त ऽइमे पञ्चऽर्त्तवः स ऽएवमिमाँल्लोकान्जातान्त्सँव-त्सरे प्रजापतिरभ्युदतिष्ठत्तस्माद्ु सँवत्सर ऽएव कुमार ऽउत्तिष्ठासति सँवत्सरे हि प्रजापतिरुदतिष्ठत् ॥ ५ ॥ स सहस्रायुर्जज्ञे । स यथा नद्यै पारम्परापश्श्येदेवꣳ स्वस्यायुषः पारम्पराचख्यौ ॥ ६ ॥ सोऽर्चञ्छ्राम्यँश्चचार प्रजाकामः । स ऽआत्मन्न्येव प्रजातिमधत्त स ऽआस्ये-नैव देवानसृजत ते देवा दिवमभिपद्यासृज्ज्यन्त तद्देवानान्दे-वत्वं य्यद्दिवमभिपद्यासृज्ज्यन्त तस्मै ससृजानाय दिवे-वास तद्वेव देवानान्देवत्वं य्यदस्मै ससृजानाय दिवे-वास ॥ ७ ॥ अथ योऽयमवाङ् प्राणः । तेनासुरान-सृजत त ऽइमामेव पृथिवीमभिपद्यासृज्ज्यन्त तस्मै ससृ-जानाय तम ऽइवास ॥ ८ ॥ सोऽवेत् । पाप्मानं वा-ऽअसृक्षि यस्मै मे ससृजानाय तम ऽइवाभूदिति ताँस्तत ऽएव पाप्मनाविध्यत्ते तत ऽएव पराभवँस्तस्मादाहुर्नै-तदस्ति यद्दैवासुरं य्यदिदमन्वाख्याने त्वदुद्यत ऽइति ह्यासे त्वत्तो हैव तान्प्रजापतिः पाप्मनाविध्यत्ते तत ऽएव पराभवन्निति ॥ ९ ॥ तस्मादेतदृषिणाभ्यनूक्तम् । न त्वं य्युयुत्से कतमच्चनाहर्न्न तेऽमित्रो मघवन्कश्चनास्ति

मायेत्सा ते यानि युद्धान्याहुर्नोऽएव शत्रुन्न नु पुरा युयुत्स ऽइति ॥ १० ॥ स यदस्मै देवान्त्ससृजानाय । दिवेवास तदहरकुरुताथ यदस्मा ऽअसुरान्त्ससृजानाय तम ऽइवास ताᳬं रात्रिमकुरुत ते ऽअहोरात्रे ॥ ११ ॥ स ऽऐक्षत प्रजापतिः । सर्वं वा ऽअत्सारिषं य ऽइमा देवता ऽअसृ-क्षीति स सर्वत्सरोऽभवत्सर्वत्सरो ह वै नामैतद्यत्सँवत्सर ऽइति स यो हैवमेतत्सँवत्सरस्य सर्वत्सरत्वं वेद यो हैनं पाप्मा मायया त्सरति न हैनः सोऽभिभवत्यथ यमभि-चरत्यभि हैवैनम्भवति य ऽएवमेतत्सँवत्सरस्य सर्वत्सरत्वं वेद ॥ १२ ॥ स ऽऐक्षत प्रजापतिः । इमं वा ऽआत्मनः प्रतिमामसृक्षि यत्सँवत्सरमिति तस्मादाहुः प्रजापतिः सँवत्सर ऽइत्यात्मनो ह्येतत्प्रतिमामसृजत यद्वेव चतुरक्षरः सँवत्सरश्चतुरक्षरः प्रजापतिस्तेनो हैवास्यैष प्रतिमा ॥ १३ ॥ ता वा ऽएताः प्रजापतेरधि देवता ऽअसृज्यन्ता-ग्निरिन्द्रः सोमः परमेष्ठी प्राजापत्यः ॥ १४ ॥ ताः सहस्रायुषो जज्ञिरे । ता यथा नद्यै पारम्पराप्रश्येदेवᳬं स्वस्यायुषः पारम्पराचख्युः ॥ १५ ॥ ता ऽअर्चन्त्यः श्राम्यन्तश्चेरुः । तत ऽएतम्परमेष्ठी प्राजापत्यो यज्ञम-पश्यद्यद्दर्शपूर्णमासौ ताभ्यामयजत ताभ्यामिष्ट्वाकाम-यताहमेवेदᳬं सर्वᳬं स्यामिति स ऽआपोऽभवदापो वा ऽइदᳬं सर्वन्ता यत्परमे स्थाने तिष्ठन्ति यो हीहाभि-खनेदप ऽएवाभिविन्देत्परमाद्वा ऽएतत्स्थानाद्वर्षति यद्दिव-स्तस्मात्परमेष्ठी नाम ॥ १६ ॥ स परमेष्ठी प्रजापति-

स्पितरमब्रवीत् । कामप्रं वा ऽअहं त्वयज्ञमदर्शन्तेन त्वा याजयानीति तथेति तमयाजयत्स ऽइष्ट्वाकामयताहमेवेदꣳ सर्वꣳ स्यामिति स प्प्राणोऽभवत्प्राणो वा ऽइदꣳ सर्वमयं वै प्प्राणो योऽयम्पवते स प्प्रजापतिस्तस्य दृष्टिर्य्यदेव वेदेत्थाद्वातीति यद्वै किञ्च प्प्राणि स प्प्रजापतिः स यो हैवमेताम्प्रजापतेर्दृष्टिं वेदाविरिव हैव भवति ॥ १७ ॥

स प्प्रजापतिरिन्द्रम्पुत्रमब्रवीत् । अनेन त्वा कामप्प्रेण यज्ञेन याजयानि येन मामिदम्परमेष्ठ्ययीयजदिति तथेति तमयाजयत्स ऽइष्ट्वाकामयताहमेवेदꣳ सर्वꣳ स्यामिति स वागभवद्वाग्वा ऽइदꣳ सर्वन्तस्मादाहुरिन्द्रो वागिति ॥ १८ ॥ [ अर्धप्रपाठकः ] स ऽइन्द्रोऽग्नीषोमौ भ्भ्रातरा- वब्रवीत् । अनेन वाङ्कामप्प्रेण यज्ञेन याजयानि येन मामिदम्पिता प्प्रजापतिरयीयजदिति तथेति तावयाजय- त्ताविष्ट्वाकामयेतामावमेवेदꣳ सर्वꣳ स्यावेति तयोरन्नाद ऽएवान्यतरोऽभवदन्नमन्यतरोऽन्नाद ऽएवाग्निरभवदन्नꣳ सोमोन्नादश्च वा ऽइदꣳ सर्वमन्नञ्च ॥ १९ ॥ ता वा ऽएताः । पञ्च देवता ऽएतेन कामप्प्रेण यज्ञेनायजन्त ता यत्कामा ऽअयजन्त स ऽआभ्यः कामः समार्ध्यत यत्कामो ह वा ऽएतेन यज्ञेन यजते सोऽस्मै कामः समृद्ध्यते ॥ २० ॥ त ऽइष्ट्वा प्प्राचीन्दिशमपश्यन् । ताम्प्राचीमेवाकुर्वत सेयम्प्राच्येव दिक्तस्मादिमाः प्रजाः प्प्राच्यः सर्पन्ति प्प्राचीꣳ ह्येतामकुर्वतोपैनामितः कुर्वी- महीति तामूर्जमकुर्वतेमाह्यूर्जम्पश्यन्तो ऽमेति सासौ द्यौरभवद्

॥ २१ ॥ अथ दक्षिणान्दिशमपश्यन् । तान्दक्षिणामेवाकुर्वत सेयन्दक्षिणैव दिक्तस्मादु दक्षिणत ऽएव दक्षिणा ऽउपतिष्ठन्ते दक्षिणतोऽभ्युवाजन्ति दक्षिणाꣳ ह्येतामकुर्वतोपैनामितः कुर्वीमहीति तँल्लोकमकुर्वतेमङ्खलु लोकम्पश्येमेति तदिदमन्तरिक्षमभवदेष वै लोकः स यथा हैवेयम्प्रतिष्ठाविरस्मिँल्लोके पृथिव्येवमु हैवैषा प्रतिष्ठाविरमुष्मिँल्लोक ऽइदमन्तरिक्षः स यदिह सन्नमुँल्लोकन्न पश्यति तस्मादाहुः परोऽक्षमसौ लोक ऽइति ॥ २२ ॥ अथ प्रतीचीन्दिशमपश्यन् । तामाशामकुर्वत तस्माद्यः प्राङ् सृत्वा विन्दत ऽएतामेव तेन दिशमेत्याशाꣳ ह्येतामकुर्वतोपैनामितः कुर्वीमहीति ताꣳ श्रियमकुर्वतेमाङ्खलु श्रियम्पश्येमेति सेयम्पृथिव्यभवच्छ्रीर्वा ऽइयन्तस्माद्योऽस्यै भूयिष्ठं विन्दते स ऽएव श्रेष्ठो भवति ॥ २३ ॥ अथोदीचीन्दिशमपश्यन् । तामपोऽकुर्वतोपैनामितः कुर्वीमहीति तन्धर्म्ममकुर्वत धर्म्मो वा ऽआपस्तस्माद्यदेमँल्लोकमाप ऽआगच्छन्ति सर्वमेवेदं यथा धर्म्मम्भवत्यथ यदा वृष्टिर्भवति बलीयानेव तर्ह्यबलीयस ऽआदत्ते धर्म्मो ह्यापः ॥ २४ ॥ ता वा ऽएताः । एकादश देवताः पञ्च प्रयाजा द्वावाज्यभागौ स्विष्टकृत्त्रयोऽनुयाजाः ॥ २५ ॥ ता ऽएकादशाहुतयः । एताभिर्वा ऽआहुतिभिर्देवा ऽइमाँल्लोकानजयन्नेता दिशस्तथो ऽएवैष ऽएताभिराहुतिभिरिमाँल्लोकाञ्जयत्येता दिशः ॥ २६ ॥ चतस्रोऽवान्तरदिशः । त ऽएव चत्वारः पत्नीसंयाजा ऽअवान्तरदिशो वै

देवाश्चतुर्भिः पत्नीसंयाजैरजयन्नवान्तरदिश ऽउ ऽएवैष एतैर्जयति ॥ २७ ॥ अथेडा । अन्नाद्यमेवैतया देवा ऽअजयँस्तथो ऽएवैष ऽएतयान्नाद्यमेव जयत्येषा नु देवत्रा दर्शपूर्णमासयोः सम्पत् ॥ २८ ॥ अथाध्यात्मम् । पञ्चेमे पुरुषे प्राणा ऽऋते चक्षुर्भ्यान्त ऽएव पञ्च प्रयाजा चक्षुषी ऽआज्यभागौ ॥ २९ ॥ अयमेवावाङ् प्राणः स्विष्टकृत् । स यत्तमभ्यर्द्धं ऽइवेतराभ्य ऽआहुतिभ्यो जुहोति तस्मादेतस्मात्प्राणात्सर्वे प्राणा बीभत्सन्तेऽथ यत्स्विष्टकृते सर्वेषाᳪ हविषाᳪ समवद्यति तस्माद्यत्किञ्चे-मान्प्राणानाप्द्यत ऽएतमेव तत्सर्वᳪ समवैति ॥३०॥ त्रीणि शिश्नानि । त ऽएव त्रयोऽनुयाजाः स योऽयं वर्षिष्ठो-ऽनुयाजस्तदिदं वर्षिष्ठमिव शिश्नन्तं वा ऽअनवानन्यजे-दित्याहुस्तथो ह्यस्यैतदमृदृम्भवतीति ॥ ३१ ॥ स वै सकृदु-वान्यात् । एकᳪ ह्येतस्य पर्वाथ यदपर्वकᳪ स्यात्प्रतृण्णं हैव तिष्ठेल्लम्बेत वा तस्मादेतद्व तिष्ठति पद्यते च तस्मात्सकृदुवान्यात् ॥ ३२ ॥ द्वौ बाहू द्वा ऽऊरू । त ऽएव चत्वारः पत्नीसंयाजाः प्रतिष्ठायमेव प्राण ऽइडा यत्ताम्नाग्नौ जुहोति यत्सा प्रदग्धेव तस्मादयमनवतृण्णः प्राणः ॥ ३३ ॥ अस्त्येव याज्यानुवाक्याः । माᳪसह हविस्तन्मितच्छन्दो यद्याज्यानुवाक्यास्तस्माद् समावन्त्ये-वास्थीनि मेद्यतश्च कृश्यतश्च भवन्त्यथ यद्भूय ऽइव च हविर्गृह्णाति कनीय ऽइव च तस्माद् माᳪसान्येव मेद्यतो मेद्यन्ति माᳪसानि कृश्यतः कृश्यन्ति तेनैतेन

यज्ञेन यां कामयते देवतान्तां यजति यस्यै हविर्भवति ॥ ३४ ॥ ता वा ऽएताः । अनपोद्धार्य्या ऽआहुतयो भवन्ति स यद्धैतासामपोद्धरेद्यथैकमङ्गं शृणीयात्प्राणं वा निर्हण्यादेवन्तदृत्यान्येव हवींष्युप चाह्रियन्तेऽप च ह्रियन्ते ॥ ३५ ॥ ता वा ऽएताः । षोडशाहुतयो भवन्ति षोडशकलो वै पुरुषः पुरुषो यज्ञस्तस्मात्षोडशाहुतयो भवन्ति ॥ ३६ ॥

प्रथमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

[ व्रतोपायनमीमांसा ]

तद्वा ऽअदो व्रतोपायन ऽउच्यते । यदि नाश्नाति पितृदेवत्यो भवति यद्यु ऽअश्नाति देवानत्यश्नातीति तदारण्यमश्नीयादिति तत्र स्थापयन्ति ॥ १ ॥ स यदि ग्राम्या ऽओषधीरश्नाति । पुरोडाशस्य मेधमश्नाति यद्यारण्या ऽओषधीरश्नाति बर्हिषो मेधमश्नाति यदि वानस्पत्यमश्नातीध्मस्य मेधमश्नाति यदि पयः पिबति सान्नाय्यस्य चाज्यस्य च मेधमश्नाति यद्यपः पिबति प्रणीतानाम्मेधमश्नाति यदि नाश्नाति पितृदेवत्यो भवति ॥ २ ॥ तदाहुः । किमयनमिति स यद्धैवैते रात्री ऽअग्निहोत्रञ्जुहुयात्स यच्छुत्वा प्राश्नाति तेनापितृदेवत्यो भवत्याहुतिर्वा ऽएषा स यद्देवैतामात्मन्नाहुतिञ्जुहोति तेनो ऽएतेषाम्मेधानान्नाश्नाति ॥ ३ ॥ एते ह वै रात्री । सर्वा रात्रयः समवयन्ति या ऽआपूर्य्यमाणपक्षस्य रात्रयस्ताः सर्वाः पौर्णमासीं समवयन्ति या ऽअपक्षीयमाणपक्षस्य

रात्रयस्ताः सर्वा ऽअमावास्यां समवयन्ति स यो हैवं विद्वान्त्स्वयमुपवसथे जुहोति सर्वदा हैवास्य स्वयं हुतम्भवति ॥ ४ ॥

प्रथमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

---

[ आख्यायिकया यज्ञोत्पत्तिकथनम् ]

देवाश्च वा ऽअसुराश्च । उभये प्राजापत्याः पस्पृधिरे ततोऽसुरा अतिमानेनैव कस्मिन्नु वयञ्जुहुयामेति स्वेष्वेवास्येषु जुह्वतश्चेरुस्तेऽतिमानेनैव पराबभूवुस्तस्मान्नातिमन्येत पराभवस्य हैतन्मुखं यदतिमानः ॥ १ ॥
अथ देवाः । अन्योऽन्यस्मिन्नेव जुह्वतश्चेरुस्तेभ्यः प्रजापतिरात्मानम्प्रददौ यज्ञो हैषा मास यज्ञो हि देवानामन्नम् ॥ २ ॥ स देवेभ्य ऽआत्मानम्प्रदाय । अथैतमात्मनः प्रतिमामसृजत यद्यज्ञन्तस्मादाहुः प्रजापतिर्यज्ञ ऽइत्यात्मनो ह्येतम्प्रतिमामसृजत ॥ ३ ॥ स ऽएतेन यज्ञेन । देवेभ्य ऽआत्मानन्निरक्रीणीत स यद्दूतमुपैति यथैव तत्प्रजापतिर्देवेभ्य ऽआत्मानम्प्रायच्छदेवमेवैष ऽएतद्देवेभ्य ऽआत्मानम्प्रयच्छति तस्मादु संयत ऽएवैताᳪं रात्रिञ्चिचरिषेद्यथा हविषा चरेदेवᳪं हविर्ह्येष देवानाम्भवति ॥ ४ ॥ अथ यद्यज्ञन्तनुते । यज्ञेनैवैतद्देवेभ्य ऽआत्मानन्निष्क्रीणीते यथैव तत्प्रजापतिर्निरक्रीणीतैवमथ यद्धविर्निर्वपति हविष्वैतद्यज्ञन्निष्क्रीणाति हविरनुवाक्य-

---

* व्रीहियवपिष्टैर्निर्मितः पक्वः पिण्डविशेषः पुरोडाशः ।

यानुवाक्यामवदानेनावदानं याज्यया याज्यां वषट्कारेण वषट्कारमाहुत्या तस्याहुतिरेवानिष्क्रीता भवति ॥ ५ ॥ स यथाग्रप्रशीर्णो वृक्षः । एवमस्यैष यज्ञो भवत्याहुतिमेवान्वाहुर्येण निष्क्रीणाति तद्यदेतद्धीनं यज्ञस्यान्वाहरति तस्मादन्वाहार्यो नामैवमु हास्यैष सर्व एव यज्ञो निष्क्रीतो भवत्येष ह वै यजमानस्यामुष्मिंल्लोक आत्मा भवति यद्यज्ञ स ह सर्वतनूरेव यजमानोऽमुष्मिँल्लोके सम्भवति य एवं विद्वान्निष्क्रीत्या यजते ॥ ६ ॥

प्रथमाध्याये अष्टमं ब्राह्मणम् ॥ ८ ॥

इति प्रथमोऽध्यायः ॥१॥



[ पुरुषजन्मत्रयप्रतिपादनम्, सामिधेनीप्रशंसा च ]

त्रिर्ह वै पुरुषो जायते । एतन्न्वेव मातुश्चाधि पितुश्चाग्रे जायतेऽथ यं यज्ञ उपनमति स यद्यजते तद्द्वितीयञ्जायतेऽथ यत्र म्रियते यत्रैनमग्नावभ्यादधति स यत्ततः सम्भवति तत्तृतीयञ्जायते तस्मात्त्रिः पुरुषो जायत इत्याहुः ॥ १ ॥ ता वा एताः । एकादश सामिधेनीरन्वाह दश वा इमे पुरुषे प्राणा आत्मैकादशो यस्मिन्नेते प्राणाः प्रतिष्ठिता एतावान्वै पुरुषस्तदेनङ्कृत्स्नञ्जनयत्यथ यदूर्ध्वं सामिधेनीभ्यः सा प्रतिष्ठा तदेनञ्जनयित्वा प्रतिष्ठापयति ॥ २ ॥ नव प्रसवस्य

(१) सम्यगिध्यते ज्वाल्यतेऽग्निर्याभिर्ऋग्भिस्ताः सामिधेन्यः 'प्र वो वाजा अभिद्यव' (तै० ब्रा० ३।५।२।१) इत्याद्या एकादश ।

ऽव्याहृतयः । नवेमे पुरुषे प्राणास्तदेनन्द्वितीयञ्जनय-
त्याश्श्रावणम्प्रत्याश्श्रावणः सा प्रतिष्ठाथ यदेवादः
सृष्टौ जन्मोच्यते तदेनन्तृतीयञ्जनयति पत्नीसंयाजा
ऽएव तत्र प्रतिष्ठा ॥ ३ ॥ त्रिर्हि वै पुरुषो जायते ।
एवमेवैनमेतद्यज्ञात्त्रिर्जनयति तासामेकादशानान्त्रिः प्रथमा-
मन्वाह त्रिरुत्तमाम् ॥ ४ ॥ ताः पञ्चदश सामिधेन्यः ।
द्वावाघारौ पञ्च प्रयाजा ऽइडा त्रयोऽनुयाजाः सूक्त-
वाकश्च शंय्योर्वाकश्च तास्त्रयोदशाहुतयोऽथ यदेवादः
पत्नीसंयाजेषु सम्प्रगृह्णाति समिष्टयजुश्च ॥ ५ ॥ ताः
पञ्चदशाहुतयः । तासाम्पञ्चदशानामाहुतीनामेता ऽअनु-
वाक्या ऽएताः पञ्चदश सामिधेन्य ऽएतासामनुवाक्या-
नामेता याज्या य ऽएवात्र मन्त्रो यो निगदस्तद्याज्यारूप-
मेतेनो हास्यैता ऽआहुतयोऽनुवाक्यवत्यो भवन्त्येताभिः
सामिधेनीभिरेताभिराहुतिभिरेता ऽअनुवाक्या याज्यवत्य-
श्चाहुतिमत्यश्च भवन्ति ॥ ६ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

( १ ) वहे कस्मिंश्चिद्देशमारभ्य देशान्तरपर्यन्तं समन्त्रकपात्रव्यापारेण आहरणमाघारः ।

( २ ) प्रकर्षेण इज्यन्ते देवता एभिरिति प्रयाजाः. "समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहा यजति" ( तै॰ सं॰ २।६।१ ) इति प्रयाजाः ।

( ३ ) इज्यते अनयेति व्युत्पत्त्या 'ये यजामहे' इति पूर्विका वषट्कारान्ता हविःप्रदानार्था ऋक् याज्याशब्देनोच्यते ।

( ४ ) पुरः यागात्पूर्वं देवतामनुकूलयितुं या ऋक् अनूच्यते सा पुरोऽनुवाक्या अनुवाक्या इति चोच्यते ।

( ५ ) 'वत्य॰' इति 'अ' पुस्तके ।

[ याज्यानुवाक्ययोश्छन्दोविशेषत्वविधानपूर्वकं स्तवनम् ]

गायत्रीमनुवाक्यामन्वाह । त्रिपदा वै गायत्री त्रय ऽइमे लोका ऽइमानेवैतल्लोकान्देवाः प्रत्यष्ठापयन् ॥ १ ॥ अथ त्रिष्टुभा यजति । चतुष्पदा वै त्रिष्टुप्चतुष्पादाः पशवस्तत्पशूनेवैतदेषु लोकेषु प्रतिष्ठितेषु देवाः प्रत्यष्ठापयन् ॥ २ ॥ द्व्यक्षरो वषट्कारः । द्विपाद्वै पुरुषस्तत्पुरुषमेवैतद्द्विपादमेषु पशुषु प्रतिष्ठितेषु देवाः प्रत्यष्ठापयन् ॥३॥ सोऽयन्द्विपात्पुरुषः । पशुषु प्रतिष्ठित ऽएवमेवैष ऽएतल्लोकान्प्रतिष्ठापयति लोकेषु प्रतिष्ठितेषु पशून्प्रतिष्ठापयति पशुषु प्रतिष्ठितेष्वात्मानम्प्रतिष्ठापयत्येवमेष पुरुषः पशुषु प्रतिष्ठितो य ऽएवं विद्वान्यजते ॥ ४ ॥ अथ यद्वषट्कृते जुहोति । एष वै वषट्कारो य ऽएष तपति स ऽएष मृत्युस्तदेनमुपरिष्टान्मृत्योः संस्करोति तदेनमतो जनयति स ऽएतम्मृत्युमतिमुच्यते यज्ञो वा ऽअस्यात्मा भवति तद्यज्ञ ऽएव भूत्वैतन्मृत्युमतिमुच्यत ऽएतेनो ह्यस्य सर्वे यज्ञकृतव ऽएतम्मृत्युमतिमुक्ताः ॥ ५ ॥ * अथ यामेतामाहुतिञ्जुहोति । एषा ह वा ऽअस्याहुतिरमुष्मिँल्लोक ऽआत्मा भवति स यदैवंविदस्माल्लोकात्प्रैत्यथैनमेषाहुतिरेतस्य पृष्ठे सत्याह्वयत्येह्यहं वै त ऽइहात्मास्मीति तद्यदाह्वयति तस्मादाहुतिर्नाम ॥ ६ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



* शतम् ५६०० ।

१४४

[ आधारौ स्तोतुमाख्यायिकया तत्सृष्टिप्रतिपादनम् ]

ब्रह्म वा ऽइदमग्र ऽआसीत् । तद्देवानसृजत तद्देवा-
न्त्सृष्ट्वैषु लोकेषु व्यारोहयदस्मिन्नेव लोकेऽग्निं वायुमन्तरिक्षे
दिव्येव सूर्य्यम् ॥ १ ॥ अथ येऽत ऽऊर्द्ध्वा लोकाः । तद्या
ऽअत ऽऊर्द्ध्वा देवतास्तेषु ता देवता व्यारोहयत्स यथा
हैवेम ऽआविर्लोका ऽइमाश्च देवता ऽएवमु हैव त ऽआवि-
र्लोकास्ताश्च देवता येषु ता देवता व्यारोहयत् ॥ २ ॥
अथ ब्रह्मैव परार्द्धमगच्छत् । तत्परार्द्धं गत्वैक्षत कथं
न्विमाँल्लोकान्प्रत्यवेयामिति तद्द्वाभ्यामेव प्रत्यवैद्रूपेण
चैव नाम्ना च स यस्य कस्य च नामास्ति तन्नाम यस्यो
ऽअपि नाम नास्ति यद्वेद रूपेणेदꣳ रूपमिति तद्रूपमेता-
वद्वा ऽइदं यावद्रूपं चैव नाम च ॥ ३ ॥ ते हैते ब्रह्मणो
महती ऽअभ्वे । स यो हैते ब्रह्मणो महती ऽअभ्वे
वेद महद्धैवाभ्वम्भवति ॥ ४ ॥ ते हैते ब्रह्मणो
महती यक्षे । स यो हैते ब्रह्मणो महती यक्षे
वेद महद्धैव यक्षम्भवति तयोरन्यतरज्ज्यायो रूपमेव
यद्ध्यपि नाम रूपमेव तत्स यो हैतयोर्ज्यायो वेद ज्या-
यान्ह तस्माद्भवति यस्माज्ज्यायान्बुभूषति ॥ ५ ॥
मर्त्या ह वा ऽअग्रे देवा ऽआसुः । स यदैव ते ब्रह्मणा-
पुरयामृता ऽआसुः स यम्मनस ऽआधारयति मनो
वै रूपम्मनसा हि वेदेदꣳ रूपमिति तेन रूपमाप्नोत्यथ
यं वाच ऽआधारयति वाग्वै नाम वाचा हि नाम
गृह्णाति तेनो नामाप्नोत्येतावद्वा ऽइदꣳ सर्वं यावद्रूपं चैव

नाम च तत्सर्वमाप्नोति सर्वं वा ऽअक्षय्यमेतेनो हास्याक्षय्यꣳ सुकृतम्भवत्यक्षय्यो लोकः ॥ ६ ॥ तद्वा ऽअद ऽआग्नेय्यामिष्ट्वा ऽउच्यते । यथा तदृषिभ्यो यज्ञः प्रारोचत तं व्यधातन्वत तद्यज्ञन्तन्वानानृषीन्गन्धर्वा ऽउपनिषेदुस्ते ह स्म सन्निदधतीदं वा ऽअत्यरीरिचन्निदमूनमक्रन्निति स यदेषां व्यज्ञः सन्तस्त्थेऽथैनाँस्तद्दर्शयाञ्चक्रुरिदं वा ऽअत्यरीरिचतेदमूनमकर्त्तेति ॥ ७ ॥ स यदतिरेचयाञ्चक्रुः । यथा गिरिरेवन्तदास यदूनञ्चक्रुर्यथा श्वभ्राः प्रदरा एवन्तदास ॥ ८ ॥ स यत्र शंय्योराह । तदभिमृशति 'यज्ञ नमश्च त ऽउप च यज्ञस्य शिवे सन्तिष्ठस्व स्विष्टे मे सन्तिष्ठस्वे'ति स यदतिरेचयति तन्नमस्कारेण शमयत्यथ यदूनङ्करोत्युप चेति तेन तदून्यूनम्भवति यज्ञस्य शिवे सन्तिष्ठस्वेति यद्वै यज्ञस्यान्न्यूनातिरिक्तन्तच्छिवन्तेन तदुभयꣳ शमयति स्विष्टे मे सन्तिष्ठस्वेति यद्वै यज्ञस्यान्न्यूनातिरिक्तन्तत्स्विष्टन्तेनो तदुभयꣳ शमयत्येवमु हास्यैतेन यज्ञेनान्न्यूनातिरिक्तेनैवेष्टम्भवति य ऽएवं विद्वानेवमभिमृशति तस्मादेवमेवाभिमृशेत्ते ह ते गन्धर्वा ऽआसुः शूर्प्यं व्यवमान्कपिरुद्रालवान्धानान्तर्वान् ॥ ९ ॥

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



(१) शु० य० स० अ० २ क० १९।

[ दर्शपूर्णमासनामात्मना आधारस्तुतिः, अधिदेवमध्यात्मभेदेन दर्शपूर्णमासप्रतिपादनञ्च ]

एष वै पूर्णमाः। य एष तपत्यहरहर्ह्येवैष पूर्णोऽथैष एव दर्शो यच्चन्द्रमा ददृश इव ह्येषः ॥ १ ॥ अथो इतरथाहुः। एष एव पूर्णमा यच्चन्द्रमा एतस्य ह्यनु पूरणम्पौर्णमासीत्याचक्षतेऽथैष एव दर्शो य एष तपति ददृश इव ह्येषः ॥ २ ॥ इयमेव पूर्णमाः। पूर्णेव हीयमसावेव द्यौर्दर्शो ददृश इव ह्यसौ द्यौः ॥ ३ ॥ रात्रिरेव पूर्णमाः। पूर्णेव हीयं रात्रिरहरेव दर्शो ददृश इव हीदमहरेषा नु देवत्रा दर्शपूर्णमासयोर्मीमांसा ॥ ४ ॥ अथाध्यात्मम्। उदान एव पूर्णमा उदानेन ह्ययम्पुरुषः पूर्य्यत इव प्राण एव दर्शो ददृश इव ह्ययम्प्राणस्तदेतावन्नादश्चान्नप्रदश्च दर्शपूर्णमासौ ॥ ५ ॥ प्राण एवान्नादः। प्राणेन हीदमन्नमद्यत उदान एवान्नप्रद उदानेन हीदमन्नम्प्रदीयते स यो हैतावन्नादश्चान्नप्रदश्च दर्शपूर्णमासौ वेदान्नादो हैव भवति प्र हास्मा अन्नाद्यन्दीयते ॥ ६ ॥ मन एव पूर्णमाः। पूर्णमिव हीदम्मनो वागेव दर्शो ददृश इव हीयं वाक्तदेतावध्यात्मम्प्रत्यक्षन्दर्शपूर्णमासौ स यदुपवसथे व्रतोपायनीयमश्नाति तेनैतावध्यात्मम्प्रत्यक्षन्दर्शपूर्णमासौ प्रीणाति यज्ञेन प्रातर्देवौ ॥ ७ ॥ तदाहुः। यन्न पूर्णमासायेति हविर्गृह्यते न दर्शायेति हविर्गृह्यते न पूर्णमासायानुब्रूहि न दर्शायानुब्रूहि न पूर्णमासं यज न दर्शं

स्यजेत्यथ केनास्य दर्शपूर्णमासाविष्टौ भवत ऽइति स
यम्मनस ऽआधारयति मनो वै पूर्णमास्तेन पूर्णमासं
स्यजत्यथ यं वाच ऽआधारयति वाग्वै दर्शस्तेनो दर्शं
स्यजत्येतेनो हास्य दर्शपूर्णमासाविष्टौ भवतः ॥ ८ ॥
तद्धैके । चरू निर्वपन्ति पौर्णमास्याथं सरस्वतेऽमावास्या-
याथं सरस्वत्या ऽएतत्प्रत्यक्षन्दर्शपूर्णमासौ यजामह ऽइति
वदन्तस्तदु तथा न कुर्य्यान्मनो वै सरस्वान्वाक्सरस्वती
स यदेवैतावाघारावाघारयति तदेवास्य दर्शपूर्णमासाविष्टौ
भवतस्तस्मादेतौ चरू न निर्वपेत् ॥ ९ ॥ तदाहुः ।
आगूर्त्ती वा ऽएष भवति यो दर्शपूर्णमासाभ्यां यजते
पौर्णमासेन हीष्ट्वा वेदामावास्येन यक्ष्य ऽइत्यामावास्ये-
नेष्ट्वा वेद पुनः पौर्णमासेन यक्ष्य ऽइति स ऽआगूर्त्येवा-
मुँल्लोकमेति यदामुँल्लोकमेति कथमनागूर्त्ती भवतीति स
यदेवैता ऽउभयत्राघारावाघारयति तदेवास्य दर्शपूर्णमासौ
सन्तिष्ठेते स सथंस्थितयोरेव दर्शपूर्णमासयोरथामुँल्लो-
कमेति तथानागूर्त्ती भवति ॥ १० ॥

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥
कण्डिकासंख्या ॥ ११९ ॥

[ दर्शपूर्णमासयोरश्वमेधात्मना स्तुतिः ]

अपि ह वा ऽएतर्हि । देवेभ्योऽश्वमेधमालभन्ते
तदाहुः प्राकृतोऽश्वमेध ऽइतीतर ऽइन्नूनः स तद्वा ऽएष

ऽएवाश्वमेधो यच्चन्द्रमाः ॥ १ ॥ तदाहुः । पदे पदेऽश्वस्य मेध्यस्याहुतिञ्जुह्वतीति स यत्सायम्प्रातरग्निहोत्रञ्जुहोति द्वे सायमाहुती जुहोती द्वे प्रातस्ताश्चतस्र ऽआहुतयश्चतुष्पाद्वा ऽअश्वस्तदस्य पदे पद ऽएवाहुतिर्हुता भवति ॥ २ ॥ तदाहुः । विवृत्तेऽश्वस्येष्टिन्निर्वपतीत्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैष ऽएताꣳ रात्रिन्न पुरस्तान्न पश्चाद्ददृशे तदिमँल्लोकमागच्छति सोऽस्मिँल्लोके विवर्त्तते ॥ ३ ॥ स यदामावास्येन यजते । विवृत्त ऽएवास्यैतदिष्टिन्निर्वपत्यथ यत्पौर्णमासेन यजतेऽश्वमेधमेवैतदालभते तमालभ्य देवेभ्यः प्रयच्छति सँवत्सरे वा ऽइतरमश्वमेधमालभन्त ऽएष वै मासः परिप्लवमानः सँवत्सरङ्करोति तदस्य सँवत्सरे सँवत्सर ऽएवाश्वमेध ऽआलब्धो भवति ॥ ४ ॥ तं वा ऽएतम् । मासि मास्येवाश्वमेधमालभन्ते स यो हैवं विद्वानग्निहोत्रञ्च जुहोति दर्शपूर्णमासाभ्याञ्च यजते मासि मासि हैवास्याश्वमेधेनेष्टम्भवत्येतद्‌ु हास्याग्निहोत्रञ्च दर्शपूर्णमासौ चाश्वमेधमभिसम्पद्येते ॥ ५ ॥

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ प्रणीतादीनां यज्ञशरीरावयवत्वेन सम्पत्तिकथनम् ]

शिरो ह वा ऽएतद्यज्ञस्य यत्प्रणीताः । स यत्प्रणीताः प्रणयति शिर ऽएवैतद्यज्ञस्य संस्करोति स

विद्याच्छिर ऽएव म ऽएतत्संस्क्रियत ऽइति ॥ १ ॥ प्राण ऽएवास्येद्ध्मः । प्राणेन हीदꣳ सर्वमिद्धं यदप्राणभृन्निमिषद्यदेजति स विद्यादहमेवैष ऽइद्ध्म ऽइति ॥ २ ॥ अनूकमेवास्य सामिधेन्यः । तस्मात्ता ब्रूयात्सन्तन्वन्निव मेऽनुब्रूहीति सन्ततमिव हीदमनूकम्मनश्चैवास्य वाक्चाघारौ सरस्वाँश्च सरस्वती च स विद्यान्मनश्चैव मे वाक्चाघारौ सरस्वाँश्च सरस्वती चेति ॥ ३ ॥ पञ्च प्रयाजाः । इम ऽएवास्य ते शीर्षण्याः पञ्च प्राणा मुखमेवास्य प्रथमः प्रयाजो दक्षिणा नासिका द्वितीयः सव्या नासिका तृतीयो दक्षिणः कर्णश्चतुर्थः सव्यः कर्णः पञ्चमोऽथ यच्चतुर्थे प्रयाजे समानयति तस्मादिदꣳ श्रोत्रमन्तरतः सन्तृणण्चक्षुषी ऽआज्यभागौ स विद्याच्चक्षुषी ऽएव म ऽएताविति ॥ ४ ॥ अथ य ऽआग्नेयः पुरोडाशः । अयमेवास्य स दक्षिणोऽर्द्धो हृदयमेवास्योपाꣳशुयाजः स यत्तेनोपाꣳशु चरन्ति तस्मादिदꣳ हृव हृदयम् ॥ ५ ॥ अथ योऽग्नीषोमीयः पुरोडाशः । अयमेवास्य स ऽउत्तरोऽर्द्ध ऽऐन्द्रं वा सान्नाय्यमन्तराꣳ समेवास्य स्विष्टकृद्विपम्प्राशित्रम् ॥ ६ ॥ स यत्प्राशित्रमवद्यति । यथैव तत्प्रजापतेराविद्धन्निरकृन्तन्नेवमेवैतस्यैतद्यद्वेष्टितं यद्ग्रथितं यद्दरुण्यन्तन्निष्कृन्तन्ति स विद्याद्यथैव तत्प्रजापतेराविद्धन्निरकृन्तन्नेवमेव म ऽइदं यद्वेष्टितं यद्ग्रथितं यद्दरुण्यन्तन्निष्कृन्तन्तीति ॥ ७ ॥ उदरमेवास्येडा ।

तद्यथैवाद ऽइडायाᳬ समवद्यन्त्येवमेवेदं विश्वरूपमन्न-मुदरे समवधीयते ॥ ८ ॥ त्रयोऽनुयाजाः । इम ऽएवास्य तेऽवाञ्चस्त्रयः प्राणा बाहू ऽएवास्य सूक्तवाकश्च शंय्योर्वा-कश्च चत्वारः पत्नीसंयाजाश्चतस्रो वै प्रतिष्ठा ऽऊरू द्वावष्ठीवन्तौ द्वौ पादावेवास्य समिष्टयजुः ॥ ९ ॥ ता ऽएकविᳬशतिराहुतयः । द्वावाघारौ पञ्च प्रयाजा द्वावा-ज्यभागावाग्नेयः पुरोडाशस्तद्दशाग्नीषोमीय ऽउपाᳬ-शुयाजोऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदिडा त्रयो-ऽनुयाजाः सूक्तवाकश्च शंय्योर्वाकश्चाथ यदेवादः पत्नी-संयाजेषु सम्प्रगृह्णाति समिष्टयजुश्च ॥ १० ॥ ता ऽएकविᳬशतिराहुतयः । द्वादश वै मासाः संवत्सरस्य पञ्चर्त्तवस्त्रयो लोकास्तद्विᳬशतिरेष ऽएवैकविᳬशो य ऽएष तपति सैषा गतिरेषा प्रतिष्ठा तदेतां गतिमेतां प्रति-ष्ठां गच्छति ॥ ११ ॥ तद्ध स्मैतदारुणिराह । अर्द्धमासशो वा ऽअहममुनादित्येन स लोको भवामि तामहन्दर्श-पूर्णमासयोः सम्पदं वेदेति ॥ १२ ॥ तदाहुः । आत्म-याजी श्रेयाᳬन्देवयाजी३ इत्यात्मयाजीति ह ब्रूयात्स ह वा ऽआत्मयाजी यो वेदेदम्मेऽनेनाङ्गᳬ संस्क्रियत ऽइदम्मेऽनेनाङ्गमुपधीयत ऽइति स यथाहिस्त्वचो नि-र्म्मुच्येतैवमस्मान्मर्त्याच्छरीरात्पाप्मनो निर्म्मुच्यते स ऽऋङ्मयो यजुर्म्मयः साममय ऽआहुतिमयः स्वर्गँल्लो-कमभिसम्भवति ॥ १३ ॥ अथ ह स देवयाजी यो वेद । देवानेवाहमिदं यजे देवान्सपर्य्यामीति स यथा श्रेयसे

पापीयान्चलिः हुरेद्वैश्यो वा राज्ञे बलिः हुरेदेवः स सु ह न तावन्तँल्लोकञ्जयति यावन्तमितरः ॥ १४ ॥

द्वितीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥



[ दर्शपूर्णमासयागस्य विशिष्टफलसाधनताप्रतिपादनम् ]

सँवत्सरो यज्ञः । स यो ह वै सँवत्सरो यज्ञ ऽइति वेदान्ते हैवास्य सँवत्सरस्येष्टम्भवत्यथो यत्किञ्च सँवत्सरे क्रियते सर्वंः हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ १ ॥ ऋतव ऽआर्त्विजः । स यो ह वा ऽऋतव ऽआर्त्विज ऽइति वेदान्ते हैवास्यऽर्तूनामिष्टम्भवत्यथो यत्किञ्चऽर्तुषु क्रियते सर्वंः हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ २ ॥ मासा हवीꣳषि । स यो ह वै मासा हवीꣳषीति वेदान्ते हैवास्य मासानामिष्टम्भवत्यथो यत्किञ्च मासेषु क्रियते सर्वंः हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ ३ ॥ अर्द्धमासा हविष्पात्राणि । स यो ह वा ऽअर्द्धमासा हविष्पात्राणीति वेदान्ते हैवास्यार्द्धमासानामिष्टम्भवत्यथो यत्किञ्चार्द्धमासेषु क्रियते सर्वंः हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ ४ ॥ अहोरात्रे परिवेष्ट्री । स यो ह वा ऽअहोरात्रे परिवेष्ट्री ऽइति वेदान्ते हैवास्याहोरात्रयोरिष्टम्भवत्यथो यत्किञ्चाहोरात्रयोः क्रियते सर्वंः हैवास्य तदाप्तमवरुद्धमभिजितम्भवति ॥ ५ ॥ इयमेव प्रथमा सामिधेनी । अग्निर्द्वितीया वायु-

स्तृतीयान्तरिक्षश्चतुर्थी द्यौष्पञ्चम्म्यादित्यः षष्ठी चन्द्रमाः सप्तमी मनोऽष्टमी वाङ्नवमी तपो दशमी ब्रह्मैकादश्येता हि वा ऽइदꣳ सर्वꣳ समिन्धत ऽएताभिरिदꣳ सर्वꣳ समिद्धन्तस्मात्सामिधेन्यो नाम ॥ ६ ॥ स वै त्रिः प्रथमामन्वाह । स यत्प्रथममन्वाह प्राचीन्तेन दिशञ्जयति यद्द्वितीयन्दक्षिणान्तेन दिशञ्जयति यत्तृतीयमूर्द्ध्वामेव तेन दिशञ्जयति ॥ ७ ॥ त्रिर्वैवोत्तमामन्वाह । स यत्प्रथममन्वाह प्रतीचीन्तेन दिशञ्जयति यद्द्वितीयमुदीचीन्तेन दिशञ्जयति यत्तृतीयमिमामेव तेन प्रतिष्ठाञ्जयत्येवमु हाभिरिमाँल्लोकाञ्जयत्येता दिशः ॥ ८ ॥ ऋतमेव पूर्वं ऽआघारः । सत्यमुत्तरोऽव ह वा ऽऋतसत्ये रुन्द्धेथो यत्किञ्चऽर्तसत्याभ्याञ्जय्यꣳ सर्वꣳ हैव तज्जयति ॥ ९ ॥ त्विषिरेव प्रथमः प्रयाजः । अपचितिर्द्वितीयो यशस्तृतीयो ब्रह्मवर्चसञ्चतुर्थोऽन्नाद्यम्पञ्चमः ॥ १० ॥ स प्रथमम्प्रयाजमनुमन्त्रयेत । त्विषिमान्भूयासमित्यपचितिमान्भूयासमिति द्वितीयं यशस्वी भूयासमिति तृतीयम्ब्रह्मवर्चसी भूयासमिति चतुर्थमन्नादो भूयासमिति पञ्चमन्त्विषिमान्ह वा ऽअपचितिमान्यशस्वी ब्रह्मवर्चस्यन्नादो भवति य ऽएवमेतद्वेद ॥ ११ ॥ एतद्ध स्म वै तद्विद्वानाह । श्वेतकेतुरारुणेयः कस्स्विदेवापरीषु महनाणमिवाभिसꣳसारन्दिदृक्षितारो य ऽएवमेतत्प्रयाजानां यशो वेदितेति ॥ १२ ॥ भूतमेव पूर्वं ऽआज्यभागः । भविष्यदुत्तरोऽव ह वै भूतञ्च भविष्यच्च

रुन्द्धेऽथो यत्किञ्च भूतेन च भविष्यता च जय्यᳬ सर्वᳬ हैव तज्जयति ॥ १३ ॥ ब्रह्माग्नेयᳬ पुरोडाशᳬ । स यो ह वै ब्रह्माग्नेयᳬ पुरोडाश इति वेदाव ह ब्रह्म रुन्द्धेऽथो यत्किञ्च ब्रह्मणा जय्यᳬ सर्वᳬ हैव तज्जयति ॥ १४ ॥ क्षत्रमुपाᳬशुयाजᳬ । स यो ह वै क्षत्रमुपाᳬशुयाज इति वेदाव ह क्षत्रᳬ रुन्द्धेऽथो यत्किञ्च क्षत्रेण जय्यᳬ सर्वᳬ हैव तज्जयति तद्यदुपाᳬशुयाजङ्कुर्वन्त्येके नैके तस्मादुच्चैश्चोपाᳬशु च क्षत्रायाचक्षते ॥ १५ ॥ विडुत्तरᳬ पुरोडाशᳬ । स यो ह वै विडुत्तरᳬ पुरोडाश इति वेदाव ह विशᳬ रुन्द्धेऽथो यत्किञ्च विशा जय्यᳬ सर्वᳬ हैव तज्जयति तद्यदाग्नेयश्च पुरोडाश उपाᳬशुयाजश्च पूर्वौ भवतस्तस्मादुभे ब्रह्म च क्षत्रञ्च विशि प्रतिष्ठिते ॥ १६ ॥ राष्ट्रᳬ सान्नाय्यम् । स यो ह वै राष्ट्रᳬ सान्नाय्यमिति वेदाव ह राष्ट्रᳬ रुन्द्धेऽथो यत्किञ्च राष्ट्रेण जय्यᳬ सर्वᳬ हैव तज्जयति तद्यत्सन्नयन्त्येके नैके तस्माद्राष्ट्रᳬ सच्चेति वि च ॥ १७ ॥ तपᳬ स्विष्टकृत् । स यो ह वै तपᳬ स्विष्टकृदिति वेदाव ह तपो रुन्द्धेऽथो यत्किञ्च तपसा जय्यᳬ सर्वᳬ हैव तज्जयति ॥ १८ ॥ लोकᳬ प्राशित्रम् । स यो ह वै लोकᳬ प्राशित्रमिति वेदाव ह लोकᳬ रुन्द्धेऽथो यत्किञ्च लोकेन जय्यᳬ सर्वᳬ हैव तज्जयति नो ह लवेन लोकाद्व्ययते लवेन ह वा अमुष्मिँल्लोके लोकाद्व्ययन्तेऽथ य एवं वेद न ह बहु चन पापङ्कृत्वा लोकाद्व्ययते ॥ १९ ॥ श्रद्धेडा ।

स यो ह वै श्रद्धेडेति वेदाव ह श्रद्धाꣳ रुन्द्धेऽथो यत्किञ्च श्रद्धया जुह्वद् सर्वꣳ हैव तज्जयति ॥ २० ॥ अशनिरेव प्रथमोऽनुयाजः । ह्रादुनिर्द्वितीय उल्कुषी तृतीयः ॥२१॥ स प्रथममनुयाजमनुमन्त्रयेत । अशन्यमुञ्जहीति यन्द्विष्याद्ध्रादुन्यमुञ्जहीति द्वितीयमुल्कुष्यमुञ्जहीति तृतीयम् ॥ २२ ॥ स य एष क्षिप्रम्म्रियते । अशनिर्हं तमनुयाजो हन्त्यथ यो विस्रवन्निमइव ह्रादुनिर्हं तमनुयाजो हन्त्यथ योऽभ्युष्टमिवश्च इवोल्कुषी ह तमनुयाजो हन्ति ॥ २३ ॥ सैषा यज्ञमेनिः । एतया वै मेन्या देवा असुरान्पराभावयाञ्चक्रुस्तथो एवैवंविद्यजमानः पाप्मानन्द्विषन्तम्भ्रातृव्यम्पराभावयति ॥ २४ ॥ स यदनुयाजान्तो यज्ञः स्यात् । अशन्यन्तः स्याद्ध्रादुन्यन्त उल्कुष्यन्तस्तस्माद्वै देवानां यज्ञ इडान्तो वैव शंय्वन्तो वा ॥ २५ ॥ प्रयाजैर्वै देवाः । स्वर्गँल्लोकमायँस्तानसुरा अन्वाजिगाꣳसँस्ताननुयाजैः प्रत्यौहँस्तद्यदनुयाजा इज्यन्ते पाप्मानमेव तद्द्विषन्तम्भ्रातृव्यं यजमानः प्रत्यूहति ॥ २६ ॥ प्राणा वै प्रयाजाः । अपाना अनुयाजास्तस्मात्प्रयाजाः प्राञ्चो हूयन्ते तद्धि प्राणरूपम्प्रत्यञ्चोऽनुयाजास्तदपानरूपमेता ह वै दर्शपूर्णमासयोरुपसदो यदनुयाजास्तस्मात्त उपसद्रूपेण प्रत्यञ्चो हूयन्ते ॥ २७ ॥ सꣳस्था सूक्तवाकः । स यो ह वै सꣳस्था सूक्तवाक इति वेदाव ह सꣳस्थाꣳ रुन्द्धेऽयो यत्किञ्च सꣳस्थया जुह्वद् सर्वꣳ हैव तज्जयति गच्छति भूयसः सꣳस्थाम् ॥ २८ ॥

प्रतिष्ठा शँय्योर्वाकः । स यो ह वै प्रतिष्ठा शँय्योर्वाक इति वेदाव ह प्रतिष्ठाꣳ रुन्द्धेऽथो यत्किंच प्रतिष्ठया जय्यꣳ सर्वꣳ हैव तज्जयति गच्छति प्रतिष्ठाम् ॥ २९ ॥ ते देवाः । एताः पत्नीसँय्याजान्पश्चात्प्राञ्चोऽयन्त मिथुनमेवैतदुपरिष्टाद्दधत प्रजात्यै तद्यत्पत्नीसंय्याजा इज्यन्ते मिथुनमेवैतदुपरिष्टाद्धत्ते प्रजात्यै देवानाꣳ ह वै प्रजातिमनु प्रजायते मिथुनेन मिथुनेन ह प्रजायते य एवमेतद्वेद ॥ ३० ॥ अन्नꣳ समिष्टयजुः । स यो ह वा अन्नꣳ समिष्टयजुरिति वेदाव ह्यन्नꣳ रुन्द्धेऽथो यत्किंचान्नेन जय्यꣳ सर्वꣳ हैव तज्जयति ॥ ३१ ॥ सँवत्सरो यजमानः । तमृतवो याजयन्ति वसन्त आग्नीध्रस्तस्माद्वसन्ते दावाश्चरन्ति तद्ध्यग्निरूपꣳ ग्रीष्मोऽध्वर्युस्तप्त इव वै ग्रीष्मस्तप्तमिवाध्वर्युर्निष्क्रामति वर्षा उद्गाता तस्माद्यदा बलवद्वर्षति साम्न इवोपब्दिः क्रियते शरद्ब्रह्मा तस्माद्यदा सस्यम्पच्यते ब्रह्मण्यवत्यः प्रजा इत्याहुर्हेमन्तो होता तस्माद्धेमन्वषट्कृताः पशवः सीदन्त्येता ह वा एनन्देवता याजयन्ति स यद्येनमैपावीरा याजयेयुरेता एव देवता मनसा ध्यायेदेता हैवैनन्देवता याजयन्ति ॥ ३२ ॥ अथ हैषैव तुला । यद्दक्षिणो वेद्यन्तः स यत्साधु करोति तदन्तर्वेद्यथ यदसाधु तद्बहिर्वेदि तस्माद्दक्षिणं वेद्यन्तमभिस्पृश्येवासीत तुलायाꣳ ह वा अमुष्मिँल्लोक आदधति यतरद्यꣳस्यति तदन्वेष्यति यदि साधु वासाधु वेत्यथ य एवं वेदास्मिन्हैव लोके

तुलामारोहत्यन्यमुष्मिँल्लोके तुलाधानम्मुच्यते साधुकृत्या हैवास्य यच्छति न पापकृत्या ॥ ३३ ॥ [ अर्ध प्रपाठकः ५२ ]

द्वितीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥

[ अग्निहोत्रावयवोपासनाप्रकारः ]

वाग्घ वा ऽएतस्याग्निहोत्रस्याग्निहोत्री *। मन ऽएव वत्सस्तदिदम्मनश्च वाक्च समानमेव सन्नानेव तस्मात्समान्या रज्वा वत्सञ्च मातरञ्चाभिदधति तेज ऽएव श्रद्धा सत्यमाज्यम् ॥ १ ॥ तद्धैतज्जनको वैदेहः। याज्ञवल्क्यम्पप्रच्छ वेत्थाग्निहोत्रं याज्ञवल्क्या३ ऽइति वेद सम्राडिति किमिति पय ऽएवेति ॥ २ ॥ यत्पयो न स्यात्। केन जुहुया ऽइति व्रीहियवाभ्यामिति यद्व्रीहियवौ न स्याता-ङ्केन जुहुया ऽइति या ऽअन्या ऽओषधय ऽइति यदन्या ऽओषधयो न स्युः केन जुहुया ऽइति या ऽआरण्या ऽओषधय ऽइति यदारण्या ऽओषधयो न स्युः केन जुहुया ऽइति वानस्पत्येनेति यद्वानस्पत्यन्न स्यात्केन जुहुया ऽइत्यद्भिरिति यदापो न स्युः केन जुहुया ऽइति ॥ ३ ॥ स होवाच। न वा ऽइह तर्हि किञ्चनासीदथैतदहूयतैव सत्यꣳ श्रद्धायामिति वेत्थाग्निहोत्रं याज्ञवल्क्य धेनुशत-न्ददामीति होवाच ॥ ४ ॥ तदप्येते श्लोकाः। किꣳ

* अग्निहोत्रमिति कर्मनामधेयम्। अग्नये होत्र होमोऽस्मिन्निति तद्व्युत्पत्तिः। उपचारात् तदर्थं पयोऽप्यग्निहोत्रम्, तस्य दोग्ध्री धेनुरप्यग्निहोत्रीत्युच्यते।

स्विद्विद्वान्प्रवसत्यग्निहोत्री गृहेभ्यः कृथ्ठं स्विदस्य काव्यङ्कथंः सन्ततो ऽअग्निभिरिति कथ्ठं स्विदस्यानपप्प्रोषितम्भवतीत्येवैतदाह ॥ ५ ॥ यो जविष्ठो भुवनेषु । स विद्वान्प्रवसन्विदे तथा तदस्य काव्यन्तथा सन्ततो ऽअग्निभिरिति मन ऽएवैतदाह मनसैवास्यानपप्प्रोषितम्भवतीति ॥ ६ ॥ यत्स दूरम्परेत्य । अथ तत्र प्प्रमाद्यति कस्मिन्नस्य हुताहुतिर्गृहे यामस्य जुहृतीति यत्स दूरम्परेत्याथ तत्र प्प्रमाद्यति कस्मिन्नस्य साहुतिर्हुता भवतीत्येवैतदाह ॥ ७ ॥ यो जागार भुवनेषु । विश्वा जातानि योऽविभः तस्मिन्नस्य हुताहुतिर्गृहे यामस्य जुहृतीति प्प्राणमेवैतदाह तस्मादाहुः प्प्राण ऽएवाग्निहोत्रमिति ॥ ८ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अग्निहोत्रे मिथुनत्वदर्शनम् ]

यो ह वा ऽअग्निहोत्रे । षण्मिथुनानि वेद मिथुनेन मिथुनेन ह प्प्रजायते सर्वाभिः प्प्रजातिभिर्यजमानश्च पत्नी च तदेकम्मिथुनन्तस्मादस्य पत्नीवदग्निहोत्रथ्ठं स्यादेतन्मिथुनमुपाप्प्रवानीति वत्सश्चाग्निहोत्री च तदेकम्मिथुनन्तस्मादस्य पुँवत्साग्निहोत्री स्यादेतन्मिथुनमुपाप्प्रवानीति स्थाली चाङ्गाराश्च तदेकम्मिथुनथ्ठं स्रुक्च स्रुवश्च तदेकम्मिथुनमाहवनीयश्च समिच्च तदेकम्मिथुनमाहुतिश्च स्वाहाकारश्च तदेकम्मिथुनमेतानि ह वा

ऽअग्निहोत्रे पृष्णिमथुनानि तानि य ऽएवं वेद मिथुनेन मिथुनेन ह प्प्रजायते सर्व्वाभिः प्प्रजातिभिः ॥ १ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ प्रसङ्गतः आख्यायिकया ब्रह्मचारिधर्मप्रतिपादनम् ]

ब्रह्म वै मृत्यवे प्प्रजाः प्प्रायच्छत् । तस्मै ब्ब्रह्मचारिणमेव न प्प्रायच्छत्तोऽब्ब्रवीदस्तु मह्यमप्येतस्मिन्भाग ऽइति यामेव रात्रिं समिधन्नाहराता ऽइति तस्माद्याथ्ठं रात्रिम्ब्रह्मचारी समिधन्नाहरत्यायुष ऽएव तामवदाय वसति तस्माद्ब्रह्मचारी समिधमाहरेन्नेदायुषोऽवदाय वसानीति ॥ १ ॥ दीर्घसत्रं वा ऽएष ऽउपैति । यो ब्ब्रह्मचर्य्यमुपैति स यामुपयन्त्समिधमादधाति सा प्प्रायणीया याथ्ठं स्नास्यन्त्सोदयनीयाथ या ऽअन्तरेण सत्र्या ऽएवास्य ता ब्ब्राह्मणो ब्ब्रह्मचर्य्यमुपयन् ॥ २ ॥ चतुर्द्धा भूतानि प्प्रविशति । अग्निम्पदा मृत्युम्पदाचार्य्यम्पदात्मन्येवास्य चतुर्थः पादः परिशिष्यते ॥ ३ ॥ स यदग्नये समिधमाहरति । य ऽएवास्याग्नौ पादस्तमेव तेन परिक्क्रीणाति तꣳ संस्कृत्यात्मन्धत्ते स ऽएनमाविशति ॥ ४ ॥ अथ यदात्मानन्दरिद्रीकृत्येव । अह्रीर्ब्भूत्वा भिक्षते य ऽएवास्य मृत्यौ पादस्तमेव तेन परिक्क्रीणाति तꣳ संस्कृत्यात्मन्धत्ते स ऽएनमाविशति ॥ ५ ॥ अथ यदाचार्य्यवचस्सङ्करोति । यदाचार्य्याय कर्म्म करोति य ऽएवास्याचार्य्ये पादस्तमेव तेन परिक्क्रीणाति तꣳ संस्कृत्यात्मन्धत्ते

स ऽएनमाविशति ॥ ६ ॥ न ह वै स्नात्वा भिक्षेत । अप ह वै स्नात्वा भिक्षाञ्जयत्यप ज्ञातीनामशनायामप पितृणाꣳ स ऽएवं विद्वाꣳस्यस्या ऽएव भूयिष्ठꣳ श्लाघेत ताम्भिक्षेतेत्याहुस्तल्लोक्यमिति स यद्यन्याम्भिक्षितव्यान्न विन्देदपि स्वामेवाचार्य्यजायाम्भिक्षेताथो स्वाम्मातरन्नैनꣳ सप्तम्य्यभिक्षितातीयात्तमेवं विद्वाꣳसमेवञ्चरन्तꣳ सर्वे वेदा ऽआविशन्ति यथा ह वा ऽअग्निꣳ समिद्धो रोचत ऽएवꣳ ह वै स स्नात्वा रोचते य ऽएवं विद्वान्ब्रह्मचर्य्यञ्चरति ॥ ७ ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥



[ आख्यायिकया दर्शपूर्णमासयोः सर्वोत्पत्तिहेतुत्वकथनम् ]

उद्दालको हारुणिꣳ । उदीच्च्यान्वृतो धावयाञ्चकार तस्य निष्क ऽउपाहित ऽआसैतद्ध स्म वै तत्पूर्वेषां वृता-नान्धावयतामेकधनमुपाहितम्भवत्युपवल्हाय बिभ्यतान्ता-ꣳहोदीच्च्यानाम्ब्राह्मणान्भीर्विवेद ॥ १ ॥ कौरुपाञ्चालो वा ऽअयम्ब्रह्मा ब्रह्मपुत्रꣳ । यद्वै नोऽयमर्द्धन्न पर्य्यादुदीत हन्तैनम्ब्रह्मोद्यमाह्वयामहा ऽइति केन वीरेणेति स्वैदायनेनेति शौनको ह स्वैदायन ऽआस ॥ २ ॥ ते होचुꣳ । स्वैदायन त्वया वीरेणेमम्प्रतिसंयतामहा ऽइति स होवाचोपान्नु खलु रमताहन्वेनं वेदानीति तꣳ हाभिप्रपेदे तꣳ हाभि-प्रपन्नमभ्युवाद स्वैदायना३ ऽइति हो३ गौतमस्य पुत्रे-

तीतरः प्रतिशुश्राव तद्ध ह तत एव प्रष्टुन्दध्रे ॥ ३ ॥
स वै गौतमस्य पुत्र वृतो जनन्धावयेत् । यो दर्शपूर्ण-
मासयोरष्टौ पुरस्तादाज्यभागान्विद्यात्पञ्च मध्यतो हवि-
र्भागान्षट् प्राजापत्यानष्टा उउपरिष्टादाज्यभागान् ॥ ४ ॥
स वै गौतमस्य पुत्र वृतो जनन्धावयेत् । यस्तद्दर्शपूर्ण-
मासयोर्विद्याद्यस्मादिमाः प्रजा अदन्तका जायन्ते
यस्मादासाञ्जायन्ते यस्मादासाम्प्रभिद्यन्ते यस्मादासाᳬं
सन्तिष्ठन्ते यस्मादासाम्पुनरुत्तमे वयसि सर्व एव
प्रभिद्यन्ते यस्मादधर एवाग्रे जायन्तेऽथोत्तरे यस्माद-
णीयाᳬंस एवाधरे प्रथीयाᳬंस उत्तरे यस्माद्दᳬंष्ट्रा
वर्षीयाᳬंसो यस्मात्समा एव जम्भ्याः ॥ ५ ॥ स वै
गौतमस्य पुत्र वृतो जनन्धावयेत् । यस्तद्दर्शपूर्णमासयो-
र्विद्याद्यस्मादिमाः प्रजा लोमशा जायन्ते यस्मादासा-
म्पुनरिव श्मश्रूण्यौपपक्ष्याणि दुर्वीरिणानि जायन्ते
यस्माच्छीर्षण्येवाग्रे पलितो भवत्यथ पुनरुत्तमे वयसि
सर्व एव पलितो भवति ॥ ६ ॥ स वै गौतमस्य पुत्र
वृतो जनन्धावयेत् । यस्तद्दर्शपूर्णमासयोर्विद्याद्यस्मा-
त्कुमारस्य रेतः सिक्तन्न सम्भवति यस्मादस्य मध्यमे
वयसि सम्भवति यस्मादस्य पुनरुत्तमे वयसि न सम्भ-
वति ॥ ७ ॥ यो गायत्रीᳬं हरिणीम् । ज्योतिष्पक्षां
यजमानᳬं स्वर्गँल्लोकमभिवहन्तीं विद्यादिति तस्मै ह
निष्कम्प्रददावनूचानः स्वैदायनासि सुवर्णं वाव सुवर्ण-
विदे ददतीति तद्ध होपगुह्य निश्चक्राम तद्ध ह पप्रच्छुः

किमिवैष गौतमस्य पुत्त्रोऽभूदिति ॥ ८ ॥ स होवाच । यथा ब्रह्मा ब्रह्मपुत्त्रो मूर्द्धास्य विपतेद्य ऽएनमुपवल्हेतेति ते ह तत ऽएव विप्प्रेयुस्तऽ ह तत ऽएव समित्पाणिः प्प्रतिचक्रम ऽउप त्वायानीति किमद्ध्येष्यमाण ऽइति यानेव मा प्प्रश्नानप्प्राक्षीस्तानेव मे विब्ब्रूहीति स होवाचानुपेतायैव त ऽएनान्ब्रवाणीति ॥ ९ ॥ तस्मा ऽउ हैतदुवाच । द्वावाघारौ पञ्च प्प्रयाजा ऽआग्नेय ऽआज्यभागोऽष्टम ऽएतेऽष्टौ पुरस्तादाज्यभागाः सौम्य ऽआज्यभागो हविर्भागाणाम्प्रथमो हविर्हि सोम ऽआग्नेयः पुरोडाशोऽग्नीषोमीय ऽउपांशुयाजोऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदेते पञ्च मद्ध्यतो हविर्भागाः ॥१०॥ [2]प्राशित्रमिडा च । यच्चाग्नीध ऽआदधाति ब्रह्मभागो यजमानभागोऽन्वाहार्य्य ऽएते षट् प्राजापत्यास्त्रयोऽनुयाजाश्चत्वारः पत्नीसँय्याजाः† समिष्टयजुरष्टमस्तेऽष्टा ऽउपरिष्टादाज्यभागाः ॥ ११ ॥ अथ यदपुरोऽनुवाक्यकाः प्प्रयाजा भवन्ति । तस्मादिमाः प्प्रजा ऽअदन्तका जायन्तेऽथ यत्पुरोऽनुवाक्यवन्ति हवीꣳषि भवन्ति तस्मादासाञ्जायन्तेऽथ यदपुरोऽनुवाक्यका ऽअनुयाजा भवन्ति तस्मादासाम्प्रभिद्यन्तेऽथ यत्पुरोऽनुवाक्यवन्तः पत्नीसँय्याजा भवन्ति तस्मादासाꣳ सन्तिष्ठन्तेऽथ यदपुरोऽनुवाक्यकः

(१) उपांशु इज्यते इति उपांशुयाजः । एवमुपांशुजपश्च "जिह्वोष्ठौ चालयेत् किञ्चिद् दैवतागतमानसः । निजश्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः ॥" इति स्मृत्युक्तः

(२) प्राशित्रं ब्रह्मणो भागः ।

† पत्नीदेवताका दर्शपूर्णमासाङ्गभूताश्चत्वारो यागविशेषाः पत्नीसंयाजाः ।

समिष्टयजुर्भवति तस्मादासाम्पुनरुत्तमे वयसि सर्वं ऽएव प्रभिद्यन्ते ॥ १२ ॥ * अथ यदनुवाक्यामनूच्य । याज्यया यजति तस्मादधर ऽएवाग्रे जायन्तेऽथोत्तरेऽथ यद्गायत्रीमनूच्य त्रिष्टुभा यजति तस्माद्दणीयाꣳस ऽएवाधरे प्रथीयाꣳस ऽउत्तरेऽथ यत्प्राश्रावाघारावाघारयति तस्माद्दꣳष्ट्रा वर्षीयाꣳसोऽथ यत्तच्छन्दसावेव संख्याक्ये भवतस्तस्मात्समा ऽएव जम्भ्याः ॥ १३ ॥ अथ यद्बर्हिस्तृणाति । तस्मादिमाः प्रजा लोमशा जायन्तेऽथ यत्पुनरिव प्रस्तरꣳ[A] स्तृणाति तस्मादासाम्पुनरिव श्मश्रूण्युपपक्ष्याणि दुर्व्वीरिणानि जायन्तेऽथ यत्केवलमेवाग्रे प्रस्तरमनुप्रहरति तस्माच्छीर्षण्येवाग्रे पलितो भवत्यथ यत्सर्वमेव बर्हिरनुप्रहरति तस्मात्पुनरुत्तमे वयसि सर्व ऽएव पलितो भवति ॥ १४ ॥ अथ यदाज्यहविषः प्रयाजा भवन्ति । तस्मात्कुमारस्य रेतः सिक्तं न सम्भवत्युदकमिवैव भवत्युदकमिव ह्याज्यमथ यन्मध्ये यज्ञस्य दध्ना पुरोडाशेनेति चरन्ति तस्मादस्य मध्यमे वयसि सम्भवति द्रप्सीवैव भवति द्रप्सीव हि रेतोऽथ यदाज्यहविष ऽएवानुयाजा भवन्ति तस्मादस्य पुनरुत्तमे वयसि न सम्भवत्युदकमिवैव भवत्युदकमिव ह्याज्यम् ॥ १५ ॥ वेदिरेव गायत्री । तस्यै येऽष्टौ पुरस्तादाज्यभागाः स दक्षिणः पक्षो येऽष्टा ऽउपरिष्टादाज्यभागाः स

---

* शतम् ५७०० ।

(A) प्रस्तर पुस्तकशुद्धिः ।

ऽउत्तरः पक्षः सैषा गायत्री हरिणी ज्योतिष्पक्षा यजमानᳲ स्वर्गँल्लोकमभिवहति य ऽएवमेतद्वेद ॥ १६ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ स्रुगादानप्रकारः ]

अथातः स्रुचोरादानस्य । तद्धैतदेके कुशला मन्यमाना दक्षिणेनैव जुहूमाददते सव्येनोपभृतन्न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयात्प्रतिप्रतिन्न्वा ऽअयमध्वर्युर्यजमानस्य द्विषन्तम्भ्रातृव्यमकत्प्रत्युद्यामिनमितीश्वरो ह तथैव स्यात् ॥ १ ॥ इत्थमेव कुर्य्यात् । उभाभ्यामेव पाणिभ्याञ्जुहूम्परिगृह्योपभृत्यधिनिदध्यात्तस्य नोपमीमाᳲसास्ति तत्पशव्यमायुष्यन्ते ऽअसᳲशिञ्जयन्नाददीत ते * यत्सᳲशिञ्जयेदयोगक्षेमो यजमानमृच्छेत्तस्मादसᳲशिञ्जयन्नाददीत ॥ २ ॥ अथातोऽतिक्रमणस्य । वज्रेण ह वा ऽअग्योऽध्वर्युर्य्यजमानस्य पशून्निधमति वज्रेण हास्मा ऽअध्य ऽउपसमूहत्येष ह वा ऽअध्वर्युर्वज्रेण यजमानस्य पशून्निधमति य ऽआश्रावयिष्यन्दक्षिणेनातिक्रामति सव्येनाश्राव्याथ हास्मा ऽएष ऽउपसमूहति य ऽआश्रावयिष्यन्त्सव्येनातिक्रामति दक्षिणेनाश्राव्यैष हास्मा ऽउपसमूहति ॥ ३ ॥ अथातो धारणस्य । तद्धैतदेके कुशला मन्यमानाः प्रगृह्य बाहू स्रुचौ धारयन्ति न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयाच्छूलौ न्वा ऽअयमध्व-

* 'ग' 'ज' पुस्तकयो 'ते' इति नास्ति ।

र्युर्व्वाह्न ऽअकृत शूलबाहुर्भविष्यतीतीश्वरो ह तथैव स्यादथ हैष मध्यमः प्राणस्तस्मादु तमुपन्यच्छ्यैवैव धारयेत् * ॥ ४ ॥ अथात ऽआश्रावणस्य । षड्ढ वा ऽआश्रावितानि न्यक्तिर्य्यगूर्द्ध्वङ्कृपणम्वहिः श्रयन्तःश्रि ॥ ५ ॥ एतद्ध वै न्यक् । योऽयमुच्चैरादाय शनैर्न्निदधाति स यमिच्छेत्पापीयान्स्यादिति तस्योच्चैरादाय शनैर्न्निदध्यात्तेन स पापीयान्भवति ॥ ६ ॥ अथ हैतत्तिर्य्यक् । योऽयं य्यावतैवाददीत तावता निदधाति स यमिच्छेन्नैव श्रेयान्स्यान्न पापीयानिति तस्य यावतैवाददीत तावता निदध्यात्तेन स नैव श्रेयान्न पापीयान्भवति ॥ ७ ॥ अथ हैतदूर्द्ध्वम् । योऽयꣳ शनैरादायोच्चैर्न्निदधाति स यमिच्छेच्छ्रेयान्स्यादिति तस्य शनैरादायोच्चैर्न्निदध्यात्तेन स श्रेयान्भवति ॥ ८॥ अथ हैतत्कृपणम् । योऽयमणु दीर्घमस्वरमाश्रावयति यो हैनन्तत्र ब्रूयात्कृपणन्वा ऽअयमध्वर्य्युर्य्यजमानमकर्द्विषतो भ्रातृव्यस्योपावसायिनमितीश्वरो ह तथैव स्यात् ॥ ९ ॥ अथ हैतद्बहिःश्रि । योऽयमपव्यादायौष्ठा ऽउच्चैरस्वरमाश्रावयति श्रीर्वै स्वरो बाह्यत ऽएव तच्छ्रियन्धत्तेऽशनायुको भवति ॥ १० ॥ अथ हैतदन्तःश्रि । योऽयꣳ सन्धायौष्ठा ऽउच्चैः स्वरवदाश्रावयति श्रीर्वै स्वरोऽन्तरत ऽएव तच्छ्रियन्धत्तेऽन्नादो भवति ॥ ११ ॥ स वै मन्द्रमिवोरसि । परास्तब्ध्योभयतो वार्हतमुच्चैरन्ततो निदध्यात्तस्य नोपमीमाꣳस-

* तथा चोक्तं सूत्रकृता "नाभिदेशे धारणम्" ( का० श्रौ० सू० २ २. ३ )।

सास्ति तत्पशव्यमायुष्यम् ॥ १२ ॥ अथातो होमस्य । तद्धैतदेके कुशला मन्यमानाः प्राचीᳫं स्रुचमुपावहृत्य हुत्वा पर्य्याहृत्योपभृत्यधिनिदधति न तथा कुर्य्याद्यो हैनन्तत्र ब्रूयादनुष्ठुवन्न्वा ऽअयमध्वर्युर्यजमानमकद्विषतो भ्रातृव्यस्यान्ववसायिनमितीश्वरो ह तथैव स्यात् ॥ १३ ॥ पार्श्वतु ऽउ हैके । स्रुचमुपावहृत्य हुत्वा पर्य्याहृत्योपभृत्यधिनिदधति न तथा कुर्याद्यो हैनन्तत्र ब्रूयादुत्तीरथेन न्वा ऽअयमध्वर्युराहुतीः प्रारौत्सीदलं मा शरिष्यते घुणिर्वा भविष्यतीतीश्वरो ह तथैव स्यात् ॥ १४ ॥ इत्थमेव कुर्यात् । प्राचीमेव स्रुचमुपावहृत्य हुत्वा तेनैवाधिहृत्योपभृत्यधिनिदध्यात्तस्य नोपमीमाᳫंसास्ति तत्पशव्यमायुष्यम् ॥ १५ ॥ प्रदग्धाहुतिर्ह वा ऽअन्योऽध्वर्युः । आहुतीर्ह्यन्यः सन्तर्प्पयत्येष ह वै प्रदग्धाहुतिरध्वर्युर्य्योऽयमाज्यः हुत्वावदानानि जुहोत्येतद्ध ह वै तदुदृश्यमाना वागभ्युवाद प्रदग्धाहुतिर्न्वा ऽअयमध्वर्युरित्यथ हैना ऽएष सन्तर्प्पयति योऽयमाज्यः हुत्वावदानानि जुहोत्यथ पुनरन्तत ऽआज्येनाभिजुहोत्येष हैनाः सन्तर्प्पयति तासाᳫं सन्तृप्तानान्देवा हिरण्मयाᳫँश्चमसान्पूरयन्ते ॥ १६ ॥ तदु होवाच याज्ञवल्क्यः । यद्वा ऽउपस्तीर्य्यावदायाभिघारयति तदेवैनाः सन्तर्प्पयति तासाᳫं सन्तृप्तानान्देवा हिरण्मयाᳫँश्चमसान्पूरयन्तेऽयस्थूणगृहपतीनाᳫं ह वै शौल्वायनोऽध्वर्य्युरास॥ १७ ॥ स

(१) "मा वै" इति 'ग' 'ज' पुस्तकयोः पाठः ।

होवाच । इदमहेदुः सत्रङ्कुशपस्त्वल्पाज्यमथायङ्गृह-
पतिरस्मीति मन्यत ऽइति ॥ १८ ॥ स होवाच ।
अद्धर्य्यवा वै नोऽवक्रक्ष ऽएते वै ते स्रुचौ ये त्वः सँवत्स-
रन्नाशक ऽआदातुं स्यद्धै त्वाहमेतयोरनुशिष्याम्प्र प्रजया
पशुभिर्ज्जायेथा ऽअभि स्वर्गँल्लोकं वहेरिति ॥ १९ ॥ स
होवाच । उप त्वयानीति स होवाचात्र वाव खल्ल्वर्हसि
यो नः सँवत्सरेऽद्ध्वर्य्युर्भूत्रनुपेतायैव त ऽएनेद्रुवाणीति
तस्मा ऽउ हैतदेव स्रुचोरादानमुवाच यदेतद्ब्राह्मणम
तस्मादेवंविदमेवाद्ध्वर्य्युङ्कुर्वीत नानेवंविदम् ॥ २० ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या १०४ ॥



[ मित्रविन्देष्टिः ]

प्रजापतिर्वै प्रजाः सृजमानोऽतप्यत । तस्माच्छ्रा-
न्तात्तेपानाच्छ्रीरुदक्रामत्सा दीप्यमाना भ्राजमाना
लेलायन्त्यतिष्ठत्तान्दीप्यमानाम्भ्राजमानाँल्लेलायन्तीन्देवा
ऽअभ्यध्यायन् ॥ १ ॥ ते प्रजापतिमब्रुवन् । हनामेमा-
मेदमस्या ददामहा ऽइति स होवाच स्त्री वा ऽएषा
यच्छ्रीर्न्न वै स्त्रियङ्घ्नन्त्युत त्वा ऽअस्या जीवन्त्या ऽएवा-
ददत ऽइति ॥ २ ॥ तस्या ऽअग्निरन्नाद्यमादत्त । सोमो
राज्यं वरुणः साम्राज्यम्मित्रः क्षत्रमिन्द्रो बलम्बृहस्पति-

(१) 'ग' 'ज' पुस्तकयो 'एतद्ध०' इति पाठ उपलभ्यते ।

ब्र्ह्मवर्चसꣳ सविता राष्ट्रम्पूषा भगꣳ सरस्वती पुष्टिन्त्वष्टा रूपाणि ॥ ३ ॥ सा प्रजापतिमब्रवीत् । आ वै म ऽइदमदिषतेति स होवाच यज्ञेनैनाऽपुनर्व्याचस्वेति ॥ ४ ॥ सैतान्दशहविषमिष्टिमपश्यत् । आग्नेयमष्टाकपालम्पुरोडाशꣳ सौम्यञ्चरुं वारुणन्दशकपालम्पुरोडाशम्मैत्रञ्चरुमैन्द्रमेकादशकपालम्पुरोडाशम्बार्हस्पत्यञ्चरुꣳ सावित्रन्द्वादशकपालं वाष्टाकपालं वा पुरोडाशम्पौष्णञ्चरुꣳ सारस्वतञ्चरुन्त्वाष्ट्रन्दशकपालम्पुरोडाशम् * ॥ ५ ॥ तानेतयानुवाक्ययान्ववदत् । अग्निꣳ सोमो वरुणो मित्र ऽइन्द्रो बृहस्पतिꣳ सविता यꣳ सहस्री ॥ पूषा नो गोभिरवसा सरस्वती त्वष्टा रूपाणि समनक्तु यज्ञैरिति ते प्रत्युपातिष्ठन्त ॥ ६ ॥ तानेतया याज्यया । परस्तात्प्रतिलोमम्प्रत्यैत्त्वष्टा रूपाणि ददती सरस्वती पूषा भगꣳ सविता मे ददातु ॥ बृहस्पतिर्ददिन्द्रो बलम्मे मित्रꣳ क्षत्रं वरुणꣳ सोमो ऽअग्निरिति ते पुनर्दानायाह्रियन्त ॥ ७ ॥ सैतानुपहोमानपश्यत् । अग्निरन्नादोऽन्नपतिरन्नाद्यमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादायाग्निरुदक्रामत्पुनरस्मा ऽअन्नाद्यमददात् ॥ ८ ॥ सोमो राजा राजपतिꣳ । राज्यमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय सोम ऽउदक्रामत्पुनरस्यै राज्यमददात् ॥ ९ ॥ वरुणꣳ सम्राट् सम्राट्पतिꣳ साम्राज्यमस्मिन्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय वरुण ऽउदक्रामत्पुनरस्यै साम्रा-

* का० श्रौ० सू० अ० ५ क० १२ सू० २ ।

ज्यमददात् ॥ १० ॥ मित्रः क्षत्रं क्षत्रपतिः । क्षत्रमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय मित्र ऽउदक्रामत्पुनरस्यै क्षत्रमददात् ॥ ११ ॥ इन्द्रो बलम्बलपतिः । बलमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादायेन्द्र ऽउदक्रामत्पुनरस्यै बलमददात् ॥ १२ ॥ बृहस्पतिर्ब्रह्म ब्रह्मपतिः । ब्रह्मवर्चसमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय बृहस्पतिरुदक्रामत्पुनरस्यै ब्रह्मवर्चसमददात् ॥ १३ ॥ सविता राष्ट्रं राष्ट्रपतिः । राष्ट्रमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय सवितोदक्रामत्पुनरस्यै राष्ट्रमददात् ॥ १४ ॥ पूषा भगम्भगपतिः । भगमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय पूषोदक्रामत्पुनरस्यै भगमददात् ॥ १५ ॥ सरस्वती पुष्टिम्पुष्टिपतिः । पुष्टिमस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय सरस्वत्युदक्रामत्पुनरस्यै पुष्टिमददात् ॥ १६ ॥ त्वष्टा रूपाणाᳬं रूपकृद्रूपपतिः । रूपेण पशूनस्मिन्न्यज्ञे मयि दधातु स्वाहेत्याहुतिमेवादाय त्वष्टोदक्रामत्पुनरस्यै रूपेण पशूनददात् ॥ १७ ॥ ता वा ऽएताः । दश देवता दश हवीᳬंषि दशाहुतयो दश दक्षिणा दशाक्षरा विराट् श्रीर्विराट् श्रियामेवैतद्विराज्यन्नाद्ये प्रतितिष्ठति ॥ १८ ॥ तस्यै पञ्चदश सामिधेन्यो भवन्ति । उपाᳬंशु देवता यजति पञ्च प्रयाजा भवन्ति त्रयोऽनुयाजा ऽएकः समि-

(१) का० श्रौ० सू० ५. १२. १ । (२) का० श्रौ० सू० ५ १२. १ । (३) का० श्रौ० सू० ५ १२. ४ ।

ष्टयजुः * पुष्टिमन्तावाज्यभागा'वग्निना रयिमश्नवत्पो-
षमेव दिवे दिवे। यशसं वीरवत्तमम्' ॥ 'गयस्फानो ऽअमीवहा
वसुवित्पुष्टिवर्द्धनः। सुमित्रः सोम नो भवे'ति सहस्र-
वत्यौ सँय्याज्ये 'नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु
द्युमदग्ने सुवीर्य्यं वर्षिष्ठमनुपक्षितम्' ॥ 'उत नो ब्रह्म-
न्नविष ऽउक्थेषु देवहूतमः। शन्नः शोचा मरुद्वृधोऽग्ने
सहस्रसातम' ऽइति ॥ १९ ॥ ताᳬं हैतां गोतमो राहू-
गणः'। विदाञ्चकार सा ह जनकं वैदेहम्प्रत्युत्ससाद ताᳬं
हाङ्गजिद्ब्राह्मणेष्वन्विवेष तामु ह याज्ञवल्क्ये विवेद स
होवाच सहस्रम्भो याज्ञवल्क्य दद्मो यस्मिन्नवयन्त्वयि
मित्रविन्दामन्वविदामेति विन्दते मित्रᳬं राष्ट्रमस्य भव-
त्यप पुनर्म्मृत्युञ्जयति सर्वमायुरेति य ऽएवं विद्वानेतयेष्ट्या
यजते यो वै तदेवं वेद ॥ २० ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ हविषः समृद्धिः ]

अथातो हविषः समृद्धिः। षड्ढ वै ब्रह्मणो द्वारोऽ-
ग्निर्वायुरापश्चन्द्रमा विद्युदादित्यः ॥ १ ॥ स य
ऽउपदग्धेन हविषा यजते। अग्निना ह स ब्रह्मणो
द्वारेण प्रतिपद्यते सोऽग्निना ब्रह्मणो द्वारेण प्रतिपद्य
ब्रह्मणः सायुज्यᳬं सलोकताञ्जयति ॥ २ ॥ अथ यो

* प्रधानयागादौ सम्यग् इष्टा देवता इज्यन्ते अनेन स होम मन्त्रश्च समिष्टयजुः।

( १ ) ऋ० सं० १. १. ३। ( २ ) ऋ० सं० १. ९१. १२। ( ३ ) ऋ० सं० ३. १३. ७।
( ४ ) ऋ० सं० ३. १३. ६।

पिपतितेन हविषा यजते । वायुना ह स ब्रह्मणो द्वारेण
प्रतिपद्यते स वायुना ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः
सायुज्यꣳ सलोकताञ्जयति ॥ ३ ॥ अथ योऽश्रृतेन
हविषा यजते । अग्निर्ह स ब्रह्मणो द्वारेण प्रतिपद्यते
सोऽग्निर्ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ
सलोकताञ्जयति ॥ ४ ॥ अथ य उउपरक्तेन हविषा यजते ।
चन्द्रमसा ह स ब्रह्मणो द्वारेण प्रतिपद्यते स चन्द्रमसा
ब्रह्मणो द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकता-
ञ्जयति ॥ ५ ॥ अथ यो लोहितेन हविषा यजते । विद्युता
ह स ब्रह्मणो द्वारेण प्रतिपद्यते स विद्युता ब्रह्मणो
द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकताञ्जयति
॥ ६ ॥ अथ यः सुश्रृतेन हविषा यजते । आदित्येन ह
स ब्रह्मणो द्वारेण प्रतिपद्यते स ऽआदित्येन ब्रह्मणो
द्वारेण प्रतिपद्य ब्रह्मणः सायुज्यꣳ सलोकताञ्जयति
सैषा हविषः समृद्धिः स यो हैवमेताꣳ हविषः समृद्धिं
वेद सर्वसमृद्धेन हैवास्य हविषेष्टम्भवति ॥ ७ ॥ अथातो
यज्ञस्य समृद्धिः । यद्वै यज्ञस्य न्यूनम्प्रजननमस्य तद्रथ

भूदिति श्रियै म ऽएतद्वा मा श्रीस्तेजसा यशसा ब्रह्म-वर्चसेन परिवृता गमिष्यतीत्येव तदुपासीत ॥ ११ ॥ अथ यदि मन्येत । सम्पन्नम्मे यज्ञेऽभूदिति स्वर्ग्यम्म ऽएतत्स्वर्गलोको भविष्यामीत्येव तदुपासीत सैषा यज्ञस्य समृद्धिः स यो हैवमेतां यज्ञस्य समृद्धिं वेद सर्वसमृद्धेन हैवास्य यज्ञेनेष्टम्भवति ॥ १२ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

---

[ अरण्योरश्वत्थविकृतित्वविधानमाख्यायिकया ]

उर्वशी हाप्सराः । पुरूरवसमैडञ्चकमे तꣳ ह विन्दु-मानोवाच त्रिः स्म माह्नो वैतसेन * दण्डेन हतादकामाꣳ स्म मा निपद्यासै मो स्म त्वा नग्नन्दर्शमेष वै न स्त्रीणामुपचार ऽइति ॥ १ ॥ सा हास्मिञ्ज्योगुवास । अपि हास्माद्गर्भिण्यास तावञ्ज्योग्घास्मिन्नुवास ततो ह गन्धर्वाः समूदिरे ज्योग्वा ऽइयमुर्वशी मनुष्येष्ववात्सीदुपजानीत यथेयम्पुनरागच्छेदिति तस्यै हाविर्द्व्युरणा शयन ऽउपबद्धास ततो ह गन्धर्वा ऽअन्यतरमुरणम्प्रमेथुः ॥ २ ॥ सा होवाच । अवीर ऽइव बत मेऽजन ऽइव पुत्रꣳ हरन्तीति द्वितीयम्प्रमेथुः सा ह तथैवोवाच ॥ ३ ॥ अथ हायमीक्षाञ्चक्रे । कथन्नु तद-

---

* वैतस इति पुंप्रजननस्य नाम । तथाहि 'शेपो वैतस इति पुंस्प्रजननस्य" वैतसो वितस्त भवति, ( निरु० अ० ३ पा० ४ ख० २१ )।

वीरङ्कृथमजनथ्ँ स्याद्यत्राहथ्ँ स्यामिति स नग्न ऽएवानूत्पपात चिरन्तन्मेने यद्वासः पर्य्यधास्यत ततो ह गन्धर्वा विद्युतञ्जनयाञ्चक्रुस्तं यथा दिवैवन्नग्नन्ददर्श ततो हैवेयन्तिरोबभूव पुनरैमीत्येत्तिरोभूताथ्ँ स ऽआध्या जल्पन्कुरुक्षेत्रथ्ँ समया चचारान्यतःप्लक्षेति बिसवती तस्यै हाध्यन्तेन वव्राज तद्ध ता ऽअप्सरस ऽआतयो भूत्वा परिपुप्लुविरे ॥ ४ ॥ तद्धेयं ज्ञात्वोवाच । अयं वै स मनुष्यो यस्मिन्नहमवात्समिति ता होचुस्तस्मै वा ऽआविरसामेति तथेति तस्मै हाविरासुः ॥ ५ ॥ ताथ्ँ हायं ज्ञात्वाभिपरोवाद । 'हये जाये मनसा तिष्ठ घोरे वचाथ्ँसि मिश्रा कृणवावहै नु ॥ न नौ मन्त्रा ऽअनुदितास ऽएते मयस्करन्परतरे चनाहन्नि'त्युप नु रम सन्नु वदावहा ऽइति हैवैनान्तदुवाच ॥ ६ ॥ तथ्ँ हेतरा प्रत्युवाच । 'किमेता वाचा कृणवा तवाहम्प्राक्रमिषमुषसामग्रियेव ॥ पुरूरवः पुनरस्तम्परेहि दुरापना वात ऽइवाहमस्मी'ति न वै त्वन्तदकरोर्यदहमब्रवन्दुरापा वा ऽअहन्त्वयैतर्ह्यस्मि पुनर्गृहानिहीति हैवैनन्तदुवाच ॥ ७ ॥ अथ हायम्परिद्यून ऽउवाच । 'सुदेवो ऽअद्य प्रपतेदनावृत्परावतम्परमाङ्गन्तवा ऽउ ॥ अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो ऽअद्यु'रिति सुदेवोऽद्योद्वा वद्ध्नीत प्र वा पतेत्तदेनं वृका वा श्वानो वाद्युरिति हैव तदुवाच ॥ ८ ॥ तथ्ँ हेतरा प्रत्युवाच । 'पुरूरवो

(१) ऋ० सं० अष्ट० ८ अ० ५ व० १। (२) ऋ० सं० अष्ट० ८ अ० ५ व० १।
(३) ऋ० सं० अष्ट० ८ अ० ५ वर्ग १। (४) ऋ० सं० अष्ट० ८ अ० ५ वर्ग १।

मा मृथा मा प्रपप्तो मा त्वा वृकासो ऽअशिवास ऽउ-
क्षन् ॥ न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणाᳫं
हृदयान्येते'ति मैतदादृथा न वै स्त्रैणꣳ सख्यमस्ति पुनर्गृहा-
निहीति हैवैनन्तदुवाच ॥ ९ ॥ 'यद्विरूपाचरम् । मर्त्येष्ववस-
वसꣳ रात्रीꣳ शरदश्चतस्रꣳ ॥ घृतस्य स्तोकꣳ सकृदह्न
ऽआश्नान्तादेवेदन्तातृपाणा चरामी'ति तदेतदुक्तप्रत्यु-
क्तम्पञ्चदशर्चं वह्वृचाꣳ प्राहुस्तस्यै ह हृदयमाव्ययां-
चकार ॥ १० ॥ सा होवाच । सँवत्सरतमीᳫं रात्रिमा-
गच्छतात्तन्म ऽएकाᳫं रात्रिमन्ते शयितासे जात ऽउ ते-
ऽयन्तर्हि पुत्रो भवितेति स ह सँवत्सरतमीᳫं रात्रिमाज-
गामेद्धिरण्यविमितानि ततो हैनमेकमूचुरेतꣳप्रपद्यस्वेति
तदस्मै तामुपप्रजिघ्युꣳ ॥ ११ ॥ सा होवाच । गन्धर्वा
वै ते प्रातर्वरन्दातारस्तं वृणासा ऽइति तं वै मे त्वमेव
वृणीष्वेति । युष्माकमेवैकोऽसानीति ब्रूतादिति तस्मै
ह प्रातर्गन्धर्वा वरन्ददुꣳ स होवाच युष्माकमेवैकोऽ-
सानीति ॥ १२ ॥ ते होचुꣳ । न वै सा मनुष्येष्वग्नेꣳ-
र्यज्ञिया तनूरस्ति ययेष्ट्वास्माकमेकꣳ स्यादिति तस्मै
ह स्थाल्यामोप्याग्निम्प्रददुरनेनेष्ट्वास्माकमेको भवि-
ष्यसीति तञ्च ह कुमारञ्चादायावव्राज सोऽरण्य ऽएवा-
ग्निन्निधाय कुमारेणैव ग्राममेयाय पुनरैमीत्येत्तिरोभूतं
त्योऽग्निरश्वत्थन्तं स्या स्थाली शमीन्ताᳫं स ह पुन-
र्गन्धर्वानेयाय ॥ १३ ॥ ते होचुꣳ । सँवत्सरञ्चातुष्प्राश्य-

(१) ऋ० सं० अष्ट० ८ अ० ५ वर्ग ४ ।

मोदनम्पच स एतस्यैवाश्वत्थस्य ' तिस्त्रस्तिस्रः समिधो घृतेनाक्त्वञ्च समिद्वतीभिर्घृतवतीभिर्ऋग्भिरभ्याधत्तात्स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ' ॥ १४ ॥ ते होचुः । परोऽक्षमिव वा ऽएतद्यदाश्वत्थीमेवोत्तरारणिङ्कुरुष्व शमीमयीमधरारणिः ' स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ॥ १५ ॥ ते होचुः । परोऽक्षमिव वा ऽएतद्वाश्वत्थीमेवोत्तरारणिङ्कुरुष्वाश्वत्थीमधरारणिः स यस्ततोऽग्निर्जनिता स ऽएव स भवितेति ॥१६॥ स ऽआश्वत्थीमेवोत्तरारणिञ्चक्रे । आश्वत्थीमधरारणिः स यस्ततोऽग्निर्जज्ञे स ऽएव स ऽआस तेनेष्ट्वा गन्धर्वाणामेक ऽआस । तस्मादाश्वत्थीमेवोत्तरारणिङ्कुर्वीताश्वत्थीमधरारणिः स यस्ततोऽग्निर्जायते स ऽएव स भवति तेनेष्ट्वा ' गन्धर्वाणामेको भवति ॥ १७ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

[ चातुर्मास्ययाजिनो द्वैविध्यं दर्शयितुं तत्रस्थैर्यागैः शरीरावयवकल्पनम् ]

प्रजापतिर्ह चातुर्म्मास्यैरात्मानं विदधे । स ऽइममेव दक्षिणम्बाहुं वैश्वदेवꣳ हविरकुरुत तस्यायमेवाङ्गुष्ठ ऽआग्नेयꣳ हविरिदꣳ सौम्यमिदꣳ सावित्रम् ॥ १ ॥ स वै वर्षिष्ठः पुरोडाशो भवति । तस्मादियमासां वर्षिष्ठेदꣳ सारस्वतमिदम्पौष्णमथ य ऽएष ऽउपरिष्टाद्धस्तस्य सन्धिस्तन्मारुतमिदं वैश्वदेवन्दोर्याबापृथिवीयन्तद्या

"अश्वत्थशमीगर्भारणी प्रयच्छति" ( का० श्रौ० सू० ४ ७ २० )

ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ २ ॥ अयमेव दक्षिण ऽऊरुर्व्वरुणप्रघासाः । तस्य यानि पञ्च हवीᳬंषि समायीनि * ता ऽइमाः पञ्चाङ्गुलयः कुल्फावेवैन्द्राग्नः हविस्तद्वै द्विदेवत्यम्भवति तस्मादिमौ द्वौ कुल्फाविदं वारुणमिदम्मारुतमनूकङ्कायस्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ ३ ॥ मुखमेवास्यानीकवतीष्टिः । मुखᳬं हि प्राणानामनीकमुरः सान्तपनीयोरसा हि सम्मिव तप्यत ऽउदरङ्गृहमेधीया प्रतिष्ठा वा ऽउदरम्प्रतिष्ठित्यां ऽएव शिश्नान्न्येवास्य क्रैडिनᳬं हविः शिश्नैर्हि वक्रीडतीवायमेवावाङ् प्राण ऽआदित्येष्टिः ॥ ४ ॥ अयमेवोत्तर ऽऊरुर्म्महाहविः तस्य यानि पञ्च हवीᳬंषि समायीनि ता ऽइमाः पञ्चाङ्गुलयः कुल्फावेवैन्द्राग्नᳬं हविस्तद्वै द्विदेवत्यम्भवति तस्मादिमौ द्वौ कुल्फाविदम्माहेन्द्रमिदं, वैश्वकर्म्मणन्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तमथ यदिदमन्तरुदरे तत्पितृयज्ञस्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ ५ ॥ अयमेवोत्तरो बाहुः शुनासीरीयम् । तस्य यानि पञ्च हवीᳬंषि समायीनि ता ऽइमाः पञ्चाङ्गुलयोऽथ य ऽएष ऽउपरिष्टाद्बाहुस्तस्य सन्धिस्तच्छुनासीरीयमिदं वायव्यन्द्रोः सौर्य्यन्तद्वा ऽअनिरुक्तम्भवति तस्मात्तदनिरुक्तम् ॥ ६ ॥ तानि वा ऽएतानि । चातुर्म्मास्यानि † त्रिपन्वीनि ‡, द्विसमस्तानि तस्मादि-

* पर्वचतुष्टयसञ्चारीणि ।

† चतुर्षु चतुर्षु मासेषु क्रियमाणानि चातुर्मास्यानि वैश्वदेव-वरुणप्रघास साकमेध शुनासीरीयाख्यानि चत्वारि पर्वाणि ।

‡ त्रय सन्धयोऽन्तरालकालाश्चत्वारो मासा येषु तानि त्रिपन्वीनि ।

मानि पुरुषस्याङ्गानि त्रिपर्वाणि द्विसमस्तानि तेषां वै चतुर्णान्द्वयोस्त्रीणि त्रीणि हवींष्यनिरुक्तानि भवन्ति द्वे द्वे द्वयोः ॥७॥ [अथ प्रपाठकः ॥४६॥] तेषां वै चतुर्वग्निम्मन्थन्ति। तस्माच्चतुर्भिरङ्गैरायुते द्वयोः प्रणयन्ति तस्माद्द्वाभ्यामेत्येवमु ह प्रजापतिश्चातुर्म्मास्यैरात्मानं विदधे तथो ऽएवैवंविद्यजमानश्चातुर्म्मास्यैरात्मानं विधत्ते ॥८॥ तदाहुः सर्वङ्गायत्रं वैश्वदेवं हविः स्यात्सर्वन्त्रैष्टुभं वरुणप्रघासाः सर्वञ्जागतम्महाहविः सर्वानुष्टुभः शुनासीरीयश्चतुष्टोमस्याप्त्या ऽइति तदु तथा न कुर्य्याद्यत्रा ऽएताश्यभिसम्पद्यन्ते तेनैवास्य स काम ऽउपाप्तो भवति ॥९॥ तानि वा ऽएतानि । चातुर्म्मास्यानि द्वापष्टानि त्रीणि शतानि बृहत्यः सम्पद्यन्ते तदेभिः संवत्सरञ्च महाव्रतञ्चाप्नोत्यथो द्विप्रतिष्ठो वा ऽअयं यजमानो यजमानमेवैतत्स्वर्गे लोक ऽआयातयति प्रतिष्ठापयति ॥ १० ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

---

[ प्रश्नप्रतिवचनैरग्निहोत्रहोमस्य सर्वदेवतृप्तिकरत्वप्रतिपादनम् ]

शौचेयो ह प्राचीनयोग्यः । उद्दालकमारुणिमाजगाम ब्रह्मोद्यमग्निहोत्रं विविदिषिष्यामीति ॥ १ ॥ स होवाच । गौतम का तेऽग्निहोत्री को वत्सः किमुपसृष्टा किं संरुयोजनङ्किन्दुह्यमानङ्किन्दुग्धङ्किमाह्रियमाणङ्किमधिश्रितङ्किमवज्योत्यमानङ्किमद्भिः प्रत्यानीतङ्किमुद्वास्यमानङ्किमुद्वा-

( १ ) 'ग' 'ज' पुस्तकयो. "विविदिषामीति" इति पाठो दृश्यते ।

सितङ्किमुन्नीयमानङ्किमुन्नीतङ्किमुद्यतङ्किꣳ ह्रियमाणङ्किन्निगृहीतम् ॥ २ ॥ काꣳ समिधमादधासि का पूर्वाहुतिः किमुपासीपदः किमपैक्षिष्ठाः कोत्तराहुतिः ॥ ३ ॥ किꣳ हुत्वा प्राकम्पयसि । किꣳ स्रुचम्परिमृज्य कूर्चे न्न्यमार्ज्ज्ञीः किन्द्वितीयम्परिमृज्य - दक्षिणतो हस्तमुपासीपदः किम्पूर्वम्प्राशीः किन्द्वितीयङ्किमुत्सृप्याचामीः किꣳ स्रुच्यप ऽआनीय निरौक्षीः किन्द्वितीयङ्किन्तृतीयमेतान्दिशमुदौक्षीः किञ्घनेनाहवनीयमपो न्यनैषीः किꣳ समतिष्ठिपो यदि वा ऽएतद्विद्वानग्निहोत्रमहौषीरथ ते हुतं यद्यु वा ऽअविद्वानहुतमेव त ऽइति ॥ ४ ॥ स होवाच । इहैव मे मानव्याग्निहोत्री वायव्यो वत्सः सजूरुपसृष्टा विराट् संयोजनमाश्विनन्दुह्यमानं वैश्वदेवन्दुग्धं वायव्यमाह्रियमाणमाग्नेयमधिश्रितमैन्द्राग्नमवज्योत्यमानं वारुणमद्भिः प्रत्यानीतं वायव्यमुद्वास्यमानन्द्यावापृथिव्यमुद्वासितमाश्विनमुन्नीयमानं वैश्वदेवमुन्नीतम्महादेवायोद्यतं वायव्यꣳ ह्रियमाणं वैष्णवन्निगृहीतम् ॥ ५ ॥ अथ याꣳ समिधमादधामि । आहुतीनाꣳ सा प्रतिष्ठा या पूर्वाहुतिर्देवाँस्तयाप्रैषं यदुपासीपदम्पितॄँस्तयन्तद्यदपैक्षिषीमञ्चामुञ्च लोकौ तेन समिधां योत्तराहुतिर्मान्तया स्वर्गं लोकेऽधाम् ॥६॥ अथ यद्धुत्वा प्राकम्पयामि । वायव्यन्तद्यत्स्रुचम्परिमृज्य कूर्चे न्न्यमार्जिपमोषधिवनस्पतीँस्तेनाप्रैषं यद्द्वितीयम्परिमृज्य दक्षिणतो हस्तमुपासीपदम्पितॄँस्तेनाप्रैषं यत्पूर्वम्प्राशिषम्मान्तेनाप्रैषं यद्द्वि-

तीयम्प्रजान्तेनाथ यदुरस्तःप्र्याम्पशूँस्तेनाथैवं यत्स्रुच्च्यपु ऽआनीय निरौक्षिपत्सर्पदेवजनाँस्तेनाथैवं यद्द्वितीयङ्गन्धर्वाप्सरसस्तेनाथ यत्तृतीयमेतान्दिशमुदौक्षिपथं स्वर्गस्य लोकस्य तेन द्वारं व्यवारिषं यद्ब्धनेनाहवनीयमपो व्यनैषमस्मै लोकाय तेन वृष्टिमदां यत्समतिष्ठिपं यत्पृथिव्या ऽऊनन्तत्तेनापूपुरमित्येतन्नौ भगवन्त्सहेति होवाच ॥ ७ ॥ शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छेव प्राचीनयोग्येति स होवाच यस्मिन्काल ऽउद्धृतास्तेऽग्नयः स्युरुपावहृतानि पात्राणि होष्यन्त्स्या ऽअथ त ऽआहवनीयोऽनुगच्छेद्वेत्थ तद्भयं यदुग्र जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्य ज्येष्ठः पुत्रो म्रियेत यस्यैतदविदितथं स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितङ्का प्रायश्चित्तिरिति प्राण ऽउदानमप्यगादिति गार्हपत्य ऽआहुतिञ्जुहुयाथ सैव प्रायश्चित्तिर्न तद्गागः कुर्वीयेत्येतन्नौ भगवन्त्सहेति होवाच ॥ ८ ॥ शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छेव प्राचीनयोग्येति स होवाच यत्र त ऽएतस्मिन्नेव काले गार्हपत्योऽनुगच्छेद्वेत्थ तद्भयं यदुग्र जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्य गृहपतिर्म्रियेत यस्यैतदविदितथं स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितङ्का प्रायश्चित्तिरित्युदानः प्राणमप्यगादित्याहवनीय ऽआहुतिञ्जुहुयाथ सैव प्रायश्चित्तिर्न तद्गागः कुर्वीयेत्येतन्नौ भगवन्त्सहेति होवाच ॥ ९ ॥ शौचेयो ज्ञप्तः ।

प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छेव प्राचीनयोग्येति स होवाच यत्र त ऽएतस्मिन्नेव कालेऽन्वाहार्यपचनोऽनुगच्छेद्वेत्थ तद्भयं स्यदुग्र जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्य सर्वे पशवो म्रियेरन्न्यस्यैतदविदितꣳ स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितङ्का प्रायश्चित्तिरिति व्यान ऽउदानमप्यगादिति गार्हपत्य ऽआहुतिञ्जुहुयाꣳ सैव प्रायश्चित्तिर्न्न तदागः कुर्वीयेत्येतन्नो भगवन्तसहेति होवाच ॥ १० ॥ शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छेव प्राचीनयोग्येति स होवाच यत्र त ऽएतस्मिन्नेव काले सर्वेऽग्नयोऽनुगच्छेयुर्वेत्थ तद्भयं स्यदुग्र जुह्वतो भवतीति वेदेति होवाच पुरा चिरादस्यादायादङ्कुलꣳ स्याद्यस्यैतदविदितꣳ स्याद्विद्याभिस्त्वेवाहमतारिषमिति किं विदितङ्का प्रायश्चित्तिरिति पुरा चिरादग्निम्मथित्वा यान्दिशं वातो वायात्तान्दिशमाहवनीयमुद्धृत्य वायव्यामाहुतिञ्जुहुयाꣳ स विद्याꣳ समृद्धम्मेऽग्निहोत्रꣳ सर्वदेवत्यं वायुꣳ ह्येव सर्वाणि भूतान्यपियन्ति वायोः पुनर्विसृज्यन्ते सैव प्रायश्चित्तिर्न्न तदागः कुर्वीयेत्येतन्नो भगवन्तसहेति होवाच ॥ ११ ॥ शौचेयो ज्ञप्तः । प्रक्ष्यामि त्वेव भगवन्तमिति पृच्छेव प्राचीनयोग्येति स होवाच यत्र त ऽएतस्मिन्नेव काले निवाते सर्वेऽग्नयोऽनुगच्छेयुर्वेत्थ तद्भयं स्यदुग्र जुह्वतो भवतीति वेदेति होवाचाप्रियमेवास्मिँल्लोके पश्येताप्रियममुष्मिन्न्यस्यैतदविदितꣳ स्याद्विद्या-

भिस्त्वेवाहमतारिषमिति किं विदितङ्का प्प्रायश्चित्तिरिति पुरा चिरादग्निम्मथित्वा प्प्राञ्चमाहवनीयमुद्धृत्य जघनेनाहवनीयमुपविश्याहमेवैनरिषेयं स विद्याथं समृद्धम्मेऽग्निहोत्रं सर्व्वदेवत्यन्त्राह्मणथं ह्येव सर्व्वाणि भूतान्यपियन्ति ब्राह्मणात्पुनर्विसृज्यन्ते सैव प्प्रायश्चित्तिर्न्न तदागः कुर्व्वीयेत्यथ वा ऽअहमेतन्नावेदिषमिति होवाच ॥ १२ ॥ शौचेयो ज्ञप्तः । इमानि समित्काष्ठान्युपायानि भगवन्तमिति स होवाच यदेवन्नावक्ष्यो मूर्द्धा ते व्व्यपतिष्यदेह्युपेहीति तथेति तं होपनिन्ये तस्मै हैताथं शोकतरां व्व्याहृतिमुवाच यत्सत्यन्तस्माद् सत्यमेव वदेत् ॥ १३ ॥

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ उपनयनधर्मनिरूपणम् ]

ब्रह्मचर्य्यमागामित्याह । ब्रह्मण ऽएवैतदात्मानन्निवेदयति ब्रह्मचार्य्यसानीत्याह ब्रह्मण ऽएवैतदात्मानम्परिददात्यथैनमाह को नामासीति प्प्रजापतिर्वै कः प्प्राजापत्यमेवैनन्तत्कृत्वोपनयते ॥ १ ॥ अथास्य हस्तङ्गृह्णाति । इन्द्रस्य ब्रह्मचार्य्यस्यग्निराचार्य्यस्तवाहमाचार्य्यस्तवासाविरयेते वै श्रेष्ठे वलिष्ठे देवते ऽएताभ्यामेवैनथं श्रेष्ठाभ्याम्बलिष्ठाभ्यान्देवताभ्याम्परिददाति तथा ह्यस्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥ २ ॥ अथैनम्भूतेभ्यः परिददाति । प्प्रजापतये त्वा परिददामि

देवाय त्वा सवित्रे परिददामीत्येते वै श्रेष्ठे वर्षिष्ठे देवते ऽएताभ्यामेवैनथं श्रेष्ठाभ्यां वर्षिष्ठाभ्यान्देवताभ्याम्परिददाति तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥ ३ ॥ अद्भ्यस्त्वौषधीभ्यः परिददामीति । तदेनमद्भ्यश्चौषधिभ्यश्च परिददाति द्यावापृथिवीभ्यान्त्वा परिददामीति तदेनमाभ्यान्द्यावापृथिवीभ्याम्परिददाति ययोरिदꣳ सर्वमधि विश्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्या ऽइति तदेनꣳ सर्वेभ्यो भूतेभ्यः परिददात्यरिष्ट्यै तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥४॥ * ब्रह्मचार्य्यसीत्याह । ब्रह्मण ऽएवैनन्तत्परिददात्यपोऽशानेत्यमृतं वा ऽआपोऽमृतमशानेत्येवैनन्तदाह कर्म्म कुर्विति वीर्य्यं वै कर्म्म वीर्य्यं कुर्वित्येवैनन्तदाह समिधमाधेहीति समित्त्वाग्नेस्तेजसा ब्रह्मवर्चसेनेत्येवैनन्तदाह मा सुषुप्स्था ऽइति मा मृथा ऽइत्येवैनन्तदाहापोऽशानेत्यमृतं वा ऽआपोऽमृतमशानेत्येवैनन्तदाह तदेनमुभयतोऽमृतेन परिगृह्णाति तथा हास्य ब्रह्मचारी न काञ्चनार्त्तिमार्च्छति न स य ऽएवं वेद ॥ ५ ॥ अथास्मै सावित्रीमन्वाह† । ताꣳ ह स्मैताम्पुरा सँवत्सरेऽन्वाहुः सँवत्सरसम्मिता वै गर्भाः प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दध्म ऽइति ॥ ६ ॥ अथ षट्सु मासेषु । षड्वा ऽऋतवः सँवत्सरस्य सँवत्सरसम्मिता वै गर्भाः प्रजायन्ते जात ऽएवास्मिँस्तद्वा-

* अश्वघातम् ५८०० ।
† पा० गृ० सू० २. ३. १ ।

चन्द्रद्ध्म ऽइति ॥ ७ ॥ अथ चतुर्विंशत्यहे । चतुर्विंशतिर्वै सँवत्सरस्यार्द्धमासाः सँवत्सरसम्मिता वै गर्ब्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥ ८ ॥ अथ द्वादशाहे । द्वादश वै मासा सँवत्सरस्य सँवत्सरसम्मिता वै गर्ब्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥ ९ ॥ अथ षडहे । षड्वा ऽऋतवः सँवत्सरस्य सँवत्सरसम्मिता वै गर्ब्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥ १० ॥ अथ त्र्यहे । त्रयो वा ऽऋतवः सँवत्सरस्य सँवत्सरसम्मिता वै गर्ब्भाः प्प्रजायन्ते जात ऽएवास्मिँस्तद्वाचन्दद्ध्म ऽइति ॥११॥ तदुपि श्श्लोकङ्गायन्ति । आचार्य्यो गर्ब्भी भवति हस्तमाधाय दक्षिणन्तृतीयस्याᳪं स जायते सावित्र्या सह ब्राह्मण ऽइति सद्यो ह त्वाव ब्राह्मणायानुब्ब्रूयादाग्नेयो वै ब्राह्मणः सद्यो वा ऽअग्निर्ज्जायते तस्मात्सद्य ऽएव ब्राह्मणायानुब्ब्रूयात् ॥ १२ ॥ ताᳪं हैतामेके । सावित्रीमनुष्टुभमन्वाहुर्वाग्वा ऽअनुष्टुप्तदस्मिन्वाचन्दद्ध्म ऽइति न तथा कुर्य्याद्यो हैनन्तत्र ब्ब्रूयादा न्वा ऽअयमस्य वाचमदित मूको भविष्यतीतीश्श्वरो ह तथैव स्यात्तस्मादेताङ्गायत्रीमेव सावित्रीमनुब्ब्रूयात् ॥ १३ ॥ अथ हैके दक्षिणतः । तिष्ठते वासीनाय वान्वाहुर्न्न तथा कुर्य्याद्यो हैनन्तत्र ब्ब्रूयाद्बुल्वधन्वा ऽअयमिममजीजनत बुल्वो भविष्यतीतीश्श्वरो ह तथैव स्यात्तस्मात्पुरस्तादेव प्प्रतीचे समीक्षमाणायानुब्ब्रूयात् ॥ १४ ॥ तां वै पच्छोऽन्वाह । त्रयो वै

प्प्राणाः प्प्राण ऽउदानो व्यानस्तानेवास्मिँस्तद्दधात्यथा-
र्द्धंशो द्वौ वा ऽइमौ प्प्राणौ प्प्राणोदानावेव प्प्राणोदानावे-
वास्मिँस्तद्दधात्यथ कृत्स्नामेको वा ऽअयम्प्राणः कृत्स्न ऽएव
प्प्राणमेवास्मिँस्तत्कृत्स्नन्दधाति ॥ १५ ॥ तदाहुः । न
ब्राह्मणम्ब्रह्मचर्य्यमुपनीय मिथुनञ्चरेद्गर्भो वा ऽएष भवति
यो ब्रह्मचर्य्यमुपैति नेदिमम्ब्राह्मणं विपिकाद्रेतसो जनया-
नीति ॥ १६ ॥ तदु वा ऽआहुः । काममेव चरेद्द्वय्यो वा
ऽइमाः प्प्रजा दैव्यश्चैव मानुष्यश्च ता वा ऽइमा
मानुष्यः प्प्रजाः प्प्रजननात्प्रजायन्ते छन्दाᳬसि वै
दैव्यः प्प्रजास्तानि मुखतो जनयते तत ऽएतज्जनयते
तस्मादु काममेव चरेत् ॥ १७ ॥ तदाहुः । न ब्रह्मचारी
सन्मद्धश्नीयादोषधीनां वा ऽएष परमो रसो यन्मधु
नेदन्नाद्यस्यान्तङ्गच्छानीत्यथ ह स्माह श्वेतकेतुरारुणेयो
ब्रह्मचारी सन्मद्धश्नँस्त्रय्यै वा ऽएतद्विद्यायै शिष्टं
यन्मधु स तु रसो यस्येदृक्विशिष्टमिति यथा ह वा ऽऋचं
वा यजुर्वा साम वाभिव्याहरेत्तादृक्तद्य ऽएवं विद्वान्ब्रह्मचारी
सन्मद्धश्नाति तस्मादु काममेवाश्नीयात् ॥ १८ ॥

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

[ शतातिरात्राख्यसत्रविधानमाख्यायिकया ]

देवाह्वा ऽऊर्द्ध्वान्स्वर्गँल्लोकं यतः । असुरास्तमसा-
न्तरदधुस्ते होचुर्न्न वा ऽअस्यान्येन सत्रादपघातोऽस्ति
हन्त सत्रमासामहा ऽइति ॥ १ ॥ ते शताग्निष्टोमाः

सत्रमुपेयुः । ते यावदासीनः परापश्श्येत्तावतस्तमोऽपाघ्नं-
स्तैवमेव शतोक्थ्येन यावत्तिष्ठन्परापश्श्येत्तावतस्तमोऽपा-
घ्नत ॥ २ ॥ ते होचुः । अप वाव तमो हन्महे न त्वेव
सर्वमिव हन्त प्रजापतिम्पितरम्प्रत्ययामेति ते प्रजापति-
म्पितरम्प्रतीत्योचुरसुरा वै नो भगव ऽऊर्ध्वान्त्स्वर्गँल्लोकं
यतस्तमसान्तरदधुः ॥ ३ ॥ ते शताग्निष्टोमः सत्रमुपैम ।
ते यावदासीनः परापश्श्येत्तावतस्तमोऽपाहन्म स्मैवमेव शतो-
क्थ्येन यावत्तिष्ठन्परापश्श्येत्तावतस्तमोऽपाहन्महि प्र
नो भगवञ्छाधि यथासुराँस्तमोऽपहत्य सर्वम्पाप्मानमप-
हत्य स्वर्गँल्लोकम्प्रज्ञास्याम ऽइति ॥ ४ ॥ स होवाच ।
असर्वक्रतुभ्यां वै यज्ञाभ्यामगन्त यदग्निष्टोमेन चो-
क्थ्येन च शतातिरात्रः सत्रमुपेत तेनासुराँस्तमोऽपहत्य
सर्वम्पाप्मानमपहत्य स्वर्गँल्लोकम्प्रज्ञास्यथेति ॥ ५ ॥ ते
शतातिरात्रः सत्रमुपेयुः । तेनासुराँस्तमोऽपहत्य सर्वम्पा-
प्मानमपहत्य स्वर्गँल्लोकम्प्रजज्ञुस्तेषामर्वाक्पञ्चाशोऽभ्येवाहः-
स्वहरभि रात्रिसामानि परीयू रात्रिमभ्यहःसामानि
॥ ६ ॥ ते होचुः । अमुहाम वै न प्रजानीमो हन्त
प्रजापतिमेव पितरम्प्रत्ययामेति ते प्रजापतिमेव पितर-
म्प्रतीत्योचुरहस्रो रात्रिसामानि रात्र्यामहन्नो भवन्ति नः ॥
विपश्चिद्यज्ञान्मुग्धान्विद्वान्धीरोऽनुशाधि न ऽइति ॥ ७ ॥
तान्हैतदुपजगौ । महाहिमिव वै ह्रदाद्बलीयानन्ववेत्य ॥
अनुत्त स्वादास्थानात्ततः सत्रत्र तापत ऽइति ॥ ८ ॥
आश्विनं वै वः शस्यमानम् । प्रातरनुवाकमास्थानादनुत्त

यमास्थानादुदुद्धन्धीराः सन्तो ऽधीरवत् ॥ प्रशास्त्रा तमुपेत
शनैरप्रतिशस्तेति ॥ ९ ॥ ते होचुः । कथन्नु भगवः
शस्तङ्कथमप्रतिशस्तमिति स होवाच यत्र होताश्विनः
शस्त्रसन्नाग्नेयस्य कृतोर्गायत्रस्य च्छन्दसः पारङ्गच्छात्त-
त्प्रतिप्रस्थाता वसतीवरीः परिहृत्य मैत्रावरुणस्य हवि-
र्द्धानयोः प्रातरनुवाकमुपाकुरुतादुच्चैर्होता शंसति शनै-
रितरो जञ्जप्यमान ऽइवान्वाह तन्न वाचा वाचम्प्रत्येति न
च्छन्दसा च्छन्दः ॥ १० ॥ परिहिते प्रातरनुवाके । यथा-
यतनमेवोपांशवन्तर्यामौ हुत्वा द्रोणकलशे पवित्रम्प्र-
पीड्य निदधाति तिरोह्न्यैश्चरित्वा प्रत्यञ्चः प्रतिपरेत्य
तिरोह्न्यानेव भक्षयाद्वा ऽअथानुपूर्वं स्यज्ञपुच्छः सꣳ-
स्थाप्य य ऽऊर्द्धा ऽअन्तर्यामाद्ग्रहास्तान्गृहीत्वा वि-
प्रुषाꣳहोमः हुत्वा सन्तनिश्च बहिष्पवमानेन स्तुत्वा-
हरेव प्रतिपद्याद्वा ऽइति ॥ ११ ॥ तदेतेऽभि श्लोकाः ।
चतुर्भिः सैन्धवैर्युक्तैर्धीरा व्यजहुस्तमः ॥ विद्वाꣳसो ये
शतक्रतुदेवाः सत्रमतन्वतेति ॥ १२ ॥ चत्वारो ह्यत्र
युक्ता भवन्ति । द्वौ होतारौ द्वावध्वर्यू पर्वेत्रु शङ्केव हनूनि
कल्पयन्नहन्नोरन्तौ व्यतिपजन्त धीराः ॥ न दानवा यज्ञि-
यन्तन्तुमेषां विजानीमो विततम्मोहयन्ति नः ॥ पूर्वस्याह्नः
परिशिꣳषन्ति कर्म्म तदुत्तरेणाभिवितस्वतेऽह्ना ॥ दुर्विज्ञान-

(१) "अनन्तर्गर्भिण साग्र पौत्र द्विदलमेव च ।
प्रादेशमात्रं विज्ञेय पवित्र यत्र कुत्रचित्" ॥ (कर्मप्र०)
"कुशौ समानप्रश्रीर्णावनन्तर्गर्भौ" ( का० श्रौ० सू० २. ३. ३० )

(२) अभिषवे ग्रहणे [illegible] पतितानां सोमबिन्दूना ग्रहणाशक्यत्वात् तत्प्रत्यवायपरिहाराय कृतहोमस्य विप्रुड्ढोम इति सज्ञा ।

ङ्काङ्क्ष्यन्देवतानाथं सोमाः सोमैर्ऋतिपक्काः प्लवन्ते ॥ समानान्त्सदसुक्षन्ति हयान्काष्ठभृतो यथा ॥ पूर्णान्परिस्रुतः कुम्भाञ्जनमेजयसादन ऽइन्द्रस्यसुररक्षसान्यपेयुः ॥१३॥

पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

[ पञ्चमहायज्ञानां महासत्रत्वप्रतिपादनम् ]

पञ्चैव महायज्ञाः *। तान्येव महासत्त्राणि भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ ऽइति ॥ १ ॥ अहरहर्भूतेभ्यो बलिं हरेत्। तथैतम्भूतयज्ञः समाप्नोत्यहरहर्दद्यादोदपात्रात्तथैतम्मनुष्ययज्ञः समाप्नोत्यहरहः स्वधाकुर्य्यादोदपात्रात्तथैतम्पितृयज्ञः समाप्नोत्यहरहः † स्वाहाकुर्य्यादाकाष्ठात्तथैतन्देवयज्ञः समाप्नोति ॥२॥ अथ ब्रह्मयज्ञः। स्वाध्यायो वै ब्रह्मयज्ञस्तस्य वा ऽएतस्य ब्रह्मयज्ञस्य वागेव जुहूर्म्मन ऽउपभृच्चक्षुर्ध्रुवा मेधा स्रुवः सत्यमवभृथः स्वर्गो लोक ऽउदयनं यावन्तः ह वा ऽइमाम्पृथिवीं वित्तेन पूर्णान्ददँल्लोकञ्जयति त्रिस्तावन्तञ्जयति भूयाथंसञ्चाक्षय्यं य ऽएवं विद्वानहरहः स्वाध्यायमधीते तस्मात्स्वाध्यायोऽध्येतव्यः ॥ ३ ॥ पय ऽआहुतयो ह वा ऽएता देवानाम्। यद्ऋचः स य ऽएवं विद्वानृचोऽहरहः स्वाध्यायमधीते पय ऽआहुतिभिरेव तद्देवाँस्तर्प्पयति त

---

* "अथात पञ्च महायज्ञा" पा० गृ० सू० का० २ क० ९ सू० १।

† "अहरह स्वाहा कुर्यादन्नाभावे केनचिदाकाष्ठाद्देवेभ्य पितृभ्यो मनुष्येभ्यश्चोदपात्रात्" पा० गृ० सू० २. ९. १६।

ऽएनन्तृप्तास्तर्प्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्स्वधा ऽअभिवहन्ति ॥ ४ ॥ आज्याहुतयो ह वा ऽएता देवानाम् । यद्यजूंषि स य ऽएवं विद्वान्यजूंष्यहरहः स्वाध्यायमधीत ऽआज्याहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्तास्तर्प्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्स्वधा ऽअभिवहन्ति ॥ ५ ॥ सोमाहुतयो ह वा ऽएता देवानाम् । यत्सामानि स य ऽएवं विद्वान्सामान्यहरहः स्वाध्यायमधीते सोमाहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्तास्तर्प्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्स्वधा ऽअभिवहन्ति ॥ ६ ॥ मेद ऽआहुतयो ह वा ऽएता देवानाम् । यदथर्वाङ्गिरसः स य ऽएवं विद्वानथर्वाङ्गिरसोऽहरहः स्वाध्यायमधीते मेद ऽआहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्तास्तर्प्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्स्वधा ऽअभिवहन्ति ॥७॥ मध्वाहुतयो ह वा ऽएता देवानाम् । यदनुशासनानि * विद्या † वाकोवाक्यमितिहासपुराणङ्गाथा

---

* अनुशिष्यन्ते—व्युत्पाद्यन्ते एभिरित्यनुशासनानि व्याकरणनिरुक्तादीनि षडङ्गानि ।

† न्यायमीमांसाद्य ।

( १ ) उक्तिप्रत्युक्तिरूपं प्रकरणं वाकोवाक्यम् ।

नाराशꣳस्यः स य ऽएवं विद्वाननुशासनानि विद्या वाकोवाक्यमितिहासपुराणङ्गाथा नाराशꣳसीरित्यहरहः स्वाध्यायमधीते मद्वाहुतिभिरेव तद्देवाँस्तर्प्पयति त ऽएनन्तृप्तास्तर्प्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्त्स्वधा ऽअभिवहन्ति ॥ ८ ॥ तस्य वा ऽएतस्य ब्रह्मयज्ञस्य । चत्वारो वषट्कारा यद्वातो वाति यद्विद्योतते यत्स्तनयति यदवस्फूर्ज्जति तस्मादेवंविद्वाते वाति विद्योतमाने स्तनयत्यवस्फूर्ज्जत्यधीयीतैव वषट्काराणामच्छम्वट्कारायाति ह वै पुनर्म्मृत्युम्मुच्यते गच्छति ब्रह्मणः सात्मताꣳ स चेदपि प्रबलमिव न शक्नुयादप्येकन्देवपदमधीयीतैव तथा भूतेभ्यो न हीयते ॥ ९ ॥

पञ्चमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठक ॥ ३ ॥
कण्डिकासंख्या ॥ ११२ ॥



[ स्वाध्यायप्रशंसा ]

अथातः स्वाध्यायप्रशꣳसा । प्रिये स्वाध्यायप्रवचने भवतो युक्तमना भवत्यपराधीनोऽहरहरर्थान्त्साधयते सुखꣳ स्वपिति परमचिकित्सक ऽआत्मनो भवतीन्द्रियसंयमश्चैकारामता च प्रज्ञावृद्धिर्य्यशो लोकपक्तिः प्रज्ञा वर्द्धमाना चतुरो धर्म्मान्ब्राह्मणमभिनिष्पादयति ब्राह्मण्यम्प्रतिरूपचर्य्यां यशो लोकपक्तिँल्लोकः पच्यमान-

इचतुर्भिर्हर्म्मैर्ब्राह्मणम्भुनक्त्यर्च्चया च दानेन चाज्येयतया चावद्ध्यतया च ॥ १ ॥ ये ह वै के च श्रमाः। इमे द्यावापृथिवी ऽअन्तरेण स्वाध्यायो हैव तेषाम्परमता काष्ठा य ऽएवं विद्वान्त्स्वाध्यायमधीते तस्मात्स्वाध्यायोऽध्येतव्यः ॥ २ ॥ यद्यद्ध वा ऽअयञ्छन्दसः। स्वाध्यायमधीते तेन तेन हैवास्य यज्ञक्रतुनेष्टम्भवति य ऽएवं विद्वान्त्स्वाध्यायमधीते तस्मात्स्वाध्यायोऽध्येतव्यः ॥ ३ ॥ यदि ह वा अप्य्यभ्यक्तः। अलङ्कृतः सुहितः सुखे शयने शयानः स्वाध्यायमधीत ऽआ हैव स नखाग्रेभ्यस्तप्यते य ऽएवं विद्वान्त्स्वाध्यायमधीते तस्मात्स्वाध्यायोऽध्येतव्यः ॥ ४ ॥ मधु ह वा ऽऋचः। घृतह ह सामान्यमृतं यजूंषि यद्ध वा ऽअयं वाकोवाक्यमधीते क्षीरौदनमांसौदनौ हैव तौ ॥ ५ ॥ मधुना ह वा ऽएष देवाँस्तर्प्पयति। य ऽएवं विद्वानृचोऽहरहः स्वाध्यायमधीते त ऽएनन्तृप्तास्तर्प्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥ ६ ॥ घृतेन ह वा ऽएष देवाँस्तर्प्पयति। य ऽएवं विद्वान्त्सामान्यहरहः स्वाध्यायमधीते त ऽएनन्तृप्तास्तर्प्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥ ७ ॥ अमृतेन ह वा ऽएष देवाँस्तर्प्पयति। य ऽएवं विद्वान्यजूंष्यहरहः स्वाध्यायमधीते त ऽएनन्तृप्तास्तर्प्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥८॥ क्षीरौदनमांसौदनाभ्यांह ह वा ऽएष देवाँस्तर्प्पयति। य ऽएवं विद्वान्वाकोवाक्यमितिहासपुराणमित्यहरहः स्वाध्यायमधीते त ऽएनन्तृप्तास्तर्प्पयन्ति सर्वैः कामैः सर्वै-

ऽभोगैः ॥ ९ ॥ युन्ति वा ऽआपः । एत्यादित्य ऽएति चन्द्रमा यन्ति नक्षत्राणि यथा ह वा ऽएता देवता नेयुर्न्न कुर्य्युरेवꣳ हैव तदहर्ब्राह्मणो भवति यदहः स्वाध्यायन्ना- धीते तस्मात्स्वाध्यायोऽध्येतव्यस्तस्मादप्यृचं वा यजु- र्वा साम वा गाथां वा कुंव्यां वाभिव्याहरेद्व्रतस्याव्य- वच्छेदाय ॥ १० ॥

पञ्चमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥



[ आख्यायिकया व्याहृत्युत्पत्तिकथनम् ]

प्रजापतिर्वा ऽइदमग्र ऽआसीत् । एक ऽएव सोऽका- मयत स्यान्प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्माच्छ्रान्तात्तेपानात्त्रयो लोका ऽअसृज्यन्त पृथिव्यन्त- रिक्षन्द्यौः ॥ १ ॥ स ऽइमाँस्त्रीँल्लोकानभितताप । तेभ्य- स्तप्तेभ्यस्त्रीणि ज्योतीꣳष्यजायन्ताग्निर्य्योऽयम्पवते सूर्यः ॥ २ ॥ स ऽइमानि त्रीणि ज्योतीꣳष्यभितताप । तेभ्य- स्तप्तेभ्यस्त्रयो वेदा ऽअजायन्ताग्नेर्ऋग्वेदो वायोर्यजु- र्वेदः सूर्यात्सामवेदः ॥ ३ ॥ स इमाँस्त्रीन्वेदानभितताप । तेभ्यस्तप्तेभ्यस्त्रीणि शुक्राण्यजायन्त भूरित्यृग्वेदा- द्भुव ऽइति यजुर्वेदात्स्वरिति सामवेदात्तदृग्वेदेनैव होत्रम- कुर्वत यजुर्वेदेनाध्वर्य्यवꣳ सामवेदेनोद्गीथं यदेव त्रय्यै विद्यायै शुक्रन्तेन ब्रह्मत्वमथोच्चक्राम ॥ ४ ॥ ते देवाः प्रजापतिमब्रुवन् । यदि न ऋक्तो वा यजुष्टो वा सामतो वा यज्ञो ह्वलेत्केनेनम्भिषज्येमेति ॥ ५ ॥ स होवाच ।

यद्यृक्तो भूरिति चतुर्गृहीतमाज्यङ्गृहीत्वा गार्हपत्ये जुहवथ यदि यजुष्टो भुव ऽइति चतुर्गृहीतमाज्यङ्गृहीत्वाग्नीध्रीये जुहवथान्वाहार्य्यपचने†वा हविर्य्यज्ञे यदि सामतः स्वरिति चतुर्गृहीतमाज्यङ्गृहीत्वाहवनीये जुहवथ यद्यु ऽअविज्ञातमसत्सर्वाण्यनुद्रुत्याहवनीये जुहवथ तदृग्वेदेनैवऽर्ग्वेदम्भिषज्यति यजुर्वेदेन यजुर्वेदꣳ सामवेदेन सामवेदꣳ स यथा पर्वणा पर्व सन्दध्यादेवꣳ हैव स सन्दधाति य ऽएताभिर्भिषज्यत्यथ यो ह्यातोऽन्येन भिषज्यति यथा शीर्णेन शीर्णꣳ सन्धित्सेद्यथा वा शीर्णे गरमभिनिदध्यादेवन्तत्तस्मादेवंविदमेव ब्रह्माणङ्कुर्वीत नानेवंविदम् ॥ ६ ॥ तदाहुः । यदृचा होत्रङ्क्रियते यजुषाध्वर्य्यवꣳ साम्नोद्गीथोऽथ केन ब्रह्मत्वमित्यनया त्रय्या विद्ययेति ह ब्रूयात् ॥ ७ ॥

पञ्चमाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥

[ अंशदाभ्ययोर्ग्रहयोरात्मवागादिरूपतया सम्भृत्यानुष्ठानम् ]

प्रजापतिर्ह वा ऽएष यदꣳशुः। सोऽस्यैष ऽआत्मैवात्मा ह्ययम्प्रजापतिर्वागेवादाभ्यः स यदꣳशुङ्गृहीत्वादाभ्यङ्गृह्णात्यात्मानमेवास्यैतत्संस्कृत्य तस्मिन्नेतां वाचम्प्रतिष्ठापयति ॥ १ ॥ अथ मनो ह वा ऽअꣳशुः । वागदाभ्यः प्राण ऽएवाꣳशुरुदानोऽदाभ्यश्चक्षुरेवाꣳशुः श्रोत्रमदा-

† अन्वाहार्यपचने—दक्षिणाग्नौ ।

ऽभ्यस्तद्यदेतौ ग्रहौ गृह्णन्ति सर्वत्वायैव कृत्स्नतायै ॥ २ ॥
अथ देवाश्च ह वा ऽअसुराश्च । उभये प्राजापत्या
ऽअस्पर्द्धन्त त ऽएतस्मिन्नेव यज्ञे प्रजापतावस्पर्द्धन्ता-
स्माकमयथं स्यादस्माकमयथं स्यादिति ॥ ३ ॥ ततो
देवाः । अर्चन्तः श्राम्यन्तश्चेरुस्त ऽएतद्ग्रहन्ददृशुरेत-
मदाभ्यन्तमगृह्णत ते सवनानि प्रावृहन्त ते सर्वं यज्ञः
समवृञ्जतान्तरायन्नसुरान्यज्ञात् ॥ ४ ॥ ते होचुः । अदभाम
वा ऽएनानिति तस्मादुदाभ्यो न वै नोऽदभन्निति तस्मा-
दुदाभ्यो वाग्वा ऽअदाभ्यः सेयमदब्धा वाक्तस्मा-
द्वेवादाभ्य ऽएवश्ह ह वै द्विषतो भ्रातृव्यस्य सर्वं
यज्ञः संवृङ्क्त ऽएवन्द्विषन्तम्भ्रातृव्यः सर्वस्मायज्ञा-
न्निर्भजति बहिर्द्धा करोति य ऽउ ऽएवमेतद्वेद ॥ ५ ॥ स
येनैव पात्रेणाथंशुङ्गृह्णाति । तस्मिन्नेव पात्रे निग्राभ्या-
भ्योऽप ऽआनीय तस्मिन्नेतानःशून्गृह्णाति A ॥६॥ 'उपया-
मगृहीतोऽसि । अग्नये त्वा गायत्रच्छन्दसङ्गृह्णामी'ति गायत्र-
म्प्रातःसवनन्तत्प्रातःसवनम्प्रवृहन्ती'न्द्राय त्वा त्रिष्टुप्छन्द-
सङ्गृह्णामी'ति त्रैष्टुभम्माध्यन्दिनः सवनन्तन्माध्यन्दिनः
सवनम्प्रवृहति 'विश्वेभ्यस्त्वा देवेभ्यो जगच्छन्दसङ्गृ-
ह्णामी'ति जागतन्तृतीयसवनन्तत्तृतीयसवनम्प्रवृहत्य'नुष्टु-
प्तेऽभिगर' ऽइति यद्वा ऽऊर्द्ध्वः सवनेभ्यस्तदानुष्टुभन्त-

(१) अभिषोतव्यस्य सोमस्य सेचनीया आपो निग्राभ्या उच्यन्ते ।

(A) का० श्रौ० सू० अ० १२ क० ५ सू० १६ ।

(२) शु० य० वे० सं० अ० ८ क० ४७ । (३) शु० य० वे० सं० अ० ८ क० ४७ ।
(४) शु० य० वे० सं० अ० ८ क० ४७ । (५) शु० य० वे० सं० अ० ८ क० ४७ ।

देवैतद्ग्रहं गृह्णाति तन्नाभिषुणोति वज्रो वै ग्रावा वागदाभ्यो नेद्वज्रेण वाचः हिनसानीति ॥ ७ ॥ अंशूनेवाधूनोति[B] । 'श्वेश्रीनान्त्वा पत्मन्नाधूनोमि कुकूननानान्त्वा पत्मन्नाधूनोमि भन्दनानान्त्वा पत्मन्नाधूनोमि मदिन्तमानान्त्वा पत्मन्नाधूनोमि मधुन्तमानान्त्वा पत्मन्नाधूनोमी'त्येता वै दैवीरापस्तद्याश्चैव दैवीरापो याश्चेमा मानुष्यस्ता-भिरेवास्मिन्नेतदुभयीभी रसन्दधाति ॥ ८ ॥ 'शुक्रन्त्वा शुक्र ऽआधूनोमी'ति। शुक्रं ह्येतच्छुक्र ऽआधूनो'त्यह्नो रूपे सूर्य्यस्य रश्मिष्वि'ति तदुहश्चैवैनमेतद्रूपे सूर्य्यस्य च रश्मिष्वाधूनोति ॥ ९ ॥ 'ककुभं रूपं वृषभस्य रोचते बृहद्वि'ति । एतद्वै ककुभं रूपं वृषभस्य रोचते बृहद्य ऽएष तपति 'शुक्रः शुक्रस्य पुरोगाः सोमः सोमस्य पुरोगा' ऽइति तच्छुक्रमेवैतच्छुक्रस्य पुरोगाङ्करोति सोमः सोमस्य पुरो-गां 'यत्ते सोमादाभ्यन्नाम जागृवि तस्मै त्वा गृह्णामी'त्ये-तद्ध वा ऽअस्यादाभ्यन्नाम जागृवि यद्वाकद्वाचमेवैत-द्वाचे गृह्णाति ॥ १० ॥ अथोपनिष्क्रम्य जुहोति* । 'तस्मै ते सोम सोमाय स्वाहे'ति तत्सोममेवैतत्सोमाय जुहोति तथो वाचमग्नौ न प्रवृणक्त्यथ हिरण्यमभिव्यनित्य-

(B) का० श्रौ० सू० १२. ५. १९।
(१) शु० य० वे० सं० अ० ८ क० ४८। (२) शु० य० वे० सं० अ० ८ क० ४८।
(३) शु० य० वे० सं० अ० ८ क० ४८। (४) शु० य० वे० सं० अ० ८ क० ४९।
(५) शु० य० वे० सं० अ० ८ क० ४९। (६) शु० य० वे० सं० अ० ८ क० ४९।
* "तस्मै त इति जुहोति" का० श्रौ० सू० १२ ५. २१
(७) शु० य० वे० सं० अ० ८ क० ४९।

सावेव बन्धुस्तस्य तावतीरेव दक्षिणा यावतीरश्वोः * ॥ ११ ॥ अथाध्रंशून्पुनरप्यर्जति †। 'उशिक्त्वन्देव सोमाग्नेः प्रियम्पाथोऽपीहि वशी त्वन्देव सोमेन्द्रस्य प्रियम्पाथोऽपीह्यस्मत्सखा त्वन्देव सोम विश्वेषान्देवानाम्प्रियम्पाथोऽपीही'ति सवनानि वा ऽअदः प्रवृहति तान्येवैतत्पुनराप्याययत्ययातयामानि करोति तैरयातयामैर्यज्ञन्तन्वते ॥ १२ ॥

पञ्चमाध्याये नवमं ब्राह्मणम् ॥ ९ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥



[ आख्यायिकया समिदाधानादीनां वनस्पत्यादिरूपफलप्राप्तिसाधनताकथनम् ]

भृगुर्ह वै वारुणिः। वरुणम्पितरं विद्ययातिमेने तद्ध वरुणो विदाञ्चकारातिवै मा विद्यया मन्यत ऽइति ॥ १ ॥ स होवाच। प्राङ् पुत्रक व्रजतात्तत्र यत्पश्येस्तद्दृष्ट्वा दक्षिणा व्रजतात्तत्र यत्पश्येस्तद्दृष्ट्वा प्रत्यग्व्रजतात्तत्र यत्पश्येस्तद्दृष्ट्वोदग्व्रजतात्तत्र यत्पश्येस्तद्दृष्ट्वैतयोः पूर्वयोरुत्तरमन्ववान्तरदेशं व्रजतात्तत्र यत्पश्येस्तन्म ऽआचक्षीथा ऽइति ॥ २ ॥ स ह तत ऽएव प्राङ् प्रवव्राज। इदु पुरुषैः पुरुषान्पर्वाण्पर्वेपाम्पर्वशः संवृश्चम्पर्वशो विभजमानानिदन्तवेदम्म-

* 'अद्ध्युनदृक्षणा' का० श्रौ० सू० १२ ५ २२।

† का० श्रौ० सू० १२ ५ २१।

(१) शु० य० वे० सं० अ० ८ कं० ५०।

मेति स होवाच भीष्ममन्वत भोः पुरुषान्वा ऽएतत्पुरुषाः पूर्वाण्येषाम्पर्वशः संवृश्चम्पर्वशो व्यभक्षतेति ते होचुरित्थं वा ऽइमेऽस्मानमुष्मिँल्लोकेऽसचन्त तान्वयमिदमिह प्रतिसचामहा ऽइति स होवाचास्तीह प्रायश्चितीः३रित्यस्तीति क्वाति पिता ते वेदेति ॥ ३ ॥ स ह तत ऽएव दक्षिणा प्रवव्राज । इदं पुरुषैः पुरुषान्पर्वाण्येषाम्पर्वशः सङ्कर्तम्पर्वशो विभजमानानिदन्तवेदम्मेति स होवाच भीष्ममन्वत भोः पुरुषान्वा ऽएतत्पुरुषाः पूर्वाण्येषाम्पर्वशः सङ्कर्तम्पर्वशो व्यभक्षतेति ते होचुरित्थं वा ऽइमेऽस्मानमुष्मिँल्लोकेऽसचन्त तान्वयमिदमिह प्रतिसचामहा ऽइति स होवाचास्तीह प्रायश्चितीः३रित्यस्तीति क्वाति पितैव ते वेदेति ॥ ४ ॥ स ह तत ऽएव प्रत्यङ् प्रवव्राज । इदं पुरुषैः पुरुषाँस्तूष्णीमासीनाँस्तूष्णीमासीनैरद्यमानान्त्स होवाच भीष्ममन्वत भोः पुरुषान्वा ऽएतत्पुरुषास्तूष्णीमासीनाँस्तूष्णीमासीना ऽअदन्तीति ते होचुरित्थं वा ऽइमेऽस्मानमुष्मिँल्लोकेऽसचन्त तान्वयमिदमिह प्रतिसचामहा ऽइति स होवाचास्तीह प्रायश्चितीः३रित्यस्तीति क्वाति पितैव ते वेदेति ॥ ५ ॥ स ह तत ऽएवोदङ् प्रवव्राज । इदं पुरुषैः पुरुषानाक्रन्दयत ऽआक्रन्दयद्भिरद्यमानान्त्स होवाच भीष्ममन्वत भोः पुरुषान्वा ऽएतत्पुरुषा ऽआक्रन्दयत ऽआचक्रन्दयन्तोऽदन्तीति ते होचुरित्थं वा ऽइमेऽस्मानमु-

( १ ) 'ग' 'ज' पुस्तकयोः 'इदं' इति पाठ उपलभ्यते ।

ष्मिम्ँल्लोकेऽसचन्त तान्वयमिदमिह प्रतिसचामहा ऽइति स होवाचास्तीह प्रायश्चित्ती३रित्यस्तीति काति पितैव ते वेदेति ॥ ६ ॥ स ह तत ऽएवैतयोः पूर्वयोः । उत्तरमन्ववान्तरदेशम्प्रवव्राजेदु स्त्रियौ कल्ल्याणी श्चातिकल्ल्याणीश्च ते ऽअन्तरेण पुरुषः कृष्णः पिङ्गाक्षो दण्डपाणिस्तस्थौ तद्ध हैनन्दृष्ट्वा भीर्विवेद स हेत्य संविवेश तद्ध ह पितोवाचाधीष्व स्वाध्यायङ्कस्मान्नु स्वाध्यायन्नाधीष ऽइति स होवाच किमध्येष्ये न किञ्चनास्तीति तद्ध वरुणो विदाञ्चकाराद्ध्येग्वा ऽइति ॥ ७ ॥ स होवाच । यान्वैतत्प्राच्च्यान्दिश्यद्राक्षीः पुरुषैः पुरुषान्पर्वाण्येषाम्पर्वशः संवृश्चम्पर्वशो विभजमानानिदन्तवेदम्ममेति वनस्पतयो वै ते ऽअभूवन्त्स यद्वनस्पतीनाथं समिधमादधाति तेन वनस्पतीनवरुन्द्धे तेन वनस्पतीनाँल्लोकञ्जयति ॥ ८ ॥ अथ यानेतद्दक्षिणायान्दिश्यद्राक्षीः । पुरुषैः पुरुषान्पर्वाण्येषाम्पर्वशः सङ्कर्त्तम्पर्वशो विभजमानानिदन्तवेदम्ममेति पशवो वै ते ऽअभूवन्त्स यत्पयसा जुहोति तेन पशूनवरुन्द्धे तेन पशूनाँल्लोकञ्जयति ॥ ९ ॥ अथ यानेतत्प्रतीच्च्यान्दिश्यद्राक्षीः । पुरुषैः पुरुषाँस्तूष्णीमासीनाँस्तूष्णीमासीनैरद्यमानानोषधयो वै ता ऽअभूवन्त्स यत्तृणेनावज्योतयति तेनौषधीरवरुन्द्धे तेनौषधीनाँल्लोकञ्जयति ॥ १० ॥ अथ यानेतदुदीच्च्यान्दिश्यद्राक्षीः । पुरुषैः पुरुषानाक्कन्दयत ऽआक्कन्दयद्भिरद्यमानानापो वै ता ऽअभूवन्त्स

(१) 'प्र' इत्यस्य स्थाने 'द्रा' इति 'ग' 'ज' पुस्तकयो ।

यदपः प्रत्यानयति तेनापोऽवरुन्द्धे तेनापाँल्लोकञ्जयति ॥ ११ ॥ अथ ये ऽएते । स्त्रियावद्राक्षीः कल्याणीञ्चातिकल्याणीञ्च सा या कल्याणी सा श्रद्धा स यत्पूर्वामाहुतिञ्जुहोति तेन श्रद्धामवरुन्द्धे तेन श्रद्धाञ्जयत्यथ यातिकल्याणी साऽश्रद्धा स यदुत्तरामाहुतिञ्जुहोति तेनाऽश्रद्धामवरुन्द्धे तेनाऽश्रद्धाञ्जयति ॥१२॥ अथ य ऽएने । सोऽन्तरेण पुरुषः कृष्णः पिङ्गाक्षो दण्डपाणिरस्थात्क्रोधो वै सोऽभूत्स यत्स्रुच्यप ऽआनीय निनयति तेन क्रोधमवरुन्द्धे तेन क्रोधञ्जयति स य ऽएवं विद्वानग्निहोत्रञ्जुहोति तेन सर्वञ्जयति सर्वमवरुन्द्धे ॥ १३ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ आख्यायिकयाग्निहोत्राहुतिप्राशस्त्यप्रतिपादनम् ]

जनको ह वै वैदेहः । ब्राह्मणैर्धावयद्भिः समाजगाम श्वेतकेतुनारुणेयेन सोमशुष्मेण सात्ययज्ञिना याज्ञवल्क्येन तान्होवाच कथङ्कथमग्निहोत्रञ्जुहुथेति ॥ १ ॥ स होवाच । श्वेतकेतुरारुणेयो घर्म्मावेव सम्म्राडहमजस्रौ यशसा विष्यन्दमानावन्योऽन्यस्मिञ्जुहोमीति कथन्तदित्यादित्यो वै घर्म्मस्तं सायमग्नौ जुहोम्यग्निर्वै घर्म्मस्तम्प्रातरादित्ये जुहोमीति किं स भवति य ऽएवञ्जुहोत्यजस्र ऽएव श्रिया यशसा भवत्येतयोश्च देवतयोः सायुज्यं सलोकताञ्जयतीति ॥ २ ॥ अथ होवाच सोमशुष्मः सात्ययज्ञिः । तेज ऽएव सम्म्राडहन्तेजसि जुहोमीति कथन्त-

(१) 'विष्यन्द' इति 'ब' 'ज' पुस्तकयोः ।

दित्यादित्यो वै तेजस्तᳪ सायमग्नौ जुहोम्यग्निर्वै तेजस्तत्प्रातरादित्ये जुहोमीति किᳪ स भवति य ऽएवञ्जुहोतीति तेजस्वी यशस्व्यन्नादो भवत्येतयोश्चैव देवतयोᳪ सायुज्यᳪ सलोकतां जयतीति ॥ ३ ॥ अथ होवाच याज्ञवल्क्यः । यदहमग्निमुद्धराम्यग्निहोत्रमेव तदुद्यच्छाम्यादित्यं वा ऽअस्तं यन्तᳪ सर्वे देवा ऽअनुयन्ति ते म ऽएतमग्निमुद्धृतन्दृष्ट्वोपावर्त्तन्तेऽथाहम्पात्राणि निर्णिज्योपसाद्याग्निहोत्रीन्दोहयित्वा पश्यन्पश्यतस्तर्प्पयामीति त्वन्नेदिष्ठं याज्ञवल्क्याग्निहोत्रस्यामीमाᳪसिष्ठा धेनुशतन्ददामीति होवाच न त्वेवैनयोस्त्वमुत्क्रान्तिन्न गतिन्न प्रतिष्ठान्न तृप्तिन्न पुनरावृत्तिन्न लोकम्प्रत्युत्थायिनमित्युक्त्वा रथमास्थाय प्रधावयाञ्चकार ॥ ४ ॥ ते होचुः । अति वै नोऽयᳪ राजन्यबन्धुरवादीद्धन्तैनम्ब्रह्मोद्यमाह्वयामहा ऽइति स होवाच याज्ञवल्क्यो ब्राह्मणा वै वयᳪ स्मो राजन्यबन्धुरसौ यद्यमुं वयञ्जयेम कमजैष्मेति ब्रूयामाथ यद्यसावस्माञ्जयेद्ब्राह्मणान्राजन्यबन्धुरजैषीदिति नो ब्रूयुर्म्मेदमादृढ्वमिति तद्धास्य जज्ञुरथ ह याज्ञवल्क्यो रथमास्थायानुप्रधावयाञ्चकार तᳪ हान्वाजगाम स होवाचाग्निहोत्रं याज्ञवल्क्य वेदितुᳪ शमित्यग्निहोत्रᳪ सम्राडिति ॥ ५ ॥ ते वा ऽएते ऽआहुती हुते ऽउत्क्रामतः । ते ऽअन्तरिक्षमाविशतस्ते ऽअन्तरिक्षमेवाहवनीयङ्कुर्वाते वायुᳪ समिधम्मरीचीरेव शुक्रामाहुतिन्ते ऽअन्तरिक्षन्तर्प्पयतस्ते तत ऽउत्क्रामतः ॥ ६ ॥ ते दिवमाविशतः । ते दिवमेवा-

हवनीयङ्कुर्वाते ऽआदित्यः समिधश्चन्द्रमसमेव शुक्रा-
माहुतिन्ते दिवन्तर्प्पयतस्ते तत ऽआवर्त्तेते ॥ ७ ॥ ते
ऽइमामाविशतः । ते ऽइमामेवाहवनीयङ्कुर्वाते ऽअग्निः
समिधमोषधीरेव शुक्रामाहुतिन्ते ऽइमान्तर्प्पयतस्ते तत
ऽउत्क्रामतः ॥ ८ ॥ ते पुरुषमाविशतः । तस्य मुखमेवाह-
वनीयङ्कुर्वाते जिह्वाᳪं समिधमन्नमेव शुक्रामाहुतिन्ते
पुरुषन्तर्प्पयतः स य ऽएवं विद्वानश्नात्यग्निहोत्रमेवास्य
हुतम्भवति ते तत ऽउत्क्रामतः ॥९॥ [अर्धः प्रपाठकः ॥५१॥]
ते स्त्रियमाविशतः । तस्या ऽउपस्थमेवाहवनीयङ्कुर्वाते धार-
काᳪं समिधन्धारका ह वै नामैषैतया ह वै प्रजापतिः
प्रजा धारयाञ्चकार रेत ऽएव शुक्रामाहुतिन्ते स्त्रियन्तर्प्पयतः
स य ऽएवं विद्वान्मिथुनमुपैत्यग्निहोत्रमेवास्य हुतम्भवति
यस्ततः पुत्रो जायते स लोकः प्रत्युत्थाय्येतदग्निहोत्रं
याज्ञवल्क्य नातः परमस्तीति होवाच तस्मै ह याज्ञवल्क्यो
वरन्ददौ स होवाच कामप्रश्न ऽएव मे त्वयि याज्ञवल्क्यास
दिति ततो ब्रह्मा जनक ऽआस ॥ १० ॥

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ आख्यायिकयाऽग्निहोत्रदर्शपूर्णमासादियागदेवतानां तत्त्वतः प्राण-
शब्दाभिधेयपरमात्मस्वरूपताप्रतिपादनम् ]

जनको ह वैदेहः । बहुदक्षिणेन यज्ञेनेजे स ह
गवाᳪं सहस्रमवरुन्धन्नुवाचैता वो ब्राह्मणा यो ब्रह्मिष्ठः
स ऽउदजतामिति ॥ १ ॥ स होवाच याज्ञवल्क्यः ।

( १ ) ब्रह्मिष्ठ ।

अर्वाचीरेता ऽइति ते होचुस्त्वꣳ स्विन्नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ ऽइति स होवाच नमोऽस्तु ब्रह्मिष्ठाय गोकामा ऽएव वयꣳ स्म ऽइति ॥ २ ॥ ते होचुः । को न ऽइमम्प्रक्ष्यतीति स होवाच विदग्धः शाकल्योऽहमिति तꣳ ह प्रतिख्यायोवाच त्वाꣳ स्विच्छाकल्य ब्राह्मणा ऽउल्मुकावक्षयणमक्रता३ ऽइति ॥ ३ ॥ स होवाच । कति देवा याज्ञवल्क्येति त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रयस्त्रिꣳशदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रय ऽइत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति द्वावित्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्यध्यर्द्ध ऽइत्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येक ऽइत्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥ ४ ॥ स होवाच । महिमान ऽएवैषामेते त्रयस्त्रिꣳशत्त्वेव देवा ऽइति कतमे ते त्रयस्त्रिꣳशदित्यष्टौ वसव ऽएकादश रुद्रा द्वादशादित्यास्त ऽएकत्रिꣳशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिꣳशाविति ॥ ५ ॥ कतमे वसव ऽइति । अग्निश्च पृथिवी च वायुश्चान्तरिक्षञ्चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव ऽएते हीदꣳ सर्वं वासयन्ते ते यदिदꣳ सर्वं वासयन्ते तस्माद्वसव ऽइति ॥ ६ ॥ कतमे रुद्रा ऽइति । दशेमे पुरुषे प्राणाऽआत्मैकादशस्ते यदास्मान्मर्त्याच्छरीरादुत्क्रामन्त्यथ रोद-

( १ ) अर्धदग्धकाष्ठमुल्मुकम्—तस्य बहिर्निरसनमवक्षयणम् ।

यन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा ऽइति ॥ ७ ॥ कतमऽआदित्या ऽइति । द्वादश मासाः सँवत्सरस्यैत ऽआदित्या ऽएते हीदꣳ सर्वमाददाना यन्ति ते यदिदꣳ सर्वमाददाना यन्ति तस्मादादित्या ऽइति ॥ ८ ॥ कतम ऽइन्द्रः कतमः प्रजापतिरिति । स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति कतम स्तनयित्नुरित्यशनिरिति कतमो यज्ञ ऽइति पशव ऽइति ॥ ९ ॥ कतमे ते त्रयो देवा ऽइति । इम ऽएव त्रयो लोका ऽएषु हीमे सर्वे देवा ऽइति कतमौ तौ द्वौ देवावित्यन्नञ्चैव प्राणश्चेति कतमोऽध्यर्द्ध ऽइति योऽयम्पवत ऽइति यदस्मिन्निदꣳ सर्वमध्यार्ध्नोत्तेनाध्यर्द्ध ऽइति कतम ऽएको देव ऽइति प्राण ऽइति ॥ १० ॥ स होवाच । अनतिप्रश्न्यांम्मा देवतामत्यप्राक्षीः पुरेतिथ्यै मरिष्यसि न तेऽस्थीनि चन गृहान्प्राप्स्यन्तीति स ह तथैव ममार तस्य हाप्यन्यन्मन्यमानाः परिमोषिणोऽस्थीन्यपजह्रुस्तस्मान्नोपवादी स्यादुत ह्येवंवित्परो भवति ॥ ११ ॥

षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥



[ पशुबन्धप्रशंसा ]

पशुबन्धेन*यजते । पशवो वै पशुबन्धः स यत्पशुबन्धेन यजते पशुमानसानीति तेन गृहेषु† यजेत

(१) 'यदस्मिन्निदꣳ सर्वमध्यार्ध्नोत्तेनाध्यर्द्ध ऽइति' इति पाठ 'ग' 'ज' पुस्तकयोर्नास्ति।
* पशुर्बध्यते यज्ञार्थं यस्मिन्कर्मणि स पशुबन्धाख्यो याग । उद्भिदा यजेतेतिवद्यजिसमानाधिकृतत्वाद्यागनामधेयम् ॥
† का॰ श्रौ॰ सू॰ ६. १. ३ ।

गृहेषु पशून्वदृध्ना ऽइति तेन सुयवसे A यजेत सुयवसे पशून्वदृध्ना इति जीर्य्यन्ति ह वै जुह्वतो यजमानस्याग्नयोऽग्नीञ्जीर्य्यतोऽनु यजमानो यजमानमनु गृहाश्च पशवश्च ॥ १ ॥ * स यत्पशुबन्धेन यजते । अग्नीनेवैतत्पुनर्णवान्कुरुतेऽग्नीनाम्पुनर्णवतामनु यजमानो यजमानमनु गृहाश्च पशवश्चायुष्यो ह वा ऽअस्यैष ऽआत्मनिष्क्रयणो भवति माᳬंसीयन्ति B ह वै जुह्वतो यजमानस्याग्नयस्ते यजमानमेव ध्यायन्ति यजमानᳬं सङ्कल्पयन्ति पचन्ति वा ऽअन्न्येष्वग्निषु व्वृथा माᳬंसमथैतेषामतोऽन्न्या माᳬंसाशा विद्यते यस्यो चैते भवन्ति ॥ २ ॥ स यत्पशुबन्धेन यजते । आत्मानमेवैतन्निष्क्रीणीते वीरेण वीरं वीरो हि पशुर्वीरो यजमान ऽएतदु ह वै परमन्नाद्यं य्यन्माᳬंसᳬं स परमस्यैवान्नाद्यस्यात्ता भवति तं वै सँवत्सरो नानीजानमतीयादायुर्वै सँवत्सर आयुरेवैतदमृतमात्मन्धत्ते ॥ ३ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ पशुबन्धस्येष्टिविधत्वम्, सोमविधत्वञ्च ]

हविर्य्यज्ञविधो ह वा ऽअन्न्यः पशुबन्धः । सवविधोऽन्न्यः स हैष हविर्य्यज्ञविधो यस्मिन्नव्रतमुपनयति

( A ) शोभनानि यवसानि तृणानि यस्मिन्नृतौ स काल सुयवस ।

* शतम् ५९०० ।

( B ) मासीयन्ति = मांस खादितुमिच्छन्ति ।

( १ ) "प्रणीताप्रणयन प्रणीताज्यभाग भागावदान पूर्णपात्र विष्णुक्रमान् कुर्याद्धविर्यज्ञविधे" ( का० श्रौ० सू० ६. २. ४)

यस्मिन्नपः प्रणयति यस्मिन्पूर्णपात्रन्निनयति यस्मि-
न्विष्णुक्रमान्क्रमयत्यथ हैष सर्वविधो यस्मिन्नेतानि
न विक्रियन्ते ॥ १ ॥ तदाहुः । इष्टिः पशुबन्धा३ महायज्ञा३
ऽइति महायज्ञ ऽइति ह ब्रूयादिष्टिं वै तर्हि पशुबन्ध-
मकर्वैनमकुर्क्षथा ऽइत्येनम्ब्रूयात् ॥ २ ॥ तस्य प्रयाजा
ऽएव प्रातःसवनम् । अनुयाजास्तृतीयसवनम्पुरोडाश
ऽएव माध्यन्दिनꣳ सवनम् ॥ ३ ॥ तद्धैके । वपायाꣳ
हुतायान्दक्षिणा नयन्ति तदु तथा न कुर्याद्यो हैनन्तत्र
ब्रूयाद्वर्हिर्ष्वा ऽअयम्प्राणेभ्यो दक्षिणा ऽअनैषीन्न
प्राणानदद्क्षदन्धो वा स्रामो वा बधिरो वा पक्षहतो वा
भविष्यतीतीश्वरो ह तथैव स्यात् ॥ ४ ॥ इत्थमेव
कुर्यात् । पुरोडाशेडायामेवोपहूतायान्दक्षिणा नयेदैन्द्रो वा
ऽअयम्मध्यतः प्राण ऽइममेवैतदैन्द्रम्मध्यतः प्राणान्दक्षिणा-
भिर्दक्षयत्यैन्द्रं वै माध्यन्दिनꣳ सवनम्माध्यन्दिने वै सवने
दक्षिणा नीयन्ते तस्मात्पुरोडाशेडायामेवोपहूतायान्दक्षिणा
नयेत् ॥ ५ ॥ तदाहुः । अव्वर्ध्यो यद्दीक्षितस्य नानवभृथोऽ-
वकल्पते क्वैनमदिदीक्ष ऽइत्यावभृथादनूहुःहेयुरध्वर्युश्च
प्रतिप्रस्थाता च होता च मैत्रावरुणश्च ब्रह्मा चाग्नी-
ध्रश्चैतैर्वा ऽएष षड्ढोता * तमनुद्रुत्य षड्ढोतारञ्जुहोत्ये-
कामाहुतिङ्कृत्वा पञ्च वाज्या 'द्यौष्पृष्ठमन्तरिक्षमात्मा-
ङ्गैर्यज्ञम्पृथिवीꣳ शरीरैः । वाचस्पतेऽच्छिद्रया वाचा-

* षट् होतारो होमनिष्पादका यस्मिन् स षड्ढोता ।

(१) "षड्ढोतारं पञ्चगृहीतं मनसानुद्रुत्य जुहोत्येकामाहुतिं पञ्च वा" (का० श्रौ० सू० ६. १. ३३)

च्छिद्रया जुह्वा दिवि देवावृषद्ध्होत्रामैरयत्स्वाहे'ति सैव दीक्षा ॥ ६ ॥ तदाहुः । अद्धर्य्यो यद्दीक्षितस्य नानवभृथोऽवकल्पते क्वैनमवभृथमवनेष्यसीति स यद्धृदयशूलेन चरन्ति स हैवैतस्यावभृथः ॥ ७ ॥ मधुको ह स्माह पैङ्ग्यः । विसोमेन वा ऽएके पशुबन्धेन यजन्ते ससोमेनैके दिवि वै सोम ऽआसीत्तङ्गायत्री वयो भूत्वाहरत्तस्य यत्पर्णमच्छिद्यत तत्पर्णस्य पर्णत्वमिति न्वा ऽएतद्ब्राह्मणमुच्यते विसोमेन वा ऽएके पशुबन्धेन यजन्ते ससोमेनैके स हैष विसोमेन पशुबन्धेन यजते योऽन्यस्पालाशाद्यूपङ्कुरुतेऽथ हैष ससोमेन पशुबन्धेन यजते यः पालाशं यूपङ्कुरुते तस्मात्पालाशमेव यूपङ्कुर्वीत ॥ ८ ॥

॥ सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ बहुसारस्य यूपस्य पशुविरोधित्वम्, अल्पसारस्य पशुसमृद्धिकरत्वञ्च ]

स य ऽएष बहुसारः । स ह्यपशव्यस्तस्मात्तादृशम्पशुकामो यूपन्न कुर्वीताथ य ऽएष फल्गुप्रासहः स ह पशव्यस्तस्मात्तादृशम्पशुकामो यूपङ्कुर्वीत ॥ १ ॥ अथ यस्यैतद्वक्रस्य सतः । शूल ऽइवाग्रम्भवति स ह कपोती नाम स यो ह तादृशं यूपङ्कुरुते पुरा ह्यायुषोऽमुँल्लोकमेति तस्मात्तादृशमायुष्कामो यूपन्न कुर्वीत ॥ २ ॥ अथ य ऽएष ऽआनतः । उपरिष्टादुपनतो मद्ध्ये सोऽशनायै रूपः स यो ह तादृशं यूपङ्कुरुतेऽशनायुका हास्य भार्य्या

(१) का० श्रौ० सू० अ० ६ क० १ सू० ८ ।

भवन्ति तस्मात्ताद्दृशमन्नाद्यकामो यूपन्न कुर्वीताथ य ऽएष ऽआनत ऽउपरिष्टाद्धुपनतो मध्ये सोऽन्नाद्यस्य रूपन्तस्मात्ताद्दृशमन्नाद्यकामो यूपङ्कुर्वीत ॥ ३ ॥

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ यूपप्रमाणम् ]

स यत्पशुना यक्ष्यमाणः । एकारत्निं यूपङ्कुरुत ऽइममेव तेन लोकञ्जयत्यथ यद्द्व्यरत्निमन्तरिक्षलोकमेव तेन जयत्यथ यत्त्र्यरत्निन्दिवमेव तेन जयत्यथ यच्चतुररत्निन्दिश ऽएव तेन जयति स वा ऽएष त्र्यरत्निर्वैव चतुररत्निर्वा * पशुबन्धयूपो भवत्यथ योऽत ऽऊर्द्ध्वः सौम्यस्यैव सोऽद्ध्वरस्य ॥ १ ॥ तदाहुः । यजेदाज्यभागौ नाइ ऽइति यजेदित्याहुश्चक्षुषी वा ऽएते यज्ञस्य यदाज्यभागौ किम्भृते पुरुषश्चक्षुरभ्यांथं स्यादिति यावद्वै भागिनथं स्वेन भागधेयेन न निर्भजन्त्यनिर्भक्तो वै स तावन्मन्यतेऽथ यदैव तथं स्वेन भागधेयेन निर्भजन्त्यथैव स निर्भक्तो मन्यते स यत्रैतद्धोतान्वाहास्ना रक्षः संसृजतादिति तदेनथं स्वेन भागधेयेन निर्भजति ॥ २ ॥ एतद्वै पशोः संज्ञप्यमानस्य । हृदयः शुक्समवैति हृदयाच्छूलन्तद्यत्सह हृदयेन पशुथं श्रपयन्ति पुनः पशुः शुगनुविष्पन्देत पार्श्वत ऽएवैनत्काष्ठे प्रवृह्य श्रपयेत् † ॥ ३ ॥ उपस्तृणीत ऽआज्यम् । तत्पृथिव्यै रूपङ्करोति हिरण्यशकलमवदधाति तदग्ने रूप-

* "त्र्यरत्निश्चतुररत्निर्वा" का० श्रौ० सू० ६. १, ४ ।
† का० श्रौ० सू० ६ ७ १४ ।

ङ्करोति वपामवदधाति तदन्तरिक्षस्य रूपङ्करोति हिरण्यशकलमवदधाति तदादित्यस्य रूपङ्करोत्यथ यदुपरिष्टादभिघारयति तद्दिवो रूपङ्करोति सा वा ऽएषा पञ्चावत्ता वपा भवति पाङ्क्तो यज्ञः[A] पाङ्क्तः पशुः[B] पञ्च ऽर्त्तवः संवत्सरस्य तस्मात्पञ्चावत्ता वपा भवति ॥ ४ ॥

सप्तमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥

[ अग्निहोत्रे मह इत्युपस्थानं कर्तव्यमितिविधातुमाख्यायिका ]

तद्यथा ह वै । इदꣳ रथचक्रं वा कौलालचक्रं वाप्रतिष्ठितङ्क्रन्देदेवꣳ हैवेमे लोका ऽअध्रुवा ऽअप्रतिष्ठिता ऽआसुः ॥ १ ॥ स ह प्रजापतिरीक्षाञ्चक्रे । कथन्न्विमे लोका ध्रुवाः प्रतिष्ठिताः स्युरिति स ऽएभिश्चैव पर्वतैर्नदीभिश्चेमामदृꣳहद्वयोभिश्च मरीचिभिश्चान्तरिक्षञ्जीमूतैश्च नक्षत्रैश्च दिवम् ॥ २ ॥ स मह ऽइति व्याहरत् । पशवो वै महस्तस्माद्यस्यैते बहवो भवन्ति भूयिष्ठमस्य कुले महीयन्ते बहवो ह वा ऽअस्यैते भवन्ति भूयिष्ठꣳ हास्य कुले महीयन्ते तस्माद्यएनमायतनाद्बाधेरन्वा प्र वा यापयेयुरग्निहोत्रꣳ हुत्वा मह ऽइत्युपतिष्ठेत प्रति प्रजया पशुभिस्तिष्ठति नायतनाच्च्यवते ॥ ३ ॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

(A) धानाकरम्भादिपञ्चद्रव्यसाध्यत्वाद्यज्ञः पाङ्क्तः ।
(B) लोमत्वङ्मांसास्थिमज्जात्मकपञ्चधातुमयत्वात्पशुः पाङ्क्तः ।

[ आहितादिभेदेनाग्नेश्चातुर्विध्यम् ]

चत्वारो ह वा ऽअग्नयः । आहित ऽउद्धृतः प्रहृतो विहृतोऽयमेव लोक ऽआहितोऽन्तरिक्षलोक ऽउद्धृतो द्यौः प्रहृतो दिशो विहृतोऽग्निरेवाहितो वायुरुद्धृत ऽआदित्यः प्रहृतश्चन्द्रमा विहृतो गार्हपत्य ऽएवाहित ऽआहवनीय ऽउद्धृतोऽथ यमेतमाहवनीयात्प्राञ्चम्प्रणयन्ति स प्रहृतोऽथ यमेतमुदञ्चम्पशुश्रपणायाहरन्ति यश्चोपयड्भ्यः स विहृतस्तस्मात्प्रहार्येऽग्नौ पशुबन्धेन यजेत ॥ १ ॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ पशोः प्रजापतिः सूर्य इन्द्राग्नीति देवतात्रयप्रतिपादनम् ]

तदाहुः । किन्देवत्य ऽएष पशुः स्यादिति प्राजापत्यः स्यादित्याहुः प्रजापतिर्वा ऽएतमग्रेऽभ्यपश्यत्तस्मात्प्राजापत्य ऽएवैष पशुः स्यादिति ॥ १ ॥ अथो ऽअप्याहुः । सौर्य्य ऽएवैष पशुः स्यादिति तस्मादेतस्मिन्नस्तमिते पशवो यद्धन्ते वद्ध्नन्त्येकाज्यथागोष्ठमेक ऽउपसमायन्ति तस्मात्सौर्य्य ऽएवैष पशुः स्यादिति ॥ २ ॥ अथो ऽअप्याहुः । ऐन्द्राग्न ऽएवैष पशुः स्यादित्येते वै देवते ऽअग्न्यन्ये देवा यद्यार्त्तो यजते पारयत ऽएव यदि महसा यजते पारयत ऽएव तस्मादैन्द्राग्न * ऽएवैष पशुः स्यादिति ॥ ३ ॥ प्राण ऽएव पशुबन्धः । तस्माद्यावज्जी-

* "ऐन्द्राग्न सौर्यः प्राजापत्यो वा यमिच्छेत्" ( का० श्रौ० सू० ६. १. ११ )

वति नास्यान्यः पशूनामीष्टे वद्धा ह्यस्मिन्नेते भवन्ति ॥४॥ स ह प्रजापतिरग्निमुवाच। युजै त्वया त्वा लभा ऽइति नेति होवाच वायुम्ब्रूहीति स ह वायुमुवाच युजै त्वया त्वा लभा ऽइति नेति होवाच पुरुषम्ब्रूहीति स ह पुरुषमुवाच युजै त्वया त्वा लभा ऽइति नेति होवाच पशून्ब्रूहीति स ह पशूनुवाच युजै युष्माभिरा वो लभा ऽइति नेति होचुश्चन्द्रमसम्ब्रूहीति स ह चन्द्रमसमुवाच युजै त्वया त्वा लभा ऽइति नेति होवाचादित्यम्ब्रूहीति स हादित्यमुवाच युजै त्वया त्वा लभा ऽइति तथेति होवाच य उ त ऽएते नाचीकमन्त किमु म ऽएतेषु स्यादिति यद्यत्कामयेथा ऽइति तथेति तमालभत सोऽस्यायम्पशुरालब्धः संज्ञप्तोऽश्वयत्तमेताभिराप्रीभिराप्रीणात्तद्यदेनमेताभिराप्रीभिराप्रीणात्तस्मादाप्रियो नाम तस्माद् पशुः संज्ञप्तम्ब्रूयाच्छेताम्नु मुहूर्त्तमिति स यावन्तमश्वमेधेनेष्ट्वा लोकञ्जयति तावन्तमेनेनेन जयति ॥ ५ ॥ तम्प्राची दिक्। प्राणेत्यनुप्राणत्प्राणमेवास्मिँस्तदद्धात्तन्दक्षिणा दिग्व्यानेत्यनुप्राणद्व्यानमेवास्मिँस्तदद्धात्तम्प्रतीची दिगपानेत्यनुप्राणदपानमेवास्मिँस्तदद्धात्तमुदीची दिगुदानेत्यनुप्राणदुदानमेवास्मिँस्तदद्धात्तमूर्द्ध्वा दिक्समानेत्यनुप्राणत्समानमेवास्मिँस्तदद्धात्तस्माद् पुत्रञ्जातमकृत्तनाभिम्पञ्चब्राह्मणान्ब्रूयादित्येनमनुप्राणितेति * यद्यु तान्न विन्देदपि

(१) 'ते' इति 'ग' 'ज' पुस्तकयो ।

* पा० ए० सू० १. १६ १०।

स्वयमेवानुपरिक्रामममनुष्प्राणण्यात्स सर्वमायुरेत्या हैव जरायै जीवति ॥ ६ ॥ स प्राणमेवाग्नेरादत्त । तस्मादेष नानुपद्ध्मातो नानुपज्वलितो ज्वलत्यात्तो ह्यस्य प्राण ऽआ ह वै द्विषतो भ्रातृव्यस्य प्राणन्दत्ते य ऽएवं वेद ॥ ७ ॥ रूपमेव वायोरादत्त । तस्मादेतस्य लेलयत ऽइवैवो- पश्रृण्वन्ति न त्वेनम्पश्यन्त्यात्तꣳ ह्यस्य रूपमा ह वै द्विषतो भ्रातृव्यस्य रूपन्दत्ते य ऽएवं वेद ॥ ८ ॥ चित्त- मेव पुरुषस्यादत्त । तस्मादाहुर्देवचित्तन्त्वावतु मा मनुष्य- चित्तमित्यात्तꣳ ह्यस्य चित्तमा ह वै द्विषतो भ्रातृव्यस्य चित्तन्दत्ते य ऽएवं वेद ॥ ९ ॥ चक्षुरेव पशूनामादत्त । तस्मादेते चाकश्यमाना ऽइवैव न जानन्त्यथ यदैवो- पजिघ्रन्त्यथ जानन्त्यात्तꣳ ह्येषाञ्चक्षुरा ह वै द्विषतो भ्रातृव्यस्य चक्षुर्दत्ते य ऽएवं वेद ॥ १० ॥ भामेव चन्द्रमस ऽआदत्त । तस्मादेतयोः सदृशयोः सतोर्नक्त- राश्चन्द्रमा भात्यात्ता ह्यस्य भा ऽआ ह वै द्विषतो भ्रातृव्यस्य भान्दत्ते य ऽएवं वेद तद्यदादत्त तस्मा- दादित्यः ॥ ११ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ पशुप्रायश्चित्ततया स्मृत्याख्यहोमविधानम् ]

केशिगृहपतीनामु ह । सम्राड्दुघाꣳ शार्दूलो जघान स ह ससत्रिण आमन्त्रयाञ्चक्रे केह प्रायश्चित्तिरिति ते होचुर्नेह प्रायश्चित्तिरस्ति खण्डिक ऽएवौद्भारिरस्य

प्रायश्चित्तिं वेद स उ त ऽएतादृक्त्वैव कामयतेऽतश्च प्रापीय ऽइति ॥ १ ॥ स होवाच । सङ्गृहीतर्ठ्ठंह्यधि मे स्यन्त्स्यामि स यद्यह मे वक्ष्यति समाप्स्यामि यद्यु मा मारयिष्यति यज्ञं विकृष्टमनु विकृक्ष्य ऽइति ॥ २ ॥ स ह युक्त्वा ययावाजगाम । तुर्ठ ह प्रतिख्यायोवाच यन्न्वेतान्न्येवाजिनानि मृगेषु भवन्त्यथैषाम्पृष्टीरपिशीर्ष्व पचामहै कृष्णाजिनम्मे ग्रीवास्वाबद्धमित्येव मेदुमधृपोऽभ्यवस्यन्तूर्ठ मिति ॥ ३ ॥ नेति होवाच । सम्राड्दुघां* ह्ये मे भगवर्ठ शार्दूलोऽवधीत्स यद्यह मे वक्ष्यसि समाप्स्यामि यद्यु मा मारयिष्यसि यज्ञं विकृष्टमनु विकृक्ष्य ऽइति ॥ ४ ॥ स होवाच । आमन्त्रणीयान्वामन्त्रया ऽइति तान्हामन्त्र्योवाच यथस्मै वक्ष्याम्यमुष्यैवेदम्प्रजा भविष्यति न मम लोकी स्वहम्भविष्यामि यद्यु वा ऽअस्मै न वक्ष्यामि ममैवेदम्प्रजा भविष्यति नामुष्य लोकी स्वसौ भविष्यतीति ते होचुर्म्मा भगवो वोचोऽयं वाव क्षत्रियस्य लोक ऽइति स होवाच वक्ष्याम्येवामूर्वै रात्रयो भूयस्य ऽइति ॥ ५ ॥ तस्मा ऽउ हैतदुवाच । स्पृतीर्ठुंस्त्वान्यामाजतेति व्यूतादसा ते सम्राड्दुघा स्यादिति चन्द्राचे मन स्पृणोमि स्वाहा सूर्याचे चक्षु स्पृणोमि स्वाहा वाताचे प्राणान्स्पृणोमि स्वाहा दिग्भ्यस्ते श्रोत्रर्ठ स्पृणोमि स्वाहाद्भ्यस्ते लोहितर्ठ स्पृणोमि स्वाहा पृथिव्यै ते शरीरर्ठ स्पृणोमि स्वाहेत्यथान्यामाजतेति

* प्रवर्ग्यदोहनार्थां गामित्यर्थः ।

ब्रूतात्सा ते सम्राड्दुघा स्यादिति तुतो हैव स ऽउत्स-
साद कैशिनीरेवेमा ऽअप्येतर्हि प्रजा जायन्ते ॥ ६ ॥

अष्टमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या ॥१०२॥

इत्यष्टमोऽध्यायः ॥ ८ ॥

अष्टाध्यायीनामेकादशं काण्डं समाप्तम्* ॥ ११ ॥



* अस्मिन्काण्डे कण्डिकासंख्या ॥ ४३७ ॥

# अथ मध्यमनाम द्वादशं काण्डम्

[ अस्मिन्काण्डे प्रतिपाद्या विषयाः—दीक्षाक्रमः, सत्राणि, पृष्ठ्याऽभिप्लवस्वरसाम—विषुवन्महाव्रतादिनिरूपणम्, गवामयनम्, अग्निहोत्रप्रायश्चित्तम्, मृतकाग्निहोत्रम्, मृतस्यदाहः ]

[ द्वादशाहे* दीक्षाक्रमः ]

॥ ॐ ॥ अयं वै यज्ञो योऽयम्पवते । तमेत ऽईप्सन्ति ये सँवत्सराय दीक्षन्ते तेषाङ्गृहपतिः प्रथमो दीक्षतेऽयं वै लोको गृहपतिरस्मिन्न्वै लोक ऽइदᳪ सर्वम्प्रतिष्ठितं गृहपता ऽउ वै सत्रिणः प्रतिष्ठिताः प्रतिष्ठायामेवैतत्प्रतिष्ठाय दीक्षन्ते ॥ १ ॥ अथ ब्रह्माणन्दीक्षयति । चन्द्रमा वै ब्रह्मा सोमो वै चन्द्रमाः सौम्या ऽओषधय ऽओषधीस्तदनेन लोकेन सन्दधाति तस्मादेतावन्तरेणान्यो न दीक्षेत स यद्धैतावन्तरेणान्यो दीक्षेतौषधीस्तदनेन लोकेन नानाकुर्य्यादुच्छोपुका ह स्युस्तस्मादेता-

---

* द्वादशाहो द्विविधः सत्ररूपोऽहीनात्मकश्चेति । तयोर्लक्षणं यथा—'आसत उपयन्तीति सत्रलिङ्गं यजत इत्यहीनस्य' ( का० श्रौ० सू० १२ । १ । ५. ) इति । यस्य उत्पत्तिवाक्ये आसु धातु, उपोपपूर्व इण् धातुर्वा श्रूयते तत् सत्रम् । यथा—'द्वादशाहमृद्धिकामा उपेयुः' 'देवा वै सत्रमासत' इति । यजधातुघटितवाक्यविहितत्वमहीनत्वम् । यथा—'द्वादशाहेन प्रजाकामं याजयेत्' इति ।

लक्षणान्तरम्—'उभयतोऽतिरात्रं सत्रमुपरिष्टादहीनस्य' ( का० सू० १२ । १ । ६ ) इति ।

अत्र सत्रे अहीने वा योऽह्न् शब्दो रात्रिशब्दो वा श्रूयते स सर्वोऽप्यहोरात्रमुपलक्षयति । तेन द्वादशरात्रो द्वादशाह इति समानार्थक एव ।

( १ ) का० श्रौ० सू० १२. १. १५ ।

वन्तरेणान्न्यो न दीक्षेत ॥ २ ॥ अथोद्गातारन्दीक्षयति । पर्ज्जन्न्यो वा ऽउद्गाता पर्ज्जन्न्याद्दु वै व्वृष्टिर्ज्जायते व्वृष्टि-न्तद्दोपधिभिः सन्दधाति तस्मादेतावन्तरेणान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेत व्वृष्टिन्तदोपधिभिर्न्नानाकुर्य्यादवर्षुको ह स्यात्तस्मादेतावन्तरेणान्न्यो न दीक्षेत ॥ ३ ॥ अथ होतारन्दीक्षयति । अग्निर्वै होताधि-देवतं व्वागद्ध्यात्ममन्नं व्वृष्टिरग्निश्च तद्वाचश्चान्नेन सन्दधाति तस्मादेतावन्तरेणान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेताग्निश्च तद्वाचश्चान्नेन नानाकुर्य्यादशनायुका ह स्युस्तस्मादेतावन्तरेणान्न्यो न दीक्षेतैताँश्चतुरोऽद्ध्वर्य्यु-र्दीक्षयति ॥ ४ ॥ अथाद्ध्वर्य्युम्प्रतिप्प्रस्थाता दीक्षयति । मनो वा ऽअद्ध्वर्य्युर्व्वाग्घोता मनश्च तद्वाचश्च सन्दधाति तस्मादेतावन्तरेणान्न्यो न दीक्षेत स यद्धैतावन्तरेणान्न्यो दीक्षेत मनश्च तद्वाचश्च नानाकुर्य्यात्प्रमायुका ह स्युस्त-स्मादेतावन्तरेणान्न्यो न दीक्षेत ॥ ५ ॥ अथ व्ब्रह्मणे व्ब्राह्म-णाच्छंसिनन्दीक्षयति । तं हि सोऽन्न्वथोद्गात्रे प्प्रस्तोतार-न्दीक्षयति तं हि सोऽन्न्वथ होत्रे मैत्रावरुणन्दीक्षयति तं हि सोऽन्न्वेताँश्चतुरः प्प्रतिप्प्रस्थाता दीक्षयति ॥६॥ अथाद्ध्व-र्य्यवे प्प्रतिप्प्रस्थातारेत्रप्प्रष्टौ दीक्षयति । तं हि सोऽन्न्वेतेषां वै नवानाङ्क्लृप्प्तिमन्न्नितरे कल्प्पन्ते नव वै प्प्राणाः प्प्राणा-न्नेवैष्व्वेतद्दधाति तथा सर्व्वमायुर्य्यन्ति तथो ह न पुरायुषोऽ-

(१) 'श' 'ज' पुस्तकयो 'तदोपधिभ्य' इति पाठ उपलभ्यते ।
( २ ) का० श्रौ० सू० १२. २ १६ । ( ३ ) का० श्रौ० सू० १२ २, १७ ।

स्म्माल्लोकात्प्रयन्ति ॥ ७ ॥ अथ ब्रह्मणे पोतारन्दीक्षयति। तꣳ हि सोऽन्वथोद्गात्रे प्रतिहर्त्तारन्दीक्षयति तꣳ हि सोऽन्वथ होत्रेऽच्छावाकन्दीक्षयति तꣳ हि सोऽन्वेताँश्चतुरो नेष्टा दीक्षयति ॥ ८ ॥ अथाद्ध्वर्य्युर्वे नेष्टारमुन्नेता दीक्षयति। तꣳ हि सोऽन्वथ ब्रह्मण ऽआग्नीध्रन्दीक्षयति तꣳ हि सोऽन्वथोद्गात्रे सुब्रह्मण्यान्दीक्षयति तꣳ हि सोऽन्वथ होत्रे ग्रावस्तुतन्दीक्षयति तꣳ हि सोऽन्वेताँश्चतुर ऽउन्नेता दीक्षयति ॥ ९ ॥ अथोन्नेतारम्। स्नातको वा ब्रह्मचारी वान्यो वा दीक्षितो दीक्षयति न पूतः पावयेदिति ह्याहुः सैषानुपूर्वदीक्षा स यत्र हैवं विद्वाꣳसो दीक्षन्ते दीक्षमाणा हैव ते यज्ञं कल्पयन्ति यज्ञस्य क्लृप्तिमनु सत्रिणां योगक्षेमः कल्पते सत्रिणां योगक्षेमस्य क्लृप्तिमन्वपि तस्यार्द्धस्य योगक्षेमः कल्पते यस्मिन्नर्द्धे यजन्ते ॥ १० ॥ तेषां वा ऽउन्नेतोत्तमो दीक्षते। प्रथमोऽवभृथादुदायतामुदेति प्राणो वा ऽउन्नेता प्राणमेवैष्वेतदुभयतो दधाति तथा सर्वमायुर्यन्ति तथो ह न पुरायुषोऽस्म्माल्लोकात्प्रयन्ति सैषानुपूर्वदीक्षा स यत्र हैवं विद्वाꣳसो दीक्षेरँस्तदेव दीक्षेत ॥ ११ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



(१) का॰ श्रौ॰ सू॰ १२. १. १८। (२) का॰ श्रौ॰ सू॰ १२. २ १९।

[ द्वादशाहस्याहःक्लृप्तिः ]

श्रद्धाया वै देवाः । दीक्षाभिरमिमतादित्यै प्राय- णीयः* सोमात्क्रयं विष्णोरातिथ्यमादित्यात्प्रवर्ग्यꣳ स्वधाया ऽउपसदोऽग्नीषोमाभ्यामुपवसथमस्माल्लोकात्प्रा- यणीयमतिरात्रम् ॥ १ ॥ सँवत्सराच्चतुर्विꣳशमहः । ब्रह्म- णोऽभिप्लवꣳ क्षत्रात्पृष्ठ्यमग्नेरभिजितमद्भ्यः स्वरसाम्न ऽआदित्याद्विषुवन्तमुक्ताः स्वरसामान† ऽइन्द्राद्विश्वजि- तमुक्तौ पृष्ठ्याभिप्लवौ‡ मित्रावरुणाभ्यामोऽआयुषी वि- श्वेभ्यो देवेभ्यो दशरात्रन्दिग्भ्यो दाशरात्रिकम्पृष्ठ्यꣳ षडहमेभ्यो लोकेभ्यश्छन्दोमान् ॥ २ ॥ सँवत्सराद्दशम- महः । प्रजापतेर्महाव्रतꣳ§ स्वर्गाल्लोकादुदयनीयमति- रात्रन्तदेतत्सँवत्सरस्य जन्म स यो हैवमेतत्सँवत्सरस्य जन्म वेद हास्माच्छ्रेयाञ्जायते सात्मा भवति सँवत्सरो भवति सँवत्सरो भूत्वा देवानप्येति ॥ ३ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

---

[ उक्ताहःक्लृप्त्यर्थवादः ]

यद्वै दीक्षन्ते । अग्नाविष्णू ऽएव देवते यजन्तेऽ- ग्नाविष्णू देवते भवन्त्यग्नाविष्ण्वोः सायुज्यꣳ सलोक-

---

* प्रकृष्टमयनमारम्भो यत्रेति व्युत्पत्त्या प्रायणीयशब्दो द्वादशाहस्य प्रथमदिनवाचकः ।

† "यज्ञा यज्ञा" ( ४. ८. १ ) इत्यस्यां योनावुत्पन्नानि चत्वारि स्वरसंज्ञकानि सामानि येषु ते स्वरसामानः । ‡ प्रथमोऽग्निष्टोमः ततश्चत्वार उक्थ्याः, पुन षष्ठोऽग्निष्टोम, एवं विधस्याह्नः षट्कस्य अभिप्लव इति संज्ञा ( तै० सं० भा० ७. ४. ११ १७, ऐ० ब्रा० ४ ३१ ।

§ महाव्रतं षड्हस्यान्तिममहः । महानवर्धिष्ट अनेन कर्मणा इति महाव्रतम् ( तै० ब्रा० भा० १. २. ६ ) ।

ताञ्जयन्ति ॥ १ ॥ अथ यत्प्रायणीयेन यजन्ते । अदिति-
मेव देवतां स्यजन्तेऽदितिर्हैवता भवन्त्यदितेः सायुज्यꣳ
सलोकताञ्जयन्ति ॥ २ ॥ अथ यत्क्रयेण चरन्ति । सोम-
मेव देवतां स्यजन्ते सोमो देवता भवन्ति सोमस्य
सायुज्यꣳ सलोकताञ्जयन्ति ॥ ३ ॥ अथ यदातिथ्येन
यजन्ते । विष्णुमेव देवतां स्यजन्ते विष्णुर्हैवता भवन्ति
विष्णोः सायुज्यꣳ सलोकताञ्जयन्ति ॥ ४ ॥ अथ यत्प्र-
वर्ग्येण यजन्ते । आदित्यमेव देवतां स्यजन्त ऽआदित्यो
देवता भवन्त्यादित्यस्य सायुज्यꣳ सलोकताञ्जयन्ति
॥ ५ ॥ अथ यदुपसद ऽउपयन्ति । एता ऽएव देवता
यजन्ते या ऽएता ऽउपसत्स्वेता देवता भवन्त्येतासान्देवता-
नाꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ ६ ॥ अथ यदग्नी-
षोमीयेण पशुना यजन्ते । अग्नीषोमावेव देवते यजन्तेऽ-
ग्नीषोमौ देवते भवन्त्यग्नीषोमयोः सायुज्यꣳ सलोकता-
ञ्जयन्ति ॥ ७ ॥ अथ यत्प्रायणीयमतिरात्रमुपयन्ति ।
अहोरात्रे ऽएव देवते यजन्तेऽहोरात्रे देवते भवन्त्य-
होरात्रयोः सायुज्यꣳ सलोकताञ्जयन्ति ॥ ८ ॥ अथ
यच्चतुर्विꣳशमहरुपयन्ति । सँवत्सरमेव देवतां स्यजन्ते सँव-
त्सरो देवता भवन्ति सँवत्सरस्य सायुज्यꣳ सलोकता-
ञ्जयन्ति ॥ ९ ॥ अथ यदभिप्लवꣳ षडहमुपयन्ति । अर्द्धमा-
साँश्च मासाँश्च देवता यजन्तेऽर्द्धमासाश्च मासाश्च
देवता भवन्त्यर्द्धमासानाञ्च मासानाञ्च सायुज्यꣳ सलो-
कताञ्जयन्ति ॥ १० ॥ अथ यत्पृष्ठ्यꣳ षडहमुपयन्ति ।

ऋतूनेव देवता यजन्त ऽऋतवो देवता भवन्त्यृतूनाꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ ११ ॥ अथ यदभिजितमुपयन्ति । अग्निमेव देवतां यजन्तेऽग्निर्देवता भवन्त्यग्नेः सायुज्यꣳ सलोकताञ्जयन्ति ॥ १२ ॥ अथ यत्स्वरसाम्न ऽउपयन्ति । अप ऽएव देवता यजन्त ऽआपो देवता भवन्त्यपाꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ १३ ॥ अथ यद्विषुवन्तमुपयन्ति । आदित्यमेव देवतां यजन्त ऽआदित्यो देवता भवन्त्यादित्यस्य सायुज्यꣳ सलोकताञ्जयन्त्युक्ताः स्वरसामानः ॥ १४ ॥ अथ यद्विश्वजितमुपयन्ति । इन्द्रमेव देवतां यजन्त ऽइन्द्रो देवता भवन्तीन्द्रस्य सायुज्यꣳ सलोकताञ्जयन्त्युक्तौ पृष्ठ्याभिप्लवौ ॥ १५ ॥ अथ यद्गोऽआयुषी ऽउपयन्ति । मित्रावरुणावेव देवते यजन्ते मित्रावरुणौ देवते भवन्ति मित्रावरुणयोः सायुज्यꣳ सलोकताञ्जयन्ति ॥ १६ ॥ अथ यद्दशरात्रमुपयन्ति । विश्वानेव देवान्देवता* यजन्ते विश्वे देवा देवता भवन्ति विश्वेषान्देवानाꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ १७ ॥ अथ यद्दाशरात्रिकम्पृष्ठ्यꣳ षडहमुपयन्ति । दिश ऽएव देवता यजन्ते दिशो देवता भवन्ति दिशाꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ १८ ॥ अथ यच्छन्दोमानुपयन्ति । इमानेव लोकान्देवता यजन्त ऽइमे लोका देवता भवन्त्येषाँल्लोकानाꣳ सायुज्यꣳ सलोकताञ्जयन्ति ॥ १९ ॥ अथ यद्दशममहरुपयन्ति । सँवत्सरमेव देवतां यजन्ते

* 'ग' 'ज' पुस्तकयोः 'देवता' इति पाठ उपलभ्यते ।

सँव्वत्सरो देवता भवन्ति सँव्वत्सरस्य सायुज्यꣳ सलोकता-ञ्जयन्ति ॥ २० ॥ अथ यन्महाव्रतमुपयन्ति । प्रजापतिमेव देवतां य्यजन्ते प्रजापतिर्द्देवता भवन्ति प्रजापतेः सायु-ज्यꣳ सलोकताञ्जयन्ति ॥ २१ ॥ अथ यदुदयनीयमतिरा-त्रमुपयन्ति । सँव्वत्सरमेव तदाप्त्वा स्वर्ग्गे लोके प्रति-तिष्ठन्ति तान्यदि पृच्छेयुः कामद्य देवतां य्यजद्ध्वे का देवता स्थ कस्यान्देवतायां व्वसथेत्त्यत ऽएवैकतमाम्ब्रुयु-र्य्यस्यै तु नेदिष्ठꣳ स्युरेते ह वै सति सद ऽएते·ह्वि सतीषु देवतासु सीदन्तो यन्ति सत्रसदो हैवेतरे स यो हैवं व्विद्वुपान्दीक्षितानाम्पापकꣳ सत्रे कीर्त्तयेदेतो-वस्युरस्त्वा देवताभ्य ऽआवृश्चाम ऽइत्त्येनम्ब्रूयुः स पापी-यान्भवति श्श्रेयाꣳस ऽआत्मना ॥ २२ ॥ स ऽएष सँव्व-त्सरस्त्रिमहाव्रतः । चतुर्विंशे महाव्रतं व्विषुवति महाव्रत-म्महाव्रत ऽएव महाव्रतन्तꣳ ह स्मैतम्पूर्व्वे ऽउपयन्ति त्रिम-हाव्रतन्ते तेजस्विन ऽआसुः सत्यवादिनः सꣳशितव्रता ऽअथ य ऽउ हैनमप्येतर्हि तथोपेयुर्य्यथामपात्रमुदक ऽआसिक्ते व्विम्म्रियेदेवꣳ हैव ते व्विम्म्रियेयुरुपस्त्वेवोपयन्ति तदेषाꣳ सत्येन श्श्रमेण तपसा श्श्रद्धया यज्ञेनाहुतिभि-रवरुद्धम्भवति ॥ २३ ॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



१ 'ग' 'ज' पुस्तकयो 'वे' इति ।

[ द्वादशाहस्य संवत्सरात्मना स्तुतिः ]

पुरुषो वै सँवत्सरः । तस्य पादावेव प्रायणीयोऽति-
रात्रः पादाभ्याᳬं हि प्रयन्ति तयोर्यच्छुक्लन्तदह्नो
रूपं यत्कृष्णन्तद्रात्रेर्नखान्येवौषधिवनस्पतीनाᳬं रूप-
मूरू चतुर्विंशमहरुरोऽभिप्लवः पृष्ठम्पृष्ठ्यः ॥ १ ॥
अयमेव दक्षिणो बाहुरभिजित् । इम एव दक्षिणे त्रयः
प्राणाः स्वरसामानो मूर्धा विषुवानिम एवोत्तरे त्रयः
प्राणाः स्वरसामानः ॥ २ ॥ अयमेवोत्तरो बाहुर्विश्व-
जित् । उक्तौ पृष्ठ्याभिप्लवौ यावेवाञ्चौ प्राणौ ते गो-
ऽआयुषी ऽअङ्गानि दशरात्रो मुखम्महाव्रतः हस्तावेवोद-
यनीयोऽतिरात्रो हस्ताभ्याᳬं ह्युद्यन्ति तयोर्यच्छुक्लन्त-
दह्नो रूपं यत्कृष्णन्तद्रात्रेर्नखान्येव नक्षत्राणाᳬं रूपᳬं
स ऽएष सँवत्सरोऽध्यात्मम्प्रतिष्ठितः स यो हैवमेतᳬं
सँवत्सरमध्यात्मम्प्रतिष्ठितं वेद प्रतितिष्ठति प्रजया
पशुभिरस्मिँल्लोकेऽमृतत्वेनामुष्मिन् ॥ ३ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति प्रथमोऽध्यायः ॥ १ ॥



[ संवत्सरसत्रस्याहःक्लृप्तिर्ब्राह्मणद्वयेन ]

समुद्रं वा ऽएते प्रतरन्ति । ये सँवत्सराय दीक्षन्ते
तस्य तीर्थमेव प्रायणीयोऽतिरात्रस्तीर्थेन हि प्रस्नान्ति
तद्यत्प्रायणीयमतिरात्रमुपयन्ति यथा तीर्थेन समुद्रम्प्रस्ना-
युस्तादृक्तत् ॥ १ ॥ गाधमेव प्रतिष्ठा चतुर्विंशमहः ।

यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्स्य प्रस्नान्ति प्रस्नेयोऽभिप्लवः प्रस्नेयः पृष्ठ्यः ॥ २ ॥ गाधमेव प्रतिष्ठाभिजित् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्स्योत्क्रामन्त्यूरुदघ्न एव प्रथमः स्वरसामा जानुदघ्नो द्वितीयः कुल्फदघ्नस्तृतीयो द्वीपः प्रतिष्ठा विषुवान्कुल्फदघ्न एव प्रथमोऽर्वाक्सामा जानुदघ्नो द्वितीय ऊरुदघ्नस्तृतीयः ॥ ३ ॥ गाधमेव प्रतिष्ठा विश्वजित् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्स्य प्रस्नान्ति प्रस्नेयः पृष्ठ्यः प्रस्नेयोऽभिप्लवः प्रस्नेये गोऽआयुषी प्रस्नेयो दशरात्रः ॥ ४ ॥ गाधमेव प्रतिष्ठामहाव्रतम् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्स्योत्स्नान्ति तीर्थमेवोदयनीयोऽतिरात्रस्तीर्थेन ह्युत्स्नान्ति तद्यदुदयनीयमतिरात्रमुपयन्ति यथा तीर्थेन समुद्रम्प्रस्नाय तीर्थेनोत्स्नायुस्तादृक्तत् ॥ ५ ॥ तदाहुः । कति सँवत्सरस्यातिरात्राः कत्यग्निष्टोमाः कत्युक्थ्याः कति षोडशिनः कति षडहा इति द्वावतिरात्रौ षट्शतमग्निष्टोमा द्वे चत्वारिंशे शते उक्थ्यानामिति नु य उक्थ्यान्त्स्वरसाम्न उपयन्ति ॥ ६ ॥ अथ येऽग्निष्टोमान् । द्वादशशतमग्निष्टोमा द्वे चतुस्त्रिंशे शते उक्थ्यानान्द्वादश षोडशिनः षष्टिः षडहा इति नु सँवत्सरस्याप्तिः ॥ ७ ॥ द्वादश वै मासाः सँवत्सरस्य । तेषामेतत्तेज इन्द्रियं यत्पृष्ठानि तद्यन्मासि मासि पृष्ठान्युपयन्ति मासश एव तत्सँवत्सरस्य तेज आप्नु-

वन्त्यथ कथन्त्रयोदशस्य मासस्य तेज ऽआप्नुवन्तीत्युपरिष्टाद्विषुवतो विश्वजितः सर्वपृष्ठमग्निष्टोममुपयन्त्येवमु त्रयोदशस्य मासस्य तेज ऽआप्नुवन्ति ॥ ८ ॥ एतद्ध स्म वै तद्विद्वानाह । श्वेतकेतुरारुणेयः सँवत्सराय न्न्वा ऽअहन्दीक्षिष्य ऽइति तद्ध ह पितोपेक्ष्योवाच वेत्थ न्न्वायुष्मन्त्सँवत्सरस्य गाधप्रतिष्ठा ऽइति वेदेति होवाचैतद्ध तद्विद्वानुवाच ॥ ९ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

तदाहुः । कस्मादुभयतोज्योतिषोऽभिप्लवा भवन्त्यन्यतोज्योतिः पृष्ठ्य ऽइतीमे वै लोका ऽअभिप्लवा ऽउभयतोज्योतिषो वा ऽइमे लोका ऽअग्निनेत ऽआदित्येनामुत ऽऋतवः पृष्ठ्योऽन्यतोज्योतिषो वा ऽऋतव ऽएष ऽएषाञ्ज्योतिर्य्य ऽएष तपति ॥ १ ॥ देवचक्रे वा ऽएते पृष्ठ्यप्रतिष्ठिते । यजमानस्य पाप्मानन्तृहती परिप्लवेते स यो हैवं विद्वान्दीक्षितानाम्पापकः सत्रे कीर्त्तयत्येते हास्य देवचक्रे शिरश्छिन्तो दशरात्र ऽउद्धिः पृष्ठ्याभिप्लवौ चक्रे ॥ २ ॥ तदाहुः । यत्समे ऽएव चक्रे भवतोऽथैते विषमा स्तोमाः कथमस्यैते समा स्तोमा ऽउपेता भवन्तीति यदेव षडन्यान्यहानि षडन्यानि तेनेति ब्रूयात् ॥ ३ ॥ पृष्ठ्याभिप्लवौ तन्त्रे कुर्वीतेति ह स्माह पैङ्ग्यः । तयो स्तोत्राणि च शस्त्राणि च सञ्चारयेदिति स यत्सञ्चारयति तस्मादिमे प्राणा

यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्य प्रस्नान्ति प्रस्नेयोऽभिप्लवः प्रस्नेयः पृष्ठ्यः ॥ २ ॥ गाधमेव प्रतिष्ठाभिजित् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्योत्क्रामन्त्यूरुदघ्न एव प्रथमः स्वरसामा जानुदघ्नो द्वितीयः कुल्फदघ्नस्तृतीयो द्वीपः प्रतिष्ठा विषुवान्कुल्फदघ्न एव प्रथमोऽर्वाक्सामा जानुदघ्नो द्वितीय ऊरुदघ्नस्तृतीयः ॥ ३ ॥ गाधमेव प्रतिष्ठा विश्वजित् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्य प्रस्नान्ति प्रस्नेयः पृष्ठ्यः प्रस्नेयोऽभिप्लवः प्रस्नेये गोऽआयुषी प्रस्नेयो दशरात्रः ॥ ४ ॥ गाधमेव प्रतिष्ठामहाव्रतम् । यथोपपक्षदघ्नं वा कण्ठदघ्नं वा यतो विश्रम्योत्स्नान्ति तीर्थमेवोदयनीयोऽतिरात्रस्तीर्थेन ह्युत्स्नान्ति तद्यदुदयनीयमतिरात्रमुपयन्ति यथा तीर्थेन समुद्रम्प्रस्नाय तीर्थेनोत्स्नायुस्तादृक्तत् ॥ ५ ॥ तदाहुः । कति सँवत्सरस्यातिरात्राः कत्यग्निष्टोमाः कत्युक्थ्याः कति षोडशिनः कति षडहा इति द्वावतिरात्रौ षट्शतमग्निष्टोमा द्वे चत्वारिꣳशे शते उक्थ्यानामिति नु ये उक्थ्यान्त्स्वरसाम्न उपयन्ति ॥ ६ ॥ अथ येऽग्निष्टोमान् । द्वादशशतमग्निष्टोमा द्वे चतुस्त्रिꣳशे शते उक्थ्यानान्द्वादश षोडशिनः षष्टिः षडहा इति नु सँवत्सरस्याप्तिः ॥ ७ ॥ द्वादश वै मासाः सँवत्सरस्य । तेषामेतत्तेज इन्द्रियं यत्पृष्ठानि तद्यन्मासि मासि पृष्ठान्युपयन्ति मासश एव तत्सँवत्सरस्य तेज आप्नु-

स्वर्गं लोकमस्पृशन्यदस्पृशँस्तस्मात्पृष्ठ्यः ॥ ११ ॥ अभिप्लवः षडहः । षडुभयहानि भवन्त्यभिप्लवः पञ्चाहः पञ्च ह्यहानि भवन्ति यद्वेव प्रथममहस्तदुत्तममभिप्लवस्य चतुरहस्चत्वारो हि स्तोमा भवन्ति त्रिवृत्पञ्चदशः सप्तदश एकविंश इत्यभिप्लवस्य चतुरहस्यावृद्धि ज्योतिर्गौरायुरभिप्लवो द्व्यहो द्वे ह्येव सामनी भवतो बृहद्रथन्तरे एवाभिप्लव एकाह एकाहस्यो हि स्तोमैस्तायते चतुर्णामुक्थ्यानान्द्वादश स्तोत्राणि द्वादश शस्त्राण्यतियन्ति स सप्तमोऽग्निष्टोम एवमु सप्ताग्निष्टोमाः संपद्यन्ते ॥ १२ ॥ प्रोतिर्ह कौशाम्बेयः । कौसुरुबिन्दिरुद्दालक आरुणौ ब्रह्मचर्यमुवास तं हाचार्यः पप्रच्छ कुमार कति ते पिता संवत्सरस्याहान्यमन्यतेति ॥ १३ ॥* दशेति होवाच । दश वा इति होवाच दशाक्षरा विराड्वैराजो यज्ञः ॥ १४ ॥ कति त्वेवेति । नवेति होवाच नव वा इति होवाच नव वै प्राणाः प्राणैरु यज्ञस्तायते ॥ १५ ॥ कति त्वेवेति । अष्टेति होवाचाष्टौ वा इति होवाचाष्टाक्षरा गायत्री गायत्रो यज्ञः ॥ १६ ॥ कति त्वेवेति । सप्तेति होवाच सप्त वा इति होवाच सप्त च्छन्दांसि चतुरुत्तराणि च्छन्दोभिरु यज्ञस्तायते ॥ १७ ॥ [ अर्धः प्रपाठकः ६६ ] कति त्वेवेति । षडिति होवाच षड्वा इति होवाच षड्ऋतवः संवत्सरः संवत्सरो यज्ञः समानमेतदहर्यत्प्रायणीयोदयनीयौ ॥ १८ ॥ कति त्वेवेति ।

* अत्र खतम् १००० ।

नाना सन्त ऽएकोतयः समानमूतिमनुसञ्चरन्त्यथ यन्न सञ्चारयेत्प्रमायुको यजमानः स्यादेष ह वै प्रमायुको योऽन्धो वा बधिरो वा ॥ ४ ॥ नवाग्निष्टोमा मासि सम्पद्यन्ते । नव वै प्राणाः प्राणानेवैष्वेतद्दधाति तथा सर्वमायुर्यन्ति तथो ह न पुरायुषोऽस्माल्लोकात्प्रयन्ति ॥५॥ एकविꣳशतिरुक्थ्याः । द्वादश वै मासाः सँवत्सरस्य पञ्चर्त्तवस्त्रयो लोकास्तद्विꣳशतिरेष ऽएवैकविꣳशो य ऽएष तपत्येतामभिसम्पदꣳ स ऽएतया सम्पदा मासि मासि स्वर्गँल्लोकꣳ रोहति मासशः स्वर्गँल्लोकꣳ समश्नुत ऽएकविꣳशश्च स्तोमम्बृहतीञ्च च्छन्दः ॥ ६ ॥ चतुस्त्रिꣳशदग्निष्टोमा मासि सम्पद्यन्ते । त्रयस्त्रिꣳशद्वै देवाः प्रजापतिश्चतुस्त्रिꣳशः सर्वासान्देवतानामाप्त्या ऽएक ऽउक्थ्यः षोडशिमानन्नं वा ऽउक्थ्यो वीर्य्यꣳ षोडशी ॥ ७ ॥ एतेन वै देवाः । वीर्य्येणान्नेन सर्वान्कामानाप्नुवन्त्सर्वान्कामानाश्नुवत तथो ऽएवैष ऽएतेन वीर्य्येणान्नेन सर्वान्कामानाप्नोति सर्वान्कामानश्नुते तस्मात्पृष्ठ्याभिप्लवा ऽउपेयात्सँवत्सराय दीक्षित ऽएतस्मै कामाय ॥ ८ ॥ अथादित्याश्च ह वा ऽअङ्गिरसश्च । उभये प्राजापत्या ऽअस्पर्द्धन्त वयम्पूर्वे स्वर्गँल्लोकमेष्यामो वयम्पूर्व ऽइति ॥ ९ ॥ त ऽआदित्याः । चतुर्भि स्तोमैश्चतुर्भिः पृष्ठैर्लघुभिः सामभिः स्वर्गँल्लोकमभ्यप्लवन्त यदभ्यप्लवन्त तस्मादभिप्लवाः ॥ १० ॥ अन्वञ्च ऽइवाङ्गिरसः । सर्वै स्तोमैः सर्वैः पृष्ठैर्गुरुभिः सामभिः

स्वर्गाँल्लोकमस्पृशन्यदस्पृशँस्तस्मात्पृष्ठ्यः ॥ ११ ॥ अभिप्लवः षडहः। यद्वयहानि भवन्त्यभिप्लवः पञ्चाहः पञ्च ह्यहानि भवन्ति यद्वेव प्रथममहस्तदुत्तममभिप्लवश्चतुरहश्चत्वारो हि स्तोमा भवन्ति त्रिवृत्पञ्चदशः सप्तदश एकविंश इत्यभिप्लवस्त्र्यहस्त्र्यावृद्धि ज्योतिर्गौरायुरभिप्लवो द्व्यहो द्वे ह्येव सामनी भवतो बृहद्रथन्तरे एवाभिप्लव एकाह एकाहस्यो हि स्तोमैस्तायते चतुष्पर्णामुक्थ्यानान्द्वादश स्तोत्राणि द्वादश शस्त्राण्यतियन्ति स सप्तमोऽग्निष्टोम एवमु सप्ताग्निष्टोमाः सम्पद्यन्ते ॥ १२ ॥ प्रोतिर्ह कौशाम्बेयः। कौसुरुबिन्दिरुद्दालक आरुणौ ब्रह्मचर्यमुवास तह्न ह्याचार्यः पप्रच्छ कुमार कति ते पिता सँवत्सरस्याहान्यमन्यतेति ॥ १३ ॥* दशेति होवाच। दश वा इति होवाच दशाक्षरा विराड्वैराजो यज्ञः ॥ १४ ॥ कति त्वेवेति। नवेति होवाच नव वा इति होवाच नव वै प्राणाः प्राणैरु यज्ञस्तायते ॥ १५ ॥ कति त्वेवेति। अष्टेति होवाचाष्टौ वा इति होवाचाष्टाक्षरा गायत्री गायत्रो यज्ञः ॥ १६ ॥ कति त्वेवेति। सप्तेति होवाच सप्त वा इति होवाच सप्त च्छन्दाꣳसि चतुरुत्तराणि च्छन्दोभिरु यज्ञस्तायते ॥ १७ ॥ [ अथः प्रपाठकः ६६ ] कति त्वेवेति। षडिति होवाच षड्वा इति होवाच षड्तवः सँवत्सरः सँवत्सरो यज्ञः समानमेतदहर्यत्प्रायणीयोदयनीयौ ॥ १८ ॥ कति त्वेवेति।

* अत्र शतम् १००० ।

पञ्चेति होवाच पञ्च वा ऽइति होवाच पाङ्क्तो यज्ञः पाङ्क्तः
पशुः पञ्चर्त्तवः सँवत्सरस्य सँवत्सरो यज्ञः समानमेत-
दुहर्य्यच्चतुर्विꣳशमहाव्रते ॥ १९ ॥ कति त्वेवेति । चत्वारीति
होवाच चत्वारि वा ऽइति होवाच चतुष्पादाः पशवः
पशवो यज्ञः समानमेतदुहर्य्यत्पृष्ठ्याभिप्लवौ ॥ २० ॥
कति त्वेवेति । त्रीणीति होवाच त्रीणि वा ऽइति होवाच
त्रीणि च्छन्दाꣳसि त्रयो लोकास्त्रिसवनो यज्ञः समानमेत-
दुहर्य्यदभिजिद्विश्वजितौ ॥ २१ ॥ कति त्वेवेति । द्वे ऽइति
होवाच द्वे वा ऽइति होवाच द्विपाद्वै पुरुषः पुरुषो यज्ञः
समानमेतदुहर्य्यत्स्वरसामानः ॥ २२ ॥ कति त्वेवेति ।
एकमिति होवाचाहरेवेति तदेतदुहरहरिति सर्वꣳ सँवत्सरः
सैषा सँवत्सरस्योपनिषत्स यो हैवमेताꣳ सँवत्सरस्योप-
निषदं वेद हास्माच्छ्रेयाञ्जायते स्मास्मा भवति सँवत्सरो
भवति सँवत्सरो भूत्वा देवानप्येति ॥ २३ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ दशरात्रनिरूपणम् ]

स वा ऽएष सँवत्सरो बृहतीमभिसम्पन्नः । द्वावाक्ष्य-
तामहूनाꣳ षडहौ द्वौ पृष्ठ्याभिप्लवौ गोऽआयुषी दशरात्र-
स्तत्षट्त्रिꣳशत्षट्त्रिꣳशदक्षरा वै बृहती बृहत्या वै देवाः
स्वर्गे लोकेऽयतन्त बृहत्या स्वर्गँल्लोकमाप्नुवँस्तथो ऽएवैष
ऽएतद्बृहत्यैव स्वर्गे लोके यतते बृहत्या स्वर्गँल्लोक-
माप्नोत्यथ यो बृहत्याद्भामस्तमेवैतेनैवंविदवरुन्द्धे ॥ १ ॥

यद्वै चतुर्विंशमहः । दशरात्रस्य वै तत्सप्तमं वा नवमं वाभिप्लवात्पृष्ठ्यो निर्मितः पृष्ठ्यादभिजिदभिजितः स्वरसामानः स्वरसामभ्यो विषुवान्विषुवतः स्वरसामानः स्वरसामभ्यो विश्वजिद्विश्वजितः पृष्ठ्यः पृष्ठ्यादभिप्लवोऽभिप्लवाद्गोऽआयुषी गोऽआयुर्भ्यान्दशरात्रः ॥२॥ अथैतदुहराक्ष्यैत् । यन्महाव्रतम्पञ्चविंशो ह्येतस्य स्तोमो भवति नाक्षराच्छन्दो व्येत्येकस्मान्न द्वाभ्यान्न स्तोत्रियया स्तोमः ॥ ३ ॥ अभिप्लवम्पूर्वम्पुरस्ताद्विषुवत ऽउपयन्ति । पृष्ठ्यमुत्तरम्पुत्रा वा ऽअभिप्लवः पिता पृष्ठ्यस्तस्मात्पूर्ववयसे पुत्राः पितरमुपजीवन्ति पृष्ठ्यमुपरिष्टाद्विषुवतः पूर्वमुपयन्त्यभिप्लवमुत्तरन्तस्मादुत्तरवयसे पुत्रान्पितोपजीवत्युप ह वा ऽएनम्पूर्ववयसे पुत्रा जीवन्त्युपोत्तरवयसे पुत्राञ्जीवति य ऽएवमेतद्वेद ॥ ४ ॥ तदाहुः । यच्चतुर्विंशमहरुपेत्य प्रेयात्कथमनातुर्ची भवतीति यदेवादः प्रायणीयमतिरात्रमुपयन्ति तेनेति ब्रूयात् ॥ ५ ॥ तदाहुः । यद्द्वादश मासाः सँवत्सरस्याथैतदुहरत्येति यद्वैषुवतमवरेपामेताश्परेपाश्मित्युवरेपाश्चैव परेपाश्चेति ह ब्रूयादात्मा वै सँवत्सरस्य विषुवानङ्गानि मासा यत्र वा ऽआत्मा तदङ्गानि यत्रो ऽअङ्गानि तदात्मा न वा ऽआत्माङ्गान्यतिरिच्यते नात्मानमङ्गान्यतिरिच्यन्त ऽएवमु हैतद्वरेपाश्चैव परेपाश्च भवति ॥ ६ ॥ अथ ह वा ऽएष महासुपर्णो ऽएव यत्सँवत्सरः । तस्य यान्पुरस्ताद्विषुवतः षण्मासानुपयन्ति सोऽन्यतरः पक्षोऽथ यान्पुढु-

परिष्टात्सोऽन्यतर ऽआत्मा विषुवान्यत्र वा ऽआत्मा तत्पक्षौ यत्र वा पक्षौ तदात्मा न वा ऽआत्मा पक्षावतिरिच्यते नात्मानम्पक्षावतिरिच्येते ऽएवमु हैतदवरेणा चैव परेणाच भवति ॥ ७ ॥ तदाहुः । यत्पुरस्ताद्विषुवत ऽऊर्द्ध्वान्स्तोमान्षण्मासानुपयन्ति षडुपरिष्टादावृत्तान्कथमस्यैत ऽऊर्द्ध्वा स्तोमा ऽउपेता भवन्तीति यमेवामुमूर्द्ध्वस्तोमन्दशरात्रमुपयन्ति तेनेति ब्रूयाद्देवेभ्यो ह वै महाव्रतन्न तस्थे कथमूर्द्ध्वैं स्तोमैर्विषुवन्तमुपागाताववृत्तैर्मामिति ॥ ८ ॥ ते ह देवा ऽऊचुः । उप तं यज्ञक्रतुञ्जानीत य ऽऊर्द्ध्वस्तोमो येनेदमाप्नवामेति त ऽएतमूर्द्ध्वस्तोमन्दशरात्रमपश्यन्त्संवत्सरविधन्तस्य यः पृष्ठ्यः षडहु ऽऋतवः स ऽइमे लोकाश्छन्दोमाः संवत्सरो दशममहस्तेनेनदाप्नुवँस्तदेवेभ्योऽतिष्ठत तिष्ठते ह वा ऽअस्मै महाव्रतं य ऽएवमेतद्वेद ॥ ९ ॥ अथ वा ऽअतोऽह्नामभ्यारोहः । प्रायणीयेनातिरात्रेणोदयनीयमतिरात्रमभ्यारोहन्ति चतुर्विंशेन महाव्रतमभिप्लवेन परमभिप्लवम्पृष्ठ्येन परम्पृष्ठ्यमभिजिता विश्वजितथ्ठं स्वरसामभिः परान्त्स्वरसाम्नोऽथैतदुहरनभ्यारूढं यद्विषुवतमभि ह वै श्रेयाथ्ठंसः रोहति नैनम्पापीयानभ्यारोहति य ऽएवमेतद्वेद ॥१०॥ अथ वा ऽअतोऽह्नाम्निवाहः । प्रायणीयोऽतिरात्रश्चतुर्विंश शायाह्ने निवहति चतुर्विंशमहरभिप्लवायाभिप्लवः पृष्ठ्याय पृष्ठ्योऽभिजितेऽभिजित्स्वरसामभ्यः स्वरसामानो विषुवते विषुवान्त्स्वरसामभ्यः स्वरसामानो विश्वजिते विश्वजित्पृष्ठ्याय

पृष्ठ्योऽभिप्लवायाभिप्लवो गोऽआयुर्भ्यांङ्गोऽआयुषी दशरात्राय दशरात्रो महाव्रताय महाव्रतमुदयनीयायातिरात्रायोदयनीयोऽतिरात्रः स्वर्ग्याय लोकाय प्रतिष्ठाया ऽअन्नाद्याय ॥ ११ ॥ तानि वा ऽएतानि । यज्ञारण्यानि यज्ञकृन्तत्राणि तानि शतᳫं शतᳫं रथाह्नन्यान्यन्तरेण तानि येऽविद्वाᳫंस ऽउपयन्ति यथारण्यान्यम्मुग्धाः संचरतोऽशनाया वा पिपासा वा पाप्मानो रक्षाᳫंसि संचेरन्नेवᳫं हैवैनानशनाया वा पिपासा वा पाप्मानो रक्षाᳫंसि सचन्तेऽथ ये विद्वाᳫंसो यथा प्रवाहात्प्रवाहमभयादभयमेवᳫं हैव ते देवतायै देवतामुपसंयन्ति ते स्वस्ति स्वर्गँल्लोकᳫं समश्नुवते ॥ १२ ॥ तदाहुः । कति सँवत्सरस्याहानि पराञ्चि कत्यर्वाञ्चीति स यानि सकृत्सकृदुपयन्ति तानि पराञ्च्यथ यानि पुनः पुनस्तान्यर्वाञ्च्यर्वाञ्चीति ह त्वेवैनान्युपासीत पडहयोर्ह्यावृत्तिमन्वावर्त्तन्ते[3] ॥ १३ ॥

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ संवत्सरस्याभिप्लवायात्मना स्तुतिर्ब्राह्मणद्वयेन ]

पुरुषो वै सँवत्सरः । तस्य प्राण ऽएव प्रायणीयोऽतिरात्रः प्राणेन हि प्रयन्ति वागेवारम्भणीयमहर्वाचा

(१) 'ग' 'ज' पुस्तकयो 'यज्ञकृन्तत्राणि' इत्यस्य स्थाने 'यज्ञक्षत्राणि' इति पाठ उपलभ्यते ।

(२) 'सचेरन्नेवᳫं हैवैनानशनाया वा पिपासा वा पाप्मानो रक्षाᳫंसि' एतावान् पाठ 'ग' 'ज' पुस्तकयोर्नास्ति ।

(३) 'ग' 'ज' पुस्तकयो 'वर्तते' इति पाठोः दृश्यते ।

ह्यारभन्ते यद्यदारभन्ते ॥ १ ॥ अयमेव दक्षिणो हस्तोऽ-
भिप्लवः षडहः । तस्येदमेव प्रथममहस्तस्येदमेव प्रातः-
सवनमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीयसवनङ्गायत्र्या
ऽआयतने तस्मादियमासाꣳ ह्रसिष्ठा ॥ २ ॥ इदमेव
द्वितीयमहः । तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनꣳ
सवनमिदन्तृतीयसवनन्त्रिष्टुभ ऽआयतने तस्मादियमस्यै
वर्षीयसी ॥३॥ इदमेव तृतीयमहः । तस्येदमेव प्रातःसव-
नमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीयसवनञ्जगत्या ऽआय-
तने तस्मादियमासां वर्षिष्ठा ॥ ४ ॥ इदमेव चतुर्थमहः।
तस्येदमेव प्रातःसवनमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीय-
सवनं विराज ऽआयतनेऽन्नं वै विराट् तस्मादियमासाम-
न्नादितमा ॥ ५ ॥ इदमेव पञ्चममहः । तस्येदमेव प्रातः-
सवनमिदम्माध्यन्दिनꣳ सवनमिदन्तृतीयसवनम्पङ्क्तेराय-
तने पृथुरिव वै पङ्क्तिस्तस्मादयमासाम्प्रथिष्ठः ॥ ६ ॥
इदमेव षष्ठमहः । तस्येदमेव प्रातःसवनमिदम्माध्य-
न्दिनꣳ सवनमिदन्तृतीयसवनमतिच्छन्दस ऽआयतने
तस्मादयमासां वर्षिष्ठो गायत्रमेतदहर्भवति तस्मादि-
दम्फलकꣳ ह्रसिष्ठꣳ स ऽइतोऽभिप्लवः षडहः स
ऽइतः स ऽइतः स ऽइत ऽआत्मा पृष्ठ्यः ॥ ७ ॥ एतद्ध
स्म वै तद्विद्वानाह पैङ्ग्यः । प्लवन्त ऽइव वा ऽअभि-
प्लवास्तिष्ठतीव पृष्ठ्य ऽइति प्लवत ऽइव ह्ययमङ्गैस्ति-
ष्ठतीवात्मनेति ॥ ८ ॥ शिर ऽएवास्य त्रिवृत् । तस्मा-
त्तत्त्रिविधम्भवति त्वगस्थि मस्तिष्कः ॥ ९ ॥ ग्रीवाः

पञ्चदशः । चतुर्दश वा ऽएतासाङ्करूकराणि ग्रीवस्पञ्च-
दशन्तस्म्मादेताभिरण्वीभिः सतीभिर्गुरुम्भारꣳ हरति
तस्म्माद्ग्रीवाः पञ्चदशः ॥ १० ॥ उरः सप्तदशः । अष्टा-
वन्न्ये जत्रवोऽष्टावन्न्य ऽउरः सप्तदशन्तस्म्मादुरः सप्त-
दशः ॥ ११ ॥ उदरमेकविꣳशः । विꣳशतिर्वा ऽअन्तरुदरे
कुन्तापान्युदरमेकविꣳशन्तस्म्मादुदरमेकविꣳशः ॥ १२ ॥
पार्श्वे त्रिणवः । त्रयोदशान्न्याः पर्शवस्त्रयोदशान्न्याः
पार्श्वे त्रिणवे तस्म्मात्पार्श्वे त्रिणवः ॥ १३ ॥ अनूकन्त्रय-
स्त्रिꣳशः । द्वात्रिꣳशद्वा ऽएतस्य करूकराण्यनूकन्त्रयस्त्रिꣳ-
शन्तस्म्मादनूकन्त्रयस्त्रिꣳशः ॥ १४ ॥ अयमेव दक्षिणः
कर्णोऽभिजित् । यदिदमक्ष्णः शुक्लꣳ स प्रथमः
स्वरसामा यत्कृष्णꣳ स द्वितीयो यन्मण्डलꣳ स तृतीयो
नासिके विषुवान्यदिदमक्ष्णो मण्डलꣳ स प्रथमोऽर्वा-
क्स्वरसामा यत्कृष्णꣳ स द्वितीयो यच्छुक्लꣳ स तृतीयः
॥ १५ ॥ अयमेवोत्तरः कर्णो विश्वजित् । उक्तौ पृष्ठ्या-
भिप्लवौ यावर्वाञ्चौ प्राणौ ते गोऽआयुषी ऽअङ्गानि दश-
रात्रो मुखम्महाव्रतमुदान ऽएवोदयनीयोऽतिरात्र ऽउदानेन
ह्युद्यन्ति स ऽएष सँवत्सरोऽध्यात्मम्प्रतिष्ठितः स यो
हैवमेतꣳ सँवत्सरमध्यात्मम्प्रतिष्ठितं वेद प्रतितिष्ठति
प्रजया पशुभिरस्मिँल्लोकेऽमृतत्त्वेनामुष्मिन् ॥ १६ ॥

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



यद्वालाके । इदन्त्रिवृदेति सर्वमन्न्योऽन्न्यमभिसम्प-
द्यमानम् ॥ कथᳬंस्विद्यज्ञः पुरुषः प्रजापतिरन्न्योऽन्न्यन्ना-
तिरिच्यन्त ऽएते ॥ १ ॥ यद्वद्धा स्तोमा ऽअनुयन्ति ।
यज्ञमभ्यावर्त्तः सामभिः कल्पमानाः ॥ कथᳬंस्विते
पुरुषमाविशन्ति कथम्प्राणैः सयुजो भवन्ति ॥ २ ॥ प्राय-
णीयोऽतिरात्रः । चतुर्विंशमहश्चत्वारोऽभिप्लवाः पृष्ठ्य-
ऽइत्येते ॥ कथᳬंस्विते पुरुषमाविशन्ति कथम्प्राणैः
सयुजो भवन्ति ॥ ३ ॥ अभिजिता स्वरसामानः । अभि-
क्लृप्ता ऽउभयतो विषुवन्तमुपयन्ति ॥ कथᳬंस्विते पुरुष-
माविशन्ति कथम्प्राणैः सयुजो भवन्ति ॥ ४ ॥ त्रिवृ-
त्त्रायाः । सप्तदशाभिक्लृप्तास्त्रयस्त्रिंशान्ताश्चतुरुत्तरेण ॥
कथᳬंस्विते पुरुषमाविशन्ति कथम्प्राणैः सयुजो भव-
न्तीति ॥ ५ ॥ शिरस्त्रिवृत् । पञ्चदशोऽस्य ग्रीवा ऽउर
ऽआहुः सप्तदशाभिक्लृप्तम् ॥ एकविंशमुदरङ्कल्पयन्ति
पार्श्वे पर्शूंस्त्रिणवेनाभिक्लृप्ते ॥ ६ ॥ अभिप्लवा ऽउभ-
यतोऽस्य बाहू । पृष्ठम्पृष्ठ्य ऽइति धीरा वदन्ति ॥ अनू-
कमस्य चतुरुत्तरेण सँवत्सरे ब्राह्मणाः कल्पयन्ति ॥ ७ ॥
कुर्णावस्याभिजिद्विश्वजिच्च । अक्ष्यावाहुः स्वरसामाभि-
क्लृप्ते ॥ नस्यम्प्राणं विषुवन्तमाहुर्गौऽआयुषी प्राणावेता-
ववाञ्चौ ॥ ८ ॥ अङ्गान्न्यस्य दशरात्रमाहुः । मुखम्महा-
व्रतᳬं सँवत्सरे ब्राह्मणाः कल्पयन्ति ॥ सर्वस्तोमᳬं सर्व-
सामानमेतᳬं सँवत्सरमध्यात्मम्प्रविष्टम् ॥ समन्धीर

ऽआत्मना कल्पयित्वा ब्रह्मघ्नस्यास्ते विष्टपेऽजातशोकः ॥ ९ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



पुरुषो वै सँवत्सरः । पुरुष ऽइत्येकः सँवत्सर ऽइत्येकमत्र तत्समन्द्वे वै सँवत्सरस्याहोरात्रे द्वाविमौ पुरुषे प्राणावत्र तत्समन्त्रय ऽऋतवः सँवत्सरस्य त्रय ऽइमे पुरुषे प्राणा ऽअत्र तत्समश्चतुरक्षरो वै सँवत्सरश्चतुरक्षरोऽयं यजमानोऽत्र तत्समम्पञ्चऽर्त्तवः सँवत्सरस्य पञ्चेमे पुरुषे प्राणा ऽअत्र तत्समः षडृतवः सँवत्सरस्य षडिमे पुरुषे प्राणा ऽअत्र तत्समꣳ सप्तऽर्त्तवः सँवत्सरस्य सप्तेमे पुरुषे प्राणा ऽअत्र तत्समम् ॥ १ ॥ द्वादश वै मासाः सँवत्सरस्य । द्वादशेमे पुरुषे प्राणा ऽअत्र तत्समन्त्रयोदश वै मासाः सँवत्सरस्य त्रयोदशेमे पुरुषे प्राणा नाभिस्त्रयोदश्यत्र तत्समश्चतुर्विꣳशतिर्वै सँवत्सरस्यार्द्धमासाश्चतुर्विꣳशोऽयम्पुरुषो विꣳशत्यङ्गुलिश्चतुरङ्गोऽत्र तत्समः षड्विꣳशतिर्वै सँवत्सरस्यार्द्धमासाः षड्विꣳशोऽयम्पुरुषः प्रतिष्ठे षड्विꣳश्यावत्र तत्समम् ॥ २ ॥ त्रीणि च वै शतानि षष्टिश्च । सँवत्सरस्य रात्रयस्त्रीणि च शतानि षष्टिश्च पुरुषस्यास्थीन्यत्र तत्समन्त्रीणि च वै शतानि षष्टिश्च सँवत्सरस्याहानि त्रीणि च शतानि षष्टिश्च पुरुषस्य मज्जानोऽत्र तत्समम् ॥ ३ ॥ सप्त च

वै शतानि विꣳशतिश्च । सँवत्सरस्याहोरात्राणि सप्त च शतानि विꣳशतिश्च पुरुषस्यास्थीनि च मज्जानश्चात्र तत्समम् ॥ ४ ॥ दश च वै सहस्राण्यष्टौ च शतानि । सँवत्सरस्य मुहूर्त्ता यावन्तो मुहूर्त्तास्तावन्ति पञ्चदश कृत्वः क्षिप्राणि यावन्ति क्षिप्राणि तावन्ति पञ्चदश कृत्व ऽएतर्हीणि यावन्त्येतर्हीणि तावन्ति पञ्चदश कृत्व ऽइदानीनि यावन्तीदानीनि तावन्तः पञ्चदश कृत्वः प्राणा यावन्तः प्राणास्तावन्तोऽना यावन्तोऽनास्तावन्तो निमेषा यावन्तो निमेषास्तावन्तो लोमगर्त्ता यावन्तो लोमगर्त्तास्तावन्ति स्वेदायनानि यावन्ति स्वेदायनानि तावन्त ऽएते स्तोका वर्षन्ति ॥ ५ ॥ एतद्ध स्म वै तद्विद्वानाह वार्कलिः । सार्वभौमम्मेघं वर्षन्तं वेदाहमस्य वर्षस्य स्तोकानिति ॥ ६ ॥ तदेष श्लोकोऽभ्युक्तः । श्रमादश्यत्र परिवर्त्तमानस्तिष्ठन्नासीनो यदि वा स्वपन्नपि ॥ अहोरात्राभ्याम्पुरुषः समेन कति कृत्वः प्राणिति चाप चानितीति ॥ ७ ॥ तदेष श्लोकः प्रत्युक्तः । शतꣳ शतानि पुरुषः समेनाष्टौ शता यन्मितन्तद्वदन्ति ॥ अहोरात्राभ्याम्पुरुषः समेन तावत्कृत्वः प्राणिति चाप चानितीति ॥ ८ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[सँवत्सरादि दीक्षापक्षः]

देवा ह वै सहस्रसँवत्सराय दिदीक्षिरे । तेषाम्पञ्च शतानि सँवत्सराणाम्पर्युपेतान्यासुरथेदꣳ सर्वमेव शश्राम

ये स्तोमा यानि पृष्ठानि यानि च्छन्दांꣳसि ॥ १ ॥ ततो देवाः । एतद्यज्ञस्यायातयामापश्यꣳस्तेनायातयाम्ना या वेदे व्यष्टिरासीत्तां व्याश्नुवतायातयामा वा ऽअस्य वेदा ऽअयातयाम्न्या हास्य त्रय्या विद्यया विजयङ्कृतम्भवति य ऽएवमेतद्वेद ॥ २ ॥ तदेतद्यज्ञस्यायातयाम । ओ श्राव-यास्तु श्रौषड्यज ये यजामहे वौषडिति तासां वा ऽएता-साम्पञ्चानां व्याहृतीनाꣳ सप्तदशाक्षराण्यो श्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह ऽइति पञ्चाक्षरम् ॥ ३ ॥ द्व्यक्षरो वषट्कारः । स ऽएष सप्तदशः प्रजापतिरधिदेवतञ्चाध्यात्मञ्च प्रति-ष्ठितः स यो हैवमेतꣳ सप्तदशम्प्रजापतिमधिदेवतञ्चा-ध्यात्मञ्च प्रतिष्ठितं वेद प्रतितिष्ठति प्रजया पशु-भिरस्मिँल्लोके ऽमृतत्वेनामुष्मिन् ॥ ४ ॥ ते ह देवा ऽऊचुः । उप तं यज्ञक्रतुञ्जानीत यः सहस्रसँवत्सरस्य प्रतिमा को हि तस्मै मनुष्यो यः सहस्रसँवत्सरेण समाप्नुयादिति ॥ ५ ॥ ते विश्वजितमेव सर्वपृष्ठम् । पृष्ठ्यस्य षडहस्याञ्जःसवमपश्यꣳस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दांꣳसि ॥ ६ ॥ पृष्ठ्यमेव षडहम् । द्वादशाहस्याञ्जःसवमपश्यꣳस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दांꣳसि ॥ ७ ॥ द्वाद-शाहमेव । सँवत्सरस्याञ्जःसवमपश्यꣳस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दांꣳसि ॥ ८ ॥ सँवत्सरमेव । तापश्चितस्याञ्जःसवमपश्यꣳस्ते हि स्तोमा भवन्ति तानि

लोकेष्वात्मानमधाथं सर्वान्देवानात्मन्नधिपि सर्वेषु देवे-ष्वात्मानमधाथं सर्वान्वेदानात्मन्नधिपि सर्वेषु वेदेष्वा-त्मानमधाथं सर्वान्प्राणानात्मन्नधिपि सर्वेषु प्राणेष्वा-त्मानमधामित्यक्षिता वै लोका ऽअक्षिता देवा ऽअक्षिता वेदा ऽअक्षिताः प्राणा ऽअक्षितः सर्वमक्षिताद्ध वा ऽअक्षितमुपसङ्क्रामत्यप पुनर्म्मृत्युञ्जयति सर्वमायुरेति य ऽएवमेतद्वेद ॥ ११ ॥

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ सोमादीनां नित्यत्वम् ]

सावित्रः ह स्मैतम्पूर्वे पशुमालभन्ते । अथैतर्हि प्राजापत्यं स्यो ह्येव सविता स प्रजापतिरिति वदन्तस्त-स्मात्सद्युष्याग्नीरेतेन यजेरन्गृहपतेरेवाग्निषु यथेदञ्जा-घन्या पत्नीः संय्याजयन्ति तस्यान्नोऽप्यसदिति ते ततो यदानिकामन्दीक्षन्ते ॥ १ ॥ तदु वा ऽआहुः । नाना-धिष्ण्या ऽएव स्युर्यदि दीक्षितस्योपतपेत्सार्वतोऽग्निहोत्र-ञ्जुहुवसेरन्स यथगदो भवति सःसृज्यैनम्पुनरुपह्वयन्ते, यद्यु म्रियते स्वैरेव तमग्निभिर्दहन्त्यशवाग्निभिरितरे यजमाना ऽआसत ऽइति तदुहैवाहिताग्नेः कर्म्म समान-धिष्ण्यास्त्वेव भवन्ति तस्य तदेव ब्राह्मणं यत्पुरश्चरणे ॥ २ ॥ तदाहुः । यत्संवत्सराय संवत्सरसदो दीक्षन्ते कथ-मेषामग्निहोत्रमनन्तरितम्भवतीति व्रतेनेति ब्रूयात् ॥ ३ ॥

तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषा-म्पौर्णमासः हविरनन्तरितम्भवतीत्याज्येन च पुरोडाशेन चेति ब्रूयात् ॥ ४ ॥ तदाहुः यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषाम्पितृयज्ञोऽनन्तरितो भवतीत्यौपासनै-रिति ब्रूयात् ॥५॥ तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषामामावास्यः हविरनन्तरितम्भवतीति दध्ना च पुरोडाशेन चेति ब्रूयात् ॥ ६ ॥ तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषामाग्रयणेष्टि-रनन्तरिता भवतीति सौम्येन चरुणेति ब्रूयात् ॥ ७ ॥ तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषा-ञ्चातुर्म्मास्यान्यनन्तरितानि भवन्तीति पयस्ययेति ब्रूयात् ॥ ८ ॥ तदाहुः । यत्सँवत्सराय सँवत्सरसदो दीक्षन्ते कथमेषाम्पशुबन्धोऽनन्तरितो भवतीति पशुना च पुरो-डाशेन चेति ब्रूयात् ॥ ९ ॥ तदाहुः । यत्सँवत्सराय सँव-त्सरसदो दीक्षन्ते कथमेषाꣳ सोमोऽनन्तरितो भवतीति सवनैरिति ब्रूयात् ॥ १० ॥ ते वा ऽएवमेते यज्ञक्रतवः । सँवत्सरमपियन्ति स यो हैवमेताꣳ यज्ञक्रतूनाꣳ सँवत्सरेऽ-पीतिं वेदाप्यस्य स्वर्गे लोके भवति ॥ ११ ॥ सँवत्सरस्य समता वेदितव्या । एकम्पुरस्ताद्विषुवतोऽतिरात्रमुपयन्त्ये-कमुपरिष्टात्त्रयः पञ्चाशतम्पुरस्ताद्विषुवतोऽग्निष्टोमानुप-यन्ति त्रयः पञ्चाशतमुपरिष्टाद्विꣳशतिशतम्पुरस्ताद्विषुवत ऽउक्थ्यान्यहान्युपयन्ति विꣳशतिशतमुपरिष्टादिति नु षु ऽउक्थ्यान्त्स्वरसाम्न ऽउपयन्ति ॥ १२ ॥ अथ

पृष्ठानि तानि च्छन्दाᳬसि ॥ ९ ॥ तापश्चितमेव । सहस्र-सँवत्सरस्याङ्गःसवमपश्यँस्ते हि स्तोमा भवन्ति तानि पृष्ठानि तानि च्छन्दाᳬसि ॥ १० ॥ स वै सँवत्सरन्दीक्षाभिरेति । सँवत्सरमुपसद्भिः सँवत्सरᳩ सुत्याभिः ॥ ११ ॥ स यत्सँवत्सरन्दीक्षाभिरेति । पूर्वार्द्धमेव तेन सहस्रसँवत्सरस्यावरुन्द्धेऽथ यत्सँवत्सरमुपसद्भिर्मध्यमेव तेन सहस्रसँवत्सरस्यावरुन्द्धेऽथ यत्सँवत्सरᳩ सुत्याभिरुत्तमार्द्धमेव तेन सहस्रसँवत्सरस्यावरुन्द्धे ॥ १२ ॥ स वै द्वादश मासान्दीक्षाभिरेति । द्वादशोपसद्भिर्द्वादश सुत्याभिस्तत्पट्त्रिᳬशत्षट्त्रिᳬशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्गं लोकेऽयतन्त बृहत्या स्वर्गँल्लोकमाप्नुवँस्तथो ऽएवैष ऽएतद्बृहत्यैव स्वर्गे लोके यतते बृहत्या स्वर्गँल्लोकमाप्नोत्यथ यो बृहत्याङ्कामस्तमेवैतेनैवंविदवरुन्द्धे ॥ १३ ॥ तद्वा ऽएतत् । त्रयᳩ सह क्रियतेऽग्निरुक्थ्यम्महदुक्थᳩ स यत्सँवत्सरन्दीक्षाभिरेति सँवत्सरमुपसद्भिस्तेनास्याग्न्यर्क्कावाप्तौ भवतोऽथ यत्सँवत्सरᳩ सुत्याभिरेति तेनो ऽएवास्य महदुक्थमाप्तम्भवति स वा ऽएष ऽएव सहस्रसँवत्सरस्य प्रतिमा यत्तापश्चित ऽएष प्रजानाम्प्रजात्यै यत्तापश्चितः ॥ १४ ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥

कण्डिकासंख्या १३२ ॥

[ ज्योतिष्टोमे उद्गात्राद्यन्वारम्भः ]

पुरुषꣳ ह नारायणम्प्रजापतिरुवाच । यजस्व यजस्वेति स होवाच यजस्व यजस्वेति वाव त्वम्मामात्थ त्रिरयक्षि वसवः प्रातःसवनेनागू रुद्रा माध्यन्दिनेन सवनेनादित्यास्तृतीयसवनेनाथ मम यज्ञवास्त्वेव यज्ञवास्तावेवाहमास ऽइति ॥ १ ॥ स होवाच । यजस्वैवाहं वै ते तद्वक्ष्यामि यथा त ऽउक्थानि मणिरिव सूत्र ऽओतानि भविष्यन्ति सूत्रमिव वा मणाविति ॥ २ ॥ तस्मा ऽउ हैतदुवाच । प्रातःसवने बहिष्पवमान ऽउद्गातारमन्वारभासै श्येनोऽसि गायत्रच्छन्दा ऽअनु त्वारभे स्वस्ति मा सम्पारयेति ॥ ३ ॥ अथ माध्यन्दिने पवमाने । उद्गातारमन्वारभासै सुपर्णोऽसि त्रिष्टुप्छन्दा ऽअनु त्वारभे स्वस्ति मा सम्पारयेति ॥ ४ ॥ अथ तृतीयसवन ऽआर्भवे पवमाने । उद्गातारमन्वारभासा ऽऋभुरसि जगच्छन्दा ऽअनु त्वारभे स्वस्ति मा सम्पारयेति ॥ ५ ॥ अथ सꣳस्थितेषु सꣳस्थितेषु सवनेषु जपेत् । मयि भर्गो मयि महो मयि यशो मयि सर्वमिति ॥ ६ ॥ अयं वै लोको भर्गः । अन्तरिक्षलोको महो द्यौर्यशो येऽन्ये लोकास्तत्सर्वम् ॥७॥ अग्निर्वै भर्गः । वायुर्महः ऽआदित्यो यशो येऽन्ये देवास्तत्सर्वम् ॥ ८ ॥ ऋग्वेदो वै भर्गः । यजुर्वेदो महः सामवेदो यशो येऽन्ये वेदास्तत्सर्वम् ॥ ९ ॥ वाग्वै भर्गः । प्राणो महश्चक्षुर्यशो येऽन्ये प्राणास्तत्सर्वम् ॥ १० ॥ तद्विद्यात् । सर्वांल्लोकानारमन्नधिषि सर्वेषु

येऽग्निष्टोमान् । षट्पञ्चाशतम्पुरस्ताद्विषुवतोऽग्निष्टोमानुपयन्ति षट्पञ्चाशतमुपरिष्टात्सप्तदशꣳ शतम्पुरस्ताद्विषुवत ऽउक्थ्यान्यहान्युपयन्ति सप्तदशमुपरिष्टात्षट् पुरस्ताद्विषुवतः षोडशिन ऽउपयन्ति षडुपरिष्टात्त्रिꣳशतम्पुरस्ताद्विषुवतः षडहानुपयन्ति त्रिꣳशतमुपरिष्टादेषा हास्य समता समेन ह वा ऽअस्याऽवृद्धेनाम्न्यूनेनानतिरिक्तेनायनेनेतम्भवति य ऽएवमेतद्वेद ॥ १३ ॥

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥

---

[ अग्निहोत्रप्रायश्चित्तं ब्राह्मणद्वयेन ]

दीर्घसत्रꣳ ह वा ऽएत ऽउपयन्ति । येऽग्निहोत्रञ्जुह्वत्येतद्वै जरामर्य्यꣳ सत्रं यदग्निहोत्रञ्जरया वा ह्येवास्मान्मुच्यन्ते मृत्युना वा ॥ १ ॥ तदाहुः । यदेतस्य दीर्घसत्रिणोऽग्निहोत्रञ्जुह्वतोऽन्तरेणाग्नी युक्तं वा वियातं वा चरेयुः किन्तत्र कर्म्म का प्रायश्चित्तिरिति कुर्वीत हैव निष्कृतिमपीष्ट्या यजेत तदु सन्नाद्रियेतेमान्वा ऽएष लोकाननुवितनुते योऽग्नी ऽआधत्ते ॥ २ ॥ तस्यायमेव लोको गार्हपत्यः । अन्तरिक्षलोकोऽन्वाहार्य्यपचनोऽसौ लोक ऽआहवनीयः कामन्वा ऽएषु लोकेषु वयाꣳसि युक्तञ्चायुक्तञ्च सञ्चरन्ति स यदि हास्याप्यन्तरेण ग्रामोऽग्नीन्नियायान्नेव मे का चनार्त्तिरस्ति न रिष्टिरिति

हैव विद्यात् ॥ ३ ॥ अथो ह स्माह पशवोऽमेध्याः । दुर्वराह ऽएडकः श्वा तेषां यद्यधिश्रितेऽग्निहोत्रेऽन्तरेण कश्चित्सञ्चरेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्धैके गार्हपत्याद्भस्मोपहृत्याहवनीयान्निवपन्तो यन्तीदं विष्णुर्विचक्रम, ऽइत्येतयर्चा यज्ञो वै विष्णुस्तद्यज्ञेनैव यज्ञमनुसन्तन्मो भस्मनास्य पदमपिवपाम ऽइति वदन्तस्तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयादुत्सान्वा ऽअयं यजमानस्यावाप्सीत्क्षिप्रे परमासानावप्स्यते ज्येष्ठद्दह्नह रोत्स्यतीतीश्वरो ह तथैव स्यात् ॥ ४ ॥ इत्थमेव कुर्य्यात् । उदस्थालीं वैवोदकमण्डलुं वादाय गार्हपत्यादुग्र ऽआहवनीयान्निनयन्नियादिदं विष्णुर्विचक्रम ऽइत्येतयैवर्चा यज्ञो वै विष्णुस्तद्यज्ञेनैव यज्ञमनुसन्तनोति यद्वै यज्ञस्य रिष्टं यदशान्तमापो वै तस्य सर्वस्य शान्तिरद्भिरेवैनत्तच्छान्त्या शमयत्येतदेव तत्र कर्म्म ॥ ५ ॥ तदाहुः । यस्याग्निहोत्रन्दोह्यमानं स्कन्देत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति स्कन्नप्रायश्चित्तेनाभिमृश्याद्भिरुपनिनीय परिशिष्टेन जुहुयाद्यद्यु नीची स्थाली स्याद्यदि वा भिद्येत स्कन्नप्रायश्चित्तेनैवाभिमृश्याद्भिरुपनिनीय यदन्यद्विन्देत्तेन जुहुयात् ॥ ६ ॥* अथ यत्र स्कन्नं स्यात् । तदभिमृशेदुस्कन्नधित प्राजनीति यदा वै स्कन्दत्यथ धीयते यदा धीयतेऽथ प्रजायते योनिर्वा ऽइयं रेतः पयस्तदस्यां योनौ रेतो दधात्यनुष्ठ्या ह्यस्य रेतः सिक्तं प्रजायते

(१) शु० य० सं० ५. १५ । ऋ० सं० १. २२. ७ । का० श्रौ० सू० २५. ४. १८ ।
* अत्र शतम् ६१०० ।

य ऽएवमेतद्वेदामुतो वै दिवो वर्षतीहौषधयो वनस्पतयः प्रजायन्ते पुरुषाद्रेत स्कन्दति पशुभ्यस्तत ऽइदꣳ सर्वं प्रजायते तद्विद्याद्भूयसी मे प्रजातिरभूद्वहुः प्रजया पशुभिर्भविष्यामि श्रेयान्भविष्यामीति ॥ ७ ॥ अथ यत्रावभिन्नꣳ स्यात् । तदुदस्थालीं वैवोदकमण्डलुं वा निनयेद्यद्वै यज्ञस्य रिष्टं यदशान्तमापो वै तस्य सर्वस्य शान्तिरद्भिरेवैनत्तच्छान्त्या शमयति भूर्भुवः स्वरित्येताभिर्व्याहृतिभिरेता वै व्याहृतयः सर्वप्रायश्चित्तीस्तदनेन सर्वेण प्रायश्चित्तिङ्कुरुते तानि कपालानि सञ्चित्य यत्र भस्मोद्धतꣳ स्यात्तन्निवपेदेतदेव तत्र कर्म्म ॥ ८ ॥ तदाहुः । यस्याग्निहोत्री दोह्यमानोपविशेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति ताꣳ हैके यजुषोत्थापयन्त्युदस्थादेव्यदितिरितीयं वा ऽअदितिरिमामेवास्मा ऽएतदुत्थापयाम ऽइति वदन्त ऽआयुर्यज्ञपतावधादित्यायुरेवास्मिँस्तद्दध्म ऽइति वदन्त ऽइन्द्राय कृण्वती भागमितीन्द्रियमेवास्मिँस्तद्दध्म ऽइति वदन्तो मित्राय वरुणाय चेति प्राणोदानौ वै मित्रावरुणौ प्राणोदानावेवास्मिँस्तद्दध्म ऽइति वदन्तस्तान्तस्यामाहुत्याम्ब्राह्मणाय दद्याद्यमनभ्यागमिष्यन्मन्येतार्त्तिं वा ऽएषा पाप्मानं यजमानस्य प्रतिदृश्योपाविक्षदार्तिमेवास्मिँस्तत्पाप्मानम्प्रतिमुञ्चाम ऽइति वदन्तः ॥ ९ ॥ तदुहोवाच याज्ञवल्क्यः । अश्रद्धानेभ्यो हैभ्यो गौरपक्रामत्यार्त्यो वा ऽआहुतिं

(१) का० श्रौ० सू० २५ १ ११ ।

विद्धयन्तीत्थमेव कुर्य्याद्दण्डेनैवैनां विपिष्योत्थापयेदिति तद्यथैवादो धात्रयतोऽश्वो वाश्वतरो वा गदायेत बलीवर्दो वा युक्तस्तेन दण्डप्राजितेन तोत्त्रप्राजितेन यमद्धानः समीप्सति तः समश्नुत ऽएवमेवैतया दण्डप्राजितया तोत्त्रप्राजितया यथं स्वर्गँल्लोकः समीप्सति तः समश्नुते ॥ १० ॥ अथ होवाचारुणिः । यौर्वा ऽएतस्याग्निहोत्रस्याग्निहोत्र्ययमेव वत्सो योऽयम्पवत ऽइयमेवाग्निहोत्रस्थाली न वा ऽएवं विदुषोऽग्निहोत्री नश्यति यक हासौ नश्यत्येवं विदुषोऽग्निहोत्रीवत्सो नश्यति यक ह्येष नश्यत्येवं विदुषोऽग्निहोत्रस्थाली भिद्यते क्व हीयम्भिद्येत श्रियो वै पर्जन्यो वर्षति तद्दिव्याच्छ्रेमाणम्मे महिमानमधारयमाणोपाविक्षच्छ्रेयान्भविष्यामीति तामात्मन्न्येव कुर्वीतात्मन्न्येव तच्छ्रियन्धत्त ऽइति ह स्माहारुणिरेतदेव तत्र कर्म्म ॥ ११ ॥ तदाहुः । यस्याग्निहोत्री दोह्यमाना वाश्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति स्तम्बमाच्छिद्य ग्रासयेदेतदेव तत्र कर्म्म ॥ १२ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

तदाहुः । यस्याग्निहोत्री लोहितन्दुहीत किन्तत्र कर्म्म का प्रायश्चित्तिरिति व्युत्क्रामतेत्युक्त्वा मेक्षणङ्क्त्वान्वाहार्य्यपचनम्परिश्रयितवै ब्रूयात्तस्मिन्नेनच्छ्रपयि-

(१) का० श्रौ० सू० २५. १ । ८ । (२) का० श्रौ० सू० २५. २. २ ।

त्वा तस्मिँस्तूष्णीञ्जुहुयादनिरुक्तो वै प्रजापतिः
प्राजापत्यमग्निहोत्रꣳ सर्वं वा ऽअनिरुक्तन्तदनेन सर्वेण
प्रायश्चित्तिङ्कुरुते तान्तस्यामाहुत्याम्ब्राह्मणाय दद्याद्यमन-
ऽभ्यागमिष्यन्मन्येतार्त्तिर्वा ऽएषा पाप्मानं यजमानस्य
प्रतिदृश्य दुहे या लोहितन्दुह ऽआर्त्तिमेवास्मिँस्तत्पा-
प्मानम्प्रतिमुञ्चत्यथ यदन्यद्विन्देत्तेन जुहुयादनार्त्तेनैव
तदार्त्तं यज्ञस्य निष्करोत्येतदेव तत्र कर्म्म ॥ १ ॥ तदाहुः ।
यस्याग्निहोत्रन्दोह्यमानममेध्यमापद्येत किन्तत्र कर्म्म का
प्रायश्चित्तिरिति तद्धैके होतव्यम्मन्यन्ते प्रयतमेतन्नै-
तस्याहोमोऽवकल्पते न वै देवाः कस्माच्चन बीभत्सन्ते
बीभत्सन्ता३ऽइ तु देवा ऽइत्थमेव कुर्याद्गार्हपत्यादुष्ण-
म्भस्म निरुह्य तस्मिन्नेनदुष्णे भस्मँस्तूष्णीन्निनयेदद्भि-
रुपनिनयत्यद्भिरेनदाप्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेत-
देव तत्र कर्म्म ॥ २ ॥ तदाहुः । यस्याग्निहोत्रन्दोहितम-
मेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति य ऽएवै-
तेऽङ्गारा निरूढा येष्वधिश्रयिष्यन्भवति तान्प्रत्युह्य
तस्मिन्नेनदुष्णे भस्मँस्तूष्णीन्निनयेदद्भिरुपनिनयत्य-
द्भिरेनदाप्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म्म
॥ ३ ॥ तदाहुः । यस्याग्निहोत्रमधिश्रितममेध्यमापद्येत
किन्तत्र कर्म्म का प्रायश्चित्तिरिति य ऽएवैतेऽङ्गारा
निरूढा येष्वधिश्रितम्भवति तेष्वेनत्तूष्णीञ्जुहुयात्तद्धुत-
महुतं स्याद्धैनत्तेषु जुहोति तेन हुतं स्याद्देवाँस्तेनैवानुगम-

(१) "०दनिरुक्तमनिरुक्तो" इति 'ग' 'ज' पुस्तकयो ।

यति तेनाहुतमद्भिरुपनिनयत्यद्भिरेनदाप्नोत्यथ यदन्यद्धि-न्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ ४ ॥ तदाहुः । यदु-धिश्रितेऽग्निहोत्रे यजमानो म्रियेत किन्तत्र कर्म्म का प्रायश्चित्तिरिति तदेवैनदभिपर्य्याधाय विष्पन्दयेदुयो खल्वाहुरेतावती सर्वस्य हविर्य्यज्ञस्य प्रायश्चित्तिरित्येतदेव तत्र कर्म्म ॥ ५ ॥ तदाहुः । यस्याग्निहोत्रमुन्नीतं स्रुच्युन्नीतं स्कन्देत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति स्कन्नप्रायश्चि-त्तेनाभिमृश्याद्भिरुपनिनीय परिशिष्टेन जुहुयाद्यद्य नीची स्रुक् स्याद्यदि वा भिद्येत स्कन्नप्रायश्चित्तेनैवाभिमृश्या-द्भिरुपनिनीय यत्स्थाल्यां परिशिष्टं स्यात्तेन जुहुयात् ॥ ६ ॥ तद्धैके । प्रतिपरेत्य यत्स्थाल्यां परिशिष्टं भवति तेन जुह्वति तदु तथा न कुर्य्यात्स्वर्ग्यं वा एतद्यदग्नि-होत्रं यो हैनन्तत्र ब्रूयात्प्रति न्वा अयमग्निं स्वर्गाल्लोका-दुवारुक्षन्नास्येदं स्वर्ग्यमिव भविष्यतीतीश्वरो ह तथैव स्यात् ॥ ७ ॥ इत्थमेव कुर्य्यात् । तदेवोपविशेद्यत्स्थाल्यां परिशिष्टं स्यात्तदस्मा उन्नीयाहरेयुस्तद्धैक उपव-ल्हन्ते हुतोच्छिष्टं वा एतद्यातयाम वा एतन्नैतस्य होत-व्यमिति तदु तन्नाद्रियेत यदा वा एतदयातयामाथैनद्ध-विरातञ्चनङ्कुर्वते तस्माद्यत्स्थाल्यां परिशिष्टं स्यात्त-दस्मा उन्नीयाहरेयुर्य्यद्यु तत्र न स्याद्यदन्यद्विन्देत्त-दग्नावधिश्रित्यावज्योत्याप्रः प्रत्यानीयोद्वास्य तदद्धो हैवोन्नेष्यामीत्युक्तम्भवत्यथात्र यथोन्नीतमेवास्मा उन्नी-याहरेयुस्तेन काममञ्जुहुयादेतदेव तत्र कर्म्म ॥ ८ ॥ तदाहुः ।

यस्याग्निहोत्रꣳ स्रुच्युन्नीतममेध्यमापद्येत किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्धैके होतव्यम्मन्यन्ते प्रयतमेतन्नैतस्याहोमोऽवकल्पते न वै देवाः कस्माच्चन बीभत्सन्त ऽइति तद्धैक ऽउत्सिच्य च्छर्दयन्ति तदु तथा न कुर्य्याद्यो हैनन्तत्र ब्रूयात्परासिचत न्वा ऽअयमग्निहोत्रं क्षिप्रेऽयं यजमानः परासेक्ष्यत ऽइतीश्वरो ह तथैव स्यादित्थमेव कुर्य्यादाहवनीये समिधमभ्याधायाहवनीयादेवोष्णम्भस्म निरुह्य तस्मिन्नेनदुष्णे भस्मँस्तूष्णीमद्भिनयेदद्भिरुपनिनयत्यद्भिरेनदाप्नोत्यथ यदन्यद्विन्देत्तेन जुहुयादेतदेव तत्र कर्म्म ॥ ९ ॥ तदाहुः । यस्याग्निहोत्रꣳ स्रुच्युन्नीतमुपरिष्टादववर्षेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्विद्यादुपरिष्टान्मा शुक्रमागन्नुप मान्देवाः प्राभूवञ्छ्रेयान्भविष्यामीति तेन काममञ्जुहुयादेतदेव तत्र कर्म्म ॥ १० ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ गार्हपत्याद्यनुगमने प्रायश्चित्तम् ]

तदाहुः । यत्पूर्वस्यामाहुत्याꣳ हुतायामथाग्निरनुगच्छेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति यम्प्रतिवेशः शकलं विन्देत्तमभ्यस्याभिजुहुत्याद्दारौ दारावग्निरिति ह्यदन्दारौ दारौ ह्येवाग्निर्यद्वु ऽअस्य हृदयं व्येव लिखेद्धिरण्यमभिजुहुयादग्नेर्वा ऽएतद्रेतो यद्धिरण्यं स्य ऽउ वै पुत्रः स पिता यः पिता स पुत्रस्तस्माद्धिरण्यमभिजुहुयादेतदेव तत्र कर्म्म ॥ १ ॥ तदाहुः । यस्याहवनीय ऽउद्धृतः

पुराग्निहोत्रादनुगच्छेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति गार्हपत्यादेवैनम्प्राञ्चमुद्धृत्योपसमाधायाग्निहोत्रञ्जुहुयात्स यद्यपि शतमेव कृत्वः पुनः पुनरुद्धृतोऽनुगच्छेद्गार्हपत्यादेवैनम्प्राञ्चमुद्धृत्योपसमाधायाग्निहोत्रञ्जुहुयादेतदेव तत्र कर्म्म ॥२॥ [अर्धः प्रपाठकः ४८] तदाहुः । यस्य गार्हपत्योऽनुगच्छेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति तद्ध हैक ऽउल्मुकादेव निर्म्मन्थन्ति यतो वै पुरुषस्यान्ततो नश्यति ततो वै स तस्य प्रायश्चित्तिमिच्छत ऽइति वदन्तस्तदु तथा न कुर्यादुल्मुकः ह वै वादाय चरेयुरुल्मुकस्य वाक्बन्धश्चमित्थमेव कुर्य्यादुल्मुकादङ्गारमादाय तमरण्योरभिविमत्थ्नीयादुप ह तङ्काममाप्नोति य ऽउल्मुकमन्थ्य ऽउपो तं य्योऽरण्योरेतदेव तत्र कर्म्म ॥ ३ ॥ तदाहुः । यस्याग्नावग्निमभ्युद्धरेयुः किन्तत्र कर्म्म का प्रायश्चित्तिरितीश्वरौ वा ऽएतौ सम्पद्याशान्तौ यजमानस्य प्रजाश्च पशूँश्च निर्दहस्तदभिमन्त्रयेत 'समितँ सङ्कल्पेथाꣳ संम्प्रियौ रोचिष्णू सुमनस्यमानौ ॥ इषमूर्ज्जमभि संवसानौ ॥ सं वाम्मनाꣳसि सं व्रता समु चित्तान्याकरम् ॥ अग्ने पुरीष्याधिपा भव त्वन्न ऽइषमूर्ज्जं यजमानाय धेही'ति शान्तिमेवाभ्यामेतद्वदति यजमानस्य प्रजायै पशूनामहिꣳसायै ॥ ४ ॥ यद्यु ऽअस्य हृदयं व्व्येव लिखेत् । अग्नयेऽग्निमतेऽष्टाकपालम्पुरोडाशन्निर्वपेत्तस्यावृत्सप्तदश सामिधेनीरनुब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ संय्याज्ये ऽअथैते याज्यानुवाक्ये

(१) शु० य० सं० ( अ० १२ क० ५७–५८ ) ।

ऽ'अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा ॥ हव्यवाड्जु-
ह्वास्य' ऽइत्यथ याज्या 'त्वꣳ ह्यग्ने ऽअग्निना विप्रो विप्रेण
सन्त्सता ॥ सखा सख्या समिध्यस' ऽइति शान्तिमेवाभ्या-
मेतद्वदति यजमानस्य प्रजायै पशूनामहिꣳसाया ऽएत-
देव तत्र कर्म्म ॥ ५ ॥ तदाहुः । यस्याहवनीयेऽननुगते
गार्हपत्योऽनुगच्छेत्किन्तत्र कर्म्म का प्रायश्चित्तिरिति तꣳ
हैके तत ऽएव प्राञ्चमुद्धरन्ति प्राणा वा ऽअग्नयः प्राणा-
नेवास्मा ऽएतदुद्धराम ऽइति वदन्तस्तदु तथा न कुर्य्याद्यो
हैनन्तत्र ब्रूयात्प्राचो न्वा ऽअयं यजमानस्य प्राणान्प्रारौ-
त्सीत्प्रमरिष्यत्ययं यजमान ऽइतीश्वरो ह तथैव स्यात्
॥ ६ ॥ अथ हैके प्रत्यञ्चमाहरन्ति । प्राणोदानाविमाविति
वदन्तस्तदु तथा न कुर्य्यात्स्वर्ग्यं वा ऽएतद्यदग्निहोत्रं यो
हैनन्तत्र ब्रूयात्प्रति न्वा ऽअयꣳ स्वर्गाल्लोकादवारुक्षन्ना-
स्येदꣳ स्वर्ग्यमिव भविष्यतीतीश्वरो ह तथैव स्यात्
॥ ७ ॥ अथ हैकेऽन्यद्गार्हपत्यम्मन्थन्ति । तदु तथा न
कुर्य्याद्यो हैनन्तत्र ब्रूयादग्नेर्व्वा ऽअयमधि द्विषन्तम्भ्रातृ-
व्यमजीजनत क्षिप्रेऽस्य द्विषन्भ्रातृव्यो जनिष्यते
प्रियतमꣳ रोत्स्यतीतीश्वरो ह तथैव स्यात् ॥ ८ ॥ अथ
हैकेऽनुगमय्याग्न्यम्मन्थन्ति । तस्याशाल्येयादपि यत्परिशि-
ष्टमभूत्तदजीजसत नास्य दायादश्चन परिशेक्ष्यत ऽइती-
श्वरो ह तथैव स्यात् ॥ ९ ॥ इत्थमेव कुर्य्यात् । अरण्यो-
रग्नी समारोह्योदङ्ङुदवसाय निर्म्मथ्य जुहुयात्तथा ह न

(१) ऋ० सं० १ १ २२ । (२) ऋ० सं० ६. २. ३१ ।

काञ्चन परिचक्षाङ्करोति नवावसान उ ऽअस्याभितोराग्नि हुतम्भवति * ॥ १० ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ अग्न्यन्तरसंसर्गादौ प्रायश्चित्तम् ]

अथ यस्यातऽर्भस्मादुद्धृत्य । गोमयेनालिप्यारण्योरेवाग्नी समारोह्य प्रत्यवस्यति मथित्वा गार्हपत्यमुद्धृत्याहवनीयमाहृत्यान्वाहार्यपचनमग्नये पथिकृतेऽष्टाकपालम्पुरोडाशन्निर्वपेत्तस्यावृत्ता ऽएव सप्तदश सामिधेनीरनुब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ संयाज्ये ऽअथैते याज्यानुवाक्ये 'वेत्था हि वेधो ऽअध्वनः पथश्च देवाञ्जसा ॥ अग्ने यज्ञेषु सुक्रत'वित्यथ याज्या'देवानामपि पन्थामगन्म यच्छक्नवाम तदनुप्रवोढुम् ॥ अग्निर्विद्वान्स यजात्सेदु होता सो ऽअध्वरान्स ऽऋतून्कल्पयाती'त्यग्निर्वै पथिकृत्पथामपिनेता स ऽएवैनं यज्ञपथमपिनयत्येतदेव तत्र कर्म ॥ १ ॥ तदाहुः । यस्याग्नयः सहस्वर्ज्येरन्किन्तत्र कर्म का प्रायश्चित्तिरिति स यदि परस्ताद्दहन्नभीयात्तद्विद्यात्पुरस्तान्मा शुक्रमागन्नुप मान्देवाः प्राभूवञ्छ्रेयान्भविष्यामीति यद्यु ऽअस्य हृदयं व्यथेव लिखेदग्नये विविचयेऽष्टाकपालम्पुरोडाशन्निर्वपेत्तस्यावृत्ता ऽएव सप्तदश सामिधेनीरनुब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ संयाज्ये ऽअथैते

* का० श्रौ० सू० २५. ३. ४–९ ।

(१) ऋ० सं० ४ ५ २१ । (२) ऋ० सं० ७. ५. ३० ।

याज्यानुवाक्ये 'वि ते विष्वग्वातजूतासो ऽअग्ने भामासः
शुचे शुचयश्चरन्ति ॥ तुविम्रक्षासो दिव्या नवग्वा वना·
वनन्ति धृषता रुजन्त' इत्यथ याज्या 'त्वामग्ने मानुषीरीडते
विशो होत्राविदं विविचिः रत्नधातमम् ॥ गुहा सन्तः सुभग
विश्वदर्शतन्तुविष्वणसः सुयजङ्घृतश्रिय'मित्यथो ह यो
द्विषतो भ्रातृव्याद्व्याविवृत्सेत तत्काम ऽएतया यजेत
वि हैवास्माद्वर्त्तत ऽएतदेव तत्र कर्म्म ॥ २ ॥ यद्वयमितो
दुहन्नभीयात् । तद्विद्यादभि द्विषन्तम्भ्रातृव्यम्भविष्यामि
श्श्रेयान्भविष्यामीति यत्तु ऽअस्य हृदयं व्येव लिखेद·
ग्नये संवर्गायाष्टाकपालम्पुरोडाशन्निर्वपेत्तस्यावृत्ता ऽएव
सप्तदश सामिधेनीरनुब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ
सँय्याज्ये ऽअथैते याज्यानुवाक्ये 'परस्या ऽअधि संवतोऽ·
वराँ२॥ऽअभ्यातर ॥ यत्राहमस्मि ताँ२॥ ऽअवे'त्यथ
याज्या 'मा नो ऽअस्मिन्महाधने परावर्ग्भारभृद्यथा ॥ सं
वर्गः सः रयिञ्जये'त्यथो ह यो द्विषतो भ्रातृव्यात्सं·
विवृक्षेत तत्काम ऽएतया यजेत सः हैवास्माद्वृङ्क्त
ऽएतदेव तत्र कर्म्म ॥ ३ ॥ तदाहुः । यस्य वैद्युतो दहेत्कि·
न्तत्र कर्म्म का प्रायश्चित्तिरिति तद्विद्यादुपरिष्टान्मा शुक्र·
मागन्नुप मान्देवाः प्राभूवञ्छ्रेयान्भविष्यामीति यत्तु
ऽअस्य हृदयं व्येव लिखेदग्नयेऽप्सुमतेऽष्टाकपालं·
म्पुरोडाशन्निर्वपेत्तस्यावृत्ता ऽएव सप्तदश सामिधेनीरनु·

(१) ऋ० सं० ४.५ ८। (२) ऋ० सं० ३. ८. २६। (३) शु० य० सं० ११. ७१। (४) ऋ० सं० ६, ५ २६।

ब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ सँय्याज्ये ऽअथैते याज्यानुवाक्ये 'ऽअप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे ॥ गर्भे सञ्जायसे पुन'रित्यथ याज्या 'गर्भो ऽअस्योषधीनाङ्गर्भो वनस्पतीनाम् । गर्भो विश्वस्य भूतस्याग्ने गर्भो ऽअपामसी'ति शान्तिमेवाभ्यामेतद्ददति यजमानस्य प्रजायै पशूनामहिꣳसाया ऽएतदेव तत्र कर्म्म ॥ ४ ॥ तदाहुः । यस्याग्नयोऽमेध्यैरग्निभिः सꣳसृज्येरन्किन्तत्र कर्म्म का प्रायश्चित्तिरित्यग्नये शुचयेऽष्टाकपालम्पुरोडाशन्निर्वपेत्तस्यावृत्ता ऽएव सप्तदश सामिधेनीरनुब्रूयाद्वार्त्रघ्नावाज्यभागौ विराजौ सँय्याज्ये ऽअथैते याज्यानुवाक्ये 'ऽअग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः ॥ शुची रोचत ऽआहुत' इत्यथ याज्या 'उदग्ने शुचयस्तव शुक्रा भ्राजन्त ऽईरते ॥ तव ज्योतीꣷष्यर्चय' ऽइति शान्तिमेवाभ्यामेतद्ददति यजमानस्य प्रजायै पशूनामहिꣳसाया ऽएतदेव तत्र कर्म्म ॥ ५ ॥ तदाहुः । यस्याहवनीयमनुद्धृतमादित्योऽभ्यस्तमियात्किन्तत्र कर्म्म का प्रायश्चित्तिरित्येते वै रश्मयो विश्वे देवास्तेऽस्माद्‌पप्रयन्ति तदस्मै व्यृध्यते यस्माद्देवा ऽअपप्रयन्ति तामनु व्यृद्धिं यश्च वेद यश्च न ता ऽउभावाहतुरनुद्धृतमस्याभ्यस्तमगादिति तत्रेत्थं कुर्याद्धरितꣳ हिरण्यन्दर्भे प्रबध्य पश्चाद्धर्त्तवै ब्रूयात्तदेतस्य रूपङ्क्रियते य ऽएष तपत्यहर्वा ऽएष तदुद्धृतो

(१) ऋ० सं० ६ । १०। शु० य० सं० १२ ३६। (२) शु० य० सं० १२, ३७। (३) ऋ० सं० ८, ३, ४०। (४) ऋ० सं० ६ ३ १६।

रूपङ्क्रियते पवित्रन्दर्भाः पवयत्येवैनन्तदुथेदुष्मसमादीप्य प्राञ्चः हुत्त्वैव ब्रूयाद्ब्राह्मण ऽआर्षेय ऽउद्धरेद्ब्राह्मणो वा ऽआर्षेयः सर्वा देवताः सर्वाभिरेवैनन्तद्देवताभिः समर्द्धयति तमुपसमाधाय प्रातिपरेत्य गार्हपत्य ऽआज्यमधिश्रित्योद्वास्योत्पूयावेक्ष्य चतुर्गृहीतमाज्यङ्गृहीत्वा समिधमुपसङ्गृह्य प्राङुदाद्रवत्यथाहवनीये समिधमभ्याधाय दक्षिणञ्जान्वाच्य जुहोति विश्वेभ्यो देवेभ्यः स्वाहेति स यथा ब्राह्मणमावसथवासिनङ्क्रुद्धं स्यन्तमुक्षवेहुतोपमन्त्रयेतैवमेवैतद्विश्वान्देवानुपमन्त्रयते जानन्ति हैनमुप हैनमावर्त्तन्त ऽएतदेव तत्र कर्म्म ॥ ६ ॥ तदाहुः । यस्याहवनीयमनुद्धृतमादित्योऽभ्युदियात्किन्तत्र कर्म्म का प्रायश्चित्तिरिति रश्मयो वै विश्वे देवास्तेऽस्मादूपिवाधसोऽपप्रयन्ति तदस्मै व्यृद्धते यस्माद्देवा ऽअपप्रयन्ति तामनु व्यृद्धिं यश्च वेद यश्च न ता ऽउभावाहतुरनुद्धृतमस्याभ्युदगादिति तत्रेत्थङ्कुर्याद्रजतः हिरण्यन्दर्भे प्रबध्य पुरस्ताद्धरेत्वै ब्रूयात्तच्चन्द्रमसो रूपङ्क्रियते रात्रिर्वै चन्द्रमास्तद्रात्रे रूपङ्क्रियते पवित्रन्दर्भाः पवयत्येवैनन्तदुथेदुष्मसमादीप्याश्वचः हुत्त्वैव ब्रूयाद्ब्राह्मण ऽआर्षेय ऽउद्धरेद्ब्राह्मणो वा ऽआर्षेयः सर्वा देवताः सर्वाभिरेवैनन्तद्देवताभिः समर्द्धयति तमुपसमाधाय प्रातिपरेत्य गार्हपत्य ऽआज्यमधिश्रित्योद्वास्योत्पूयावेक्ष्य यथागृहीतमाज्यङ्गृहीत्वा समिधमुपसङ्गृह्य प्राङुदाद्रवत्यथाहवनीये समिधमभ्याधाय दक्षिणञ्जान्वाच्य जुहोति

विश्वेभ्यो देवेभ्यः स्वाहेति सोऽसावेव बन्धुर्न ह वै तत्र का चनार्तिर्न रिष्टिर्भवति यत्रैषा प्रायश्चित्तिः क्रियत एतदेव तत्र कर्म्म ॥ ७ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥



[ मृताग्निहोत्रनिरूपणम् ]

तदाहुः । यदेष दीर्घसत्त्र्यग्निहोत्रञ्जुह्वत्प्रवसन्म्रियेत जुहुयुरस्मा३ इ ना३ इति तद्धैके होतव्यम्मन्यन्त आगन्तोरिति तदु तथा न कुर्य्यादुतस्थानो वा एष तस्मै यदेनः शवदह्याया इव जुहुयुर्य्यज्ञाय वा एष आहुतिभ्यस्तस्थानः स हैनमसृप्यमाणस्तृप्रः सचते ॥ १ ॥ अथ हैक आहुः । एवमेवान्वाहिता आहूयमानाः शयीरन्निति तदु तथा न कुर्य्यादुतस्थानो वा एष तस्मै यदेनः शवदह्याया इवेन्धीरन्यज्ञाय वा एष आहुतिभ्यस्तस्थानः स हैनमसृप्यमाणस्तृप्रः सचते ॥ २ ॥ अथ हैकेऽरण्योः । अग्नी समारोह्य निदधति तमाहृते निर्म्मन्थन्ति तदु तथा न कुर्य्यादुतस्थानो वा एष तस्मै यदेनः शवदह्याया इव निर्म्मन्थेयुर्यज्ञाय वा एष आहुतिभ्यस्तस्थानः स हैनमसृप्यमाणस्तृप्रः सचते ॥ ३ ॥ इत्थमेव कुर्य्यात् । निवान्यवत्सामेष्टवै ब्रूयात्तस्यै पयसा जुहुयाद्यावं वा

ऽएतत्पयो यन्निवान्यवत्साया * ऽआर्त्तमेतदग्निहोत्रं स्य- न्मृतस्य तदार्त्तेनैव तदार्त्तन्निष्कृत्य श्रेयान्भवति ॥ ४ ॥ तदुप्युपमास्ति । यद्द्वौ रथौ मुदितौ समागच्छेतान्थं स्यादेवान्यतरः स्यदायेति ॥ ५ ॥ तस्य वा ऽएतस्या- ग्निहोत्रस्योपचारः । प्राचीनावीती दोहयति यज्ञोपवीती वै देवेभ्यो दोहयत्यथैवम्पितॄणाम् ॥६॥ नाङ्गारेष्वधिश्रयति। यद्धाङ्गारेष्वधिश्रयेद्देवत्रा कुर्याद्गार्हपत्यादुष्णम्भस्म दक्षिणा निरुह्य तस्मिन्नेनदधिश्रयति पितृदेवत्यमेवैनत्तत्करोति ॥७॥ नावज्योतयति नापः प्रत्यानयति । यद्धावज्योतये- द्यदपः प्रत्यानयेद्देवत्रा कुर्यान्न त्रिः प्रतिष्ठापः हरति यत्त्रिः प्रतिष्ठापः हरेद्देवत्रा कुर्यात्सकृदेव निकर्षन्हरति पितृदेवत्यमेवैनत्तत्करोति ॥ ८ ॥ नोन्नेष्यामीत्याह । न चतुरुन्नयति यद्धोन्नेष्यामीति ब्रूयाद्यच्चतुरुन्नयेद्देवत्रा कुर्या- त्सकृदेव तूष्णीन्यवपर्यस्यति पितृदेवत्यमेवैनत्तत्करोति ॥ ९ ॥ नोपरिष्टात्समिधमभ्यस्य हरति । यद्धोपरिष्टा- त्समिधमभ्यस्य हरेद्देवत्रा कुर्यादधस्तादुपास्य हरति पितृ- देवत्यमेवैनत्तत्करोति ॥ १० ॥ नोत्तरेण गार्हपत्यमेति । यद्धोत्तरेण गार्हपत्यमियाद्देवत्रा कुर्याद्दक्षिणेन गार्हपत्य- मेति पितृदेवत्यमेवैनत्तत्करोति ॥ ११ ॥ अथ, यान्यमू- न्युदीचीनाग्राणि तृणानि भवन्ति । दक्षिणाग्राणि तानि करोति पितृदेवत्यमेवैनत्तत्करोत्यथाहवनीये समिधमभ्या- धाय सव्यञ्जान्वाच्य सकृदेव तूष्णीन्यवपर्यस्यति

* निव माता अन्य परकीयवत्सो यस्या । परकीयेण वत्सेन या मृतवत्सा गौर्दुह्यते सा निवान्यवत्सा । "अभिवान्यायां पिष्ट्वा निवान्याद्रुग्धे" ( का॰ श्रौ॰ सू॰ ५. ८ १८ )।

पितृदेवत्यमेवैनत्तत्करोति नोदिङ्गयति नोपमृष्टे न प्राश्नाति नोदुक्षति पितृदेवत्यमेवैनत्तत्करोति ॥ १२ ॥ तदाहुः । यदेष दीर्घसत्र्यग्निहोत्र्युह्वत्प्रवसन्म्रियेत कथमेनमग्निभिः कुर्युरिति तः हैके दग्ध्वाहरन्ति तमाहृतमग्निभिः सङ्क्षापयन्ति तदु तथा न कुर्याद्यथान्यस्यां स्योनौ रेतः सिक्तन्तदन्यस्याम्प्रजिजनयिषेत्तादृक्तदुस्थीन्येतान्याहृत्य कृष्णाजिने न्युप्य पुरुषविधिं विधायोर्णाभिः प्रच्छाद्याज्येनाभिघार्य तमग्निभिः समुपोषेत्तदेनथं स्वाद्योनेः प्रजनयतीति ॥ १३ ॥ तः हैके ग्रामाग्निना दहन्ति । तदु तथा न कुर्यादेष वै विश्ववात्क्रव्याद्ग्निः स हैनमीश्वरः सपुत्रः सपशुः सन्तोः ॥ १४ ॥ अथ हैके प्रदव्येन दहन्ति । तदु तथा न कुर्यादेष वा ऽअशान्तोऽग्निः स हैनमीश्वरः सपुत्रः सपशुम्प्रदग्धोः ॥ १५ ॥ अथ हैक ऽउल्मुक्येन दहन्ति । तदु तथा न कुर्यादेष वै रुद्रियोऽग्निः स हैनमीश्वरः सपुत्रः सपशुमभिमन्तोः ॥ १६ ॥ अथ हैकेऽन्तरेणाग्नीश्चितिश्चित्वा । तमग्निभिः समुपोषन्त्येतद्वै यजमानस्यायतनं यदन्तरेणाग्नीनिति तदु तथा न कुर्याद्यो हैनन्तत्र ब्रूयान्मृद्ध्वे न्वा ऽअयक्तामस्याशसनमजीजनत क्षिप्रेऽस्याशसनक्षनिष्यते प्रियतमः रोत्स्यतीतीश्वरो ह तथैव स्यात् ॥ १७ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ और्ध्वदेहिकनिरूपणम् ]

अथ ह स्माह नाको मौद्गल्यः। मरिष्यन्तं चेद्यजमानम्मन्येत यत्रैवास्मा ऽआशसनन्नोपितᳬं स्यात्तद्रण्योरग्नी समारोह्य निर्म्मथ्य जुहुवदसेत्स यदास्माल्लोकाद्यजमानः प्रेयात् ॥ १ ॥ अथैनमन्तरेणाग्नींश्चितिं चित्वा। तमग्निभिः समुपोषेदिति तदु तथा न कुर्यादुतस्थानो वा ऽएष तस्मै यदेनः शवदह्याया ऽइव जुहुयुर्यज्ञाय वा ऽएष ऽआहुतिभ्यस्तस्थानः स हैनमनृच्छमाणस्तृष्णः सचते ॥ २ ॥ इत्थमेव कुर्यात्। तिस्र ऽएव स्थालीरेष्टवै ब्रूयात्तासु गोमयानि च शुम्बलानि चावधाय नाना त्रिष्वग्निषु प्रवृञ्ज्यात्ते ये ततः सन्तापाद्दग्नयो जायेरँस्तैरेनन्दहेयुस्तथाह तैरेव दग्धो भवति नो प्रत्यक्षमिव ॥ ३ ॥ तस्मादुप्येतदृषिणाभ्यनूक्तम्। 'यो ऽअग्निरग्नेरध्यजायत शोकात्पृथिव्या ऽउत वा दिवस्परि ॥ येन प्रजा विश्वकर्म्मा जजान तमग्ने हेडः परि ते वृणक्त्वि'ति यथऽर्क्कथा ब्राह्मणम् ॥ ४ ॥ अथैनं विपुरीषङ्कृत्वा। अस्याम्पुरीषम्प्रतिष्ठापयति पुरीषं वा ऽइयन्तत्पुरीष ऽएवैतत्पुरीषन्दधाति या ह वा ऽअस्यैषा वृकला सपुरीषा तस्यै ह विदग्धायै सृगालः सम्भवति नेत्सृगालः सम्भवदिति तदु तथा न कुर्यात्क्षोधुका हास्य प्रजा भवति तमन्ततः प्रक्षाल्याज्येनान्वनक्ति मेध्यमेवैनत्तत्करोति ॥ ५ ॥ अथास्य सप्तसु प्राणायतनेषु *।

(१) शु० य० सं० अ० १३ क० ४५।
* का० श्रौ० सू० २५. ७. २०–२४।

सप्सु हिरण्यशकलान्प्रत्यस्यति ज्योतिर्वा ऽअमृतः हिरण्यञ्ज्योतिरेवास्मिँस्तदमृतन्दधाति ॥ ६ ॥ अथैन-मन्तरेणाग्नीश्चितिञ्चित्वा । कृष्णाजिनमुत्तरलोम प्राचीनग्रीवम्प्रस्तीर्य्य तस्मिन्नेनमुत्तानन्निपाद्य सुहुत्तेन पूर्णान्दक्षिणे पाणावादधाति सव्य ऽउपभृतमुरसि ध्रुवाम्मुखेऽग्निहोत्रहवणीन्नासिकयोः स्रुवौ कर्णयोः प्राशित्रहरणे शीर्षँश्चमसम्प्रणीताप्रणयनम्पार्श्वयोः शूर्प्पे ऽउदरे पात्रीँ समवत्तधानीम्पृषदाज्यवतीँ शिश्नस्यान्ते शम्यामाण्डयोरन्ते वृषारवावन्त्वुलूखलञ्च मुसलञ्चान्तरेणोरू ऽअन्यानि यज्ञपात्राणि दक्षिणे पाणौ स्प्यम् ॥ ७ ॥ स ऽएष यज्ञायुधी यजमानः । यथा विभ्यदामोपमतीयादेवमेव योऽस्य स्वर्गो लोको जितो भवति तमभ्यपत्येति तमेते सन्ताप्या ऽअग्नयो यथा पुत्राः पितरम्प्रोपुपमागतः शिवमुपस्पृशन्त्येवः शिवः हैवैनमुपस्पृशन्ति प्र हैवैनङ्कल्पयन्ति ॥ ८ ॥ सं स्यदि गार्हपत्यः पूर्वः प्राप्नुयात् । तद्विद्यात्प्रतिष्ठ ऽएनमग्निः पूर्वः प्रापत्प्रतिष्ठास्यति प्रत्येव तेऽस्मिँल्लोके स्थास्यन्ति येऽस्मात्प्रत्यञ्च ऽइति ॥ ९ ॥ अथ यद्याहवनीयः । तद्विद्यान्मुख्य ऽएनमग्निः पूर्वः प्रापन्मुखतो लोकानजैपीन्मुखमेव तेऽस्मिँल्लोके भविष्यन्ति येऽस्मात्प्रत्यञ्च ऽइति ॥ १० ॥ अथ यद्यन्वाहार्य्यपचनः । तद्विद्यादन्नाद ऽएनमग्निः पूर्वः प्रापदन्नमत्स्यत्यन्नमेव तेऽस्मिँल्लोकेऽत्स्यन्ति येऽस्मात्प्रत्यञ्च ऽइति ॥ ११ ॥ अथ यदि

सर्वं सकृत् । तद्विद्यात्कल्याणँल्लोकमजैषीदिरयेतान्यस्मिन्विज्ञानानि ॥ १२ ॥ तां वा ऽएताम् । यजमानस्याहुतिमन्ततो जुहोति स योऽस्य स्वर्ग्गो लोको जितो भवति तत ऽआहुतिमयोऽमृतः सम्भवति ॥ १३ ॥ अथ यान्यश्ममयानि च मृन्मयानि च भवन्ति । तानि ब्राह्मणाय ‡ दद्याच्छवोद्वहस्मु ह तम्मन्यन्ते यस्तानि प्प्रतिगृह्णणात्यप ऽएवैनान्यभ्यवहरेयुरापो वा ऽअस्य सर्वस्य प्प्रतिष्ठा तदेनमप्स्वेव प्प्रतिष्ठापयति ॥ १४ ॥ अथैतामाहुतिञ्जुहोति * । पुत्रो वा भ्भ्राता वा यो वान्यो ब्ब्राह्मणः स्याद्'स्मात्त्वमधि जातोऽसि त्वदयञ्जायताम्पुनः ॥ असौ स्वर्ग्गाय लोकाय स्वाहे'त्यनपेक्षमेत्याप ऽउपस्पृशन्ति † ॥ १५ ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥

कण्डिकासंख्या ॥ ९५ ॥



‡ का० श्रौ० सू० २५ ७ ३९ ।

* का० श्रौ० सू० २५ ७ ४० ।

( १ ) शु० य० सं० ३३ २२ ।

† 'अनपेक्षमेत्योपस्पृशन्त्यप ( का० श्रौ० सू० २५ ७ ४१ )

[ ज्योतिष्टोमप्रायश्चित्तम् ]

सोमो वै राजा यज्ञः प्रजापतिः । तस्यैतास्तन्वो या ऽएता देवता या ऽएता ऽआहुतीर्जुहोति ॥ १ ॥ स यद्यज्ञस्याच्छेत् । यान्तरप्रति देवताम्मन्येत तामनुसमीक्ष्य जुहुयाद्यदि दीक्षोपसत्स्वाहवनीये यदि प्रसुत ऽआग्नीध्रे वि वा ऽएतद्यज्ञस्य पर्व स्रंसते यद्ध्वलति सा यैव तर्हि तत्र देवता भवति तयैवैतद्देवतया यज्ञम्भिषज्यति तया देवतया यज्ञम्प्रति सन्दधाति ॥ २ ॥ स यद्येनम्मनसाभिध्यातः । यज्ञो नोपनमेत्परमेष्ठिने स्वाहेति जुहुयात्परमेष्ठी हि स तर्हि भवत्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥३॥ [* काण्डस्यार्धम् २३० ] अथ यद्येनं वाचाभिव्याहृतः । यज्ञो नोपनमेत्प्रजापतये स्वाहेति जुहुयात्प्रजापतिर्हि स तर्हि भवत्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥४॥ अथ यस्य राजानमुच्छेत्स्वा । नाहुरन्त ऽएयुरुन्धसे स्वाहेति जुहुयादुन्धो हि स तर्हि भवत्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥ ५ ॥ अथ यदि सातः । किञ्चिदापद्येत सवित्रे स्वाहेति जुहुयात्सविता हि स तर्हि भवत्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥ ६ ॥ अथ यदि दीक्षासु । किञ्चिदापद्येत विश्वकर्म्मणे स्वाहेति जुहुयाद्विश्वकर्म्मा हि स तर्हि भवत्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥ ७ ॥ अथ यदि सोमक्रयण्याम् । किञ्चिदापद्येत पूष्णे स्वाहेति जुहुयात्पूषा हि स तर्हि भवत्यप पाप्मानः हत ऽउपैनं यज्ञो नमति ॥ ८ ॥ अथ यदि क्रयायोपोत्थितः । किञ्चि-

* इममर्धकाण्डसङ्ख्याऽत्र काष्ठे लिखिता । सापि 'क' पुस्तक एव ।

दापद्येतेन्द्राय च मरुद्भ्यश्च स्वाहेति जुहुयादिन्द्रश्च हि स तर्हि मरुतश्च भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥९॥ अथ यदि पण्यमानः । किञ्चिदापद्येतासुराय स्वाहेति जुहुयादसुरो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १० ॥ अथ यदि क्रीतः । किञ्चिदापद्येत मित्राय स्वाहेति जुहुयान्मित्रो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ ११ ॥ अथ यद्यूराबासन्नः । किञ्चिदापद्येत विष्णवे शिपिविष्टाय स्वाहेति जुहुयाद्विष्णुर्हि स तर्हि शिपिविष्टो भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १२ ॥ अथ यदि पर्युह्यमाणः । किञ्चिदापद्येत विष्णवे नरन्धिषाय स्वाहेति जुहुयाद्विष्णुर्हि स तर्हि नरन्धिषो भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १३ ॥ अथ यद्यागतः । किञ्चिदापद्येत सोमाय स्वाहेति जुहुयात्सोमो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १४ ॥ अथ यद्यासन्द्यामासन्नः । किञ्चिदापद्येत वरुणाय स्वाहेति जुहुयाद्वरुणो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १५ ॥ अथ यद्याग्नीध्रगतः । किञ्चिदापद्येताग्नये स्वाहेति जुहुयादग्निर्हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १६ ॥ अथ यदि हविर्धानगतः । किञ्चिदापद्येतेन्द्राय स्वाहेति जुहुयादिन्द्रो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १७ ॥ अथ यद्युपावह्रियमाणः किञ्चिदापद्येताथर्वणे

स्वाहेति जुहुयादथर्वा हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १८ ॥ अथ यद्यꣳशुपु न्न्युप्सꣳ। किञ्चिदापद्येत विश्वेभ्यो देवेभ्यꣳ स्वाहेति जुहुयाद्विश्वे हि स तर्हि देवा भवन्त्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ १९ ॥ अथ यद्याप्याय्यमानꣳ। किञ्चिदापद्येत विष्णव ऽआप्रीतपाय स्वाहेति जुहुयाद्विष्णुर्हि स तह्याप्रीतपा भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २० ॥ अथ यद्यभिपूयमाणꣳ। किञ्चिदापद्येत यमाय स्वाहेति जुहुयाद्यमो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २१ ॥ अथ यदि सम्भ्रियमाणꣳ। किञ्चिदापद्येत विष्णवे स्वाहेति जुहुयाद्विष्णुर्हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २२ ॥ अथ यदि पूयमानꣳ। किञ्चिदापद्येत वायवे स्वाहेति जुहुयाद्वायुर्हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २३ ॥ अथ यदि पूतꣳ। किञ्चिदापद्येत शुक्राय स्वाहेति जुहुयाच्छुक्रो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥२४॥ अथ यदि क्षीरश्रीꣳ। किञ्चिदापद्येत शुक्राय स्वाहेति जुहुयाच्छुक्रो हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २५ ॥ अथ यदि सक्तुश्रीꣳ। किञ्चिदापद्येत मन्थिने स्वाहेति जुहुयान्मन्थी हि स तर्हि भवत्यप पाप्मानꣳ हत ऽउपैनं यज्ञो नमति ॥ २६ ॥ अथ यदि चमसेषून्नीतꣳ। किञ्चिदापद्येत विश्वेभ्यो देवेभ्यꣳ स्वा-

हेति जुहुयाद्विश्वे हि स तर्हि देवा भवत्यप पाप्मानꣳ हत उउपैनं स्यज्ञो नमति ॥ २७ ॥ अथ यदि होमायोद्यतः । किञ्चिदापद्येतासवे स्वाहेति जुहुयादसुर्हि स तर्हि भवत्यप पाप्मानꣳ हत उउपैनं स्यज्ञो नमति ॥ २८ ॥ अथ यदि हूयमानः । किञ्चिदापद्येत रुद्राय स्वाहेति जुहुयाद्रुद्रो हि स तर्हि भवत्यप पाप्मानꣳ हत उउपैनं स्यज्ञो नमति ॥ २९ ॥ अथ यद्यभ्यावृत्तः । किञ्चिदापद्येत वाताय स्वाहेति जुहुयाद्वातो हि स तर्हि भवत्यप पाप्मानꣳ हत उउपैनं स्यज्ञो नमति ॥३०॥ अथ यदि प्रतिख्यातः । किञ्चिदापद्येत नृचक्षसे स्वाहेति जुहुयान्नृचक्षा हि स तर्हि भवत्यप पाप्मानꣳ हत उउपैनं स्यज्ञो नमति ॥ ३१ ॥ अथ यदि भक्ष्यमाणः किञ्चिदापद्येत भक्षाय स्वाहेति जुहुयाद्भक्षो हि स तर्हि भवत्यप पाप्मानꣳ हत उउपैनं स्यज्ञो नमति ॥ ३२ ॥ अथ यदि नाराशꣳसेषु सन्नः । किञ्चिदापद्येत पितृभ्यो नाराशꣳसेभ्यः स्वाहेति जुहुयात्पितरो हि स तर्हि नाराशꣳसा भवत्यप पाप्मानꣳ हत उउपैनं स्यज्ञो नमति ॥ ३३ ॥ अथ यद्यवभृथायोद्यतः । किञ्चिदापद्येत सिन्धवे स्वाहेति जुहुयात्सिन्धुर्हि स तर्हि भवत्यप पाप्मानꣳ हत उउपैनं स्यज्ञो नमति ॥ ३४ ॥ अथ यद्यभ्यवह्रियमाणः । किञ्चिदापद्येत समुद्राय स्वाहेति जुहुयात्समुद्रो हि स तर्हि भवत्यप पाप्मानꣳ हत उउपैनं स्यज्ञो नमति ॥ ३५ ॥*

* शतम् १२०० ।

अथ यदि प्रप्लुतः । किञ्चिदापद्येत सलिलाय स्वाहेति जुहुयात्सलिलो हि स तर्हि भवत्यप पाप्मानꣳ हत उपैनं यज्ञो नमति ॥ ३६ ॥ ता वा एताः । चतुस्त्रिꣳशतमाज्याहुतीर्जुहोति त्रयस्त्रिꣳशद्वै देवाः प्रजापतिश्चतुस्त्रिꣳश एतदु सर्वैर्देवैर्यज्ञमभिपद्यति सर्वैर्देवैर्यज्ञम्प्रतिसन्दधाति ॥३७॥ ता ब्रह्मैव जुहुयात् । नाब्रह्मा ब्रह्मा वै यज्ञस्य दक्षिणत आस्ते ब्रह्मा यज्ञन्दक्षिणतो गोपायति यदि तु ब्रह्मा न विद्यादपि य एव कश्च विद्यात्स जुहुयाद्ब्राह्मणन्त्वामन्त्र्य ब्रह्मणातिसृष्टस्तासां वा एतासां व्याहृतीनामप्यन्धुता वसिष्ठो ह विराजं विदाञ्चकार ताꣳ हेन्द्रोऽभिदध्यौ ॥ ३८ ॥ स होवाच । ऋषे विराजꣳ ह वै वेत्थ तास्मे ब्रूहीति स होवाच किम्मम ततः स्यादिति सर्वस्य च ते यज्ञस्य प्रायश्चित्तिम्ब्रूयाꣳ रूपञ्च त्वा दर्शयेयेति स होवाच यन्नु मे सर्वस्य यज्ञस्य प्रायश्चित्तिम्ब्रूयाः किमु स स्याद्यन्त्वꣳ रूपन्दर्शयेथा इति जीवस्वर्ग एवास्माल्लोकात्प्रेयादिति ॥ ३९ ॥ ततो हैतामृषिरिन्द्राय विराजमुवाच । इयं वै विराडिति तस्माद्योऽस्यै भूयिष्ठँल्लभते स एव श्रेष्ठो भवति ॥ ४० ॥ अथ हैतामिन्द्र ऋषये । प्रायश्चित्तिमुवाचाग्निहोत्रादग्र आ महत उक्थ्यात्ता ह स्मैताः पुरा व्याहृतीर्वसिष्ठा एव विदुस्तस्माद्ध स्म पुरा वासिष्ठ एव ब्रह्मा भवति यतस्त्वेना अप्येतर्हि य एव कश्चाधीते ततोऽप्येतर्हि य एव कश्च ब्रह्मा भवति स ह वै ब्रह्मा

भवितुमर्हति स वा ब्रह्मन्नित्यामन्त्रितः प्रतिशृणुयाद्
एवमेता व्याहृतीर्वेद ॥ ४१ ॥

षष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

---

[ * सौत्रामणीहविः ]

विश्वरूपं वै त्वाष्ट्रमिन्द्रोऽहन् । तन्त्वष्टा हतपुत्रोऽ-
भ्यचरत्सोऽभिचरणीयमपेन्द्रः सोममाहरत्तस्येन्द्रो यज्ञ-
वेशसङ्कृत्वा प्रासहा सोममपिबत्स विष्वङ् व्यार्च्छ-
त्तस्येन्द्रियं वीर्य्यमङ्गादङ्गादस्रवत् ॥ १ ॥ तस्याक्षिभ्यामेव
तेजोऽस्रवत् । सोऽजः पशुरभवद्धूम्रोऽथ यत्पक्ष्मभ्यस्ते
गोधूमा यदश्रुभ्यस्तत्कुवलम् ॥ २ ॥ नासिकाभ्या-
मेवास्य वीर्य्यमस्रवत् । सोऽविः पशुरभवन्मेषोऽथ यच्छ्ले-
ष्मणस्ता उपवाका यत्स्नीहा तद्बदरम् ॥ ३ ॥ मुखा-
देवास्य बलमस्रवत् । स गौः पशुरभवदृषभोऽथ ये
फेनास्ते यवा यत्स्नेहस्तत्कर्कन्धु ॥ ४ ॥ श्रोत्रादेवास्य
यशोऽस्रवत् । तदेकशफमभवदश्वोऽश्वतरो गर्दभः ॥ ५ ॥
स्तनाभ्यामेवास्य शुक्रमस्रवत् । तत्पयोऽभवत्पशूनाम्परे-

---

* सुष्ठु त्रायत इति सुत्रामा तद्देवत्यः सौत्रामणी नाम पशुयागः। स च स्वतन्त्रोऽङ्गभूतश्चेति द्विविधः। चयनानन्तरं तदङ्गत्वेनानुष्ठीयमाना सौत्रामण्यङ्गभूता। स्वातन्त्र्येण विहिता च प्रधानभूता। सा नित्या काम्या नैमित्तिकी चेति त्रिविधा। तत्र फलमनुद्दिश्य विहिता नित्या हविर्यज्ञान्तर्गता। सैव च कस्यचित्फलोद्देशेन विधीयमाना काम्या। सोमवमनादिषु निमित्तभूतेषु तदनन्तरमनुष्ठेयतया विहिता नैमित्तिकी। स्वतन्त्रसौत्रामण्यां ब्राह्मणस्यैवाधिकारः। अङ्गभूतायां तु क्षत्रियवैश्यावप्यधिकारिणौ।

रुरस ऽएवास्य हृदयात्त्विपिरस्रवत्स श्येनोऽपाष्ठिहाभव-
द्वयसाᳫं राजा ॥ ६ ॥ नाभ्या ऽएवास्य शूपोऽस्रवत् ।
तत्सीसमभवन्नायो न हिरण्यᳫं रेतस ऽएवास्य रूपमस्र-
वत्तत्सुवर्णᳫं हिरण्यमभवच्छिश्नादेवास्य रसोऽस्रवत्सा
परिस्रुदभवत्स्फिग्भ्यामेवास्य भामोऽस्रवत्सा सुरा-
भवदन्नस्य रसᳫं ॥ ७ ॥ मूत्रादेवास्यौजोऽस्रवत् । स
वृकोऽभवदारण्यानाम्पशूनाञ्जूतिरूवध्यादेवास्य मन्युर-
स्रवत्स व्याघ्रोऽभवदारण्यानाम्पशूनाᳫं राजा लोहिता-
देवास्य सहोऽस्रवत्स सिᳫंहोऽभवदारण्यानाम्पशूनामीशᳫं
॥ ८ ॥ लोमभ्य ऽएवास्य चित्तमस्रवत् । ते श्यामाका
ऽअभवँस्त्वच ऽएवास्यापचितिरस्रवत्सोऽश्वत्थो वनस्पति-
रभवन्माᳫंसेभ्य ऽएवास्योर्गस्रवत्स ऽउदुम्बरोऽभवद-
स्थिभ्य ऽएवास्य स्वधास्रवत्स न्यग्रोधोऽभवन्मज्जभ्य
ऽएवास्य भक्षᳫं सोमपीथोऽस्रवत्ते व्रीहयोऽभवन्नेवमस्ये-
न्द्रियाणि वीर्याणि व्युदक्रामन् ॥ ९ ॥ अथ ह वै तर्हि ।
नमुचिनैवासुरेण सह चचार स ऽऐक्षत नमुचिरपुनर्वा
ऽअयमभूद्धन्तास्येन्द्रियं वीर्यᳫं सोमपीथमन्नाद्यᳫं हरा-
णीति तस्यैतयैव सुरयेन्द्रियं वीर्यᳫं सोमपीथमन्नाद्यमह-
रत्स ह न्यर्णᳫं शिश्ये तन्देवा ऽउपसञ्जग्मिरे श्रेष्ठो वै
नोऽयमभूत्तमिमम्पाप्माविदद्धन्तेमम्भिषज्यामेति ॥ १० ॥
तेऽश्विनावब्रुवन् । युवं वै ब्रह्माणौ भिषजौ स्थो
युवमिमम्भिषज्यतमिति तावब्रूतामस्तु नौ भाग ऽइति
तेऽब्रुवन्य ऽएषोऽजᳫं स वाम्भाग ऽइति तथेति तस्मा-

दाश्विनो धूम्रो भवति ॥ ११ ॥ ते सरस्वतीमब्रुवन् । त्वं वै भैषज्यमसि त्वमिमम्भिषज्येति साब्रवीदस्तु मे भाग इति तेऽब्रुवन्य एषोऽविः स ते भाग इति तथेति तस्मात्सारस्वतो मेषो भवति ॥ १२ ॥ अथाब्रुवन् । एतावद्वा अस्मिन्नेतर्हि यावदयमृषभोऽस्यैवायमस्त्विति तथेति तस्मादैन्द्र ऋषभो भवति ॥ १३ ॥ तावश्विनौ च सरस्वती च । इन्द्रियं वीर्यन्नमुचेराहृत्य तदस्मिन्पुनरदधुस्तम्पाप्मनोऽत्रायन्त सुत्रातम्वतैनम्पाप्मनोऽत्रास्महीति तद्वाव सौत्रामण्यभवत्तत्सौत्रामण्यै सौत्रामणीत्वन्त्रायते मृत्योरात्मानमप पाप्मानः हते य एवमेतत्सौत्रामण्यै सौत्रामणीत्वं वेद त्रयस्त्रिंशद्दक्षिणा भवन्ति त्रयस्त्रिंशद्धि तन्देवता अभिषज्यँस्तस्मादाहुर्भैषजन्दक्षिणा इति ॥ १४ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ सुराक्रयादि ]

अप वा एतस्मात् । तेज इन्द्रियं वीर्यङ्क्रामति यः सोमोऽतिपवत ऊर्ध्वं वावाञ्चं वा ॥ १ ॥ तदाहुः । अन्नं वा एतद्ब्राह्मणस्य यत्सोमो न वै सोमेन ब्राह्मणः सोमवामी स यो वा अलम्भूत्यै सन्भूतिन्न प्राप्नोति यो वालम्पशुभ्यः सन्पशून्न विन्दते स सोमवामी पशवो हि सोम इति ॥ २ ॥ स एतमाश्विनन्धूम्रमालभेत ।

(१) 'ग' 'ज' पुस्तकयो "वा" इति ।

सारस्वतम्मेषमैन्द्रमृषभमश्विनौ वै देवानाम्भिषजौ ताभ्यामेवैनम्भिषज्यति सरस्वती भेषजन्तयैवास्मै भेषजङ्करोतीन्द्र ऽइन्द्रियं वीर्य्यन्तेनैवास्मिन्निन्द्रियं वीर्य्यन्दधाति ॥ ३ ॥ चक्षुर्वा ऽअश्विनौ तेजः । यदाश्विनो भवति चक्षुरेवास्मिँस्तत्तेजो दधात्यथो श्श्रोत्रꣳ समानꣳ हि चक्षुश्च श्श्रोत्रञ्च ॥४॥ प्राणः सरस्वती वीर्य्यम् । यत्सारस्वतो भवति प्प्राणमेवास्मिँस्तद्वीर्य्यन्दधात्यथो ऽअपानꣳ समानꣳ हि प्प्राणश्चापानश्च ॥५॥ [अर्धप्रपाठकः ६०] वागिन्द्रो बलम् । यदैन्द्रो भवति वाचमेवास्मिँस्तद्बलन्दधात्यथो मनः समानꣳ हि वाक्च मनश्च ॥ ६ ॥ आश्विनीरजाः । सारस्वतीरवीरैन्द्रीर्गाव ऽइत्याहुर्य्यदेते पशव ऽआलभ्यन्त ऽएताभिरेव देवताभिरेतान्पशूनवरुन्द्धे ॥ ७ ॥ वडवानुशिशुर्भवति । यश ऽएवैकशफमवरुन्द्ध ऽआरण्यानाम्पशूनाँल्लोमानि भवन्त्यारण्यानाम्पशूनामवरुद्ध्यै वृकलोमानि भवन्त्योज ऽएव जूतिमारण्यानाम्पशूनामवरुन्द्धे व्याघ्रलोमानि भवन्ति मन्युमेव राज्यमारण्यानाम्पशूनामवरुन्द्धे सिꣳहलोमानि भवन्ति सहः ऽएवेशामारण्यानाम्पशूनामवरुन्द्धे ॥ ८ ॥ व्रीहयश्च श्श्यामाकाश्च भवन्ति । गोधूमाश्च कुवलानि (A) चोपवाकाश्च[१] बदराणि (B) च यवाश्च कर्कन्धूनि च[२] शष्पाणि * च तोक्मानि † चोभयमेव

(A) स्थूलानि बदरीफलानि ।
(१) उपवाका इन्द्रयवा ।
(B) सूक्ष्मबदरीफलानि ।
(२) 'ग' 'ज पुस्तकयो 'च इति नास्ति ।
* विरूढा व्रीहय शष्पाणि । † विरूढा यवा तोक्म

ग्राम्यञ्चान्नमारण्यञ्चावरुन्द्धेऽथो ऽउभयेनैवान्नेन यथारूपमिन्द्रियं वीर्य्यमात्मन्धत्ते ॥ ९ ॥ सीसेन शष्पाणि क्रीणाति । ऊर्णाभिस्तोक्मानि सूत्रैर्व्रीहीनुभयोर्वा ऽएतद्रूपमयसश्च हिरण्यस्य च यत्सीसमुभयस्य सौत्रामणीष्टिश्च पशुबन्धश्चोभयस्यावरुद्ध्यै ॥ १० ॥ ऊर्णासूत्रेण वक्रीणाति । तद्वा ऽएतत्स्त्रीणाङ्कर्म्म यदूर्णासूत्रङ्कर्म्म वा ऽइन्द्रियं वीर्य्यन्तदेतदुत्सन्नथं स्त्रीषु तद्यदेवेन्द्रियं वीर्य्यमुत्सन्नथं स्त्रीषु तदेवावरुन्द्धे ॥ ११ ॥ तद्धैतदुन्येऽध्वर्य्यवः । सीसेन क्लीबाच्छष्पाणि वक्रीणन्ति तत्तदिति न वा ऽएष स्त्री न पुमान्यत्क्लीबो नेष्टिर्न पशुबन्धः सौत्रामणीति वदन्तस्तदु तथा न कुर्य्यादुभयं वै सौत्रामणीष्टिश्च पशुबन्धश्च व्व्यृद्धमु वा ऽएतन्मनुष्येषु यत्क्लीबो यज्ञमुख ऽएव ते यज्ञस्य व्व्यृद्धिन्दधति ये तथा कुर्वन्ति सोमविक्रयिण ऽएव वक्रीणीयात्सोमो वै सौत्रामणी यज्ञमुख ऽएव तत्सोमरूपङ्करोति यज्ञस्य समृद्ध्यै ॥ १२ ॥ शतातृण्णा कुम्भी भवति । बहुधेव हि स व्व्यप्रवदथो शतोन्मानो वै यज्ञो यज्ञमेवावरुन्द्धे सतम्भवति सदेवावरुन्द्धे चष्यम्भवत्यन्नाद्यस्यैवावरुद्ध्यै पवित्रम्भवति पुनन्ति ह्येनं वालो भवति पाप्मनो व्व्यावृत्त्यै सुवर्णः हिरण्यम्भवति रूपस्यैवावरुद्ध्यै शतमानम्भवति शतायुर्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं वीर्य्यमात्मन्धत्ते ॥ १३ ॥ आश्वत्थम्पात्रम्भवति । अपचितिमेवावरुन्द्ध ऽऔदुम्बरम्भवत्यूर्जमेवावरुन्द्धे नैयग्रोधम्भवति स्वधामेवा-

वरुन्द्धे स्थाल्यो भवन्ति पृथिव्या ऽएवान्नाद्यमवरुन्द्धे ॥ १४ ॥ पालाशान्युपशयानि भवन्ति। ब्रह्म वै पलाशो ब्रह्मणैव स्वर्गँल्लोकञ्जयत्यपाष्ठिहस्य पत्रे भवतस्त्विषिमेव राज्यं वयसामवरुन्द्धे षट्त्रिंशदेतानि भवन्ति षट्त्रिंशदक्षरा वै बृहती बार्हताः पशवो बृहत्यैवास्मै पशूनवरुन्द्धे ॥१५॥ तदाहुः। अन्यदेवत्याः पशवो भवन्त्यन्यदेवत्याः पुरोडाशा विलोमैतत्क्रियते कथमेतत्सलोम भवतीत्यैन्द्रः पशूनामुत्तमो भवत्यैन्द्रः पुरोडाशानाम्प्रथम ऽइन्द्रियं वै वीर्य्यमिन्द्र ऽइन्द्रियेणैवास्मा ऽइन्द्रियं वीर्य्यं सन्दधातीन्द्रियेणेन्द्रियं वीर्य्यमवरुन्द्धे ॥ १६ ॥ सावित्रः पुरोडाशो भवति। सवितृप्रसूततायै वारुणो भवति वरुणो वा ऽएतङ्गृह्णाति यः पाप्मना गृहीतो भवति वरुणेनैवैनं वरुण्याम्मुञ्चत्यन्त्यो भवत्यन्तत ऽएवैनं वरुणपाशात्प्रमुञ्चति ॥ १७ ॥ एकादशकपाल ऽऐन्द्रो भवति। एकादशाक्षरा वै त्रिष्टुविन्द्रियमु वै वीर्य्यन्त्रिष्टुविन्द्रियस्यैव वीर्य्यस्यावरुद्ध्यै ॥ १८ ॥ द्वादशकपालः सावित्रो भवति। द्वादश वै मासाः संवत्सरस्य संवत्सरं वा ऽअन्नाद्यमन्वायत्तः संवत्सरादेवास्मा ऽअन्नाद्यमवरुन्द्धे ॥ १९ ॥ दशकपालो वारुणो भवति। दशाक्षरा वै विराडन्नं विराड्वरुणोऽन्नपतिर्वरुणेनैवास्मा ऽअन्नमवरुन्द्धे मध्यत ऽएतैः पुरोडाशैः प्रचरति मध्यं वा ऽएतेषां योनिः स्वादेवैनान्योनेः प्रजनयति ॥ २० ॥ वडवानुशिशुर्दक्षिणा भवति। उभयं वा ऽएषा जनय-

स्यश्वश्चाश्वतरश्चोभयः सौत्रामणीष्टिश्च पशुबन्धश्चो-भयस्यैवावरुद्ध्यै ॥ २१ ॥

सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ सौत्रामणीग्रहग्रहणादि ]

इन्द्रस्येन्द्रियमन्नस्य रसम् । सोमस्य भक्षः सुरया-सुरो नमुचिरहरत्सोऽश्विनौ च सरस्वतीञ्चोपाधावच्छे-पानोऽस्मि नमुचये न त्वा दिवा न नक्तः हनानि न दण्डेन न धन्वना न पृथेन न मुष्टिना न शुष्केण नार्द्रेणाथ म ऽइदमहार्षीदिदम्म ऽआजिहीर्षथेति ॥ १ ॥ तेऽब्रुवन् । अस्तु नोऽत्राप्यथाहरामेति सह न ऽएतदथाहरतेत्यब्र-वीदिति ॥ २ ॥ तावश्विनौ च सरस्वती च । अपाम्फेनं वज्रमसिञ्चन्न शुष्को नार्द्र ऽइति तेनेन्द्रो नमुचेरासुरस्य व्युष्टायाः रात्रावनुदित ऽआदित्ये न दिवा न नक्त-मिति शिर ऽउदवासयत् ॥ ३ ॥ तस्मादेतदृषिणाभ्यनू-क्तम् । 'अपाम्फेनेन नमुचेः शिर ऽइन्द्रोदवर्त्तयः ॥ विश्वा यदजय स्पृध' ऽइति पाप्मा वै नमुचिः पाप्मानं हत्वा तद्द्विषन्तम्भ्रातृव्यः हत्वेन्द्रियं वीर्य्यमस्यावृङ्क्त स यो भ्रातृव्यवान्स्यात्स सौत्रामण्या यजेत पाप्मान-मेव तद्द्विषन्तम्भ्रातृव्यः हत्वेन्द्रियं वीर्य्यमस्य वृङ्क्ते तस्य शीर्षञ्छिन्ने लोहितमिश्रः सोमोऽतिष्ठत्तस्मादबी-भत्सन्त त ऽएतदन्धसोर्विपानमपश्यन्त्सोमो राजामृतः

(१) शु० य० सं० १९ ७१। (२) शु० य० सं० १९ ७२।

सुत, ऽइति तेनैनथं स्वदयित्वात्मन्नदधत ॥४॥ 'स्वाद्वीन्त्वा स्वादुने'ति सुराथं सन्दधाति । स्वदयत्येवैना'न्तीव्रान्तीव्रेणे'तीन्द्रियमेवास्मिन्दधात्य'मृताममृतेने'त्यायुरेवास्मिन्दधाति 'मधुमतीम्मधुमते'ति रसमेवास्यान्दधाति 'सृजामि सथं सोमेने'ति सोमरूपमेवैनाङ्करोति ॥ ५ ॥ 'सोमोऽस्यश्विभ्याम्पच्यस्व । सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वे'त्येता वा ऽएतन्देवता ऽअग्रे यज्ञथं समभरँस्ताभिरेवैनथं सम्भरत्यथो ऽएता ऽएवैतद्देवता भागधेयेन समर्द्धयत्यासुनोति सुत्यायै तिस्रो रात्रीर्वसति तिस्रो हि रात्रीः सोमः क्रीतो वसति सोमरूपमेवैनाङ्करोति ॥ ६ ॥ द्वे वेदी * भवतः । द्वौ वाव लोकावित्याहुर्देवलोकश्चैव पितृलोकश्चेत्युत्तरान्या भवति दक्षिणान्योत्तरो वै देवलोको दक्षिणः पितृलोक ऽउत्तरयैव देवलोकमवरुन्द्धे दक्षिणया पितृलोकम् ॥ ७ ॥ पयश्च सुरा च भवतः । सोमो वै पयोऽन्नथं सुरा पयसैव सोमपीथमवरुन्द्धे सुरयान्नाद्यं क्षत्रं वै पयो विट् सुरा सुराम्पूत्वा पयः पुनाति विश ऽएव तत्क्षत्रञ्जनयति विशो हि क्षत्रञ्जायते ॥ ८ ॥ 'वायोः पूतः पवित्रेण । प्रत्यङ्क्सोमो ऽअतिद्रुतः, ऽइति सोमातिपूतस्य † पुनाति यथारूपमेवैनम्पुनाती'न्द्रस्य

(१) शु० य० सं० १९. १ । (२) शु० य० सं० १९. १ । (३) शु० य० सं० १९. १ । (४) शु० य० सं० १९. १ । (५) शु० य० सं० १९. १ । (६) शु० य० सं० १९. १ ।

* का० श्रौ० सू० १९. २ १ ।

(७) शु० य० सं० १९ ३ ।

† मुखेतरच्छिद्रसोमवामिन इत्यर्थः । (८) शु० य० सं० १९. ३ ।

युज्यः सखे॑ति यद्देवास्य तेनेन्द्रियं वीर्य्यमतिक्रान्तम्भवति तदस्मिन्न्पुनर्दधाति ॥ ९ ॥ 'वायोः पूतः पवित्रेण। प्राङ्क्सोमो ऽअतिद्रुत' ऽइति सोमवामिनः पुनाति यथारूपमेवैनम्पुनाती'न्द्रस्य युज्यः सखे॑ति यद्देवास्य तेनेन्द्रियं वीर्य्यमतिक्रान्तम्भवति तदस्मिन्न्पुनर्दधाति ॥ १० ॥ 'पुनाति ते परिस्रुत'मिति। समृद्धिकामस्य पुनाति समृद्ध्यै 'सोमं सूर्य्यस्य दुहिते'ति श्रद्धा वै सूर्य्यस्य दुहिता श्रद्धयैष सोमो भवति श्रद्धयैवैनं सोमङ्करोति 'वारेण शश्वता तने'ति वालेन ह्येषा पूयते ॥ ११ ॥ 'ब्रह्म क्षत्रम्पवत' ऽइति पयः पुनाति। ब्रह्मण ऽएव तत्क्षत्रञ्जनयति ब्रह्मणो हि क्षत्रञ्जायते 'तेज ऽइन्द्रिय'मिति तेज ऽएवास्मिन्निन्द्रियं वीर्य्यन्दधाति 'सुरया सोम' ऽइति सुरया हि सोमः 'सुत ऽआसुत' ऽइत्यासुताद्धि सूयते 'मदाये'ति मदाय वाव सोमो मदाय सुरोभाभ्यामेव सोममदुञ्च सुरामदञ्चावरुन्द्धे 'शुक्रेण देव देवताः पिपृग्धी'ति शुक्रेण देव देवताः प्रीणीहीत्येवैतदाह 'रसेनान्नं यजमानाय धेही'ति रसमेवान्नं यजमाने दधाति पूर्वे पयोग्रहा गृह्यन्तेऽपरे सुराग्रहा विशन्तत्क्षत्रस्यानुवर्त्मानङ्करोति ॥ १२ ॥ 'कुविदङ्ग यवमन्तो यवञ्चि'दिति। पयोग्रहान्गृह्णाति * सोमांशवो वै यवाः सोमः पयः

(१) शु० य० सं० १९.३। (२) शु० य० सं० १९.३। (३) शु० य० सं० १९.४। (४) शु० य० सं० १९.४। (५) शु० य० सं० १९.४। (६-११) शु० य० सं० १९.५। (१२) शु० य० सं० १९.६।

* का० श्रौ० सू० १९.२.१४।

सोमेनैवैनꣳ सोमङ्करोत्येकया गृह्णात्येकधैव यजमाने श्श्रियन्दधाति श्रीर्हि पयꣳ ॥ १३ ॥ 'नाना हि वान्देवहितꣳ सदस्कृत'मिति। सुराग्रहाङ्गृह्णाति नाना हि सोमश्च सुरा च देवहितमिति देवहिते ह्येते नाना सदस्कृतमिति द्वे हि वेदी भवतो 'मा सꣳसृक्षाथाम्परमे व्व्योम'न्निति पाप्मनैवैनं व्व्यावर्त्तयति 'सुरा त्वमसि शुष्मिणी'ति सुरामेव सुराङ्करोति 'सोम ऽएष'ऽइति सोममेव सोमङ्करोति 'मा मा हिꣳसीꣳ स्वां य्योनिमाविशन्ती'ति यथायोन्येवैनां व्व्यावर्त्तयत्यात्मनोऽहिꣳसाया ऽएकया गृह्णात्येकधैव यजमाने यशो दधाति यशो हि सुरा ॥ १४ ॥ क्षत्रं वै पयोग्रहाꣳ विट् सुराग्रहा यदव्व्यतिपक्तान्गृह्णीयाद्विशं क्षत्राद्व्यवच्छिन्द्यात्क्षत्रं विशꣳ पापवस्यसञ्च्यायज्ञस्य व्व्यृद्धिं व्व्यतिपक्तान्गृह्णाति विशमेव क्षत्रेण सन्दधाति क्षत्रं विशा पापवस्यसस्य व्व्यावृत्त्यै यज्ञस्य समृद्ध्यै ॥ १५ ॥ प्राणा वै पयोग्रहाꣳ। शरीरꣳ सुराग्रहा यदव्व्यतिपक्तान्गृह्णीयाच्छरीरम्प्राणेभ्यो व्व्यवच्छिन्द्यात्प्राणाञ्छरीरात्प्रमायुको यजमानꣳ स्याद्व्यतिपक्तान्गृह्णाति शरीरमेव प्राणैꣳ सन्दधाति प्प्राणाञ्छरीरेणाथो ऽआयुरेवास्मिन्दधाति तस्मात्सौत्रामण्येजानꣳ सर्वमायुरेत्यथो य ऽएवमेतद्वेद ॥ १६ ॥ सोमो वै पयोग्रहाꣳ। अन्नꣳ सुराग्रहा यत्पयोग्रहाश्च सुराग्रहाश्च गृह्यन्ते सोमपीथञ्चैवान्नाद्यञ्चावरुन्द्धे

---

(१) शु॰ य॰ सं॰ १९ ७। (२) शु॰ य॰ सं॰ १९ ७। (३) शु॰ य॰ सं॰ १९, ७। (४) शु॰ य॰ सं॰ १९ ७। (५) शु॰ य॰ सं॰ १९ ७।

॥ १७ ॥ पशवो वै पयोग्रहाः । अन्नꣳ सुराग्रहा यत्पयोग्रहाश्च सुराग्रहाश्च गृह्यन्ते पशूꣳश्चैवान्नाद्यञ्चावरुन्द्धे ॥ १८ ॥ ग्राम्या वै पशवः पयोग्रहाः । आरण्याः सुराग्रहा यत्पयोग्रहाश्च सुराग्रहाश्च गृह्यन्ते ग्राम्याꣳश्चैव पशूनारण्याꣳश्चावरुन्द्धे ग्राम्येण चान्नेनारण्येन च पयोग्रहाञ्छ्रीणाति तस्माद्ग्राम्याणाम्पशूनाङ्ग्राम्यञ्चैवान्नाद्यमारण्यञ्चावरुद्धम् ॥ १९ ॥ तदाहुः । एतस्यै वा ऽएतद्घल्यायै देवतायै रूपं यदेते घोरा ऽआरण्याः पशवो यदेतेषाम्पशूनाँल्लोमभिः पयोग्रहाञ्छ्रीणीयाद्रुद्रस्यास्ये पशूनपिदध्यादपशुर्यजमानः स्याद्यन्न श्रीणीयादनवरुद्धा ऽअस्य पशवः स्यू रुद्रो हि पशूनामीष्ट ऽइति सुराग्रहानेवैतेषाम्पशूनाँल्लोमभिः श्रीणाति सुरायामेव तद्रौद्रन्दधाति तस्मात्सुराम्पीत्वा रौद्रमना ऽअथो ऽआरण्येष्वेव पशुषु रुद्रस्य हेतिन्दधाति ग्राम्याणाम्पशूनामहिꣳसाया ऽअवरुद्धा ऽअस्य पशवो भवन्ति न रुद्रस्यास्ये पशूनपिदधाति ॥ २० ॥ '[1]यो व्याघ्रं विषूचिका । उभौ वृकञ्च रक्षति ॥ श्येनम्पतत्रिणꣳ सिꣳहꣳ सेमम्पात्वꣳहसः' ॥ '[2]यदापिपेष मातरम्पुत्रः प्रमुदितो धयन् ॥ एतत्तदग्ने ऽअनृणो भवाम्यहतौ पितरौ मये'ति ॥ २१ ॥ अद्ध्वर्युश्च प्रतिप्रस्थाता च । जघनेन वेदिम्प्राञ्चमासीनं यजमानꣳ श्येनपत्राभ्यां मूर्द्धञ्चावाञ्चञ्च पावयतः प्राणोदानयोस्तद्रूपम्प्राणोदाना-

(१) शु॰ य॰ सं॰ १९ १०। (२) शु॰ य॰ सं॰ १९. ११।

चेवावरुन्ध ऽऊर्द्ध्वश्च ह्ययमर्वाङ् च प्राण ऽआत्मानमनुसञ्चरति 'सम्पृच स्थ सम्मा भद्रेण पृङ्क्ते'ति पयोग्रहान्त्संमृशति श्रियैवेनं यशसा समर्द्धयति 'विपृच स्थ वि मा पाप्मना पृङ्क्ते'ति सुराग्रहान्पाप्मनैवैनं व्यावर्त्तयति ॥ २२ ॥

सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥



[ ग्रहभक्षणसुरापावनादि ]

इन्द्रस्य वै यत्र । इन्द्रियाणि वीर्याणि व्युदक्रामँस्तानि देवा ऽएतेनैव यज्ञेन पुनः समदधुर्य्यत्पयोग्रहाश्च सुराग्रहाश्च गृह्यन्त ऽइन्द्रियाण्येवास्मिँस्तद्वीर्य्याणि पुनः सन्दधत्युत्तरेऽग्नौ पयोग्रहाञ्जुह्वति शुक्रेणैवैनन्तत्सोमपीथेन समर्द्धयन्ति ॥ १ ॥ स जुहोति 'सुरावन्तम्बर्हिषदꣳ सुवीर'मिति सुरावान्वा ऽएष बर्हिषद्यज्ञो यत्सौत्रामणी बर्हिषैवैनं यज्ञेन समर्द्धयति 'यज्ञꣳ हिन्वन्ति महिषा नमोभि'रित्यृत्विजो वै महिषा यज्ञो नम ऽऋत्विग्भिरेव यज्ञꣳ समर्द्धयति यज्ञेन यजमान'न्दधानाः सोम'मिति सोमपीथमेवास्मिन्दधति 'दिवि देवतासु'ति दिव्येवैनन्देवतासु दधति 'मदेमेन्द्र'मिति मदाय वाव सोमो मदाय सुरोभावेव सोममदश्च सुरामदश्चावरुन्द्धे 'यजमानाः

(३) शु० य० सं० १९. ३१। (४) शु० य० सं० १९ ३१। (५) शु० य० सं० १९ ३२। (६) शु० य० सं० १९. ३२। (७) शु० य० सं० १९. ३२। (८) शु० य० सं० १९. ३२। (९) शु० य० सं० १९ ३२। (१०) शु० य० सं० १९. ३२।

स्वर्का' ऽइत्यर्को * वै देवानामन्नमन्नं ग्यज्ञो यज्ञेनैवैनम-न्नाद्येन समर्द्धयति हुत्वा भक्षयन्ति समृद्धमेवास्य तद्वर्द्ध-यन्ति ॥ २ ॥ स भक्षयति । '[1]यमश्विना नमुचेरासुरा-दधी'त्यश्विनौ ह्येतन्नमुचेरध्याहरतां '[2]सरस्वत्यसुनोदि-न्द्रियाये'ति सरस्वती ह्येतमसुनोदिन्द्रियाये'[3]मन्तह शुक्र-म्मधुमन्तमिन्दु'मिति शुक्रो वा ऽएष मधुमानिन्दुर्यत्सोमः '[4]सोमं राजानमिह भक्षयामी'ति सोम ऽएवास्य राजा भक्षितो भवति दक्षिणेऽग्नौ सुराग्रहाञ्जुहोति पाप्मनैवैन-न्तद्व्यावर्त्तयन्ति ॥ ३ ॥ स जुहोति । '[5]यस्ते रसः सम्भृत ऽओषधीष्वि'त्यपां वा ऽएष ऽओषधीनां रसो यत्सुरापांश्चैवैनमेतदोषधीनाञ्च रसेन समर्द्धयति '[6]सोमस्य शुष्मः सुरया सुतस्ये'ति य ऽएव सोमे शुष्मो यः सुरायान्तमेवावरुन्द्धे '[7]तेन जिन्व यजमानम्मदेने'ति तेन प्रीणीहि यजमानम्मदेनेत्येवैतदाह '[8]सरस्वतीमश्विनाविन्द्रमग्नि'मिति देवताभिरेव यज्ञं समर्द्धयति देवताभिर्यज्ञेन यजमानं हुत्वा भक्षयन्ति व्यृद्धमेवास्य तत्समर्द्धयन्ति ॥४॥ स भक्षयति । '[9]यदत्र रिप्तं रसिनः सुतस्ये'ति सुता-सुतयोरेव रसमवरुन्द्धे '[10]यदिन्द्रो ऽअपिबच्छचीभि'रितीन्द्रो ह्येतदपिबच्छचीभिर'[11]हन्तदस्य मनसा शिवेने'त्यशिव ऽइव वा

* 'अर्कमन्नं भवत्यर्चति भूतानि' ( निरु० नै० का० ५. ४ )।

(१) शु० य० सं० १९. ३४। (२) शु० य० सं० १९. ३४। (३) शु० य० सं० १९. ३४। (४) शु० य० सं० १९. ३४। (५) शु० य० सं० १९. ३५।

( ६ ) 'सुराम्यवन०' इति 'क' 'ज' पुस्तकयो पाठः।

( ७ ) शु० य० सं० १९. ३२।

( ८ ) शु० य० सं० १९. ३२। ( ९ ) शु० य० सं० १९ ३५। ( १० ) शु० य० सं० १९. ३५। ( ११ ) शु० य० सं० १९ ३५। ( १२ ) शु० य० सं० १९. ३५।

ऽएष भक्षो यत्सुरा ब्राह्मणस्य शिवमेवैनमेतत्कृत्वात्मन्धत्ते 'सोमँ राजानमिह भक्षयामी'ति सोम ऽएवास्य राजा भक्षितो भवति ॥ ५ ॥ तद्धैतदन्ये ऽद्ध्वर्य्यवः' । राजन्यं वा वैश्यं वा परिक्रीणन्ति स ऽएतद्भक्षयिष्यतीति तदु तथा न कुर्य्याद्यो ह वा ऽएतद्भक्षयति तस्य हैव पितॄन्पितामहानेव सोमपीथोऽन्वेति दक्षिणस्यैवाग्नेस्त्रीनङ्गारान्निर्वृत्य बहिष्परिधि तदेताभिर्व्याहृतिभिर्जुहुयात् ॥ ६ ॥ 'पितृभ्यः स्वधायिभ्यः स्वधा नम' ऽइति । पितॄनेव पितृलोके स्वधायान्दधाति 'पितामहेभ्यः स्वधायिभ्यः 'स्वधा नम' ऽइति पितामहानेव पितामहलोके स्वधायान्दधाति 'प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नम' ऽइति प्रपितामहानेव प्रपितामहलोके स्वधायान्दधाति ॥ ७ ॥ अथ ऽआनीय निनयति । 'अक्षन्पितर' ऽइत्यन्नाद्यमेवैषु दधात्य'मीमदन्त पितर' ऽइति मदयत्येवैनान्'तीतृपन्त पितर' ऽइति तर्प्पयत्येवैना'न्पितरः शुन्धद्ध्व'मित्यनुपूर्वमेवैनान्त्सर्वान्पावयति पवित्रं वै सौत्रामणी ॥ ८ ॥ त्रिभिः पवित्रैः पावयन्ति । त्रयो वा ऽइमे लोका ऽएभिरेवैनँल्लोकैः पुनन्ति ॥ ९ ॥ पावमानीभिः पावयन्ति । पवित्रं वै पावमान्यः पवित्रेणैवैनम्पुनन्ति ॥ १० ॥ तिसृभिस्तिसृभिः पावयन्ति । त्रयो वै प्राणाः

' (१) शु० य० सं० १९. ३५ । (२) शु० य० सं० १९. ३६ । (३) शु० य० सं० १९. ३६ । (४) शु० य० सं० १९. ३६ । (५) शु० य० सं० १९. ३६ । (६) शु० य० सं० १९. ३६ । (७) शु० य० सं० १९. ३६ । (८) शु० य० सं० १९. ३६ ।

प्प्राण ऽउदानो व्व्यानस्तैरेवैनम्पुनन्ति ॥ ११ ॥ नवभिः पावयन्ति । नव वै प्प्राणा प्प्राणैरेवैनम्पुनन्ति प्प्राणेषु पुनः पूतम्प्रतिष्ठापयन्ति ॥ १२ ॥ पवित्रेण पावयन्ति । अजाविकस्य वा ऽएतद्रूपं य्यत्पवित्रमजाविकेनैवैनम्पुनन्ति ॥ १३ ॥ वालेन पावयन्ति । गोऽश्वस्य वा ऽएतद्रूपं य्यद्वालो गोऽश्वेनैवैनम्पुनन्ति ॥ १४ ॥ हिरण्मयेन पावयन्ति । देवानां वा ऽएतद्रूपं य्यद्धिरण्यन्देवानामेवैनꣳ रूपेण पुनन्ति ॥ १५ ॥ सुरया पावयन्ति । सुरा हि पूता पूतयैवैनम्पुनन्ति तद्यथा सुरा पूयमाना वल्कसेन विविच्यत ऽएवमेवैतद्यजमानः सर्वस्मात्पाप्मनो निर्मुच्यते य ऽएवं विद्वान्त्सौत्रामण्या यजते यो वैतदेवं वेद ॥ १६ ॥ तदाहुः । याजयितव्यः सौत्रामण्या३ न याजयितव्या३मित्युनन्तरायꣳ ह्येवास्य सर्वम्पाप्मानमपघ्नन्तीति तदु ह स्माह रेवोत्तरा स्थपतिः पाटवश्चाक्रोऽपि प्प्रदानम्प्रदाय याजयितव्यमेवात्मा वै यज्ञस्य यजमानोऽङ्गान्यृत्विजो यत्र वा ऽआत्मा पूतः पूतानि तत्राङ्गान्युभय ऽएव पुनत ऽउभये पाप्मानमपघ्नते । तस्मादपि प्प्रदानम्प्रदाय याजयितव्यमेवेति ॥ १७ ॥ [1]पितृलोकं वा ऽएतेऽन्ववयन्ति । ये दक्षिणेऽग्नौ चरन्त्याज्याहुतिं जुहोति यज्ञो वा ऽआज्यं य्यज्ञादेव यज्ञे प्प्रतितिष्ठन्ति ॥ १८ ॥ स जुहोति । [2]'ये समानाः समनसः पितरो यमराज्ये ॥ तेषाँल्लोकः स्वधा नमो यज्ञो देवेषु कल्पता'मिति

(१) "याजयितव्या३" इति 'ग' 'ज' पुस्तकयोः । (२) यु० सं० १९. ४५ ।

पितॄनेव यमे परिददात्यथो पितृलोकमेव जयति सर्वे यज्ञोपवीतानि कृत्वोत्तरमग्निमुपसमायन्त्ययं वै लोक ऽउत्तरोऽग्निरस्मिन्नेव लोके प्रतितिष्ठन्त्याज्याहुतिञ्जुहोति यज्ञो वा ऽआज्यं यज्ञादेव यज्ञे प्रतितिष्ठन्ति ॥ १९ ॥ स जुहोति । 'ये समानाः समनसो जीवा जीवेषु मामकाः ॥ तेषाꣳ श्रीर्मयि कल्पतामस्मिँल्लोके शतꣳ समा' ऽइति स्वानामेव श्रियमवरुन्द्धेऽथो ज्योग्जीवातुमेवैषु दधाति पयः समन्वारब्धेषु जुहोति प्राणो वा ऽअन्नम्पयः प्राण ऽएवान्नाद्येऽन्ततः प्रतितिष्ठन्ति ॥२०॥ स जुहोति । 'द्वे सृती ऽअशृणवम्पितॄणामह'मिति द्वे वाव सृती ऽइत्याहुर्देवानाञ्चैव पितॄणाञ्चेति 'ताभ्यामिदं विश्वमेजत्समेती'ति ताभ्याꣳ हीदꣳ सर्वमेजत्समेति 'यदन्तरा पितरम्मातरञ्चे'त्यसौ वै पितेयम्माताताभ्यामेव पितॄन्देवलोकमपिनयत्येकाकी हुतोच्छिष्टम्भक्षयत्येकधैव श्रियमात्मन्धत्ते श्रीर्हि पयः ॥ २१ ॥ स भक्षयति । 'इदꣳ हविः प्रजननम्मे ऽअस्त्वि'ति प्रजननꣳ हि यदि पयो यदि सोमो 'दशवीर'मिति प्राणा वै दश वीराः प्राणानेवात्मन्धत्ते 'सर्वगण'मित्यङ्गानि वै सर्वे गणा ऽअङ्गान्येवात्मन्धत्ते 'स्वस्तय ऽआत्मसनी'त्यात्मानमेव सनोति

(१) शु० य० सं० १९. ४६। (२) शु० य० सं० १९. ४७। (३) शु० य० सं० १९. ४७। (४) शु० य० सं० १९ ४७। (५) शु० य० सं० १९. ४८। (६) शु० य० सं० १९ ४८। (७) शु० य० सं० १९. ४८। (८) शु० य० सं० १९. ४८। (९) शु० य० सं० १९. ४८।

'प्रजासनी'ति प्रजामेव सनोति 'पशुसनी'ति पशूनेव सनोति 'लोकसनी'ति लोकाय वै यजते तमेव जयत्य'भय-सनी'ति स्वर्गो वै लोकोऽभयꣳ स्वर्ग एव लोकेऽन्ततः प्रतितिष्ठत्य'ग्निः प्रजाम्बहुलाम्मे करोत्वन्नम्पयो रेतो ऽअस्मासु धत्ते'ति तद्य एवैनमेते याजयन्ति तानेतदाहै-तन्मयि सर्वन्धत्तेति हिरण्येन मार्ज्जयन्तेऽमृतं वै हिरण्य-ममृत एवान्ततः प्रतितिष्ठन्ति ॥ २२ ॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥

कण्डिकासंख्या १२० ॥



[ सुरानिर्माणादि ]

प्रजापतिर्यज्ञमसृजत । तमाहरत्तेनायजत तेनेष्ट्वा रिरिचान ऽइवामन्यत स ऽएतं त्र्यक्षक्रतुमपश्यत्सौत्रा-मणीन्तेनायजत ततो वै स पुनराप्यायत रिच्यत ऽइव वा ऽएष यः सोमेन यजते वीव ह्यस्य वित्तं वेदो हरन्ति ॥ १ ॥ सोमेनेष्ट्वा सौत्रामण्या यजेत । यथा धेनुर्दुग्धा पुनराप्यायेतैवꣳ हैव पुनराप्यायत ऽआ प्रजया पशुभिः प्यायते प्रत्यस्मिँल्लोके तिष्ठत्यभि स्वर्गँल्लोकञ्जयति य ऽएवं विद्वान्त्सौत्रामण्या यजते यो वैतदेवं वेद ॥ २ ॥ तद्वैतत्पप्रच्छ । सुष्णा सार्द्धयः प्रातीदर्शमैभावतं त्र्यक्ष

(१) शु० य० सं० १९.४८। (२) शु० य० सं० १९.४८। (३) शु० य० सं० १९.४८। (४) शु० य० सं० १९.४८। (५) शु० य० सं० १९.४८।

दीक्षयेव दीक्षते न सोमाꣳशव ऽइव न्युप्यन्तेऽथ कथꣳ सौत्रामणी सोमयज्ञो भवतीति ॥ ३ ॥ स होवाच । शिरो वा ऽएतद्यज्ञस्य यद्व्रतमात्मा दीक्षैतत्खलु वै व्रतस्य रूपं यत्सत्यमेतद्दीक्षायै यच्छ्रद्धा मनो यजमानस्य रूपं वाग्यज्ञस्येति ॥ ४ ॥ स यद्वाचा व्रतमुपैति । आत्मन्येवैतद्यज्ञस्य शिरः प्रतिदधाति सत्यꣳ श्रद्धायान्दधाति यजमानं यज्ञे ॥ ५ ॥ तस्मादेतस्य यज्ञस्य । व्रतमेव दीक्षा वृषो वै व्रतं योषा दीक्षा वृषा सत्यं योषा श्रद्धा वृषा मनो योषा वाग्वृषा पत्न्यै यजमानस्तस्माद्यत्रैव पतिस्तत्र जायाथो यज्ञमुख ऽएव तन्मिथुनानि करोति प्रजात्यै ॥ ६ ॥ एते खलु वा ऽएतस्य यज्ञस्य । सोमाꣳशव ऽइत्याहुर्यच्छष्पाणि तोक्मानि लाजा ऽइति ॥ ७ ॥ प्रातःसवनस्यैतद्रूपम् । यच्छष्पाण्ययं वै लोकः प्रातःसवनꣳ स ऽआश्विन ऽआश्विनेन पयसा प्रथमाꣳ रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण प्रातःसवनेन समर्द्धयति ॥ ८ ॥ माध्यन्दिनस्यैतत्सवनस्य रूपम् । यत्तोक्मान्यन्तरिक्षं वै माध्यन्दिनꣳ सवनन्तत्सारस्वतꣳ सारस्वतेन पयसा द्वितीयाꣳ रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण माध्यन्दिनेन सवनेन समर्द्धयति ॥ ९ ॥ तृतीयसवनस्यैतद्रूपम् । यल्लाजा द्यौर्वै तृतीयसवनꣳ सैन्द्रयैन्द्रेण पयसा तृतीयाꣳ रात्रिम्परिषिञ्चति स्वेनैवैनमेतल्लोकेन स्वया देवतया स्वेन रूपेण तृतीयसवनेन समर्द्धयति ॥ १० ॥

एकस्यै दुग्धेन । प्रथमाᳬ रात्रिम्परिषिञ्चति द्वयोर्दुग्धेन द्वितीयान्तिसृणान्दुग्धेन तृतीयां यथारूपमेवैनं यथा-देवतᳪ सवनैᳫ समर्द्धयति ॥ ११ ॥ 'परीतो षिञ्चता सुत'-मिति परिषिञ्चति सुत्यायै 'सोमो य उत्तमᳪ हवि'-रित्युत्तमं वा एतद्धविर्यत्सोम उत्तममेवैनᳪ हविष्क-रोति 'दधन्वा यो नर्यो अप्स्वन्तरे'त्यद्भिश्च ह्येषो-न्तरेण च सूयते 'सुषाव सोममद्रिभि'रित्यद्रिभिर्वै सोमᳫ सूयतेऽद्रिभिरेवैनᳪ सुनोति सोमसुत्यायै ॥ १२ ॥ तदाहुᳫ । उभयोर्वा एतद्रूपᳪ सुतस्य चासुतस्य च यत्सौत्रामण्यय-षामेष ओषधीनाᳬ रसो यत्पयस्तत्सुतस्य रूपमन्नस्यै-ष रसो यत्परिस्रुत्तदासुतस्य रूपमुभाभ्यामेवैनᳪ सवा-भ्याᳬ सुनोत्युभाभ्याᳬ सवाभ्यामवरुन्द्धे ॥ १३ ॥ तदाहुᳫ । यद्ग्रावभिᳫ सोमᳫ सूयतेऽथ कथᳪ सौत्राम-णीति ऐषाग्रीभिरिति ब्रूयाद्बार्हता वै ऐषा बार्हता ग्रावाणो ग्रावभिर्वै सोमᳫ सूयते ग्रावभिरेवैनᳪ सुनोति सोमसुत्यायै ॥ १४ ॥ सर्वे पयस्वन्तो भवन्ति । पयसा हि सूयते सर्वे सोमवन्तो भवन्ति सोमरूपतायै , सर्वे परिस्रुन्मन्तो भवन्ति परिस्रुता हि सूयते सर्वे घृतवन्तो भवन्त्येतद्वै प्रत्यक्षाद्यज्ञरूपं यद्घृतम्प्रत्यक्षादेवैनं यज्ञरू-पङ्करोति सर्वे मधुमन्तो भवन्त्येतद्वै प्रत्यक्षात्सोमरूपं यन्मधु प्रत्यक्षादेवैनᳪ सोमरूपङ्करोति ॥ १५ ॥ *

(१) शु० य० सं० १९.२। (२) शु० य० सं० १९.२। (३) शु० य० सं० १९.२। (४) शु० य० सं० १९.७।

* [illegible] ११००।

सर्वे ऽआश्विना भवन्ति । भैषज्याय सर्वे सारस्वता ऽअन्नाद्यस्यैवावरुद्ध्यै सर्व ऽऐन्द्रा इन्द्रियस्यैव वीर्य्यस्यावरुद्ध्यै ॥ १६ ॥ यद्वेव सर्वे ऽआश्विना भवन्ति । सर्वे सारस्वताः सर्व ऽऐन्द्रा ऽएता वा ऽएतन्देवता ऽअग्रे यज्ञः समभरँस्ताभिरेवैनः सम्भरत्यथो ऽएता एवैतद्देवता भागधेयेन समर्द्धयति ॥ १७ ॥ सन्तता याज्यापुरोऽनुवाक्या भवन्ति । समानदेवत्याः प्रजानाᳬं सन्तत्या ऽअव्यवच्छेदाय सर्वा ऽआश्विन्न्यो भवन्ति सर्वाः सारस्वत्यः सर्वा ऽऐन्द्र्यः समानी बन्धुता ॥ १८ ॥ अनुष्टुभ ऽआप्रियो भवन्ति । वाग्वा ऽअनुष्टुब्वाचो वै सोमः सूयते वाचैवैनः सुनोति सोमसुत्यायै सर्वा ऽआश्विन्न्यो भवन्ति सर्वाः सारस्वत्यः सर्वा ऽऐन्द्र्यः समानी बन्धुता ॥ १९ ॥ जगता ऽअनुप्रैषा भवन्ति । इयं वै जगत्यनया वै सोमः सूयतेऽनयैवैनः सुनोति सोमसुत्यायै सर्वे ऽआश्विना भवन्ति सर्वे सारस्वताः सर्व ऽऐन्द्राः समानी बन्धुता ॥ २० ॥ स वा ऽएष प्रत्यक्षात्सोमयज्ञ ऽएव यत्सौत्रामणी तं य्यद्येकाकी यजमानो भक्षयेदिष्टिरेव स्यात्पशुबन्धो वा सर्व ऽऋत्विजो भक्षयन्ति सर्वे वा ऽऋत्विजः सोमम्भक्षयन्ति सोमरूपतायै ॥ २१ ॥ आश्विनमद्ध्वर्य्यवो भक्षयन्ति । अश्विनौ वै देवानामद्ध्वर्य्यू स्वमेवैतद्भागधेयᳬं स्व ऽआयतने भक्षयन्ति ॥ २२ ॥ सारस्वतᳬ होता ब्रह्मा मैत्रावरुणः । वाग्वै यज्ञस्य होता हृदयम्ब्रह्मा मनो मैत्रावरुणः स्वमेवैतद्भागधेयᳬं स्व

ऽआयतने भक्षयन्ति ॥ २३ ॥ ऐन्द्रं स्यजमानो भक्ष-
यति । ऐन्द्रो वा ऽएष यज्ञो यत्सौत्रामणीन्द्रायतन ऽएष
ऽएतर्हि यो यजते स्वमेवैतद्भागधेयᳪं स्व ऽआयतने भक्षयति
॥२४॥ चक्षुर्वा ऽआश्विनो ग्यहः। प्याणः सारस्वतो वागैन्द्र
ऽआश्विनात्सारस्वतेऽवनयति चक्षुरेवास्य तत्प्राणैः
सन्दधाति सारस्वतादैन्द्रे प्याणानेवास्य तद्वाचा सन्द-
धात्यथो प्याणानेवास्य तद्वाचि प्यतिष्ठापयति तस्मा-
त्सर्वे प्याणा वाचि प्यतिष्ठिताः ॥२५॥ त्रय आश्विनम्भ-
क्षयन्ति । अध्वर्युः प्यतिप्रस्थाताग्नीध्रस्त्रिवृद्वा ऽइदञ्चक्षुः
शुक्लं कृष्णङ्कनीनका यथारूपमेवास्मिँश्चक्षुर्दधाति ॥२६॥
त्रयः सारस्वतम् । होता ब्रह्मा मैत्रावरुणस्त्रेधाविहितो
वा ऽअयम्प्राणः प्याण ऽउदानो व्यान ऽइति यथारूप-
मेवास्मिन्प्राणन्दधाति ॥ २७ ॥ एकाक्ष्यैन्द्रं स्यजमानो
भक्षयति । एकधा वा ऽएषा प्याणानाᳪं श्रीर्यद्वागेकधैव
वाचᳪं श्रियमात्मन्धत्ते तस्मात्सौत्रामण्ययेजान ऽएकधा
स्वानाᳪं श्रेष्ठो भवत्यथो य ऽएवमेतद्वेद ॥ २८ ॥ ऋतवो
वा ऽऋत्विजः मासा भक्षाः षडृत्विजो भक्षयन्ति षड्वा
ऽऋतव ऽऋत्विग्भिरेवऽर्त्तूनवरुन्द्धे ॥ २९ ॥ द्वादश भक्षा
भवन्ति । द्वादश वै[2] मासा भक्षैरेव मासानवरुन्द्धे पुनः पुनर-
भिनिवर्त्तमृत्विजो भक्षयन्ति तस्मादृतवश्च मासाश्चा-
न्योऽन्यमभिनिवर्त्तन्ते ॥ ३० ॥ त्रयोदशं स्यजमानो भक्ष-
यति । यो ह वा ऽएष त्रयोदशो मास ऽएष ऽएव प्रत्य-

(१) 'ग' 'ज' पुस्तकयो 'षा' इति । ( २ ) ग 'ज' पुस्तकयो ' वै ' इति नास्ति ।

क्षात्सँवत्सर ऽएतमेवाप्त्वावरुन्द्धे स वा ऽएष सँवत्सर ऽएव यत्सौत्रामणी तेन सर्वञ्जयति सर्वमवरुन्द्धे ॥ ३१ ॥ त्रयः पशवो भवन्ति। त्रयो वा ऽइमे लोका ऽइमानेव तैर्ल्लोकानवरुन्द्ध ऽइममेव लोकमाश्विनेनान्तरिक्षꣳ सारस्वतेन दिवमैन्द्रेण यथारूपमेव यथादेवतमिमाँल्लोकाञ्जयति चाव च रुन्द्धे ॥ ३२ ॥ त्रयः पुरोडाशा भवन्ति। त्रयो वा ऽऋतव ऽऋतूनेवं तैरवरुन्द्धे ग्रीष्ममेवैन्द्रेण वर्षाः सावित्रेण हेमन्तं वारुणेन यथारूपमेव यथादेवतमृतूञ्जयति चाव च रुन्द्धे ॥ ३३ ॥ षड्ग्रहा भवन्ति। षड्वा ऽऋतव ऽऋतूनेवं तैरवरुन्द्धे वसन्तग्रीष्मावेवाश्विनाभ्यां वर्षाशरदौ सारस्वताभ्याꣳ हेमन्तशिशिरावैन्द्राभ्यां यथारूपमेव यथादेवतमृतूञ्जयति चाव च रुन्द्धे ॥ ३४ ॥ सन्तता याज्यापुरोऽनुवाक्या भवन्ति। समानदेवत्या ऽऋतूनाꣳ सन्तत्या ऽअव्यवच्छेदाय सर्वाः पुरोऽनुवाक्या भवन्ति सर्वा याज्यास्तस्मादृतवः सर्वे पराञ्चः सर्वे प्रत्यञ्चः सर्वाः प्रथमा भवन्ति सर्वा मध्यमाः सर्वा ऽउत्तमास्तस्मादृतवः सर्वे प्रथमाः सर्वे मध्यमाः सर्वे ऽउत्तमाः सर्वेषाङ्ग्रहाणान्द्वे याज्यापुरोऽनुवाक्ये भवतोऽहोरात्रयोस्तद्रूपमहोरात्रे ऽएवावरुन्द्धे तस्मादृतवश्च मासाश्चाहोरात्रयोरेव प्रतिष्ठिताः ॥ ३५ ॥ स वा ऽएष सँवत्सर ऽएव यत्सौत्रामणी। चन्द्रमा ऽएव प्रत्यक्षादादित्यो यजमानस्तस्येयमेव पृथिवी वेदिरन्तरिक्षमुत्तरवेदि-

(१-२) "ऋतूनेवैतै॰" इति 'ग' 'ज' पुस्तकयोः।

द्यौर्व्वीर्हिंदिश ऽऋत्विजो वनस्पतय ऽइद्ध्म ऽआप ऽआज्यमोषधय ऽआहुतयोग्निरेवाग्निः सँवत्सरः सर्वँस्था तद्वा ऽइदꣳ सर्वꣳ सँवत्सर ऽएव यदिदङ्किञ्च तस्मात्सौत्रामण्येजानꣳ सर्वञ्जयति सर्वमवरुन्द्धे ॥ ३६ ॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ राज्ञोऽभिषेकादि ]

त्वष्टा हतपुत्रः । अभिचरणीयमपेन्द्रꣳ सोममाहरत्तस्येन्द्रो यज्ञवेशसङ्कृत्वा प्रासहा सोममपिबत्स विष्वङ् व्यार्च्छत्तस्य मुखात्प्राणेभ्यः श्रीयशसान्यूर्द्ध्वान्युदक्रामँस्तानि पशूनप्राविशँस्तस्मात्पशवो यशो यशो ह भवति य ऽएवं विद्वान्त्सौत्रामण्याभिषिच्यते ॥ १ ॥ ततोऽस्मा ऽएतमश्विनौ च सरस्वती च । यज्ञꣳ समभरन्त्सौत्रामणीम्भैषज्याय तयैनमभ्यषिञ्चँस्ततो वै स देवानाꣳ श्रेष्ठोऽभवच्छ्रेष्ठꣳ स्वानाम्भवति य ऽएनयाभिषिच्यते ॥२॥ कृष्णाजिनेऽभिषिञ्चति । यज्ञो वै कृष्णाजिनं यज्ञ ऽएवैनमेतदभिषिञ्चति लोमतश्छन्दाꣳसि वै लोमानि च्छन्दꣳस्वेवैनमेतदभिषिञ्चति ॥ ३ ॥ आसन्द्यामभिषिञ्चति । आसन्दी सद्वै साम्राज्यꣳ साम्राज्येनैवैनꣳ साम्राज्यङ्गमयति ॥ ४ ॥ औदुम्बरी भवति । ऊर्ग्वा ऽउदुम्बर ऽऊर्जैवान्नाद्यमभिषिच्यते जानुसम्मिता भवति जानुसम्मितो वा ऽअयँल्लोकोऽस्मा ऽउ वै लोकाय क्षत्रियोऽभिषिच्यते क्षत्रमु

वा ऽएष भवति यः सौत्रामण्याभिषिच्यते तस्माज्जानुसम्मितापरिमिता तिरश्ची ॥ ५ ॥ राष्ट्रं वा ऽआसन्दी । अपरिमितसमृद्धमु वै राष्ट्रम्मुञ्जविवयना भवति यज्ञिया हि मुञ्जा द्वा ऽउत्तरस्यां वेद्याम्पादौ भवतो द्वौ दक्षिणस्यामयं वै लोक ऽउत्तरा वेदिर्दक्षिणा पितृलोकस्तदेनमुभयोर्लोकयोरभ्यभिषिञ्चति ॥ ६ ॥ एतद्ध स्म वै तद्विद्वानाह । गौरीवितिः शाक्त्यः क्षत्रमिवाह किल वयममुष्मिँल्लोके भविता स्म ऽइति शश्वद्धास्मा ऽऋषभो याज्ञतुरः प्रोवाच श्विक्नानाꣳ राजा ॥ ७ ॥ स ऽआसन्दीमास्तृणाति * । [1] 'क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसी'ति क्षत्रस्य वा ऽएषा योनिः क्षत्रस्य नाभिः ॥८॥ अथैनाङ्कृष्णाजिनेनास्तृणाति † । [2] 'मा त्वा हिꣳसीन्मा मा हिꣳसी'रिति यज्ञो वै कृष्णाजिनं यज्ञस्य चैवात्मनश्चाहिꣳसायै ॥ ९ ॥ अथाधिरोहति । वारुण्यर्चा वरुणो वै देवानाꣳ राजा स्वयैवैनमेतद्देवतयाभिषिञ्चति [3] 'निषसाद धृतव्रतो वरुणः पस्त्यास्वा ॥ साम्राज्याय सुक्रतु'रिति ॥१०॥ अथ सुवर्णरजतौ रुक्मौ ‡ व्युपास्यति । [4] 'मृत्योः पाहि विद्योत्पाही'ति वृष्टिर्वै विराट् तस्या ऽएते घोरे तन्वौ विद्युच्च

* का० श्रौ० सू० १९ ४ ७ ।
( १ ) शु० य० स० २० १ ।
† का० श्रौ० सू० १९ ४ ८ ।
( २ ) शु० य० स० २० १ । ( ३ ) शु० य० स० २० २ ।
‡ मण्डलाकारो सुवर्णविशेषो रुक्मः । ( म० भा० )
( ४ ) शु० य० स० २० २ ।

ह्रादुनिश्च ततः सुवर्णं ऽएव रुक्ममो विद्युतो रूपं ह्रादुनेस्ताभ्यामेवास्मै देवताभ्याᳪं शर्म्म यच्छति तस्मात्सौत्रामण्येजानस्यैताभ्यान्देवताभ्यान्न शङ्का भवत्यथो य ऽएवमेतद्वेद ॥ ११ ॥ पशूनां वसयाभिषिञ्चति । श्रीर्वै पशूनां वसा * श्रियैवैनमेतत्पशूनाᳪं रसेनाभिषिञ्चत्यथो परमं वा ऽएतदन्नाद्यं यद्वसा परमेणैवैनमेतदन्नाद्येनाभिषिञ्चति ॥ १२ ॥ शफग्रहा भवन्ति । शफैर्वै पशवः प्रतितिष्ठन्ति प्रतिष्ठामेवैनङ्गमयति त्रयस्त्रिᳪंशद्ग्रहा भवन्ति त्रयस्त्रिᳪंशद्वै सर्वा देवताः सर्वाभिरेवैनमेतद्देवताभिरभिषिञ्चति जगतीभिर्ज्जुहोति जागता वै पशवो जगत्यैवास्मै पशूनवरुन्द्धे षोडशभिर्ऋग्भिर्ज्जुहोति षोडशकला वै पशवोऽनुकलमेवास्मिन्श्रियन्दधाति ॥ १३ ॥ 'सीसेन तन्त्रम्मनसा मनीषिण' ऽइति । द्वौ द्वौ† समासः हुत्वा सते सᳪंस्रवान्त्समवनयत्यहोरात्राण्येवैतदर्द्धमासान्मासानृतून्त्सँवत्सरे प्रतिष्ठापयति तानीमान्यहोरात्राण्यर्द्धमासा मासा ऽऋतवः सँवत्सरे प्रतिष्ठिताः ॥ १४ ॥ वैतसः सतो भवति । अप्सुयोनिर्वै वेतस ऽआपो वै सर्वा देवताः सर्वाभिरेवैनमेतद्देवताभिरभिषिञ्चति ॥१५॥ सर्वसुरभ्युन्मर्द्दनम्भवति परमो वा ऽएष गन्धो यत्सर्वसुरभ्युन्मर्द्दनङ्गन्धेनैवैनमेतदभिषिञ्चति ॥ १६ ॥ पुरस्तात्प्रत्यङ्ङभिषिञ्चति । पुरस्ताद्धि प्रत्यगन्नमद्यते शीर्षतः शीर्षतो ह्यन्नमद्यत ऽआ मुखादन्ववस्रावयति

* मासपाकभाष्ये स्थित स्नेहात्मको द्रवविशेषो वसाशब्देनोच्यते ।
† "द्वौ द्वौ हुत्वा शेषान्त्सवे करोति" ( का० श्रौ० सू० १९ ४ ११ )
( १ ) 'ग' 'ञ' पुस्तकयो "दधाति" इति । ( २ ) शु० य० सं० १९. ८० ।

मुखेन ह्यन्नमद्यते सर्वतः परिक्रामः सर्वाभ्य ऽएवास्मिन्ने-
तद्दिग्भ्योऽन्नाद्यन्दधाति तस्मात्सौत्रामण्ययेजानस्य सर्वासु
दिक्ष्वन्नाद्यमवरुद्धम्भवत्यथो य ऽएवमेतद्वेद ॥ १७ ॥
आश्विनेन प्रथमेन यजुषाभिषिञ्चति । अथ सारस्वते-
नाथैन्द्रेणैताभिरेवैनमेतद्देवताभिरभिषिञ्चति तद्ध हैक ऽएता-
भिश्च देवताभिरभिषिञ्चन्ति भूर्भुवः स्वरित्येताभिरु
च व्याहृतिभिरेता वै व्याहृतय ऽइदꣳ सर्वन्तदेनमनेन
सर्वेणाभिषिञ्चाम ऽइति न तथा कुर्य्यादेताभिरेवैनन्देवता-
भिरभिषिञ्चेदेता ऽउ ह्येव देवता इदꣳ सर्वम् ॥ १८ ॥
पुरस्तात्स्विष्टकृतोऽभिषिञ्चति । क्षत्रं वै स्विष्टकृत्क्ष-
त्रेणैवैनमेतदभिषिञ्चत्यन्तरा वनस्पतिञ्च स्विष्टकृतञ्चा-
भिषिञ्चति सोमो वै वनस्पतिरग्निः स्विष्टकृदग्नीषो-
माभ्यामेवैनमेतत्परिगृह्याभिषिञ्चति तस्माद्ये चैतद्विदुर्ये
च न त ऽआहुः क्षत्रियो वाव क्षत्रियस्याभिषेक्तेति
॥ १९ ॥ अथैनञ्जानुमात्रे धारयन्ति । अथ नाभिमात्रेऽथ
मुखमात्र ऽएष्वेवास्मा ऽएतल्लोकेष्वायतनानि कल्पयत्य-
भिषेको वा ऽएष यद्वाजपेयमभिषेकः सौत्रामणी तद्यथैवादो
वाजपेये यूपꣳ रोहति तदेवैतद्रूपं क्रियते ॥ २० ॥ [अथ प्रपाठकः
॥५६॥] तदाहुः । प्रेव वा ऽएषोऽस्माल्लोकाच्च्यवते यः
सौत्रामण्याभिषिच्यत ऽइति कृष्णाजिने प्रत्यवरोहति
यज्ञो वै कृष्णाजिनं यज्ञ ऽएवान्ततः प्रतितिष्ठति
॥ २१ ॥ '[1]प्रेति क्षत्रे प्रतितिष्ठामि राष्ट्र' ऽइति । क्षत्र

( १ ) शु० य० सं० २० १० ।

ऽएव राष्ट्रे प्रतितिष्ठति क्षत्राद्राष्ट्रादप्रभ्रꣳशाय 'प्रत्य-श्वेषु प्रतितिष्ठामि गोषु'इति गोऽश्व ऽएव प्रतितिष्ठति गोऽश्वादप्रभ्रꣳशाय 'प्रत्यङ्गेषु प्रतितिष्ठाम्यात्म'न्नित्यङ्गेष्वेवात्मन्प्रतितिष्ठत्यङ्गेभ्य ऽआत्मनोऽप्रभ्रꣳशाय 'प्रति प्राणेषु प्रतितिष्ठामि पुष्ट' ऽइति प्राणेष्वेव पुष्टे प्रतितिष्ठति प्राणेभ्यः पुष्टादप्रभ्रꣳशाय 'प्रति द्यावापृथिव्योः प्रतितिष्ठामि यज्ञ' ऽइति तदनयोर्द्यावापृथिव्योः प्रतितिष्ठति ययोरिदꣳ सर्वमधि ॥ २२ ॥

अथ साम गायति । क्षत्रं वै साम क्षत्रेणैवैनमेतदभिषिञ्चत्यथो साम्राज्यं वै साम साम्राज्येनैवैनꣳ साम्राज्यङ्गमयति सर्वेषां वा ऽएष वेदानाꣳ रसो यत्साम सर्वेषामेवैनमेतद्वेदानाꣳ रसेनाभिषिञ्चति ॥ २३ ॥

बृहत्याङ्गायति । बृहत्यां वा ऽअसावादित्यः श्रियाम्प्रतिष्ठायाम्प्रतिष्ठितस्तपति बृहत्यामेवैनमेतच्छ्रियाम्प्रतिष्ठायाम्प्रतिष्ठापयति ॥२४॥

ऐन्द्र्याम्बृहत्याङ्गायति *। ऐन्द्रो वा ऽएष यज्ञो यत्सौत्रामणीन्द्रायतन ऽएष ऽएतर्हि यो यजते स्व ऽएवैनमेतदायतनेऽभिषिञ्चति ॥ २५ ॥

अथ यस्मात्सꣳशानानि साम । एतैर्वै सामभिर्देवा ऽइन्द्रमिन्द्रियाय वीर्याय समश्यꣳस्तथो ऽएवैतमृत्विजो यजमानमेतैरेव सामभिरिन्द्रियाय वीर्याय सꣳश्यन्ति सꣳश्रवसे विश्रवसे सत्य-

(१) शु० य० सं० २०. १०। (२) शु० य० सं० २०. १०। (३) शु० य० सं० २०. १०। (४) शु० य० सं० २०. १०।

* का० श्रौ० सू० १८. ५. २।

इश्रवसे इश्रवस ऽइति सामानि भवन्त्येष्वेवैनमेतल्लोकेषु इश्रावयन्ति चतुर्न्निधनम्भवति चतस्रो वै दिशः सर्वास्वे- वैनमेतद्दिक्षु प्प्रतिष्ठापयन्ति सर्वं निधनमुपावयन्ति संवि- दाना ऽएवास्मिञ्छ्रियन्दधाति ॥ २६ ॥ तदाहुः । यदेत- त्साम गीयतेऽथ क्वैतस्य साम्न ऽउक्क्थङ्क्व प्प्रतिष्ठा व्व्यूढः हि तद्यस्तुतमननुशस्तमिति ॥ २७ ॥ त्रया देवा ऽएकादशेति । एतद्वा ऽएतस्य साम्न ऽउक्क्थमेषा प्प्रतिष्ठा ॥ २८ ॥ अथो 'त्रयो देवा ऽएकादशे'ति । 'त्रयस्त्रिꣳशङ्गहस्त्रुहोति त्रया हि देवा ऽएकादश 'त्रयस्त्रिꣳ- शाः सुराधस' ऽइति त्रयस्त्रिꣳशद्धि देवा 'बृहस्प्पतिपुरो- हिता' ऽइति ब्ब्रह्म वै बृहस्प्पतिर्ब्रह्मपुरोहिता ऽइत्त्येवैतदाह 'देवस्य सवितुः सव' ऽइति देवेन सवित्रा प्प्रसूता ऽइत्त्ये- वैतदाह 'देवा देवैरवन्तु मे'ति देवा ह्येतन्देवैरभिपिञ्चन्ति ॥ २९ ॥ 'प्रथमा द्वितीयै'रिति । प्प्रथमा ह्येतन्द्वितीयैर- भिपिञ्चन्ति 'द्वितीयास्तृतीयै'रिति द्वितीया ह्येतन्तृतीयै- रभिपिञ्चन्ति 'तृतीयाः सत्त्येने'ति तृतीया ह्येतꣳ सत्त्ये- नाभिपिञ्चन्ति 'सत्त्यं य्यज्ञेने'ति सत्त्यꣳ ह्येतं य्यज्ञेना- भिपिञ्चति 'यज्ञो यजुर्भि'रिति यज्ञो ह्येतं य्यजुर्भिर- भिपिञ्चति 'यजूꣳषि सामभि'रिति यजूꣳषि ह्येतꣳ साम-

(१) शु॰ य॰ स॰ २० ११। (२) शु॰ य॰ स॰ २० ११। (३) शु॰ य॰ स॰ २० ११। (४) शु॰ य॰ स॰ २०. ११। (५) शु॰ य॰ स॰ २० ११। (६) शु॰ य॰ स॰ २० १२। (७) शु॰ य॰ स॰ २०. १२। (८) शु॰ य॰ स॰ २०. १२। (९) शु॰ य॰ सं॰ २० १२। (१०) शु॰ य॰ स॰ २० १२। (११) शु॰ य॰ सं॰ २०. १२।

भिरभिषिञ्चन्ति 'सामान्यृग्भि'रिति सामानि ह्येतमृग्भि-
रभिषिञ्चन्त्यृ'चः पुरोऽनुवाक्याभि'रित्यृचो ह्येतम्पुरोऽनु-
वाक्ययाभिरभिषिञ्चन्ति 'पुरोऽनुवाक्या याज्याभि'रिति
पुरोऽनुवाक्या ह्येतं य्याज्याभिरभिषिञ्चन्ति. 'याज्या
वषट्कारै'रिति य्याज्या ह्येतं वषट्कारैरभिषिञ्चन्ति 'वषट्-
कारा ऽआहुतिभि'रिति वषट्कारा ह्येतमाहुतिभिरभिषिञ्च-
न्त्या'हुतयो मे कामान्त्समर्द्धयन्तु भूः स्वाहे'ति तदेनमेता-
भिर्देवताभिः परोऽवरमभिषिच्याथास्मा ऽआहुतिभिः
सर्वान्कामान्त्समर्द्धयत्यथऽर्त्विक्षूपहवमिच्छ भक्षयत्यृतवो,
वा ऽऋत्विज ऽऋतुष्वेवैतदुपहवमिच्छते ॥ ३० ॥ स भक्ष-
यति । 'लोमानि प्प्रयतिर्म्मम त्वङ्म ऽआनतिरागतिः ॥
माꣳसम्म ऽउपनतिर्वस्वस्थि मज्जा म ऽआनति'रिति प्प्रेव
वा ऽएष लोकाꣳश्च देवताश्च विशति यः सौत्रामण्याऽ
भिषिच्यते तदेतदवान्तरामात्मानमुपह्वयते तथा कृत्स्न ऽएव
सर्वतनूः साङ्गः सम्भवति ॥ ३१ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

इत्यष्टमोऽध्यायः ॥ ८ ॥

[ सौत्रामणीशेषः ]

एतस्माद्वै यज्ञात्पुरुषो जायते । स यद्ध वा ऽअ-
स्मिँल्लोके पुरुषोऽन्नमत्ति तदेनममुष्मिँल्लोके प्प्रत्यत्ति स

(१) शु० य० सं० २०, १२। (२) शु० य० सं० २०, १२। (३) शु० य० सं० २० १२। (४) शु० य० सं० २०, १२। (५) शु० य० सं० २०, १२। (६) शु० य० सं० २०, १२। (७) शु० य० सं० २०, १३।

त्रा ऽएष परिस्रुतो यज्ञस्तायतेऽनाद्या वै ब्राह्मणेन परिस्रुत्स ऽएतस्मादनाद्याज्जायते तद्ध हामुष्मिँल्लोकेऽन्नम्प्रत्यत्ति तस्मादेष ब्राह्मणयज्ञ ऽएव यत्सौत्रामणी ॥ १ ॥ तस्य लोमान्येव शष्पाणि । त्वक्तोक्मानि माꣳसँल्लाजा ऽअस्थि कारोतरो मज्जा मासरꣳ रसः परिस्रुन्नग्नहुर्लोहितꣳ रेतः पयो मूत्रꣳ सुरोवध्यं वल्कसम् ॥ २ ॥ हृदयमेवास्यैन्द्रः पुरोडाशः । यकृत्सावित्रः क्लोमा वारुणो मतस्ने ऽएवास्याश्वत्थश्च पात्रमौदुम्बरश्च पित्तन्नैयग्रोधमान्त्राणि स्थाल्यो गुदा ऽउपशयानि श्येनपत्रे प्लीहासन्दी नाभिः कुम्भो वनिष्ठुः प्लाशिः शतातृण्णा तद्यत्सा बहुधा वितृण्णा भवति तस्मात्प्लाशिर्बहुधा विकृत्तो मुखꣳ सतस्त्रिक्षा पवित्रञ्चप्यस्पायुर्वस्तिर्वालः ॥ ३ ॥ अङ्गान्येवास्याश्विनः पशुः । आत्मा सारस्वतो रूपमैन्द्र ऽऋषभस्तस्मादाहुर्गावः पुरुषस्य रूपमित्यायुर्हिरण्यन्तच्छतमानम्भवति तस्माच्छतायुः पुरुषः ॥ ४ ॥ चक्षुषी ऽएवास्याश्विनौ ग्रहौ । पक्ष्माणि गोधूमसक्तवश्च कुवलसक्तवश्च नासिके ऽएवास्य सारस्वतौ ग्रहावथ यानि नासिकयोर्लोमानि तान्युपवाकसक्तवश्च बदरसक्तवश्च श्रोत्रे ऽएवास्यैन्द्रौ ग्रहावथ यानि कर्णयोर्लोमानि यानि च भ्रुवोस्तानि यवसक्तवश्च कर्कन्धुसक्तवश्च ॥ ५ ॥ अथ यान्युपस्थे लोमानि । यानि चाधस्तात्तानि

(१) 'भङ्गैरवत्रिफलाशुण्ठीपुनर्नवाचतुर्जातकपिप्पलीगजपिप्पलीवंशावकावृद्ध्यष्टाचित्रकेन्द्रवारुण्यश्वगन्धाधान्यकयवानीजीरकहरिद्राद्यविम्बयवक्षोद्रम एकीकृता नग्नहु' (म०भा०)।

ऽवृकलोमान्यथ यान्युरसि लोमानि यानि च निकक्ष्योस्तानि ऽव्याघ्रलोमानि केशाश्च श्मश्रूणि च सिंहलोमानि ॥ ६ ॥ त्रयः पशवो भवन्ति । त्रेधाविहितो वा ऽअयम्पुरुषस्यात्मात्मानमेवास्य तै स्पृणोति यदुवाङ्नाभेस्तदाश्विनेन यदूर्ध्वन्नाभेरवाचीनः शीर्ष्णस्तत्सारस्वतेन शिर ऽऐन्द्रेण यथारूपमेव यथादेवतमात्मानम्मृत्यो स्पृत्वामृतङ्कुरुते ॥ ७ ॥ त्रयः पुरोडाशा भवन्ति । त्रेधाविहितं वा ऽइदम्पुरुषस्य वयो वय ऽएवास्य तै स्पृणोति पूर्ववयसमैन्द्रेण मध्यमवयसः सावित्रेणोत्तमवयसं वारुणेन यथारूपमेव यथादेवतं वयो मृत्यो स्पृत्वामृतङ्कुरुते ॥ ८ ॥ षड्ग्रहा भवन्ति । षड्वा ऽइमे शीर्षन्प्राणाः प्राणानेवास्य तै स्पृणोति चक्षुषी ऽएवाश्विनाभ्यान्नासिके सारस्वताभ्याथं श्रोत्रे ऽऐन्द्राभ्यां यथारूपमेव यथादेवतम्प्राणान्मृत्यो स्पृत्वामृतान्कुरुते ॥ ९ ॥ सन्तता याज्यापुरोऽनुवाक्या भवन्ति । समानदेवत्याः प्राणानाथं सन्तत्या ऽअव्यवच्छेदाय सर्वाः पुरोऽनुवाक्या भवन्ति सर्वा याज्यास्तस्मात्प्राणाः सर्वे पराञ्चः सर्वे प्रत्यञ्चः सर्वाः प्रथमा भवन्ति सर्वा मध्यमाः सर्वा ऽउत्तमास्तस्मात्प्राणाः सर्वे प्रथमाः सर्वे मध्यमाः सर्वे ऽउत्तमाः सर्वेपाङ्ग्रहाणान्द्वे याज्यापुरोऽनुवाक्ये भवतः प्राणोदानयोस्तद्रूपम्प्राणोदानावेवावरुन्द्धे तस्मात्सर्वे प्राणाः प्राणोदानयोरेव प्रतिष्ठिताः ॥ १० ॥ स वा एष ऽआ-

(१) 'आत्मानम्मृत्यो स्पृत्वामृतङ्कुरुते' इति 'घ' 'ज' पुस्तकयो ।

स्यैव यत्सौत्रामणी । मन ऽएव प्रत्यक्षाद्वाग्यजमानस्त-
स्यात्मैव वेदिः प्रजोत्तरवेदिः पशवो बर्हिरङ्गान्यृत्विजो-
ऽस्थीनीध्म ऽआज्यम्मज्जा मुखमग्निरन्नमाहुतिर्वयः
सᳫं स्था तस्मात्सौत्रामण्येजानो वय ऽउपगच्छति ॥११॥
तयो ह वा ऽइमौ पुरुषाविवाक्ष्योः । एतावेवाश्विनावथ
यत्कृष्णन्तत्सारस्वतं यच्छुक्लन्तदैन्द्रन्तद्यदाश्विने पशौ
सत्यथैता देवताः सह यजत्येतान्येवैतत्सार्द्धᳫं स्वात्मन्धत्ते
॥ १२ ॥ मन ऽएवेन्द्रः । वाक्सरस्वती श्रोत्रे ऽअश्विनौ
यद्वै मनसा ध्यायति तद्वाचा वदति यद्वाचा वदति
तत्कर्णाभ्याᳫं शृणोति तद्यत्सारस्वते पशौ सत्यथैता
देवताः सह यजत्येतान्येवैतत्सार्द्धᳫं स्वात्मन्धत्ते ॥ १३ ॥
प्राण ऽएवेन्द्रः । जिह्वा सरस्वती नासिके ऽअश्विनौ
यद्वै प्राणेनान्नमात्मन्प्रणयते तत्प्राणस्य प्राणस्त्वजिह्वया
वा ऽअन्नस्य रसं विजानाति नासिके ऽउ वै प्राणस्य
पन्थास्तद्यदैन्द्रे पशौ सत्यथैता देवताः सह यजत्येता-
न्येवैतत्सार्द्धᳫं स्वात्मन्धत्ते ॥ १४ ॥ हृदयमेवेन्द्रः । यकृ-
त्सविता क्लोमा वरुणस्तद्यदैन्द्रे पुरोडाशे सत्यथैता
देवताः सह यजत्येतान्येवैतत्सार्द्धᳫं स्वात्मन्धत्ते ॥ १५ ॥
प्राण ऽएव सविता । व्यानो वरुणः शिश्नमिन्द्रो यद्वै
प्राणेनान्नमत्ति तद्व्यानेन व्यनिति शिश्नेन वा ऽअन्नस्य
रसᳫं रेतः सिञ्चति तद्यत्सावित्रे पुरोडाशे सत्यथैता
देवताः सह यजत्येतान्येवैतत्सार्द्धᳫं स्वात्मन्धत्ते ॥ १६ ॥
योनिरेव वरुणः । रेत ऽइन्द्रः सवितैव रेतसः प्रजनयिता

तद्यद्वारुणे पुरोडाशे सत्यथैता देवताः सह यजत्येताभ्ये-वैतत्साऽर्द्धङ्कृत्वाऽऽत्मन्धत्ते स य ऽएवमेतद्वेदैता ऽएव देवता अनुसम्भवत्येता देवता ऽअनु प्प्रजायत ऽआ प्प्रजया पशुभिः प्प्यायते प्प्रत्यस्मिँल्लोके तिष्ठत्यभि स्वर्गँल्लोकञ्जयति य ऽएवं विद्वान्त्सौत्रामण्या यजते यो वैत-देवं वेद ॥ १७ ॥

नवमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अवभृथेष्टिः ]

अवभृथमिष्ट्वा यन्ति । अवभृथं वै सोमनेष्ट्वा यन्ति सोम ऽएष यत्सौत्रामणी ॥ १ ॥ 'यद्देवा देवहेडन'मिति । देवकृताद्वैवैनमेनसो मुञ्चति 'यदि दिवा यदि नक्त'मिति यद्वैवाहोरात्राभ्यामेनः करोति तस्माद्वैवैनम्मुञ्चति 'यदि जाग्रद्यदि स्वप्न' ऽइति मनुष्या वै जागरितम्पितरः सुप्तम्मनुष्यकिल्बिषाच्चैवैनम्पितृकिल्बिषाच्च मुञ्चति ॥ २ ॥ 'यद्ग्रामे यदरण्य' ऽइति । ग्रामे वा ह्यरण्ये वैनः क्रियते तस्माद्वैवैनम्मुञ्चति 'यत्सभाया'मिति सभ्या-द्वैवैनमेनसो मुञ्चति 'यदिन्द्रिय' ऽइति दैवाद्वैवैनमेनसो मुञ्चति 'यच्छूद्रे यदर्य्ये यदेनश्चकृमा वयं यदेकस्याधि धर्म्मणि तस्यावयजनमसी'ति सर्वस्माद्वैवैनमेतस्माद्दे-नसो मुञ्चति ॥ ३ ॥ 'यदापो ऽअघ्न्या ऽइति । वरुणेति

( १ ) शु० य० सं० २०. १४। ( २ ) शु० य० सं० २०. १५। ( ३ ) शु० य० सं० २०. १६। ( ४ ) शु० य० सं० २०. १७। ( ५ ) शु० य० सं० २०. १७। ( ६ ) शु० य० सं० २०. १७। ( ७ ) शु० य० सं० २०. १७। ( ८ ) शु० य० सं० २०. १८।

शपामहे ततो वरुण नो मुञ्चे'ति वरुण्याद्धैवैनमेनसो मुञ्चत्य-
'वभृथ निचुम्पुण निचेरुरसि निचुम्पुण' ऽइति यो ह वा ऽअ-
यमपामावर्त्तः स हावभृथः स हैष वरुणस्य पुत्रो वा भ्राता
वा तमेवैतत्स्तौत्य'व देवैर्देवकृतमेनो यक्षी'ति देवकृतमेवैनो-
ऽवयजते'ऽव मर्त्यैर्मर्त्यकृत'मिति मर्त्यकृतमेवैनोऽवयजते
'पुरुराव्णो देव रिषस्पाही'ति सर्वाभ्यो मार्त्तिभ्यो
गोपायेत्येवैतदाह ॥ ४ ॥ 'समुद्रे ते हृदयमप्स्वन्त'रिति ।
आपो वै समुद्रो रसो वा ऽआपस्तदेनमेतेन रसेन
सह्सृजति 'सन्त्वा विशन्त्वोषधीरुताप' ऽइति तदेन-
मेतेनोभयेन रसेन सह्सृजति यश्चौषधिषु यश्चाप्सु
द्वौ विक्रमा ऽउदङ्ङुत्क्रामत्येतावती वै मनुष्ये जूति-
र्यावान्विक्रमस्तद्यावत्येवास्मिञ्जूतिस्तयैव पाप्मानं विज-
हाति ॥ ५ ॥ 'सुमित्रिया न ऽआप ऽओषधयः सन्त्वि'ति ।
अञ्जलिनाप ऽउपाचति वज्रो वा ऽआपो वज्रेणैवैतन्मित्र-
धेयङ्कुरुते 'दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि
यञ्च वयन्द्विष्म' ऽइति यमस्य द्विषन्द्वेष्यः स्यात्तान्दि-
शम्परासिञ्चेत्तेनैव तम्पराभावयति ॥ ६ ॥ 'द्रुपदादिव
मुमुचानः । स्विन्नः स्नातो मलादिव ॥ पूतम्पवित्रेणेवाज्य-
मापः शुन्धन्तु मैनस' ऽइति वासोऽपप्लावयति यथे-
षीकाम्मुञ्जाद्विवृहेदेवमेनः सर्वस्मात्पाप्मनो विवृहति

(१) शु० य० सं० २० १८। (२) शु० य० सं० २० १८। (३) शु० य० सं० २०,१८। (४) शु० य० सं० २० १८। (५) शु० य० सं० २० १९ (६) शु० य० सं० २०, १९। (७) शु० य० सं० २० १९। (८) शु० य० सं० २०, १९। (९) शु० य० सं० २० २०।

स्नाति तम ऽएवापहते ॥ ७ ॥ 'उद्वयन्तमसस्परी'ति । पाप्मा वै तमः पाप्मानमेव तमोऽपहते 'स्वः पश्यन्त ऽउत्तर'मित्ययं वै लोकोऽथ ऽउत्तरोऽस्मिन्नेव लोके प्रतितिष्ठति 'देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तम'मिति स्वर्गो वै लोकः सूर्यो ज्योतिरुत्तमꣳ स्वर्ग ऽएव लोकेऽन्ततः प्रतितिष्ठत्यनपेक्षमेत्याहवनीयमुपतिष्ठते ॥ ८ ॥ 'अपो ऽअद्यान्वचारिष'मिति । अपामेव रसमवरुन्द्धे 'रसेन समसृक्ष्मही'त्यपामेव रसमात्मन्धत्ते 'पयस्वानग्न ऽआगमन्तम्मा सꣳसृज वर्चसा प्रजया च धनेन चे'त्याशिषमेवैतदाशास्ते ॥ ९ ॥ 'एधोऽस्येधिषीमही'ति समिधमादत्ते * । एधो ह वा ऽअग्नेः समि'त्समिदसि तेजोऽसि तेजो मयि धेही'त्याहवनीये समिधमभ्यादधात्यग्निमेवैतया समिन्द्धे स ऽएनꣳ समिद्धस्तेजसा समिन्द्धे ॥ १० ॥ आदित्यञ्चरुं व्यक्ष्यमाणो निर्वपति । आदित्यमीजान ऽइयं वा अदितिरस्यामेव यज्ञन्तनुतेऽस्यामिष्ट्वा प्रतितिष्ठति धेनुर्दक्षिणेयं वै धेनुरिमामेव सर्वान्कामान्दुहे वत्सम्पूर्वस्यान्दुदाति मातरमुत्तरस्यां यदा वै वत्सो मातरन्धयत्यथ सा प्रत्ता दुहे प्रत्तामेवेमाꣳ सर्वान्कामान्दुहे ॥ ११ ॥ तदाहुः । प्रेव वा ऽएषोऽस्मा-

---

(१) शु० य० सं० २० २१। (२) शु० य० सं० २० २१। (३) शु० य० सं० २० २१। (४) शु० य० सं० २० २१। (५) शु० य० सं० २० २२। (६) शु० य० सं० २० २२। (७) शु० य० सं० २० २२। (८) शु० य० सं० २० २३।

* का० श्रौ० सू० १९ ५ १९।

ल्लोकाच्च्यवते योऽपोऽवभृथमभ्यवैतीत्यवभृथादुदेत्य मैत्रावरुण्या पयस्यया यजतेऽयं वै लोको मित्रोऽसौ वरुणो यदेवेदमन्तरेण तत्पयस्या तद्यन्मैत्रावरुण्या पयस्यया यजत ऽएष्वेवैतल्लोकेषु प्रतितिष्ठति प्राणो वै मित्रोऽपानो वरुणोऽन्नमेव पयस्या तद्यन्मैत्रावरुण्या पयस्यया यजते प्राण ऽएवान्नाद्येऽन्ततः प्रतितिष्ठति ॥१२॥

नवमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

---

[ सौत्रामण्यर्थवादः ]

दुष्टरीतुर्ह पौंसायनः । दशपुरुषं राज्यादपरुद्ध ऽआस रेवोत्तरसमु ह पाटवञ्चाक्रं स्थपतिं सृञ्जया ऽअपरुरुधुः ॥ १ ॥ स होवाच । दुष्टरीतुम्पौंसायनं सौत्रामण्या त्वा याजयानि यदिदं सृञ्जयेषु राष्ट्रन्त्वयि धास्यामीति तथेति तयैनमयाजयत् ॥ २ ॥ तदु ह बल्हिकः प्रातिपीयः शुश्राव । कौरव्यो राजा यो ह वा ऽअयन्दुष्टरीतुः पौंसायनो दशपुरुषं राज्यादुपरुद्धोऽभूत्तमयञ्चाक्रः स्थपतिः सौत्रामण्या याजयिष्यति यदिदं सृञ्जयेषु राष्ट्रन्तद्वास्मिन्धास्यतीति ॥ ३ ॥ स होवाच । तन्न्वा ऽअहन्तं वेदिष्यामि यदि स तस्मिन्राष्ट्रन्धास्यति बहिर्धा वैनं राष्ट्राद्धास्यतीति स ऽआजगाम यस्यां वेलायाञ्जुह्वा गृह्णन्ते ॥ ४ ॥ स होवाच । स्थपते चाक्र नाहवनीये सुरा होतव्येत्या-

हुत्वाऽन्यत्राहवनीयाद्यद्याहवनीये सुराꣳ होष्यसि पाप-
वस्यसङ्करिष्यसि जामि यज्ञस्य यद्यन्यत्राहवनीयाद्बहि-
र्द्धैनꣳ राष्ट्राद्धास्यसि नैनꣳ राष्ट्रे धास्यसि नास्मि-
न्राष्ट्रन्धारयसीति ॥ ५ ॥ स होवाच। नाहवनीये सुराꣳ
होष्यामि नान्यत्राहवनीयान्न पापवस्यसङ्करिष्यामि
न जामि यज्ञस्य नैनम्बहिर्द्धा राष्ट्राद्धास्यामि राष्ट्र
ऽएनन्धास्यामि राष्ट्रमस्मिन्धास्यामीति ॥ ६ ॥ स
होवाच। कथꣳ हि करिष्यसी३ ऽइति स हैतदुवा-
चासुरेषु वा ऽएषोऽग्रे यज्ञ आसीत्सौत्रामणी स
देवानुपप्रैत्सोऽप ऽआगच्छत्तमापः प्रत्यनन्दँस्तस्मादु
श्रेयाꣳसमागतम्प्रत्येव नन्दन्ति तꣳ होचुरेह्येव
भगव ऽइति ॥ ७ ॥ स होवाच। बिभेमि वै प्रणयत
मेति कस्माद्भगवो बिभेषीत्यसुरेभ्य ऽइति तथेति तमापः
प्राणयँस्तस्माद्यो द्वथ्रो भवति स बिभ्यतम्प्रण-
यति यदापः प्राणयँस्तस्मादापः प्रणीतास्तत्प्रणीतानाम्प्र
णीतात्वम्प्रति ह तिष्ठति य ऽएवमेतत्प्रणीतानाम्प्रणीतात्वं
वेद ॥ ८ ॥ तदिष्टाः प्रयाजा ऽआसुः। अपर्य्यग्निकृत-
मथासुरा ऽअन्वाजग्मुस्ते देवाः पर्य्यग्निनैवासुरान्स-
पत्नान्भ्रातृव्यान्यज्ञादन्तरायँस्तथो ऽएवैष ऽएतत्पर्य्य-
ग्निनैव द्विषन्तम्भ्रातृव्यं यज्ञादन्तरेति ॥ ९ ॥ देवयो-
निर्वा ऽएष यदाहवनीयः। तस्यैतावमृतपक्षौ यावेताव-
भितोऽग्नी तद्यदाहवनीये यज्ञन्तन्वते देवयोनावेवैतद्देवे-
भ्यो यज्ञन्तन्वत ऽउप हैनम्पुनर्य्यज्ञो नमति नास्माद्यज्ञो

व्व्यवच्छिद्यते य ऽएवमेतद्वेद यस्य वैवं विदुष ऽएतत्कर्म्म क्रियते ॥ १० ॥ उत्तरेऽग्नौ पयोग्रहाञ्जुहोति । उत्तरेऽग्नौ पशूञ्छ्रपयन्ति पशूनेव तन्मर्त्यान्त्सतोऽमृतयोनौ दधाति मर्त्यान्त्सतोऽमृतयोनेः प्प्रजनयत्यप ह वै पशूनाम्पुनर्म्मृत्युञ्जयति नास्म्माद्यज्ञो व्व्यवच्छिद्यते य ऽएवमेतद्वेद यस्य वैवं विदुष ऽएतत्कर्म्म क्रियते ॥ ११ ॥ दक्षिणेऽग्नौ सुराग्रहाञ्जुहोति । दक्षिणेऽग्नौ पावयन्ति पवित्राभिस्त्रिपंरयुक्ताभिः पितॄनेव तन्मर्त्यान्त्सतोऽमृतयोनौ दधाति मर्त्यान्त्सतोऽमृतयोनेः प्प्रजनयत्यप ह वै पितॄणाम्पुनर्म्मृत्युञ्जयति नास्म्माद्यज्ञो व्व्यवच्छिद्यते य ऽएवमेतद्वेद यस्य वैवं विदुष ऽएतत्कर्म्म क्रियते ॥ १२ ॥ तद्यदेतावग्नी ऽआहवनीयावित्याहियेते । तेनाहवनीयावथ यदाहवनीयम्पुनर्न्नाहरन्त्युवाते तेनानाहवनीयौ तेनोभौ होमा ऽउपाप्नोति यश्चाहवनीये यश्चानाहवनीये यच्च हुतं रयच्चाहुतम्पुनर्हायुमित्त्वोवाच न तदस्ति यत्सृञ्जयानाᳬ राष्ट्रन्दुष्टरीतोस्तदथ तथायुश्चाकु स्थपतिर्य्यज्ञेऽकरिति॥१३॥ उत्तरेऽग्नौ पशुभिः पुरोडाशैः पयोग्रहैरिति चरन्ति । यदु चान्यत्तेन देवानेव तद्देवलोके प्प्रीणाति त ऽएनम्प्रीताः प्प्रीणन्त्यथो देवलोकमेव जयति ॥ १४ ॥ दक्षिणेऽग्नौ सुराग्रहाञ्जुहोति । दक्षिणेऽग्नौ पावयन्ति पवित्राभिस्त्रिपंरयुक्ताभिः पितॄनेव तत्पितृलोके प्प्रीणाति त ऽएनम्प्रीताः प्प्रीणन्त्यथो पितृलोकमेव जयति ॥ १५ ॥ स वा ऽएष आत्मैव यत्सौत्रामणी । तस्मात्सा निरुक्ता निरुक्तो ह्यात्मा

लोको वयोधास्तस्मात्सोऽनिरुक्तोऽनिरुक्तो हि लोक ऽआत्मा वै यज्ञस्य सौत्रामणी बाहू ऽऐन्द्रश्च वयोधाश्च तद्यदेतावभितः पशू भवतस्तस्मादिमावात्मानमभितो बाहू यथो वै पशुरेवं यूपस्तद्यदेतः सौत्रामणिकं यूपमेतौ यूपावभितो भवतस्तस्माद्विमावात्मानमभितो बाहू ॥ १६ ॥

नवमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या ११२ ॥

इति नवमोऽध्यायः ॥ ९ ॥

मध्यमनाम द्वादशं काण्डं समाप्तम्* ॥ १२ ॥



* अस्मिन्काण्डे कण्डिकासंख्या ४५९ ।

# अथाश्वमेधनाम त्रयोदशं काण्डम्

[ अस्मिन्काण्डे प्रतिपाद्या विषयाः—अश्वमेधः, तद्गतं प्रायश्चित्तम्, पुरुषमेधः, सर्वमेधः, दशरात्रः, पितृमेधः ]



[ ब्रह्मौदनपाकः ]

॥ ॐ ॥* ब्रह्मौदनम्पचति । रेत ऽएव तद्धत्ते यदाज्य-
मुच्छिष्यते तेन रशनामभ्यज्याददत्ते तेजो वा ऽआज्य-
म्प्राजापत्योऽश्वः प्रजापतिमेव तेजसा समर्द्धयत्यपूतो
वा ऽएषोऽमेध्यो यदश्वः ॥ १ ॥ दर्भमयी रशना भवति ।
पवित्रं वै दर्भाः पुनात्येवैनम्पूतमेवैनम्मेध्यमालभते ॥ २ ॥
अश्वस्य वा ऽआलब्धस्य । रेत ऽउदक्रामत्तत्सुवर्णः
हिरण्यमभवद्यत्सुवर्णः हिरण्यन्ददात्यश्वमेव रेतसा
समर्द्धयति ॥ ३ ॥ † प्रजापतिर्यज्ञमसृजत । तस्य महि-
मापाक्रामत्स महर्त्विजः प्राविशत्तम्महर्त्विग्भिरन्वैच्छत्त-
म्महर्त्विग्भिरन्वविन्दद्यन्महर्त्विजो ब्रह्मौदनम्प्राश्नन्ति
महिमानमेव तद्यज्ञस्य यजमानोऽवरुन्द्धे ब्रह्मौदने सुव-
र्णः हिरण्यन्ददाति रेतो वा ऽओदनो रेतो हिरण्यः
रेतसैवास्मिँस्तद्रेतो दधाति शतमानम्भवति शतायुर्वै
पुरुषः शतेन्द्रिय आयुरेवेन्द्रियं वीर्यमात्मन्धत्ते चतुष्पदीरपो

* ब्राह्मणेभ्य ऋत्विग्भ्यो देय ओदन ब्रह्मौदन ।

† अत्र शतम् १४०० ।

( १ ) 'क्र' इति 'ख' पुस्तके ।

वसतीवरीर्म्मध्यमायाह्ने गृह्णाति ता दिग्भ्यः समाहृता भवन्ति दिक्षु वा ऽअन्नमन्नमापोऽन्नेनैवास्मा ऽअन्नमवरुन्द्धे ॥ ४ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ अश्वस्य बन्धनप्रोक्षणादि ]

व्यृद्धम् वा ऽएतद्यज्ञस्य । यदयजुष्केण क्रियत 'ऽइमामगृभ्णन्रशनामृतस्ये'त्यश्वाभिधानीमादत्ते यजुष्कृत्यै यज्ञस्य समृद्ध्यै द्वादशारत्निर्भवति द्वादश मासाः सँवत्सरः सँवत्सरमेव यज्ञमाप्नोति ॥ १ ॥ तदाहुः । द्वादशारत्नी रशना कार्य्या३ त्रयोदशारत्नी३रिति वृषभो वा ऽएष ऽऋतूनां यत्सँवत्सरस्तस्य त्रयोदशो मासो विष्टप वृषभ ऽएष यज्ञानां यदश्वमेधो यथा वा ऽऋषभस्य विष्टपमेवमेतस्य विष्टपन्त्रयोदशमरत्निः रशनायामुपादध्यात् यथर्षभस्य* विष्टपः संस्क्रियते तादृक्तत् ॥ २ ॥ 'अभिधा ऽअसी'ति । तस्मादश्वमेधयाजी सर्वा दिशोऽभिजयति 'भुवनमसी'ति भुवनन्तज्जयति 'यन्तासि धर्त्ते'ति यन्तारमेवैनन्धर्त्तारङ्करोति 'स त्वमग्निं वैश्वानर'मित्यग्निमेवैनं वैश्वानरङ्गमयति 'सप्रथसङ्गच्छे'ति प्रजयैवैनम्पशुभिः प्रथयति 'स्वाहाकृत' ऽइति वषट्कार

(१) शु० य० सं० २२. २।

* '०थ ऽऋषभस्य' इति 'घ' 'ज' पुस्तकयोः।

(२) शु० य० सं० २२. ३। (३) शु० य० सं० २२. ३। (४) शु० य० सं० २२. ३। (५) शु० य० सं० २२. ३। (६) शु० य० सं० २२. ३। (७) शु० य० सं० २२. ३।

ऽएवास्यैष 'स्वगा[1] त्वा देवेभ्य' ऽइति देवेभ्य ऽएवै-नꣳ स्वगा करोति 'प्रजापतय[2]' ऽइति प्राजापत्योऽश्वः स्वयैवैनन्देवतया समर्द्धयति ॥ ३ ॥ ईश्वरो वा ऽएषः । आर्त्तिमार्त्तोर्य्यो ब्रह्मणे देवेभ्योऽप्रतिप्रोच्याश्वम्ब-द्ध्नाति 'ब्रह्मन्नश्वम्भन्त्स्यामि देवेभ्यः प्रजापतये तेन राद्ध्यास'मिति ब्रह्माणमामन्त्रयते ब्रह्म ऽएवैनम्प्रति-प्रोच्य बद्ध्नाति नार्त्तिमार्च्छति 'तम्बधान देवेभ्यः प्रजापतये तेन राद्ध्नुही'ति ब्रह्मा प्रसौति स्वयैवैनन्देवतया समर्द्धयत्यथ प्रोक्षत्यसावेव बन्धुः ॥ ४ ॥ स प्रोक्षति । 'प्रजापतये त्वा जुष्टम्प्रोक्षामी'ति प्रजापतिर्वै देवानां वीर्य्य-वत्तमो वीर्य्यमेवास्मिन्दधाति तस्मादश्वः पशूनां वीर्य्य-वत्तमः ॥५॥ 'इन्द्राग्निभ्यान्त्वा जुष्टम्प्रोक्षामी'ति। इन्द्राग्नी वै देवानामोजस्वितमा ऽओज ऽएवास्मिन्दधाति तस्मा-दश्वः पशूनामोजस्वितमः ॥ ६ ॥ 'वायवे त्वा जुष्टम्प्रो-क्षामी'ति । वायुर्वै देवानामाशिष्ठो जवमेवास्मिन्दधाति तस्मादश्वः पशूनामाशिष्ठः ॥ ७ ॥ 'विश्वेभ्यस्त्वा देवेभ्यो जुष्टम्प्रोक्षामी'ति । विश्वे वै देवा देवानां यशस्वितमा यश ऽएवास्मिन्दधाति तस्मादश्वः पशूनां यशस्वितमः 'सर्वेभ्यस्त्वा देवेभ्यो जुष्टम्प्रोक्षामी'ति ॥ ८ ॥ तदाहुः । यत्प्राजापत्योऽश्वोऽथ कथाप्यन्याभ्यो

(१) शु० य० सं० २२ ४। (२) शु० य० सं० २२ ४। (३) शु० य० सं० २२ ४। (४) शु० य० सं० २२. ४। (५) शु० य० सं० २२ ५। (६) शु० य० सं० २२ ५। (७) शु० य० सं० २२. ५। (८) शु० य० सं० २२ ५। (९) शु० य० सं० २२ ५।

देवताभ्यः प्रोक्षतीति सर्वा वै देवता ऽअश्वमेधेऽन्वायत्ता यदाह सर्वेभ्यस्त्वा देवेभ्यो जुष्टम्प्रोक्षामीति सर्वा ऽएवा- स्मिन्देवता ऽअन्वायातयति तस्मादश्वमेधे सर्वा देवता ऽअन्वायत्ताः पाप्मा वा ऽएतम्भ्रातृव्य ऽईप्सति योऽ- श्वमेधेन यजते वज्रोऽश्वः 'परो मर्त्तः परः श्वे'ति श्वानञ्चतुरक्षꣳ हत्वाधस्पदमश्वस्योपप्लावयति वज्रेणै- वैनमवक्रामति नैनम्पाप्मा भ्रातृव्य ऽआप्नोति ॥ १ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ सहस्रमाहुतयः ]

यथा वै हविषोऽहुतस्य स्कन्देत् । एवमेतत्पशोः स्कन्दति यन्निक्तमनालब्धमुत्सृजन्ति यत्स्तोकीया जुहोति सर्वहुतमेवैनञ्जुहोत्यस्कन्दायास्कन्नꣳ हि तद्यद्धुतस्य स्कन्दति सहस्रञ्जुहोति सहस्रसम्मितो वै स्वर्गो लोकः स्वर्गस्य लोकस्याभिजित्यै ॥ १ ॥ तदाहुः । यन्मिता जुहुयात्परिमितमवरुन्धीतेत्यमिता जुहोत्यपरिमितस्यैवा- वरुद्ध्या ऽउवाच ह प्रजापति स्तोकीयासु वा ऽअहमश्वमेधꣳ सꣳस्थापयामि तेन सꣳस्थितेनैवात ऽऊर्द्ध्वञ्चरामीति ॥ २ ॥ 'अग्नये[2] स्वाहे'ति । अग्नय ऽएवैनञ्जुहोति 'सोमाय[3] स्वाहे'ति सोमायैवैनञ्जुहो'त्यपाम्मोदाय[4]

(१) शु० य० सं० २२ ५। (२) शु० य० सं० २२ ६। (३) शु० य० सं० २२ ६। (४) शु० य० सं० २२ ६।

स्वाहे॑त्यग्नय॒ ऽए॒वैन॑ञ्जुहोति 'सवि॒त्रे स्वाहे॑'ति सवि॒त्र ऽए॒वैन॑ञ्जुहोति 'वा॒यवे॒ स्वाहे॑'ति वा॒यव॒ ऽए॒वैन॑ञ्जुहोति 'वि॒ष्णवे॒ स्वाहे॑'ति वि॒ष्णव॒ ऽए॒वैन॑ञ्जुहोती'न्द्राय॒ स्वाहे॑'तीन्द्राये॒वैन॑ञ्जुहोति 'बृह॒स्पत॑ये स्वाहे॑'ति बृह॒स्पत॑य ऽए॒वैन॑ञ्जुहोति 'मि॒त्राय॒ स्वाहे॑'ति मि॒त्राये॒वैन॑ञ्जुहोति 'वरु॑णाय स्वाहे॑'ति वरु॑णाये॒वैन॑ञ्जुहोत्ये॒ताव॑न्तो॒ वै सर्वे॑ दे॒वास्ते॒भ्य ऽए॒वैन॑ञ्जुहोति परा॒चीर्जु॑होति परा॒ङिव॒ वै स्व॒र्गो लो॒कः स्व॒र्गस्य॑ लो॒कस्या॒भिजि॑त्यै ॥ ३ ॥ ईश्व॒रो वा॒ ऽएषः । परा॒ङ् प्रदु॒घोर्यः परा॒चीरा॒हुती॒र्जुहो॒ति पुन॒राव॒र्त्ततेऽस्मि॒न्नेव॒ लोके॒ प्रति॒तिष्ठ॒त्येता॒ꣳ ह वा॒व स॒ य॒ज्ञस्य॒ स॒ꣳस्थिति॒मुवा॒चास्क॑न्दाया॒स्कन्नꣳ हि तद्य॒द्धुत॒स्य स्कन्द॑ति ॥ ४ ॥ य॒था वै ह॒विषो॒ऽहुत॒स्य स्कन्दे॒त् । एवमे॒तत्प॒शो स्कन्द॑ति यत्प्रोक्षि॒तम॒नाल॒ब्धमु॒त्सृज॒न्ति य॒द्रूपा॒णि जु॒होति सर्व॒हुतमे॒वैन॑ञ्जुहोत्यस्क॑न्दा॒यास्कन्न॒ꣳ हि तद्य॒द्धुत॒स्य स्कन्द॑ति 'हि॒ङ्का॒राय स्वा॒हा हिङ्कृ॒ताय स्वाहे॑'त्येता॒नि वा ऽअश्वस्य रू॒पा॒णि ता॒न्येवा॒वरुन्द्धे ॥ ५ ॥ त॒दा॒हुः । अ॒नाहुति॒र्वै रू॒पा॒णि नैता॒ होत॒व्या ऽइत्य॒थो ख॒ल्वाहु॒र्वा ऽअश्वमे॒धः सन्ति॒ष्ठते॒ य॒द्रूपा॒णि जु॒होति होत॒व्या ऽए॒वेति ब॒हिर्द्धा॒ वा॒ ऽए॒तमा॒यत॒नात्करोति भ्रा॒तृ॒व्यमस्मै जन॒यति य॒स्या॒नायत॒नेऽन्य॒त्राग्ने॒रा॒हुती॒र्जुहो॒ति ॥ ६ ॥ सावि॒त्र्या

(१) शु० य० सं० २२. ६ । (२) शु० य० सं० २२. ६ । (३) शु० य० सं० २२. ६ । (४) शु० य० सं० २२. ६ । (५) शु० य० सं २२. ६ । (६) शु० य० सं० २२ ६ ।
(७) शु० य० सं० २२. ६ । (८) शु० य० सं० २२. ७ ।

ऽएवेष्ट्वैः । पुरस्तादनुद्रुत्य सकृदेव रूपाण्याहवनीये जुहोत्यायतन ऽएवाहुतीर्जुहोति नास्मै भ्रातृव्यञ्जनयति यज्ञमुखे यज्ञमुखे जुहोति यज्ञस्य सन्तत्या ऽअव्यवच्छेदाय ॥ ७ ॥ तदाहुः । यद्यज्ञमुखे यज्ञमुखे जुहुयात्पशुभिर्व्यृध्येत पापीयान्स्यात्सकृदेव होतव्या न पशुभिर्व्यृध्यते न पापीयान्भवत्यष्टाचत्वारिꣳशतञ्जुहोत्यष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनवरुन्ध ऽएकमतिरिक्तञ्जुहोति तस्मादेकः प्रजास्वर्द्धुकः ॥ ८ ॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ सावित्र्य इष्टयः ]

प्रजापतिरश्वमेधमसृजत । सोऽस्मात्सृष्टः पराङैत्स दिशोऽनुप्राविशत्तन्देवाः प्रैषमैच्छँस्तमिष्टिभिरनुप्रायुञ्जत तमिष्टिभिरन्वैच्छँस्तमिष्टिभिरन्वविन्दन्त्यदिष्टिभिर्यजतेऽश्वमेव तन्मेध्यं यजमानोऽन्विच्छति ॥ १ ॥ सावित्र्यो भवन्ति । इयं वै सविता यो वा ऽअस्यान्निलयते योऽन्यत्रेत्यस्यां वाव तमनुविन्दन्ति न वा ऽइमाङ्कश्चन तिर्यङ्नोर्द्ध्वोऽत्येतुमर्हति यत्सावित्र्यो भवन्त्यश्वस्यैवानुवित्त्यै ॥ २ ॥ तदाहुः । प्र वा ऽएतदश्वो मीयते यत्पराङेति न ह्येनम्प्रत्यावर्त्तयन्तीति यत्सायन्धृतीर्जुहोति क्षेमो वै धृतिः क्षेमो रात्रिः क्षेमेणैवैनन्दाधार तस्मात्सायम्मनुष्याश्च पशवश्च क्षेम्या भवन्त्यथ यत्प्रातरिष्टि-

भिर्य्यजत ऽइच्छत्येवैनन्तत्तस्माद्दिवा नष्टैष ऽएति यद्ध्रव सायन्धृतीर्जुहोति प्प्रातरिष्टिभिर्य्यजते योगक्षेममेव तद्यजमानः कल्पयते तस्माद्यत्रैतेन यज्ञेन यजन्ते क्क्लृप्तः प्प्रजानां य्योगक्षेमो भवति ॥ ३ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ गाथागानम् ]

अप वा ऽएतस्मात् । श्री राष्ट्रङ्क्रामति योऽश्वमेधेन यजते यदा वै पुरुषः श्रियङ्गच्छति वीणास्मै वाद्यते ब्ब्राह्मणौ वीणागाथिनौ सँवत्सरङ्गायतः श्रिये वा ऽएतद्रूपं य्यद्वीणा श्रियमेवास्मिँस्तद्धत्तः ॥ १ ॥ तदाहुः । यदुभौ ब्ब्राह्मणौ गायेतामपास्मात्क्षत्रङ्क्रामेद्ब्रह्मणो वा ऽएतद्रूपं य्यद्ब्राह्मणो न वै ब्रह्मणि क्षत्रꣳ रमत ऽइति ॥ २ ॥ यदुभौ राजन्यौ । अपास्माद्ब्रह्मवर्चसङ्क्रामेत्क्षत्रस्य वा ऽएतद्रूपं य्यद्राजन्यो न वै क्षत्रे ब्ब्रह्मवर्चसꣳ रमत ऽइति ब्ब्राह्मणोऽन्यो गायति राजन्योऽन्यो ब्ब्रह्म वै ब्ब्राह्मणः क्षत्रꣳ राजन्यस्तदस्य ब्ब्रह्मणा च क्षत्रेण चोभयतः श्रीः परिगृहीता भवति ॥ ३ ॥ तदाहुः । यदुभौ दिवा गायेताम्प्रभ्रꣳशुकास्माच्छ्रीः स्याद्ब्रह्मणो वा ऽएतद्रूपं य्यदहर्य्यदा वै राजा कामयतेऽथ ब्ब्राह्मणञ्जिनाति पापीयाँस्तु भवति ॥ ४ ॥ यदुभौ नक्तम् । अपास्माद्ब्रह्मवर्चसङ्क्रामेत्क्षत्रस्य वा ऽएतद्रूपं य्यद्रात्रिर्न्न वै क्षत्रे

ब्रह्मवर्चसं रमत ऽइति दिवा ब्राह्मणो गायति नक्तꣳ राजन्यस्तथो हास्य ब्रह्मणा च क्षत्रेण चोभयतः श्रीः परिगृहीता भवतीति ॥ ५ ॥ अयजतेत्यददादिति ब्राह्मणो गायतीष्टापूर्त्तं वै ब्राह्मणस्येष्टापूर्त्तेनैवैनꣳ स समर्द्धयतीत्ययुध्यतेत्यमुꣳ सङ्ग्राममजयदिति राजन्यो युद्धं वै राजन्यस्य वीर्यं वीर्येणैवैनꣳ स समर्द्धयति तिस्रोऽन्यो गाथा गायति तिस्रोऽन्यः षट् सम्पद्यन्ते षड्वृतवः सँवत्सर ऽऋतुष्वेव सँवत्सरे प्रतितिष्ठति ताभ्याꣳ शतन्ददाति शतायुर्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं वीर्यमात्मन्धत्ते ॥ ६ ॥

प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥



[ अश्वकर्णे जपः, धृतिहोमश्च ]

'विभूर्मात्रा प्रभूः पित्रे'ति । इयं वै मातासौ पिताभ्यामेवैनम्परिददा'त्यश्वोऽसि हयोऽसी'ति शास्त्येवैनन्ततस्माच्छिष्टाः प्रजा जायन्ते'ऽत्योऽसि मयो ऽसी'त्यत्येवैनन्नयति तस्मादश्वः पशूनत्येति तस्मादश्वः पशूनाꣳ श्रैष्ठ्यङ्गच्छ'त्यर्वासि सप्तिरसि वाज्यसी'ति यथायजुरेवैत'द्वृषासि नृमणा ऽअसी'ति मिथुनत्वाय 'ययुर्नामासि शिशुर्नामासी'त्येतद्वा ऽअश्वस्य प्रियन्नाम-

(१) शु० य० सं० २२ १९। (२) शु० य० सं० २२ १९। (३) शु० य० सं० २२. १९। (४) शु० य० सं० २२. १९। (५) शु० य० सं० २२. १९। (६) शु० य० सं० २२. १९।

धेयम्प्रियेणैवैनन्नाम्नाभिवदति तस्माद्ध्यामित्रौ सङ्गत्य नाम्ना चेदभिवदतोऽन्योऽन्यः समेव जानाते ॥ १ ॥ 'आदित्यानाम्पत्वान्विही'ति । आदित्यानेवैनङ्गमयति 'देवा ऽआशापाला ऽएतन्देवेभ्योऽश्वम्मेधाय प्प्रोक्षितः रक्षते'ति शतं वै तल्प्या राजपुत्रा ऽआशापालास्तेभ्य ऽएवैनम्परिददाती'ह रन्तिरिह रमतामिह धृतिरिह स्वधृतिः स्वाहे'ति सँवत्सरमाहुतीर्ज्जुहोति षोडश नवतीरेता वा ऽअश्वस्य बन्धनन्ताभिरेवैनम्बध्नाति तस्मादश्वः प्प्रमुक्तो बन्धनमागच्छति षोडश नवतीरेता वा ऽअश्वस्य बन्धनन्ताभिरेवैनम्बध्नाति तस्मादश्वः प्प्रमुक्तो बन्धनन्न जहाति ॥ २ ॥ राष्ट्रं वा ऽअश्वमेधः । राष्ट्र ऽएते व्व्यायच्छन्ते येऽश्वरक्षः रक्षन्ति तेषां य ऽउदृचङ्गच्छन्ति राष्ट्रेणैव ते राष्ट्रम्भवन्त्यथ ये नोदृचङ्गच्छन्ति राष्ट्रात्ते व्व्यवच्छिद्यन्ते तस्माद्राष्ट्र्यश्वमेधेन यजेत परा वा ऽएष सिच्यते योऽबलोऽश्वमेधेन यजते यद्यमित्रा ऽअश्वं विन्देरन्यज्ञोऽस्य विच्छिद्येत पापीयान्त्स्याच्छतङ्कवचिनो रक्षन्ति यज्ञस्य सन्तत्या ऽअव्व्यवच्छेदाय न पापीयान्भवत्यथान्यमानीय प्प्रोक्षेयुः सैव तत्र प्प्रायश्चित्तिः ॥ ३ ॥

प्रथमाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥



(१) शु० य० स० २२. १९। (२) शु० य० स० २२. १९। (३) शु० य० स० २२. १९।

[ औद्ग्रभणहोमः ]

प्रजापतिरकामयत । अश्वमेधेन यजेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य सप्तधाऽऽत्मनो देवता ऽअपाक्रामंस्ता दीक्षाभवत्स ऽएतानि वैश्वदेवान्यपश्यत्तान्यजुहोत्तैर्वै स दीक्षामवारुन्ध यद्वैश्वदेवानि जुहोति दीक्षामेव तैर्यजमानोऽवरुन्द्धेऽन्वहञ्जुहोत्यन्वहमेव दीक्षामवरुन्द्धे सप्त जुहोति सप्त वै ता देवता ऽअपाक्रामँस्ताभिरेवास्मै दीक्षामवरुन्द्धे ॥ १ ॥ अप वा ऽएतेभ्यः प्राणाः क्रामन्ति । ये दीक्षामतिरेचयन्ति सप्ताहम्प्रचरन्ति सप्त वै शीर्षण्याः प्राणाः प्राणा दीक्षा प्राणैरेवास्मै प्राणान्दीक्षामवरुन्द्धे त्रेधा विभज्य देवताञ्जुहोति त्र्यावृतो वै देवास्त्र्यावृत ऽइमे लोका ऽऋद्ध्यामेव वीर्य्यं ऽएषु लोकेषु प्रतितिष्ठति ॥ २ ॥ एकविꣳशतिः सम्पद्यन्ते । द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविꣳशस्तद्दैवं क्षत्रꣳ सा श्रीस्तदाधिपत्यन्तद्ब्रध्नस्य विष्टपन्तत्स्वाराज्यमश्नुते ॥ ३ ॥ त्रिꣳशतमौद्ग्रभणानि जुहोति । त्रिꣳशदक्षरा विराड्विराडु कृत्स्नमन्नङ्कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै यच्चत्वार्य्यौद्ग्रभणानि जुहोति त्रीणि वैश्वदेवानि सप्त सम्पद्यन्ते सप्त वै शीर्षण्याः प्राणाः प्राणा दीक्षा प्राणैरेवास्मै प्राणान्दीक्षामवरुन्द्धे पूर्णाहुतिमुत्तमाञ्जुहोति प्रत्युत्तब्ध्यै सयुक्त्वाय ॥ ४ ॥

प्रथमाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

प्रजापतिरश्वमेधमसृजत । स सृष्टः प्राऽर्चमल्लीनात्प्र साम तं वैश्वदेवान्युदयच्छन्यद्वैश्वदेवानि जुहोत्यश्वमेधस्यैवोद्यत्यै ॥ १ ॥ 'काय स्वाहा । कस्मै स्वाहा कतमस्मै स्वाहे'ति प्राजापत्यम्मुख्यङ्करोति प्रजापतिमुखाभिरेवैनन्देवताभिरुद्यच्छति ॥ २ ॥ 'स्वाहाधिमाधीताय स्वाहा । मनः प्रजापतये स्वाहा चित्तं विज्ञाताये'ति यदेव पूर्वासाम्ब्राह्मणन्तदत्र ॥ ३ ॥ 'अदित्यै स्वाहा । अदित्यै मह्यै स्वाहादित्यै सुमृडीकायै स्वाहे'तीयं वा ऽअदितिरनयैवैनमुद्यच्छति ॥ ४ ॥ 'सरस्वत्यै स्वाहा । सरस्वत्यै पावकायै स्वाहा सरस्वत्यै बृहत्यै स्वाहे'ति वाग्वै सरस्वती वाचैवैनमुद्यच्छति ॥ ५ ॥ 'पूष्णे स्वाहा । पूष्णे प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहे'ति पशवो वै पूषा पशुभिरेवैनमुद्यच्छति ॥ ६ ॥ 'त्वष्ट्रे स्वाहा । त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहे'ति त्वष्टा वै पशूनाम्मिथुनानाꣳ रूपकृद्रूपैरेवैनमुद्यच्छति ॥ ७ ॥ 'विष्णवे स्वाहा । विष्णवे निभूयपाय स्वाहा विष्णवे शिपिविष्टाय स्वाहे'ति यज्ञो वै विष्णुर्यज्ञेनैवैनमुद्यच्छति 'विश्वो देवस्य नेतु'रिति पूर्णाहुतिमुत्तमाञ्जुहोतीयं वै पूर्णाहुतिरस्यामेवान्ततः प्रतितिष्ठति ॥ ८ ॥

प्रथमाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥



(१) शु० य० स० २२. २० । (२) शु० य० स० २२. २० । (३) शु० य० स० २२. २० । (४) शु० य० स० २२ २० । (५) शु० य० स० २२ २० । (६) शु० य० स० २२. २० । (७) शु० य० सं० २२ २० । (८) शु० य० स० २२ २१ ।

[ अध्वर्युकर्तृकजपः ]

'ओं ब्ब्रह्मन् । ब्राह्मणो ब्ब्रह्मवर्चसी जायता'मिति ब्ब्राह्मण ऽएव ब्ब्रह्मवर्चसन्दधाति तस्मात्पुरा ब्ब्राह्मणो ब्ब्रह्मवर्चसी जज्ञे ॥ १ ॥ 'ओं राष्ट्रे राजन्न्यः । शूर ऽइषव्व्योऽतिव्व्याधी महारथो जायता'मिति राजन्न्य ऽएव शौर्य्यम्महिमानन्दधाति तस्मात्पुरा राजन्न्यः शूर ऽइषव्व्योऽतिव्व्याधी महारथो जज्ञे ॥ २ ॥ 'दोग्ध्री धेनु'-रिति । धेन्न्वामेव पयो दधाति तस्मात्पुरा धेनुर्दोग्ध्री जज्ञे ॥ ३ ॥ 'वोढानड्वा'निति । अनडुह्येव वलन्दधाति तस्मात्पुरानड्वान्न्वोढा जज्ञे ॥ ४ ॥ 'आशुः सप्ति'रिति । अश्श्व ऽएव जवन्दधाति तस्मात्पुराश्श्वः सर्त्ता जज्ञे ॥ ५ ॥ 'पुरन्धिर्य्योषे'ति । योषित्त्येव रूपन्दधाति तस्मा-द्रूपिणी युवतिः प्रिया भावुका ॥ ६ ॥ 'जिष्ण्णू रथेष्ठा' ऽइति । राजन्न्य ऽएव जैत्र्यम्महिमानन्दधाति तस्मात्पुरा राजन्न्यो जिष्ण्णुर्ज्जज्ञे ॥ ७ ॥ 'सभेयो युवे'ति । एष वै सभेयो युवा यः प्प्रथमवयसी तस्मात्प्रथमवयसी स्त्रीणा-म्प्रियो भावुकः ॥ ८ ॥ 'ओऽस्य यजमानस्य वीरो जायता'-मिति । यजमानस्यैव प्प्रजायां वीर्य्यन्दधाति तस्मात्पुरेजा-नस्य वीरो जज्ञे ॥९॥ [अर्धः प्रपाठकः ॥५४॥] 'निकामे-निकामे नः पर्ज्जन्न्यो वर्षत्वि'ति । निकामे-निकामे वै तत्र पर्ज्जन्न्यो

---

(१) शु० य० सं० २२.२२। (२) शु० य० सं० २२.२२। (३) शु० य० सं० २२.२२। (४) शु० य० सं० २२.२२। (५) शु० य० सं० २२.२२। (६) शु० य० सं० २२ २२। (७) शु० य० सं० २२.२२। (८) शु० य० सं० २२.२२। (९) शु० य० सं० २२.२२। (१०) शु० य० सं० २२.२२।

वर्षति यत्रैतेन यज्ञेन यजन्ते 'फलवत्त्यो न ऽओषधयः
पच्च्यन्ता'मिति फलवत्त्यो वै तत्रौषधयः पच्च्यन्ते यत्रैतेन
यज्ञेन यजन्ते 'योगक्षेमो नः कल्पता'मिति योगक्षेमो
वै तत्र कल्पते यत्रैतेन यज्ञेन यजन्ते तस्माद्यत्रैतेन यज्ञेन
यजन्ते क्लृप्तः प्प्रजानां य्योगक्षेमो भवति ॥ १० ॥

प्रथमाध्याये नवमं ब्राह्मणम् ॥ ९ ॥

इति प्रथमोऽध्यायः ॥ १ ॥

---

[ आज्यसक्तुधानालाजहोमः ]

प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत् । स ऽआत्मन्न-
श्वमेधमधत्त ते देवाः प्प्रजापतिमब्रुवन्नेष वै यज्ञो यद-
श्वमेधोऽपि नोऽत्रास्तु भाग ऽइति तेभ्य ऽएतानन्न-
होमानकल्पयद्यदन्नहोमाञ्जुहोति देवानेव तत्प्रीणाति ॥१॥
आज्येन जुहोति । तेजो वा ऽआज्यन्तेजसैवास्मिँस्तत्तेजो
दधात्याज्येन जुहोत्येतद्वै देवानाम्प्रियन्धाम यदाज्य-
म्प्रियेणैवैनान्धाम्ना समर्द्धयति ॥ २ ॥ सक्तुभिर्ज्जुहोति ।
देवानां वा ऽएतद्रूपं य्यत्सक्तवो देवानेव तत्प्रीणाति ॥ ३ ॥
धानाभिर्ज्जुहोति । अहोरात्राणां वा ऽएतद्रूपं य्यद्धाना
ऽअहोरात्राण्येव तत्प्रीणाति ॥ ४ ॥ लाजैर्ज्जुहोति ।
नक्षत्राणां वा ऽएतद्रूपं य्यल्लाजा नक्षत्राण्येव तत्प्रीणाति
'प्प्राणाय[२] स्वाहापानाय स्वाहे'ति नामग्ग्राहञ्जुहोति नाम-

---

(१) शु॰ य॰ स॰ २९. २२। (२) शु॰ य॰ स॰ २२. २२। (३) शु॰ य॰ स॰ २२. २३।

ग्राहमेवैनाँस्तत्प्रीणा त्येकस्मै स्वाहा द्वाभ्याᳫं स्वाहा शताय स्वाहैकशताय स्वाहे त्यनुपूर्वञ्जुहोत्यनुपूर्वमेवैनाँस्तत्प्रीणात्येकोत्तरा जुहोत्येकवद्वै स्वर्गो लोक ऽएकधैवैनᳫं स्वर्गँल्लोकङ्गमयति पराचीर्जुहोति पराङिव वै स्वर्गो लोकः स्वर्गस्य लोकस्याभिजित्यै ॥५॥ ईश्वरो वा ऽएषः । पराङ् प्रदघोर्यः पराचीराहुतीर्जुहोति नैकशतमत्येति यदेकशतमतीयादायुषा यजमानं व्यर्द्धयेदेकशतञ्जुहोति शतायुर्वै पुरुष ऽआत्मैकशत आयुष्येवात्मन्प्रतितिष्ठति 'व्युष्ट्यै स्वाहा स्वर्गाय स्वाहे'त्युत्तमे ऽआहुती जुहोति रात्रिर्वै व्युष्टिरहः स्वर्गोऽहोरात्रे ऽएव तत्प्रीणाति ॥ ६ ॥ तदाहुः । यदुभे दिवा वा नक्तं वा जुहुयादहोरात्रे मोहयेद्व्युष्ट्यै स्वाहेत्यनुदित ऽआदित्ये जुहोति स्वर्गाय स्वाहेत्युदितेऽहोरात्रयोरव्यतिमोहाय ॥ ७ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥



[ पर्यङ्ग्यपशुनिरूपणम् ]

राजा वा ऽएष यज्ञानां यदश्वमेधः । यजमानो वा ऽअश्वमेधो यजमानो यज्ञो यदश्वे पशून्नियुनक्ति यज्ञ ऽएव तद्यज्ञमारभते ॥ १ ॥ अश्वन्तूपरङ्गोमृगमिति । तान्मध्यमे यूप ऽआलभते सेनामुखमेवास्यैतेन सᳫंश्यति तस्माद्राज्ञः सेनामुखम्भीष्मम्भावुकम् ॥ २ ॥ कृष्णग्रीवमाग्नेयᳫं रराटे पुरस्तात् । पूर्वाग्निमेव तत्कुरुते

(१) शु० य० मं० २२. ३४। (२) शु० य० मं० २२. ३४।

तस्माद्राजः पूर्वाग्निर्भावुकः ॥ ३ ॥ सारस्वतीम्मेषीम-धस्ताद्धन्वोः । स्त्रीरेव तदनुगाः कुरुते तस्मात्स्त्रियः पुंसः सोऽनुवर्त्मानो भावुकाः ॥ ४ ॥ आश्विनावधो-रामौ बाह्वोः । बाह्वोरेव बलन्धत्ते तस्माद्राजा बाहु-बली भावुकः ॥ ५ ॥ सौमापौष्णं श्यामन्नाभ्याम् । प्रतिष्ठामेव ताङ्कुरुत ऽइयं वै पूषास्यामेव प्रतितिष्ठति ॥ ६ ॥ सौर्य्यामौ श्वेतञ्च कृष्णञ्च पार्श्वयोः । कवचे ऽएव ते कुरुते तस्माद्राजा सन्नद्धो वीर्य्यङ्करोति ॥७॥ त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः । ऊर्वोरेव बलन्धत्ते तस्माद्राजोरुबली भावुकः ॥ ८ ॥ वायव्यं श्वेतम्पुच्छे । उत्सेधमेव तङ्कुरुते तस्मादुत्सेधम्प्रजा भयेऽभिसंश्रय-न्तीन्द्राय स्वपस्याय वेहतं व्यज्ञस्य सेन्द्रतायै वैष्णवो वामनो यज्ञो वै विष्णुर्यज्ञ ऽएवान्ततः प्रतितिष्ठति ॥ ९ ॥ ते वा ऽएते । पञ्चदश पर्य्यङ्ग्याः पशवो भवन्ति पञ्चदशो वै वज्रो वीर्य्यं वज्रो वज्रेणैवैतद्वीर्य्येण यजमानः पुरस्तात्पाप्मानमपहते ॥ १० ॥ पञ्चदश-पञ्चदशो ऽएवे-तरेषु । पञ्चदशो वै वज्रो वीर्य्यं वज्रो वज्रेणैवैतद्वी-र्य्येण यजमानोऽभितः पाप्मानमपहते ॥ ११ ॥ तदाहुः । अपाहैवैतैः पाप्मानः हता ऽइत्यकृत्स्नश्च त्वै प्रजापतिः संस्करोति न चेदः सर्वमवरुन्द्धे ॥ १२ ॥ सप्तदशैव * पशुन्मध्यमे यूप ऽआलभेत । सप्तदशो वै प्रजापतिः

---

* त्रयोऽश्वतूपरगोमृगाः द्वौ चाग्नेयावैकादशिनौ द्वादश रोहितादयः, एवं सप्तदश पशवो मध्यमे यूपे भवन्ति ।

प्रजापतिरश्वमेधोऽश्वमेधस्यैवाप्त्यै षोडश–षोडशेतरेषु षोडशकलं वा ऽइदꣳ सर्वन्तदिदꣳ सर्वमवरुन्द्धे ॥ १३ ॥ ताङ्कथमाप्रीणीयादित्याहुः । 'समिद्धो ऽअञ्जन्कृदरम्मतीना'मिति बार्हदुक्थीभिराप्रीणीयाद्बृहदुक्थो ह वै वामदेव्योऽश्वो वा साम्राद्रिरश्वस्याप्रीर्ददर्श ता ऽएतास्ताभिरेवैनमेतदाप्रीणीम ऽइति वदन्तो न तथा कुर्य्याज्जामदग्नीभिरेवाप्रीणीयात्प्रजापतिर्वै जमदग्निः सोऽश्वमेधः स्वयैवैनन्देवतया समर्द्धयति तस्माज्जामदग्नीभिरेवाप्रीणीयात् ॥ १४ ॥ तद्धैके । एतेषाम्पर्य्यङ्ग्याणा-न्नाना याज्यापुरोऽनुवाक्याः कुर्वन्ति विन्दाम ऽएतेषामुविश्येतरेषान्न कुर्म्म ऽइति न तथा कुर्य्यात्क्षत्रं वा ऽअश्वो विडितरे पशवः प्रतिप्रतिनीꣳ ह ते प्रत्युद्यामिनीङ्क्षत्राय विशङ्कुर्वन्त्यथो ऽआयुषा यजमानं व्यर्द्धयन्ति ये तथा कुर्वन्ति तस्मात्प्राजापत्य ऽएवाश्वो देवदेवत्या ऽइतरे क्षत्रायैव तद्विशङ्कृतानुकरामनुवर्त्मानङ्करोत्यथो ऽआयुषैव यजमानꣳ समर्द्धयति ॥ १५ ॥ हिरण्मयोऽश्वस्य शासो भवति । लोहमयाः पर्य्यङ्ग्याणामायसा ऽइतरेषाञ्ज्योतिर्वै हिरण्यꣳ राष्ट्रमश्वमेधो ज्योतिरेव तद्राष्ट्रे दधात्यथो हिरण्यज्योतिषैव यजमानः स्वर्गं लोकमेत्यथो ऽअनूकाशमेव तत्कुरुते स्वर्ग्यस्य लोकस्य समष्ट्यै ॥ १६ ॥ अथो क्षत्रं वा ऽअश्वः । क्षत्रस्यैतद्रूपं यद्धिरण्यं क्षत्रमेव तत्क्षत्रेण समर्द्धयति ॥ १७ ॥ अथ

(1) ऋ० सं० १० २१. १।

यच्छोहमयाः पर्य्यङ्गयाणाम् । यथा वै राज्ञोऽराजानो राजकृतः सूतग्रामण्य ऽएवं वा ऽएतेऽश्वस्य यत्पर्य्यङ्ग्या ऽएवमु वा ऽएतद्धिरण्मयस्य यच्छोहᳪं स्वेनैवैनाँस्तद्रूपेण समर्द्धयति ॥ १८ ॥ अथ यदायसा ऽइतरेषाम् । विड्वा ऽइतरे पशवो विश ऽएतद्रूपं यदयो विशमेव तद्विशा समर्द्धयति वैतस ऽइटसून ऽउत्तरतोऽश्वस्यावघन्त्यानुष्टुभो वा ऽअश्व ऽआनुष्टुभैषा दिक्स्वायामेवैनन्तद्दिशि दधात्यथ यद्वैतस ऽइटसूनेऽप्सुयोनिर्वा ऽअश्वोऽप्सुजा वेतसः स्वयैवैनं योन्या समर्द्धयति ॥ १९ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥



[ उद्गात्रन्वारम्भः ]

देवा वा ऽअश्वमेधे पवमानम् । स्वर्गँल्लोकन्न प्राजानँस्तमश्वः प्राजानाद्यदश्वमेधेऽश्वेन पवमानाय सर्प्पन्ति स्वर्गस्य लोकस्य प्रज्ञात्यै पुच्छमन्वारभन्ते स्वर्गस्यैव लोकस्य समष्ट्यै न वै मनुष्यः स्वर्गँल्लोकमञ्जसा वेदाश्वो वै स्वर्गँल्लोकमञ्जसा वेद ॥ १ ॥ यदुद्गासोद्गायेत् । यथाक्षेत्रज्ञोऽन्येन पथा नयेत्तादृक्तदथ यदुद्गातारमपरुध्याश्वमुद्गीथाय वृणीते यथा क्षेत्रज्ञोऽञ्जसा नयेदेवमेवैतद्यजमानमश्वः स्वर्गँल्लोकमञ्जसा नयति हिङ्करोति सामैव तद्धिङ्करोत्युद्गीथ ऽएव स वडवा ऽउप-

( १ ) 'स' इति 'ग' 'ञ' पुस्तकयोः ।

रुन्धन्ति सꣳशिꣳषन्ते यथोपगातार ऽउपगायन्ति तादृक्त-
द्धिरण्यन्दक्षिणा सुवर्णꣳ शतमानन्तस्योक्तम्ब्राह्मणम् ॥२॥

द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



[ ग्राम्यपश्वालम्भः, आरण्यपशूनामुत्सर्गश्च ]

प्रजापतिरकामयत । उभौ लोकावभिजयेयन्देवलो-
कञ्च मनुष्यलोकञ्चेति स ऽएतान्पशूनपश्यद्ग्राम्याँश्चा-
रण्याँश्च तानालभत तैरिमौ लोकाववारुन्ध ग्राम्यै-
रेव पशुभिरिमँल्लोकमवारुन्धारण्यैरमुमयं वै लोको मनु-
ष्यलोकोऽथासौ देवलोको यद्ग्राम्यान्पशूनालभत
ऽइममेव तैर्ल्लोकं यजमानोऽवरुन्द्धे यदारण्यानमुन्तैः ॥१॥
स यद्ग्राम्यैः सꣳस्थापयेत् । समद्ध्वानः क्रामेयुः सम-
न्तिकङ्ग्रामयोर्ग्रामान्तौ स्यातान्नर्क्षीकाः पुरुषव्याघ्राः
परिमोषिण ऽआव्याधिन्यस्तस्करा ऽअरण्येष्वाजायेर-
न्यदारण्यैर्व्यद्ध्वानः क्रामेयुर्विदूरङ्ग्रामयोर्ग्रामान्तौ स्या-
तामृक्षीकाः पुरुषव्याघ्राः परिमोषिण ऽआव्याधिन्य
स्तस्करा ऽअरण्येष्वाजायेरन् ॥ २ ॥ तदाहुः । अपशुर्वा
ऽएष यदारण्यो नैतस्य होतव्यं यज्जुहुयात्क्षिप्रं य-
जमानमरण्यम्मृतꣳ हरेयुररण्यभागा ह्यारण्याः पशवो
यन्न जुहुयाद्यज्ञवेशसꣳ स्यादिति पर्य्यग्निकृतानेवोत्सृजन्ति
तन्नैव हुतन्नाहुतन्न यजमानमरण्यम्मृतꣳ हरन्ति न
यज्ञवेशसम्भवति ॥ ३ ॥ ग्राम्यैः सꣳस्थापयति । वि
पितापुत्राववस्यतः समद्ध्वानः क्रामन्ति समन्तिकङ्ग्राम-

योग्यामान्तौ भवतो नऽर्क्षीकाः पुरुषव्याघ्राः परिमोषिण ऽआव्याधिन्यस्तस्करा ऽअरण्येष्वाजायन्ते ॥ ४ ॥

द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥



[ पश्वेकादशिनी ]

प्रजापतिरश्वमेधमसृजत । सोऽस्मात्सृष्टः पराङैत्स पङ्क्तिर्भूत्वा संवत्सरम्प्राविशत्तेऽर्धमासा ऽअभवंस्तम्पञ्चदशिभिरनुप्रायुङ्क्त तमाप्नोत्तमाप्त्वा पञ्चदशिभिरेवारुन्द्धार्धमासानां वा ऽएषा प्रतिमा यत्पञ्चदशिनो यत्पञ्चदशिन ऽआलभतेऽर्धमासानेव तैर्यजमानोऽवरुन्द्धे ॥ १ ॥ तदाहुः । अनवरुद्धो वा ऽएतस्य संवत्सरो भवति योऽन्यत्र चातुर्मास्येभ्यः संवत्सरन्तनुत ऽइत्येष वै साक्षात्संवत्सरो यच्चातुर्मास्यानि यच्चातुर्मास्यान्पशूनालभते साक्षादेव तत्संवत्सरमवरुन्द्धे वि वा ऽएष प्रजया पशुभिर्ऋध्यतेऽप स्वर्गाल्लोकाद्राध्नोति योऽन्यत्रैकादशिनेभ्यः संवत्सरन्तनुत ऽइत्येष वै सम्प्रति स्वर्गो लोको यदेकादशिनी प्रजा वै पशव ऽएकादशिनी यदेकादशिनान्पशूनालभते न स्वर्गाल्लोकमपराध्नोति न प्रजया पशुभिर्व्यृध्यते ॥ २ ॥ प्रजापतिर्विराजमसृजत । सास्मात्सृष्टा पराच्यैत्साश्वम्मेध्यम्प्राविशत्तान्दशिभिरनुप्रायुङ्क्त तामाप्नोत्तामाप्त्वा दशिभिरेवारुन्द्ध यद्दशिन ऽआलभते विराजमेव तैर्यजमानोऽवरुन्द्धे शतमालभते शतायुर्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं वीर्यमात्मन्धत्ते ॥ ३ ॥

एकादश दशत ऽआलभते। एकादशाक्षरा वै त्रिष्टुबि-
न्द्रियम् वै वीर्य्यन्त्रिष्टुबिन्द्रियस्यैव वीर्य्यस्यावरुद्ध्या
ऽएकादश दशत ऽआलभते दश वै पशोः प्प्राणा ऽआत्मै-
कादशः प्प्राणैरेव पशून्त्समर्द्धयति वैश्वदेवा भवन्ति
वैश्वदेवो वा ऽअश्वोऽश्वस्यैव सर्वत्वाय बहुरूपा भवन्ति
तस्माद्बहुरूपाः पशवो नानारूपा भवन्ति तस्मान्नाना-
रूपाः पशवः ॥ ४ ॥

द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

[ अश्वस्य नियोजनाञ्जनमणिबन्धनादि ]

'युञ्जन्ति ब्रध्नमरुषञ्चरन्त'मिति। असौ वा ऽआ-
दित्यो ब्रध्नोऽरुषोऽमुमेवास्मा ऽआदित्यं युनक्ति
स्वर्ग्गस्य लोकस्य समष्ट्यै ॥ १ ॥ तदाहुः। पराङ्वा ऽए-
तस्माद्यज्ञ ऽएति यस्य पशुरुपाकृतोऽन्यत्र वेदेरेती'त्येतꣳ
स्तोतरनेन पथा पुनरश्वमावर्त्तयासि न' ऽइति वायुर्वै
स्तोता तमेवास्मा ऽएतत्परस्ताद्दधाति तथा नात्येति ॥२॥
अप वा ऽएतस्मात्। तेज ऽइन्द्रियम्पशवः श्रीः क्रामन्ति
योऽश्वमेधेन यजते ॥ ३ ॥ 'वसवस्त्वाञ्जन्तु। गायत्रेण
च्छन्दसे'ति महिष्यभ्यनक्ति तेजो वा ऽआज्यन्तेजो गायत्री
तेजसी ऽएवास्मिन्त्समीची दधाति ॥ ४ ॥ 'रुद्रास्त्वा-
ञ्जन्तु। त्रैष्टुभेन च्छन्दसे'ति वावाता तेजो वा ऽआज्य-

'(१) शु० य० सं० २३.५। (२) शु० य० सं० २३.७। (३) शु० य० सं० २३.८। (४) शु० य० सं० २३.८।

मिन्द्रियन्त्रिष्टुप्तेजश्चैवास्मिन्निन्द्रियञ्च समीची दधाति ॥ ५ ॥ 'आदित्यास्त्वाञ्जन्तु । जागतेन च्छन्दसे'ति परिवृक्ता तेजो वा ऽआज्यम्पशवो जगती तेजश्चैवास्मिन्पशूँश्च समीची दधाति ॥ ६ ॥ पत्न्योऽभ्यञ्जन्ति * । श्रियै वा ऽएतद्रूपं यत्पत्न्यः श्रियमेवास्मिँस्तद्दधाति नास्मात्तेज ऽइन्द्रियम्पशवः श्रीरपक्रामन्ति ॥ ७ ॥ यथा वै हविषोऽहुतस्य स्कन्देत् । एवमेतत्पशो स्कन्दति यस्य निक्तस्य लोमानि शीयन्ते यत्काचानावयन्ति लोमान्येवास्य सम्भरन्ति हिरण्मया भवन्ति तस्योक्तम्ब्राह्मणमेकशतमेकशतङ्काचानावयन्ति शतायुर्वै पुरुष ऽआत्मैकशत ऽआयुष्येवात्मन्प्रतितिष्ठति 'भूर्भुवः स्व'रिति प्राजापत्याभिरावयन्ति प्राजापत्योऽश्वः स्वयैवैनन्देवतया समर्द्धयन्ति 'लाजीञ्छाचीन्यशो ममा'ऽइत्यतिरिक्तमन्नमश्वायोपावहरति प्रजामेवान्नादीङ्कुरुत 'ऽएतदन्नमत्त देवा ऽएतदन्नमद्धि प्रजापत' ऽइति प्रजामेवान्नाद्येन समर्द्धयति ॥ ८ ॥ अप वा ऽएतस्मात् । तेजो ब्रह्म वर्चसङ्क्रामति योऽश्वमेधेन यजते होता च ब्रह्मा च ब्रह्मोद्यं वदत ऽआग्नेयो वै होता बार्हस्पत्यो ब्रह्मा ब्रह्म बृहस्पतिस्तेजश्चैवास्मिन्ब्रह्मवर्चसञ्च समीची धत्तो यूपमभितो वदतो यजमानो वै यूपो यजमानमेवैतत्तेजसा

(१) शु० य० स० २३ ८।
* का० श्रौ० सू० २० ५ १५।
(२) शु० य० स० २३ ८। (३) शु० य० स० २३ ८। (४) शु० य० स० २३. ८।

[ अश्वस्य प्रोक्षणादि ]

नियुक्तेषु पशुषु । प्प्रोक्षणीरद्ध्वर्य्युरादत्तेऽश्श्वम्प्प्रोक्षि-
ष्ष्यन्नन्न्वारब्धे यजमान ऽआद्धरिकं य्यजुरनुद्रुत्याश्श्वमे-
धिकं य्यजुः प्प्रतिपद्यते ॥ १ ॥ 'वायुष्ट्वा पचतैरवत्त्वि'ति ।
वायुरेवैनम्पच'त्त्यसितग्ग्रीवश्छागै'रित्यग्निर्वा ऽअसितग्ग्री-
वोऽग्निरेवैनञ्छागैः पचति ॥ २ ॥ 'न्यग्ग्रोधश्चमसै'रिति ।
यत्र वै देवा यज्ञेनायजन्त त ऽएताँश्चमसान्न्यौब्जँस्ते न्य-
ञ्चोऽरोहँस्तस्म्मान्न्यञ्चो न्यग्ग्रोधा रोहन्ति ॥ ३ ॥ 'श-
ल्म्मलिर्व्वृद्ध्ये'ति । शल्म्मलौ व्वृद्धिन्दधाति तस्म्माच्छल्म्म-
लिर्व्वनस्प्पतीनां व्वर्षिष्ठं वर्द्धते॥४॥ 'एष स्य राथ्यो व्वृषे'ति।
अश्श्वेनैव रथः सम्पादयति तस्म्मादश्श्वो नान्यद्रथा-
द्वहति ॥ ५ ॥ 'पड्भिश्चतुर्भिरेद'ग्निति । तस्म्मादश्श्व-
स्त्रिभिस्तिष्ठँस्तिष्ठत्त्यथ युक्तः सर्व्वैः पद्भिः सममायुते
॥ ६ ॥ 'ब्रह्माकृष्ष्णश्च नोऽवत्त्वि'ति । चन्द्रमा वै ब्रह्मा-
कृष्ष्णश्चन्द्रमस ऽएवैनम्परिददाति 'नमोऽग्नय' ऽइत्त्य-
ग्नय ऽएव नमस्करोति ॥ ७ ॥ 'संशितो रश्मिना
रथ' ऽइति । रश्मिनैव रथः सम्पादयति तस्म्माद्रथः
पुरुर्षुतो दर्शनीयतमो भवति ॥ ८ ॥ 'संशितो रश्मिना
हय' ऽइति । रश्मिनैवाश्श्वः सम्पादयति तस्म्मादश्श्वो
रश्मिना प्प्रतिहितो भूयिष्ठः रोचते ॥ ९ ॥ 'संशितो

(१) शु० य० सं० २३. १३। (२) शु० य० सं० २३. १३। (३) शु० य०
सं० २३. १३। (४) शु० य० सं० २३ १३। (५) शु० य० सं० २३. १३।
(६) शु० य० सं० २३ १३। (७) शु० य० सं० २३ १३। (८) शु० य० सं० २३.१३।
(९) शु० य० २३ १४। (१०) शु० य० सं० २३ १४। (११) शु० य० सं० २३. १४।

ऽअप्स्वप्सुजा' ऽइति । अप्सुयोनिर्वा ऽअश्वः स्वयैवैनं
स्योन्या समर्द्धयति 'व्रह्मा सोमपुरोगव' ऽइति सोमपुरोगव-
मेवैनथं स्वर्गँल्लोकङ्गमयति ॥१०॥ 'स्वयं वाजिंस्तन्वङ्कल्पय-
स्वे'ति । स्वयꣳ रूपङ्कुरुष्व यादृशमिच्छसीत्येवैनन्तदाह 'स्वयं
यजस्वे'ति स्वाराज्यमेवास्मिन्दधाति 'स्वयञ्जुपस्वे'ति स्वयँ-
ल्लोकꣳ रोचयस्व यावन्तमिच्छसीत्येवैनन्तदाह 'महिमा तेऽ-
न्येन न सन्नश' ऽइत्यश्वमेव महिम्ना समर्द्धयति ॥११॥
'न वा ऽउ ऽएतन्म्रियसे न रिष्यसी'ति । प्रवश्वासय-
त्येवैनन्त'देवाँ२॥ ऽइँदेषि पथिभिः सुगेभि'रिति देवयाना-
नेवैनस्पथो दर्शयति 'यत्रासते सुकृतो यत्र ते ययु'रिति
सुकृद्भिरेवैनꣳ सलोकङ्करोति 'तत्र त्वा देवः सविता दधा-
त्वि'ति सवितैवैनथं स्वर्गे लोके दधाति 'प्रजापतये
त्वा जुष्टम्प्रोक्षामी'त्युपाथंश्वथोपस्पृशाति ॥ १२ ॥ 'अग्निः
पशुरासीत् । तेनायजन्त स ऽएतँल्लोकमजयद्यस्मिन्नग्निः
स ते लोको भविष्यति तञ्जेष्यसि पिबैता ऽअप' ऽइति
यावानग्नेर्विजयो यावाँल्लोको यावदैश्वर्यन्तावाँस्ते विज-
यस्तावाँल्लोकस्तावदैश्वर्यम्भविष्यतीत्येवैनन्तदाह ॥ १३ ॥
'वायुः पशुरासीत् । तेनायजन्त स ऽएतँल्लोकमजयद्य-
स्मिन्वायुः स ते लोको भविष्यति तञ्जेष्यसि 'पिबैता

---

(१) शु० य० सं० २३ १४। (२) शु० य० सं० २३ १५। (३) शु० य० सं० २३. १५। (४) शु० य० सं० २३. १५। (५) शु० य० सं० २३ १५। (६) शु० य० सं० २३. १६। (७) शु० य० सं० २३. १६। (८) शु० य० सं० २३. १६। (९) शु० य० सं० २३ १६। (१०) शु० य० सं० २३. ५। (११) शु० य० सं० २३. १७। (१२) शु० य० सं० २३. १७।

ऽअप' ऽइति यावान्वायोर्विजयो यावाँल्लोको यावदैश्वर्य्यन्तावाँस्ते विजयस्तावाँल्लोकस्तावदैश्वर्य्यम्भविष्यतीत्येवैनन्तदाह ॥ १४ ॥ 'सूर्य्यः पशुरासीत्। तेनायजन्त स ऽएतँल्लोकमजयद्यस्मिन्त्सूर्य्यः स ते लोको भविष्यति तञ्जेष्यसि पिबैता ऽअप' ऽइति यावान्त्सूर्य्यस्य विजयो यावाँल्लोको यावदैश्वर्य्यन्तावाँस्ते विजयस्तावाँल्लोकस्तावदैश्वर्य्यम्भविष्यतीत्येवैनन्तदाह तर्प्पयित्वाश्वम्पुनः संस्कृत्य प्रोक्षणीरितराऽपशून्प्रोक्षति तस्यातः ॥ १५ ॥

द्वितीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥



[ मृतस्याऽश्वस्य परिक्रमणादि ]

देवा वा ऽउदच्चः। स्वर्गँल्लोकन्न प्राजानँस्तमश्वः प्राजानाद्यदश्वेनोदञ्चो यन्ति स्वर्गस्य लोकस्य प्रज्ञात्यै वासोऽधिवासः हिरण्यमित्यश्वायोपस्तृणन्ति यथा नान्यस्मै पशवे तस्मिन्नेनमधि संज्ञपयन्त्यन्येभ्यो वैनन्तत्पशुभिर्व्यावर्त्तयन्ति ॥१॥ घ्नन्ति वा ऽएतत्पशुम्। यदेनः संज्ञपयन्ति 'प्राणाय स्वाहापानाय स्वाहा व्यानाय स्वाहे'ति संज्ञप्यमान ऽआहुतीर्जुहोति प्राणानेवास्मिन्नेतद्दधाति तथो हास्यैतेन जीवतैव पशुनेष्टम्भवति ॥२॥ 'अम्बे * ऽअम्बिकेऽम्बालिके। न मा नयति कश्चने'ति पत्नीरुदानयत्यहूतै-

(१) शु० य० सं० २३. १७। (२) शु० य० सं० २३. १८। (३) शु० य० सं० २३. १८।

* 'आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालिकेऽम्बिके पूर्वे' (पा० सू० ६. १. ११८) इति प्रकृतिभाव।

वैना ऽएतद्‌द्धथो मेद्ध्या ऽएवैनाꣳ करोति ॥ ६ ॥ 'गणानान्त्वा गणपतिꣳ हवामह' ऽइति । पत्न्यꣳ परियन्त्यपह्नुवत ऽएवास्म्मा ऽएतदतो न्न्येवास्म्मै ह्नुवतेऽथो धुवत ऽएवैनन्त्रिꣳ परियन्ति त्रयो वा ऽइमे लोका ऽएभिरेवैनँल्लोकैर्द्धुवते त्रिꣳ पुनꣳ परियन्ति षट् सम्पद्यन्ते षड्वा ऽऋतवऽ ऋतुभिरेवैनन्धुवते ॥ ४ ॥ अप वा ऽएतेब्भ्यꣳ प्प्राणाꣳ क्क्रामन्ति । ये यज्ञे धुवनन्तन्न्वते नव कृत्वꣳ परियन्ति नव वै प्प्राणाꣳ प्प्राणानेवात्मन्न्दधते नैब्भ्यꣳ प्प्राणा ऽअपक्क्रामन्त्या'हमजानि गर्ब्भधमात्वमजासि गर्ब्भध'मिति प्प्रजा वै पशवो गर्ब्भꣳ प्प्रजामेव पशूनात्मन्न्धत्ते 'तौ ऽउभौ चतुरꣳ पदꣳ सम्प्रसारयावे'ति मिथुनस्यावरुद्ध्यै 'स्वर्गे लोके प्प्रोर्णुवाथा'मित्येष वै स्वर्गो लोको यत्र पशुꣳ संज्ञपयन्ति तस्म्मादेवमाह 'व्वृषा वाजी रेतोधा रेतो दधात्वि'ति मिथुनस्यैवावरुद्ध्यै ॥ ५ ॥

द्वितीयाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥

[ संवादः ]

अप वा ऽएतस्म्मात् । श्री राष्ट्रङ्क्रामति यो ऽश्वमेधेन यजते ॥ १ ॥ 'ऊर्द्ध्वामेनामुच्छ्रापये'ति । श्रीर्वै राष्ट्रमश्वमेधꣳ श्रियमेवास्म्मै राष्ट्रमूर्द्ध्वमुच्छ्रयति ॥ २ ॥ 'गिरौ

(१) शु० य० सं० २३. १९। (२) शु० य० सं० २३. १९। (३) शु० य० सं० २३. २०। (४) शु० य० सं० २३. २०। (५) शु० य० सं० २३. २०। (६) शु० य० सं० २३. २६। (७) शु० य० सं० २३. २६।

भारᳬ हरन्निवे'ति । श्रीर्वै राष्ट्रस्य भारᳬ श्रियमेवास्मै राष्ट्रᳬ सन्नह्यत्यथो श्रियमेवास्मिन्न्राष्ट्रमधिनिदधाति ॥ ३ ॥ 'अथास्यै मध्यमेधता'मिति । श्रीर्वै राष्ट्रस्य मध्यᳬ श्रियमेव राष्ट्रे मध्यतोऽन्नाद्यन्दधाति ॥ ४ ॥ 'शीते वाते पुनन्निवे'ति । क्षेमो वै राष्ट्रस्य शीतं क्षेममेवास्मै करोति ॥ ५ ॥ 'यकासकौ शकुन्तिके'ति । विड्वै शकुन्तिका'हलगिति वञ्चती'ति विशो वै राष्ट्राय वञ्चन्त्या'हन्ति गभे पसो निगल्गलीति धारके'ति विड्वै गभो राष्ट्रम्पसो † राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्री विशङ्घातुकᳬ ॥ ६ ॥ 'माता च ते पिता च त' इति । इयं वै मातासौ पिताभ्यामेवैनᳬ स्वर्गँल्लोकङ्गमयत्यु'ग्रं वृक्षस्य रोहत' इति श्रीर्वै राष्ट्रस्याग्रᳬ श्रियमेवैनᳬ राष्ट्रस्याग्रङ्गमयति 'प्रतिलामीति ते पिता गभे मुष्टिमतᳬसय'दिति विड्वै गभो राष्ट्रम्मुष्टी राष्ट्रमेव विश्याहन्ति तस्माद्राष्ट्री विशङ्घातुकᳬ ॥ ७ ॥ 'यद्धरिणो यवमत्ती'ति विड्वै यवो राष्ट्रᳬ हरिणो विशमेव राष्ट्रायाद्याङ्करोति तस्माद्राष्ट्री विशमत्ति 'न पुष्टम्पशु मन्यत' इति तस्माद्राजा पशून्न पुष्यति 'शूद्रो यदर्यजारा *

(१) शु० य० सं० २३. २६ । (२) शु० य० सं० २३. २६ । (३) शु० य० सं० २३. २१ । (४) शु० य० सं० २३. २२ । (५) शु० य० सं० २३. २२ ।

† 'पस इति पसतेः स्पृशतिकर्मणः' ( निरु० ५. १६ ) इति यास्कः ।

(६) शु० य० सं० २३. २४ । (७) शु० य० सं० २३. २४ । (८) शु० य० सं० २३. २४ । (९) शु० य० सं० २३. ३० ।

(१०) शु० य० सं० २३. ३० । (११) शु० य० सं० २३. ३० ।

* 'अर्यः स्वामिवैश्ययोः' ( पा० ३. १. १०३ ) इति निपातनादर्यो वैश्यो जार उपपतिर्यस्याः सा अर्यजारा ।

न पोषाय धनायती'ति तस्मादैशीपुत्रन्नाभिषिञ्चति ॥ ८ ॥
अप वा ऽएतेभ्यः प्राणाः क्रामन्ति । ये यज्ञेऽपूतां
वाचं वदन्ति 'दधिक्राव्णो ऽअकारिष'मिति सुरभिमतीं-
मृचमन्ततोऽन्वाहुर्वाचमेव पुनते नैभ्यः प्राणा ऽअ-
पक्रामन्ति ॥ ९ ॥

द्वितीयाध्याये नवमं ब्राह्मणम् ॥ ९ ॥



[ अश्वशरीरे सूचीभिर्विवोदः ]

यदसिपथान्कल्पयन्ति । सेतुमेव तद्यजमानः कुरुते स्वर्गस्य लोकस्य समष्ट्यै ॥१॥ सूचीभिः कल्पयन्ति । विशो वै सूच्यो राष्ट्रमश्वमेधो विशश्चैवास्मिन्राष्ट्रञ्च समीची दधाति हिरण्मय्यो भवन्ति तस्योक्तम्ब्राह्मणम् ॥ २ ॥ त्रय्यः सूच्यो भवन्ति । लोहमय्यो रजता हरिण्यो दिशो वै लोहमय्योऽवान्तरदिशो रजता ऽऊर्ध्वा हरिण्यस्ताभिरेवैनङ्कल्पयन्ति तिरश्चीभिश्चोर्ध्वाभिश्च बहुरूपा भवन्ति तस्माद्बहुरूपा दिशो नानारूपा भवन्ति तस्मान्नानारूपा दिशः ॥ ३ ॥

द्वितीयाध्याये दशमं ब्राह्मणम् ॥ १० ॥



( ३ ) शु० य० सं० २३ ३२।
( ४ ) 'भ' 'अ' पुस्तकयो "हिरण्मयमय्यो" इति पाठ ।

[ परिपशव्याहुती ]

प्रजापतिरकामयत । महान्भूयान्त्स्यामिति स ऽएता-वश्वमेधे महिमानौ ग्रहावपश्यत्तावजुहोत्ततो वै स महा-न्भूयानभवत्स यः कामयेत महान्भूयान्त्स्यामिति स ऽएतावश्वमेधे महिमानौ ग्रहौ जुहुयान्महान्हैव भूया-न्भवति ॥ १ ॥ वपामभितो जुहोति । यजमानो वा ऽअश्वमेधो राजा महिमा राज्येनैवैनमुभयतः परि-गृह्णाति पुरस्तात्स्वाहाकृतयो वा ऽअन्ये देवा ऽउपरिष्टा-त्स्वाहाकृतयोऽन्ये तानेवैतत्प्रीणाति 'स्वाहा देवेभ्यो देवेभ्यः स्वाहे'ति राज्ञा वपाम्परियजति ये चैवास्मिँल्लोके देवा य ऽउ चामुष्मिँस्तानेवैतत्प्रीणाति त ऽएनमुभये देवाः प्रीताः स्वर्गँल्लोकमभिवहन्ति ॥ २ ॥

द्वितीयाध्याये एकादशं ब्राह्मणम् ॥ ११ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥



[ अश्वस्यावदानम् ]

प्रजापतेरक्ष्यश्वयत् । तत्परापतत्ततोऽश्वः समभव-द्यदश्वयत्तदश्वस्याश्वत्वन्तद्देवा ऽअश्वमेधेनैव प्रत्यद-धुरेष ह वै प्रजापतिः सर्वङ्करोति योऽश्वमेधेन यजते सर्व ऽएव भवति सर्वस्य वा ऽएषा प्रायश्चित्तिः सर्वस्य भेषजः सर्वं वा ऽएतेन पाप्मानन्देवा ऽअतरन्नपि वा ऽएतेन ब्रह्महत्यामतरँस्तरति सर्वम्पाप्मानन्तरति ब्रह्महत्यां

(१) शु० य० सं० ६. ११।

स्योऽश्वमेधेन यजते ॥ १ ॥ उत्तरं वै तत्प्रजापतेरक्ष्य-श्वयत् । तस्मादुत्तरतोऽश्वस्यावद्यन्ति दक्षिणतोऽन्येषा-म्पशूनाम् ॥ २ ॥ वैतसः कटो भवति । अप्सुयोनिर्वा ऽअश्वोऽप्सुजा वेतसः स्वयैवैनं योन्या समर्धयति ॥ ३ ॥ चतुष्टोम स्तोमो भवति । सरद्वा ऽअश्वस्य सक्थ्यावृहत्तद्देवाश्चतुष्टोमेनैव स्तोमेन प्रत्यदधुर्यच्च-तुष्टोम स्तोमो भवत्यश्वस्यैव सर्वत्वाय सर्वस्तोमोऽति-रात्र ऽउत्तममहर्भवति सर्वं वै सर्वस्तोमोऽतिरात्रः सर्व-मश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ४ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ वपाप्रचारः ]

परमेण वा ऽएष स्तोमेन जित्वा । चतुष्टोमेन कृते-नायानामुत्तरेऽहन्नेकविंशे प्रतिष्ठायाम्प्रतितिष्ठत्येकविंश-शात्प्रतिष्ठाया ऽउत्तरमहर्ऋतूनन्वारोहत्यृतवो वै पृष्ठा-न्यृतवः संवत्सर ऽऋतुष्वेव संवत्सरे प्रतितिष्ठति ॥ १ ॥ शक्वर्यः पृष्ठम्भवन्ति । अन्यदन्यच्छन्दोऽन्येऽन्ये वा ऽअत्र पशव ऽआलभ्यन्त ऽउतेव ग्राम्या ऽउतेवारण्या यच्छक्वर्यः पृष्ठम्भवन्त्यश्वस्यैव सर्वत्वायान्ये पशव ऽआलभ्यन्तेऽन्येऽन्ये हि स्तोमाः क्रियन्ते ॥ २ ॥ तदाहुः । नैते सर्वे पशवो यदजावयश्चारण्याश्चैते वै सर्वे पशवो यद्गव्या ऽइति गव्यानुत्तमेऽहन्नालभत

( १ ) "गव्या ऽउत्तमे०" इति 'ग' 'ज' पुस्तकयो पाठ ।

ऽएते वै सर्वे पशवो यद्गव्याः सर्वानेव पशूनालभते वैश्वदेवा भवन्ति वैश्वदेवो वा ऽअश्वोऽश्वस्यैव सर्वत्वाय बहुरूपा भवन्ति तस्माद्बहुरूपाः पशवो नानारूपा भवन्ति तस्मान्नानारूपाः पशवः ॥ ३ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

—०—

[ यूपैकविंशतिः ]

युक्तिस्तोऽनुष्टुभो भवन्ति । तस्मादश्वस्त्रिभिस्तिष्ठँस्तिष्ठति यद्युतत्तो गायत्र्यस्तस्मादश्वः सर्वैः पद्भिः प्रतिदधत्पलायते परमं वा ऽएतच्छन्दो यदनुष्टुप्परमोऽश्वः पशूनाम्परमश्चतुष्टोम स्तोमानाम्परमेणैवैनम्परमताङ्गमयति ॥ १ ॥ शाक्वरर्य्यः पृष्ठम्भवन्ति । अन्यदन्यच्छन्दोऽन्येऽन्ये हि स्तोमाः क्रियन्ते यच्छक्वर्य्यः पृष्ठम्भवन्त्यश्वस्यैव सर्वत्वाय ॥ १ ॥ एकविंशम्मध्यमम्हर्भवति । असौ वा ऽआदित्य ऽएकविंशः सोऽश्वमेधः स्वेनैवैनं स्तोमेन स्वायान्देवतायाम्प्रतिष्ठापयति ॥ ३ ॥ वामदेव्यम्मैत्रावरुणसाम भवति । प्रजापतिर्वै वामदेव्यम्प्राजापत्योऽश्वः स्वयैवैनन्देवतया समर्द्धयति ॥४॥ पार्थुरश्मम्ब्रह्मसाम भवति । रश्मिना वा ऽअश्वो यत ऽईश्वरो वा ऽअश्वोऽयतोऽधृतोऽप्रतिष्ठितः परां परावतङ्गन्तोर्यत्पार्थुरश्मम्ब्रह्मसाम भवत्यश्वस्यैव धृत्यै ॥ ५ ॥ सङ्कृत्यच्छावाकसाम भवति । उत्सन्नयज्ञ ऽइव वा ऽएष यदश्वमेधः किं वा ह्येतस्य क्रियते किं वा न यत्स-

ङ्क्त्यच्छावाकसाम भवत्यश्वस्यैव सर्वत्त्वाय सर्वस्तोमोऽतिरात्र ऽउत्तममहर्भवति सर्वं वै सर्वस्तोमोऽतिरात्रः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ६ ॥ एकविꣳशोऽग्निर्भवति । एकविꣳश स्तोम ऽएकविꣳशतिर्यूपा यथा वा ऽऋषभा वा वृषाणो वा सꣳस्फुरेरन्नेवमेते स्तोमाः समृच्छन्ते यदेकविꣳशास्तान्युत्समर्पयेदार्त्तिमार्च्छेद्यजमानो हन्येतास्य यज्ञः ॥ ७ ॥ द्वादश ऽएवाग्निः स्यात् । एकादश यूपा यद्द्वादशोऽग्निर्भवति द्वादश मासाः संवत्सरः संवत्सरमेव यज्ञमाप्नोति यदेकादश यूपा विराड्वा ऽएषा सम्मीयते यदेकादशिनी तस्यै य ऽएकादश स्तन ऽएवास्यै स दुह ऽएवैनान्तेन ॥ ८ ॥ तदाहुः । यद्द्वादशोऽग्निः स्यादेकादश यूपा यथा स्थूरिणा यायात्तादृक्तद्यत्येकविꣳश ऽएवाग्निर्भवत्येकविꣳश स्तोम ऽएकविꣳशतिर्यूपास्तद्यथा प्रष्टिभिर्यायात्तादृक्तत् ॥ ९ ॥ शिरो वा ऽएतद्यज्ञस्य यदेकविꣳशः । यो वा ऽअश्वमेधे त्रीणि शीर्षाणि वेद शिरो ह राज्ञाम्भवत्येकविꣳशोऽग्निर्भवत्येक विꣳश स्तोम ऽएकविꣳशतिर्यूपा ऽएतानि वा ऽअश्वमेधे त्रीणि शीर्षाणि तानि य ऽएवं वेद शिरो ह राज्ञाम्भवति यो वा ऽअश्वमेधे तिस्रः ककुदो वेद ककुद्ध राज्ञाम्भवत्येकविꣳशोऽग्निर्भवत्येकविꣳश स्तोम ऽएकविꣳशतिर्यूपा ऽएता वा ऽअश्वमेधे तिस्रः ककुदस्ता य ऽएवं वेद ककुद्ध राज्ञाम्भवति ॥ १० ॥

तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ अश्वस्य लोहितश्रपणादि ]

सर्वाभ्यो वै देवताभ्योऽश्व ऽआलभ्यते । यत्प्राजापत्यङ्कुर्य्याद्या देवता ऽअपिभागास्ता भागधेयेन व्यर्द्धये'च्छोदन्दद्भिरवकान्दन्तमूलै'रित्याज्यमवदाना कृत्वा प्रत्याख्यायन्देवताभ्य ऽआहुतीर्ज्जुहोति या ऽएव देवता ऽअपिभागास्ता भागधेयेन समर्द्धयत्यरण्येऽनूच्यान्हुत्वा द्यावापृथिव्यामुत्तमामाहुतिञ्जुहोति द्यावापृथिव्योर्वै सर्वा देवताः प्रतिष्ठितास्ता ऽएवैतत्प्रीणाति देवासुराः संयत्ता ऽआसन् ॥ १ ॥ तेऽब्रुवन् । अग्नयः स्विष्टकृतोऽश्वस्य वयमुद्धारमुद्धरामहे तेनासुरानभिभविष्याम ऽइति ते लोहितमुदहरन्त भ्रातृव्याभिभूत्यै यत्स्विष्टकृद्भ्यो लोहितञ्जुहोति भ्रातृव्याभिभूत्यै भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य ऽएवं वेद ॥ २ ॥ गोमृगकण्ठेन प्रथमामाहुतिञ्जुहोति । पशवो वै गोमृगा रुद्रः स्विष्टकृत्पशूनेव रुद्रादन्तर्दधाति तस्माद्यत्रैपाऽश्वमेध ऽआहुतिर्हूयते न तत्र रुद्रः पशूनभिमन्यते ॥ ३ ॥ अश्वशफेन द्वितीयामाहुतिञ्जुहोति । पशवो वा ऽएकशफा रुद्रः स्विष्टकृत्पशूनेव रुद्रादन्तर्दधाति तस्माद्यत्रैपाऽश्वमेध ऽआहुतिर्हूयते न तत्र रुद्रः पशूनभिमन्यते ॥ ४ ॥ अयस्मयेन चरुणा तृतीयामाहुतिञ्जुहोति । आयास्या वै प्रजा रुद्रः स्विष्टकृत्प्रजा ऽएव रुद्रादन्तर्दधाति तस्माद्य-

( १ ) शु० य० सं० २५. १ ।
( २ ) "आयस्यो" इति 'ग' 'ज' पुस्तकयो पाठ ।

त्रैषाश्वमेध ऽआहुतिर्हूयते न तत्र रुद्रः प्रजा ऽअभिमन्यते ॥ ५ ॥

तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

—०—

[ अश्वमेधेनापमृत्युनिरासः ]

सर्वेषु वै लोकेषु । मृत्यवोऽन्वायत्तास्तेभ्यो यदाहुतीर्न जुहुयाल्लोके लोक ऽएनम्मृत्युर्विन्देद्यन्मृत्युभ्य ऽआहुतीर्जुहोति लोके लोक ऽएव मृत्युमपजयति ॥ १ ॥

तदाहुः । यदमुष्मै स्वाहामुष्मै स्वाहेति जुह्वत्सञ्चक्षीत बहुम्मृत्युमभिसङ्कुर्वीत मृत्यव ऽआत्मानमपिदध्यादिति 'मृत्यवे स्वाहे'त्येकस्मा ऽएवैकामाहुतिञ्जुहोत्येको ह वा ऽअमुष्मिँल्लोके मृत्युरशनायैव तमेवामुष्मिँल्लोकेऽपजयति ॥२॥ [ अर्धः प्रपाठकः कण्डिकाः ५६ ] 'ब्रह्महत्यायै स्वाहे'ति द्वितीयामाहुतिञ्जुहोति । अमृत्युर्ह वा ऽअन्यो ब्रह्महत्यायै मृत्युरेष ह वै साक्षान्मृत्युर्यद्ब्रह्महत्या साक्षादेव मृत्युमपजयति ॥ ३ ॥

एतां ह वै मुण्डिभ ऽऔदन्यः । ब्रह्महत्यायै प्रायश्चित्तिं विदाञ्चकार यद्ब्रह्महत्याया ऽआहुतिञ्जुहोति मृत्युमेवाहुत्या तर्पयित्वा परिपाणङ्कृत्वा ब्रह्मघ्ने भेषजङ्करोति तस्माद्यस्यैषाश्वमेध ऽआहुतिर्हूयतेऽपि योऽस्यापरीषु प्रजायाम्ब्राह्मणः हन्ति तस्मै भेषजङ्करोति ॥ ४ ॥

तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ५ ॥

—०—

( १ ) शु० य० सं० ३९ १३ । ( २ ) शु० य० सं० ३९ १३ ।

[ अश्वस्तोमीयहोमः ]

अश्वस्य वा ऽआलब्धस्य । मेध ऽउदक्रामत्तदश्वस्तोमीयमभवद्यदश्वस्तोमीयञ्जुहोत्यश्वमेव मेधसा समर्द्धयति ॥ १ ॥ आज्येन जुहोति । मेधो वा ऽआज्यम्मेधोऽश्वस्तोमीयम्मेधसैवास्मिँस्तन्मेधो दधात्याज्येन जुहोत्येतद्वै देवानाम्प्रियन्धाम यदाज्यम्प्रियेणैवैनान्धाम्ना समर्द्धयति ॥ २ ॥ अश्वस्तोमीयꣳ हुत्वा द्विपदा जुहोति । अश्वो वा ऽअश्वस्तोमीयम्पुरुषो द्विपदा द्विपाद्वै पुरुषो द्विप्रतिष्ठस्तदेनम्प्रतिष्ठया समर्द्धयति ॥ ३ ॥ तदाहुः । अश्वस्तोमीयम्पूर्वꣳ होतव्यां३ द्विपदा३ ऽइति पशवो वा ऽअश्वस्तोमीयम्पुरुषो द्विपदा यदश्वस्तोमीयꣳ हुत्वा द्विपदा जुहोति तस्मात्पुरुष ऽउपरिष्टात्पशूनधितिष्ठति ॥ ४ ॥ षोडशाश्वस्तोमीया जुहोति । षोडशकला वै पशवः सा पशूनाम्मात्रा पशूनेव मात्रया समर्द्धयति यत्कनीयसीर्वा भूयसीर्वा जुहुयात्पशून्मात्रया व्यर्द्धयेत्षोडश जुहोति षोडशकला वै पशवः सा पशूनाम्मात्रा पशूनेव मात्रया समर्द्धयति नान्यामुत्तमामाहुतिञ्जुहोति यदन्यामुत्तमामाहुतिञ्जुहुयात्प्रतिष्ठायै च्यवेत द्विपदा ऽउत्तमा जुहोति प्रतिष्ठा वै द्विपदाः प्रत्येव तिष्ठति 'जुम्बकाय स्वाहे'त्यवभृथ ऽउत्तमामाहुतिञ्जुहोति वरुणो वै जुम्बकः साक्षादेव वरुणमवयजते शुक्लस्य खलतेर्विक्लिधस्य पिङ्गाक्षस्य मूर्द्धनि जुहोत्येतद्वै वरुणस्य रूपꣳ

( १ ) शु० य० सं० २५ । ९ ।

रूपेणैव वरुणमवयजते ॥ ५ ॥ द्वादश ब्रह्मौदनानुत्थाय निर्वपति । द्वादशभिर्वेष्टिभिर्यजते तदाहुर्यज्ञस्य वा ऽएतद्रूपं यदिष्टयो यदिष्टिभिर्यजेतोपनामुक ऽएनं यज्ञः स्यात्पापीयाँस्तु स्यायातयामानि वा ऽएतदीजानस्य च्छन्दाᳬसि भवन्ति तानि किमेतावदाशु प्रयुञ्जीत सर्वा वै सᳬस्थिते यज्ञे वागाप्यते सात्राप्ता यातयाम्नी भवति यक्रूरीकृतेव हि भवत्यरुष्कृता वाग्वै यज्ञस्तस्मान्न प्रयुञ्जीतेति ॥ ६ ॥ द्वादशैव ब्रह्मौदनानुत्थाय निर्वपेत् । प्रजापतिर्वा ऽओदनः प्रजापतिः सँवत्सरः प्रजापतिर्यज्ञः सँवत्सरमेव यज्ञमाप्नोत्युपनामुक ऽएनं यज्ञो भवति न पापीयान्भवति ॥ ७ ॥

तृतीयाध्याये षष्ठं ब्राह्मणम् ॥ ६ ॥

---

[ अश्वमेधमहिमा ]

एष वै प्रभूर्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्रभूतम्भवति ॥ १ ॥ एष वै विभूर्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव विभूतम्भवति ॥ २ ॥ एष वै व्यष्टिर्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव व्यष्टम्भवति ॥ ३ ॥ एष वै विधृतिर्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव विधृतम्भवति ॥ ४ ॥ एष वै व्यावृत्तिर्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव व्यावृत्तम्भवति ॥ ५ ॥ एष वा ऽऊर्जस्वान्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेवोर्जस्वद्भवति ॥ ६ ॥ एष वै

पयस्वान्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव पयस्वद्भवति ॥ ७ ॥ एष वै ब्रह्मवर्चसी नाम यज्ञः । यत्रैतेन यज्ञेन यजन्त ऽआ ब्राह्मणो ब्रह्मवर्चसी जायते ॥ ८ ॥ एष वा ऽअतिव्याधी नाम यज्ञः । यत्रैतेन यज्ञेन यजन्त ऽआ राजन्योऽतिव्याधी जायते ॥ ९ ॥ एष वै दीर्घो नाम यज्ञः । यत्रैतेन यज्ञेन यजन्त ऽआ दीर्घारण्यञ्जायते ॥ १० ॥ एष वै क्लृप्तिर्नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव क्लृप्तम्भवति ॥ ११ ॥ एष वै प्रतिष्ठा नाम यज्ञः । यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्रतिष्ठितम्भवति ॥ १२ ॥

तृतीयाध्याये सप्तमं ब्राह्मणम् ॥ ७ ॥

[ अश्वमेधप्रायश्चित्तम् ]

अथातः प्रायश्चित्तीनाम् । यद्यश्वो वडवाथं स्कन्देद्वायव्यम्पयोऽनुनिर्वपेद्वायुर्वै रेतसां विकर्त्ता प्राणो वै वायुः प्राणो हि रेतसां विकर्त्ता रेतसैवास्मिँस्तद्रेतो दधाति ॥ १ ॥ अथ यदि स्रामो विन्देत् । पौष्णञ्चरुमनुनिर्वपेत्पूषा वै पशूनामीष्टे ■ यस्यैव पशवो यः पशूनामीष्टे तमेवैतत्प्रीणात्यगदो हैव भवति ॥ २ ॥ अथ यद्यक्षतामयो विन्देत् । वैश्वानरन्द्वादशकपालम्भूमिकपालम्पुरोडाशमनुनिर्वपेदियं वै वैश्वानर ऽइमामेवैतत्प्रीणात्यगदो हैव भवति ॥ ३ ॥ अथ यद्यक्ष्यामयो विन्देत् । सौर्यंचरुमनुनिर्वपेत्सूर्यो वै प्रजानाञ्चक्षुर्यदा ह्येवैष ऽउ-

देत्यथेदꣳ सर्वंश्चरति चक्षुषैवास्मिँस्तच्चक्षुर्दधाति स यच्च-
रुर्भवति चक्षुषा ह्ययमात्मा चरति ॥ ४ ॥ अथ यद्युदके
म्रियेत । वारुणं यवमयञ्चरुमनुनिर्वपेद्वरुणो वा ऽएत-
द्गृह्णाति योऽप्सु म्रियते सा यैवैनन्देवता गृह्णाति तामे-
वैतत्प्रीणाति सास्मै प्रीताश्वमालम्भायानुमन्यते तया-
नुमतमालभते स यद्यवमयो भवति वरुण्या हि यवाः
॥ ५ ॥ अथ यदि नश्येत् । त्रिहविषमिष्टिमनुनिर्वपेद्-
द्यावापृथिव्यमेककपालम्पुरोडाशं वायव्यम्पयः सौर्यंश्चरुं
यद्वै किञ्च नश्यत्यन्तरेव तद्द्यावापृथिवी नश्यति
तद्वायुरुपवात्यादित्योऽभितपति नैताभ्यो देवताभ्य ऽऋते
किञ्चन नश्यति सैषा पृथगेव नष्टवेदनी स यद्यस्याप्य-
श्वन्नश्येदेतयैव यजेतानु हैवैनद्विन्दत्यथ यद्यमिन्ना ऽअश्वं
विन्देरन्यदि वा म्रियेत यदि वाप्स्वश्वमानीय प्रोक्षेयुः
सैव तत्र प्रायश्चित्तिः ॥ ६ ॥

तृतीयाध्यायेऽष्टमं ब्राह्मणम् ॥ ८ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥

—०—

[ अश्वमेधारम्भकालादि ]

प्रजापतिरकामयत । सर्वान्कामानाप्नुयाꣳ सर्वा
व्यष्टीर्व्यश्नुवीयेति स ऽएतमश्वमेधन्त्रिरात्रं यज्ञ-
क्रतुमपश्यत्तमाहरत्तेनायजत तेनेष्ट्वा सर्वान्कामानाप्नो-
त्सर्वा व्यष्टीर्व्याश्नुत सर्वान्ह वै कामानाप्नोति सर्वा
व्यष्टीर्व्यश्नुते योऽश्वमेधेन यजते ॥ १ ॥ तदाहुः ।

कस्मिन्नृतावभ्यारम्भ ऽइति ग्रीष्मेऽभ्यारभेतेत्यु हैक ऽआहुर्ग्रीष्मो वै क्षत्रियस्यऽर्तुः क्षत्रिययज्ञ ऽउ वा ऽएष यदश्वमेध ऽइति ॥ २ ॥ तद्वै वसन्त ऽएवाभ्यारभेत । वसन्तो वै ब्राह्मणस्यऽर्तुर्य्य ऽउ वै कश्च यजते ब्राह्मणीभूयेवैव यजते तस्माद्वसन्त ऽएवाभ्यारभेत ॥ ३ ॥ सा यासौ फाल्गुनी पौर्णमासी भवति । तस्यै पुरस्तात्षडहे वा सप्ताहे वऽर्त्विज ऽउपसमायन्त्यध्वर्युश्च होता च ब्रह्मा चोद्गाता चैतान्वा ऽअन्वन्य ऽऋत्विजः ॥ ४ ॥ तेभ्योऽध्वर्युश्चातुष्प्राश्यम्ब्रह्मौदनन्निर्वपति । तस्योक्तम्ब्राह्मणञ्चतुरः पात्रीश्चतुरोऽञ्जलींश्चतुरः प्रसृतान्द्वादशविधन्द्वादश मासाः संवत्सरः सर्वः संवत्सरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ५ ॥ तमेते चत्वार ऽऋत्विजः प्राश्नन्ति । तेषामुक्तम्ब्राह्मणन्तेभ्यश्चत्वारि सहस्राणि ददाति सर्वं वै सहस्रः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै चत्वारि च सुवर्णानि शतमानानि हिरण्यानि तस्यो ऽएवोक्तम् ॥ ६ ॥ अथास्मा ऽअध्वर्युर्निष्कम्प्रतिमुञ्चन्वाचयति * । 'तेजोऽसि शुक्रममृत'[1]मिति तेजो वै शुक्रममृतः हिरण्यन्तेज ऽएवास्मिञ्छुक्रममृतन्दधा'त्यायुष्पा ऽआयुर्मे पाही'[2]त्यायुरेवास्मिन्दधात्यथैनमाह 'वाचं यच्छेति' वाग्वै यज्ञो यज्ञस्यै-

---

* 'निष्कं प्रतिमुञ्चन्वाचयति तेजोऽसीति' ( का० श्रौ० सू० २०. १. ९ )। चतु:सुवर्णनिर्मित आभरणविशेषो निष्कः ।

( १ ) शु० य० सं० २२. १ । ( २ ) शु० य० सं० २२. १ ।

वाभ्यारम्भाय ॥७॥ चतस्रो जाया ऽउपक्लृप्ता भवन्ति । महिषी[1] वावाता परिवृक्ता पालागली सर्वा निष्किण्यो ऽलङ्कृता मिथुनस्यैव[2] सर्वत्वाय ताभिः सहाग्न्यगारम्प्रपद्यते पूर्वया द्वारा यजमानो दक्षिणया पत्न्यः ॥ ८ ॥ सायमाहुत्याᳬ हुतायाम् । जघनेन गार्हपत्यमुदङ्वावातया सह संविशति तदेवापीतराः संविशन्ति सो ऽन्तरोरू ऽअसंवर्त्तमानः शेते ऽनेन तपसा स्वस्ति सँवत्सरस्योदृचः समश्नवा ऽइति ॥ ९ ॥ प्रातराहुत्याᳬ हुतायाम् । अश्वेर्य्युः पूर्णाहुतिञ्जुहोति सर्वं वै पूर्णᳪ सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै तस्यां वरेण वाचं विसृजते * वरन्ददामि ब्रह्मण ऽइति सर्वं वै वरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ १० ॥ † अथ यो ऽस्य निष्कः प्रतिमुक्तो भवति । तमध्वर्यवे ‡ ददात्यध्वर्यवे ददद्मृतमायुरात्मन्धत्ते ऽमृतᳬ ह्यायुर्हिरण्यम् ॥ ११ ॥ अथाग्नेयीमिष्टिन्निर्वपति । पथश्च कामाय यज्ञमुखस्य चाच्छम्बट्कारायाथो ऽअग्निमुखा ऽउ वै सर्वा देवताः सर्वकामा ऽअश्वमेधे मुखतः सर्वान्देवान्प्रीत्वा सर्वान्कामानाप्नवानीति ॥ १२ ॥ तस्यै पञ्चदश सामिधेन्यो भवन्ति । पञ्चदशो वै वज्रो वीर्य्यं वज्रो वज्रेणैनैतद्वीर्य्येण यजमानः

(१) महिषी — प्रथमपरिणीता स्त्री। वावाता = मध्यमा। परिवृक्ता = अधमा। पालागली = दूतपुत्री

( २ ) 'मिथु—नो॰' इति 'ग' 'घ' पुस्तकयोः पाठः।

* तथा चोक्तं सूत्रकृता—'आ वरदानाद्वाग्यमनम्' ( का॰ श्रौ॰ सू॰ २०।१।११ )।

† शतम् ६६०० ।

‡ 'अध्वर्यवे च प्रतिमुक्तं निष्कम्' ( का॰ श्रौ॰ सू॰ २०।१।२० )।

पुरस्तात्पाप्मानमपहते घ्नाग्नेयावाज्यभागौ पाप्मा वै वृत्रः पाप्मनोऽपहत्या 'ऽअग्निर्मूर्द्धा दिवः ककुद्भवो यज्ञस्य रजसश्च नेते'त्युपांशु हविषो याज्यानुवाक्ये मूर्द्धन्वत्यन्या भवति सद्वत्यन्यैष वै मूर्द्धा य ऽएष तपत्येतस्यैवावरुद्ध्या ऽअथ यत्सद्वती सदेवावरुन्द्धे विराजौ सँयाज्ये सर्वदेवत्यं वा ऽएतच्छन्दो यद्विराट् सर्वे कामा ऽअश्वमेधे सर्वान्देवान्प्रीत्वा सर्वान्कामानाप्नवानीति हिरण्यन्दक्षिणा सुवर्णः शतमानस्तस्योक्तम्ब्राह्मणम् ॥ १३॥ अथ पौष्णीं निर्वपति । पूषा वै पथीनामधिपतिरश्वायैवैतत्स्वस्त्ययनङ्करोत्यथो ऽइयं वै पूषेमामेवास्मा ऽएतद्गोप्त्रीङ्करोति तस्य हि नार्त्तिरस्ति न ह्वला यमियमद्धागोपायतीमामेवास्मा ऽएतद्गोप्त्रीङ्करोति ॥ १४ ॥ तस्यै सप्तदश सामिधेन्यो भवन्ति । सप्तदशो वै प्रजापतिः प्रजापतिरश्वमेधोऽश्वमेधस्यैवाप्त्यै वृधन्वन्तावाज्यभागौ यजमानस्यैव वृद्ध्यै 'पूषँस्तव व्रते वयम्पथस्पथः परिपतिं वचस्ये'त्युपांशु हविषो याज्यानुवाक्ये व्रतवत्यन्या भवति पथन्वत्यन्या वीर्यं वै व्रतं वीर्यस्याप्त्यै वीर्यस्यावरुद्ध्या ऽअथ यत्पथन्वत्यश्वायैवैतत्स्वस्त्ययनङ्करोत्यनुष्टुभौ सँयाज्ये वाग्वा ऽअनुष्टुब्वाग्वै प्रजापतिः प्रजापतिरश्वमेधोऽश्वमेधस्यैवाप्त्यै वासः शतन्दक्षिणा रूपं वा ऽएतत्पुरुषस्य यद्वासस्तस्माद्यमेव कश्च सुवाससमाहुः को न्वयमिति रूपसमृद्धो हि भवति रूपेणैवैनः

(१) शु॰ य॰ सं॰ १३, १४-१५। (२) शु॰ य॰ सं॰, ३४, ४१-४२।

समर्द्धयति शतम्भवति शतायुर्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं वीर्य्यमात्मन्धत्ते ॥ १५ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

[ ब्राह्मणद्वयेन सावित्र्य इष्टयः, पारिप्लवाशंसनादि च निरूप्यन्ते ]

एतस्यान्तायमानायाम् । अश्वन्निक्त्वोदानयन्ति यस्मिन्त्सर्वाणि रूपाणि भवन्ति यो वा जवसमृद्धः सहस्रार्हम्पूर्व्यं स्यो दक्षिणायान्धुर्य्यप्रतिधुरः ॥ १ ॥ तद्यत्सर्वरूपो भवति । सर्वं वै रूपः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्या ऽअथ यज्जवसमृद्धो वीर्य्यं वै जवो वीर्य्यस्याप्त्यै वीर्य्यस्यावरुद्ध्या ऽअथ यत्सहस्रार्हः सर्वं वै सहस्रः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्या ऽअथ यत्पूर्व्यं ऽएष वा ऽअपरिमितं वीर्य्यमभिवर्द्धते यत्पूर्व्योऽपरिमितस्यैव वीर्य्यस्यावरुद्ध्या ऽअथ यद्दक्षिणायान्धुर्य्यप्रतिधुर ऽएष वा ऽएष य ऽएष तपति न वा ऽएतङ्कश्चन प्रतिप्रतिरेतस्यैवावरुद्ध्यै ॥ २ ॥ तदु होवाच भाल्लवेयः । द्विरूप ऽएवैषोऽश्वः स्यात्कृष्णसारङ्गः प्रजापतेर्वा ऽएषोऽक्ष्णः समभवद्द्विरूपं वा ऽइदञ्चक्षुः शुक्लञ्चैव कृष्णञ्च तदेनꣳ स्वेन रूपेण समर्द्धयतीति ॥ ३ ॥ अथ होवाच सात्ययज्ञिः । त्रिरूप ऽएवैषोऽश्वः स्यात्तस्य कृष्णः पूर्वार्द्धः शुक्लोऽपरार्द्धः कृत्तिकाञ्जिः पुरस्तात्तद्यत्कृष्णः पूर्वार्द्धो भवति यदेवेदङ्कृष्णमक्ष्णस्तदस्य तदथ यच्छुक्लोऽपरार्द्धो यदेवेदꣳ शुक्लमक्ष्णस्तदस्य तदथ यत्कृत्ति-

काञ्चिः पुरस्तात्सा कनीनका स ऽएव रूपसमृद्धोऽतो यतमोऽस्योपकल्प्येत बहुरूपो वा द्विरूपो वा त्रिरूपो वा कृत्तिकाञ्जिस्तमालभेत जवेन त्वेव समृद्धः स्यात् ॥ ४ ॥ तस्यैते पुरस्ताद्रक्षितार ऽउपक्लृप्ता भवन्ति । राजपुत्राः कवचिनः शतꣳ राजन्या निषङ्गिणः शतꣳ सूतग्रामण्यां पुत्रा ऽइषुपर्षिणः शतं क्षात्रसङ्ग्रहीतॄणाम्पुत्रा दण्डिनः शतमश्वशतन्निरष्टन्निरमणं यस्मिन्नेनमपिसृज्य रक्षन्ति ॥ ५ ॥ अथ सावित्रीमिष्टिन्निर्वपति । सवित्रे प्रसवित्रे द्वादशकपालम्पुरोडाशः सविता वै प्रसविता सविता म ऽइमं यज्ञम्प्रसुवादिति ॥ ६ ॥ तस्यै पञ्चदश सामिधेन्यो भवन्ति । वार्त्रघ्नावाज्यभागौ 'य ऽइमा विश्वा जातान्या देवो यातु सविता सुरत्न' ऽइत्युपांशु हविषो याज्यानुवाक्ये विराजौ सँयाज्ये हिरण्यन्दक्षिणा सुवर्णः शतमानन्तस्योक्तम्ब्राह्मणम् ॥ ७ ॥ तस्यै प्रयाजेषु तायमानेषु । ब्राह्मणो वीणागाथी दीक्षणत ऽउत्तरमन्द्रामुदाघ्नँस्तिस्रः स्वयः सम्भृता गाथा गायतीत्ययजतेत्यददादिति तस्योक्तम्ब्राह्मणम् ॥८॥ अथ द्वितीयान्निर्वपति । सवित्र ऽआसवित्रे द्वादशकपालम्पुरोडाशः सविता वा ऽआसविता सविता म ऽइमं यज्ञमासुवादिति [ *काण्डस्यार्धम् २१६] ॥९॥ तस्यै सप्तदश सामिधेन्यो भवन्ति । सद्वन्तावाज्यभागौ सदेवावरुन्द्धे 'विश्वानि देव सवितः', 'स घा नो

( १ ) ऋ० सं० ४. ४. २६ ।
* इयं काण्डार्धसंख्यात्र 'क' पुस्तके एवास्ति ।
( २ ) ऋ० सं० ४. ४. २६ । ( ३ ) ऋ० सं० ५. ४. १२ ।

देवः सविता सहावेत्युपांशु हविषो याज्यानुवाक्ये ऽअनुष्टुभौ सँय्याज्ये रजतः हिरण्यन्दक्षिणा नानारूपताया ऽअथो ऽउत्क्रमायानपक्रमाय शतमानम्भवति शतायुर्वै पुरुषः शतेन्द्रिय ऽआयुरेवेन्द्रियं वीर्य्यमात्मन्धत्ते ॥१०॥ तस्यै प्रयाजेषु तायमानेषु । ब्राह्मणो वीणागाथी दक्षिणत ऽउत्तरमन्द्रामुदाघ्नँस्तिस्रः स्वयंः सम्भृता गाथा गायतीत्ययजतेत्यददादिति तस्योक्तम्ब्राह्मणम् ॥ ११ ॥ अथ तृतीयान्निर्वपति । सवित्रे सत्यप्रसवाय द्वादशकपालम्पुरोडाशमेष ह वै सत्यः प्रसवो यः सवितुः सत्येन मे प्रसवेनेमं यज्ञम्प्रसुवादिति ॥ १२ ॥ तस्यै सप्तदशैव सामिधेन्यो भवन्ति । रयिमन्तावाज्यभागौ वीर्य्यं वै रयिर्वीर्य्यस्याप्त्यै वीर्य्यस्यावरुद्ध्या 'ऽआ विश्वदेवः सत्पति''न्न प्रेमिये सवितुर्दैव्यस्य तदि'त्युपांशु हविषो याज्यानुवाक्ये नित्ये सँय्याज्ये नेद्यज्ञपथादुयानीति क्लृप्त ऽएव यज्ञेऽन्ततः प्रतितिष्ठति त्रिष्टुभौ भवत ऽइन्द्रियं वै वीर्य्यन्त्रिष्टुबिन्द्रियस्यैव वीर्य्यस्यावरुद्ध्यै हिरण्यन्दक्षिणा सुवर्णः शतमानन्तस्योक्तम्ब्राह्मणम् ॥ १३ ॥ तस्यै प्रयाजेषु तायमानेषु । ब्राह्मणो वीणागाथी दक्षिणत ऽउत्तरमन्द्रामुदाघ्नँस्तिस्रः स्वयंः सम्भृता गाथा गायतीत्ययजतेत्यददादिति तस्योक्तम्ब्राह्मणम् ॥ १४ ॥ एतस्यांॅ सँस्थितायाम् । उपोत्थायाध्वर्य्युश्च यजमानश्चाश्वस्य

(१) ऋ० मं० ४ ५. २६ । (२) ऋ० मं० ३. ८. ५ । (३) 'ग' 'ज' पुस्तकयो, 'इन्द्रे वै' इति पाठः ।

दक्षिणे कर्णे ऽआजपतो 'विभूर्म्मात्रा प्रभूः पित्रेति तस्योक्तम्ब्राह्मणमथैनमुदञ्चम्प्राञ्चम्प्रसृजत ऽएषा ह्योभये-षान्देवमनुष्याणान्दिग्यदुदीची प्राची स्वायामेवैनन्तद्दिशि धत्तो न वै स्व ऽआयतने प्रतिष्ठितो रिष्यत्यरिष्ट्यै ॥ १५ ॥ स ऽआह 'देवा ऽआशापालाः । एतन्देवेभ्योऽ-श्वम्मेधाय प्रोक्षितः रक्षते'त्युक्ता मानुषा ऽआशापाला ऽअथैते देवा ऽआप्याः साध्या ऽअन्वाध्या मरुतस्तमेत ऽउभये देवमनुष्याः संविदाना ऽअप्रत्यावर्त्तयन्तः संव-त्सरड़ रक्षन्ति तयन्न प्रत्यावर्त्तयन्त्येष वा ऽएष य ऽएष तपति क ऽउ ह्येतमर्हति प्रत्यावर्त्तयितुं यद्व्येनम्प्रत्याव-र्त्तयेयुः परागेवेदः सर्वड़ स्यात्तस्मादप्रत्यावर्त्तयन्तो रक्षन्ति ॥ १६ ॥ स ऽआहाशापालाः । ये वा ऽएतस्योदृचङ्गमि-ष्यन्ति राष्ट्रन्ते भविष्यन्ति राजानो भविष्यन्त्यभिषे-चनीया ऽअथ य ऽएतस्योदृचन्न गमिष्यन्त्यराष्ट्रन्ते भवि-ष्यन्त्यराजानो भविष्यन्ति राजन्या विशोऽनभिषेचनी-यास्तस्मान्मा प्रमदत स्नात्वाश्चैवैनमुदकाच्चिरुन्धीढ़ं क्षुद्वाश्चैव ते यद्यद्ब्राह्मणजातमुपनिगच्छेत तत्तत्पृच्छेत ब्राह्मणाः कियद्यूयमश्वमेधस्य वित्थेति ते ये न विद्युर्जिनी-यात तान्सर्वं वा ऽअश्वमेधः सर्वस्यैष न वेद यो ब्राह्मणः सन्नश्वमेधस्य न वेद सोऽब्राह्मणो ज्येय ऽएव स पानङ्-रवाथ खादन्निवपाथाथ यत्किञ्च जनपदे कृतान्नः सर्वं

---

( १ ) शु० य० सं० २२. १९ । ( २ ) शु० य० सं० २१. १६ ।

वस्त्रस्सुतन्तेपाठे रथकारकुल * ऽएव वो वसतिस्तद्ध्यश्व-स्यायतनमिति ॥ १७ ॥

चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥ २ ॥
कण्डिकासंख्या ॥ ११७ ॥

---

प्रसुत्स्याऽऽहवनं दक्षिणेन वेदिम् । हिरण्मयङ्कशिपूप-स्तृणाति तस्मिन्होतोपविशति दक्षिणेन होतारᳩ हिर-ण्मये कूर्चे † यजमानो दक्षिणतो ब्रह्मा चोद्गाता च हिरण्मयोः कशिपुनोः ‡ पुरस्तात्प्रत्यङ्ङध्वर्युर्हिरण्मये वा कूर्चे हिरण्मये वा फलके ॥ १ ॥ समुपविष्टेष्वध्व-र्युः सम्प्रेष्यति । होतर्भूतान्याचक्ष्व भूतेष्विमं यज-मानमध्यूहेति सम्प्रेषितो होताध्वर्युमामन्त्रयते पारिप्लव-माख्यानमाख्यास्यन्नध्वर्यवित्ति हवै होतरित्यध्वर्युः ॥ २ ॥ मनुर्वैवस्वतो राजेत्याह । तस्य मनुष्या विशस्त ऽइम ऽआसत ऽइत्यश्रोत्रिया गृहमेधिन ऽउपसमेता भवन्ति तानुपदिशत्यृचो वेदः सोऽयमित्यृचाᳩ सूक्तं व्याचक्षाण ऽइवानुद्रवेद्वीणागणगिन ऽउपसमेता भवन्ति तानध्वर्युः सम्प्रेष्यति वीणागणगिन ऽइत्याह पुराणैरिमं यजमानᳩ राजभिः साधुकृद्भिः सङ्गायतेति तन्ते तथा सङ्गायन्ति तद्यदेनमेवᳩ सङ्गायन्ति पुराणैरेवैनन्तद्राजभिः साधुकृद्भिः

---

* 'रथकारगृहवासाय' ( का० श्रौ० सू० २०।२।१६ )

† सपादमासनं कूर्चं ।

‡ कशिपुशब्देन मृद्वासनं मसूरक उच्यते ।

सलोकङ्कुर्वन्ति ॥ ३ ॥ सम्प्रेष्याद्ध्वर्युः प्रक्रमाञ्जुहोति । अन्वाहार्यपचने वाश्वस्य वा पदुम्परिलिख्य यतरथास्य तत्राप्यद्भवति पूर्वां ह्येव स्थितिः ॥ ४ ॥ सावित्र्या एवेष्टेः । पुरस्तादनुद्रुत्य सकृदेव रूपाण्याहवनीये जुहोत्यथ सायन्धृतिषु ह्रयमानासु राजन्यो वीणागाथी दक्षिणत उत्तरमन्द्रामुदाघ्नँस्तिस्रः स्वयः सम्भृता गाथा गायतीत्ययुद्ध्यते-त्यमुह्न सङ्ग्राममजयदिति तस्योक्तम्ब्राह्मणम् ॥ ५ ॥ अथ श्वोभूते द्वितीयेऽहन् । एवमेवैतासु सावित्रीष्विष्टिषु सꣳस्थितास्वेवैवाद्ध्वर्यविति हवै होतरित्येवाद्ध्वर्युर्यमो वैवस्वतो राजेत्याह तस्य पितरो विशस्त इम आसत इति स्थविरा उपसमेता भवन्ति तानुपदिशति यजूꣳषि वेदः सोऽयमिति यजुषामनुवाकं व्याचक्षाण इवानुद्रवेदेवमेवाद्ध्वर्युः सम्प्रेष्यति न प्रक्रमाञ्जुहोति ॥ ६ ॥ अथ तृतीयेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेवैवाद्ध्वर्यविति हवै होतरित्येवाद्ध्वर्युर्वरुण आदित्यो राजेत्याह तस्य गन्धर्वा विशस्त इम आसत इति युवानः शोभना उपसमेता भवन्ति तानुपदिशत्यथर्वाणो वेदः सोऽयमित्यथर्वणामेकम्पर्व व्याचक्षाण इवानुद्रवेदेवमेवाद्ध्वर्युः सम्प्रेष्यति न प्रक्रमाञ्जुहोति ॥ ७ ॥ अथ चतुर्थेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेवैवाद्ध्वर्यविति हवै होतरित्येवाद्ध्वर्युः सोमो वैष्णवो राजेत्याह तस्याप्सरसो विशस्ता इमा आसत इति युवतयः शोभना उपसमेता भवन्ति ता उपदिशत्यङ्गिरसो वेदः सोऽयमि-

स्यङ्गिरसामेकम्पर्व्व व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्युः सम्प्रेष्यति न प्रक्रमाञ्जुहोति ॥ ८ ॥ अथ पञ्चमेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदद्ध्वर्य्यविति हवै होतरित्येवाद्ध्वर्युरर्व्वुदः काद्रवेयो राजेत्याह तस्य सर्प्पा विशस्त ऽइम ऽआसत ऽइति सर्प्पाश्च सर्प्पविदश्चोपसमेता भवन्ति तानुपदिशति सर्प्पविद्या वेदः सोऽयमिति सर्प्पविद्याया ऽएकम्पर्व्व व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्युः सम्प्रेष्यति न प्रक्रमाञ्जुहोति ॥ ९ ॥ अथ षष्ठेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदद्ध्वर्य्यविति हवै होतरित्येवाद्ध्वर्युः कुवेरो वैश्रवणो राजेत्याह तस्य रक्षाꣳसि विशस्तानीमान्यासत ऽइति सेलगाः पापकृत ऽउपसमेता भवन्ति तानुपदिशति देवजनविद्या वेदः सोऽयमिति देवजनविद्याया ऽएकम्पर्व्व व्याचक्षाण ऽइवानुद्रवेदेवमेवाद्ध्वर्युः सम्प्रेष्यति न प्रक्रमाञ्जुहोति ॥ १० ॥ अथ सप्तमेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदद्ध्वर्य्यविति हवै होतरित्येवाद्ध्वर्युरसितो धान्वो राजेत्याह तस्यासुरा विशस्त ऽइम ऽआसत ऽइति कुसीदिन ऽउपसमेता भवन्ति तानुपदिशति माया वेदः सोऽयमिति काञ्चिन्मायाङ्कुर्य्यादेवमेवाद्ध्वर्युः सम्प्रेष्यति न प्रक्रमाञ्जुहोति ॥ ११ ॥ अथाष्टमेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदद्ध्वर्य्यविति हवै होतरित्येवाद्ध्वर्युर्म्मत्स्यः साम्मदो राजेत्याह तस्योदकेचरा विशस्त ऽइम ऽआसत ऽइति मत्स्याश्च मत्स्यहनश्चोपसमेता भवन्ति तानुपदिशतीति-

हासो वेदः सोऽयमिति कञ्चिदितिहासमाचक्षीतैवमेवा-ध्वर्युः सम्प्रेष्यति न प्रक्रमाञ्जुहोति ॥ १२ ॥ अथ नवमेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदध्वर्य-विति हवै होतरित्येवाध्वर्युस्ताक्ष्यो वैपश्यतो राजेत्याह तस्य वयाꣳसि विशस्तानीमान्यासत ऽइति वयाꣳसि च वायोविद्यिकाश्चोपसमेता भवन्ति तानुपदिशति पुराणं वेदः सोऽयमिति किञ्चित्पुराणमाचक्षीतैवमेवाध्वर्युः स-म्प्रेष्यति न प्रक्रमाञ्जुहोति ॥ १३ ॥ अथ दशमेऽहन् । एवमेवैतास्विष्टिषु सꣳस्थितास्वेषैवावृदध्वर्यविति हवै हो-तरित्येवाध्वर्युर्धर्म्मं ऽइन्द्रो राजेत्याह तस्य देवा विशस्त ऽइम ऽआसत ऽइति श्रोत्रिया अप्रतिग्राहका ऽउप-समेता भवन्ति तानुपदिशति सामानि वेदः सोऽयमिति साम्नान्दशतम्ब्रूयादेवमेवाध्वर्युः सम्प्रेष्यति न प्रक्रमा-ञ्जुहोतीति ॥ १४ ॥ एतत्पारिप्लवम् । सर्वाणि राज्यान्या-चष्टे सर्वा विशः सर्वान्वेदान्त्सर्वान्देवान्त्सर्वाणि भूतानि सर्वेषाꣳ ह वै स ऽएतेषाꣳ राज्यानाꣳ सायुज्यꣳ सलो-कतामश्नुते सर्वासां विशामैश्वर्य्यमाधिपत्यङ्गच्छति सर्वा-न्वेदानवरुन्द्धे सर्वान्देवान्प्रीत्वा सर्वेषु भूतेष्वन्ततः प्र-तितिष्ठति यस्यैवंविदेतद्धोता पारिप्लवमाख्यानमाचष्टे यो वैतदेवं वेदैतदेव समानमाख्यानम्पुनः पुनः संवत्सर-म्परिप्लवते तद्यत्पुनः पुनः परिप्लवते तस्मात्पारिप्लवः षट्त्रिꣳशतन्दशाहानाचष्टे षट्त्रिꣳशदक्षरा बृहती बार्हताः पशवो बृहत्यैवास्मै पशूनवरुन्द्धे ॥ १५ ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

[ यूपकाष्ठादि ]

सँवत्सरे पर्य्यवेते दीक्षा। प्राजापत्यमालभ्योत्सीदन्तीष्टयः पुरोहितस्याग्निषु यजेतेत्यु हैक ऽआहुः किमु दीक्षितो यजेत द्वादश दीक्षा द्वादशोपसदस्तिस्रः सुत्यास्तत्त्रिणवमभिसम्पद्यते वज्रो वै त्रिणवः क्षत्रमश्वः क्षत्रꣳ राजन्यो वज्रेण खलु वै क्षत्रꣳ स्पृतन्तद्वज्रेणैव क्षत्रꣳ स्पृणोति ॥ १ ॥ दीक्षणीयायाꣳ सꣳस्थितायाम्। सायं वाचि विसृष्टायां वीणागणगिन ऽउपसमेता भवन्ति तानध्वर्य्युः सम्प्रेष्यति वीणागणगिन ऽइत्याह देवैरिमं यजमानꣳ सङ्गायतेति तन्ते तथा सङ्गायन्ति ॥ २ ॥ अहरहर्वाचि विसृष्टायाम्। अग्नीषोमीयाणामन्ततः सꣳस्थायाम्परिहृतासु वसतीवरीषु तद्यदेनन्देवैः सङ्गायन्ति देवैरेवैनन्तत्सलोकङ्कुर्वन्ति ॥ ३ ॥ प्रजापतिना सुत्यासु। एवमेवाहरहः परिहृतास्वेव वसतीवरीषूदवसानीयायामन्ततः सꣳस्थितायां तद्यदेनम्प्रजापतिना सङ्गायन्ति प्रजापतिनैवैनन्तदन्ततः सलोकङ्कुर्वन्ति ॥ ४ ॥ एकविꣳशतिर्य्यूपाः। सर्वे ऽएकविꣳशत्यरत्नयो राज्जुदालोऽग्निष्ठो भवति पैतुदारवावभितः षड्वैल्वाश्च ऽइतश्च ऽइतश्च ऽइत्थात्षट् खादिराश्च ऽएवेत्थाश्च ऽइत्थात्षट् पालाशाश्च ऽएवेत्थाश्च ऽइत्थात् ॥ ५ ॥ तद्यदेत ऽएवं यूपा भवन्ति। प्रजापतेः प्राणेपूत्क्रान्तेषु शरीरꣳ श्वयितुमध्रियत तस्य यः श्लेष्मासीत्ससार्द्धꣳ समवद्रुत्य मध्यतो नस्त ऽउदभिनत्स ऽएष वनस्पतिरभवद्राज्जुदालस्तस्मात्स श्लेष्मणः

श्लेष्मणो हि समभवत्तेनैवैनन्तद्रूपेण समर्द्धयति तद्य-
त्सोऽग्निष्ठो भवति मद्ध्यं वा ऽएतद्यूपानां यदग्निष्ठो*
मद्ध्यमेतत्प्राणानां यन्नासिके स्व ऽएवैनन्तदायतने दधाति
॥ ६ ॥ अथ यदापोमयन्तेज ऽआसीत्। यो गन्धः स
सार्द्धः समवद्रुत्य चक्षुष्ट ऽउदभिनत्स ऽएष वनस्पति-
रभवत्पीतुदारुस्तस्मात्स सुरभिर्गन्धाद्धि समभवत्तस्मादु
ज्वलनस्तेजसो हि समभवत्तेनैवैनन्तद्रूपेण समर्द्धयति तद्य-
त्तावभितोऽग्निष्ठम्भवतस्तस्मादिमे ऽअभितो नासिकाञ्च-
क्षुषी स्व ऽएवैनौ तदायतने दधाति ॥ ७ ॥ अथ यत्कु-
न्तापमासीत्। यो मज्जा स सार्द्धः समवद्रुत्य श्श्रोत्रत
ऽउदभिनत्स ऽएष वनस्पतिरभवद्बिल्वस्तस्मात्तस्यान्तरतः
सर्वमेव फलमाद्यम्भवति तस्मादु हारिद्र ऽइव भवति
हारिद्र ऽइव हि मज्जा तेनैवैनन्तद्रूपेण समर्द्धयत्यन्तरे पैतुदा-
रवौ भवतो बाह्ये बैल्वा ऽअन्तरे हि चक्षुषी बाह्ये श्श्रोत्रे
स्व ऽएवैनाँस्तदायतने दधाति ॥ ८ ॥ अस्थिभ्य ऽएवास्य
खदिरः समभवत्। तस्मात्स दारुणो बहुसारो दारुणमिव
ह्यस्थि तेनैवैनन्तद्रूपेण समर्द्धयत्यन्तरे बैल्वा भवन्ति
बाह्ये खादिरा ऽअन्तरे हि मज्जानो बाह्यान्यस्थीनि स्व
ऽएवैनाँस्तदायतने दधाति ॥ ९ ॥ माꣳसेभ्य ऽएवास्य
पलाशः समभवत्। तस्मात्स बहुरसो लोहितरसो लोहि-
तमिव हि माꣳसन्तेनैवैनन्तद्रूपेण समर्द्धयत्यन्तरे खादिरा
भवन्ति बाह्ये पालाशा ऽअन्तराणि ह्यस्थीनि बाह्यानि

* अग्निसमीपे तिष्ठतीति-अग्निष्ठ-मध्यमो यूप इत्यर्थः ।
( १ ) 'पैतुदारवौ' इति 'ख' 'ज' पुस्तकयोः पाठः ।

माꣳसानि स्व ऽएवैनाँस्तदायतने दधाति ॥ १० ॥ अथ यदेकविꣳशतिर्भवन्ति । एकविꣳशत्यरत्नयः ऽएकविꣳशो वा ऽएष य ऽएष तपति द्वादश मासाः पञ्चऽर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविꣳशः सोऽश्वमेध ऽएष प्रजापतिरेवमेतम्प्रजापतिं व्यग्नस्त्सꣳ संस्कृत्य तस्मिन्नेकविꣳशतिमग्नीषोमीयान्पशूनालभते तेषाꣳ समानङ्कर्म्मैर्ष्वेतत्पूर्वेषुः कर्म्म ॥ ११ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

[ सवनीयाः पशवः ]

अथ प्रातर्गौतमस्य । चतुरुत्तर स्तोमो भवति तस्य चतसृषु बहिष्पवमानमष्टास्वष्टास्वाज्यानि द्वादशसु माध्यन्दिनः पवमानः षोडशसु पृष्ठानि विꣳशत्यामार्भवः पवमानश्चतुर्विꣳशत्यामग्निष्टोमसाम* ॥ १ ॥ तस्य हैके । अग्निष्टोमसाम चतुःसाम कुर्वन्ति नाग्निष्टोमो नोक्थ्य ऽइति वदन्तस्तद्यदि तथा कुर्य्युः सार्द्धꣳ स्तोत्रियः शस्त्रा सार्द्धमनुरूपः शꣳसेद्रथन्तरम्पृष्ठꣳ राथन्तरꣳ शस्त्रमग्निष्टोमो यज्ञस्तेनेमँल्लोकमृद्ध्नोति ॥ २ ॥ एकविꣳशतिः सवनीयाः पशवः । सर्वे ऽआग्नेयास्तेषाꣳ समानङ्कर्म्मेत्यु हैक ऽआहुर्द्वे त्वेवैते ऽएकादशिन्यावालभेत य ऽएवैकाद-

* येन साम्ना अग्निष्टोमप्रस्था सामाप्यते तदग्निष्टोमसाम ।

शिनेषु कामस्तस्य कामस्याप्त्यै ॥ ३ ॥ सꣳस्थितेऽग्नि-
ष्टोमे । परिहृतासु वसतीवरीष्वध्वर्युरन्नहोमाञ्जुहोति
तेषामुक्तम्ब्राह्मणं 'प्राणाय स्वाहापानाय स्वाहे'ति द्वादशभि-
रनुवाकैर्द्वादश मासाः सँवत्सरः सर्वꣳ सँवत्सरः सर्वमश्वमेधः
सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ४ ॥ एकविꣳशम्मध्यममहर्भ-
वति । असौ वा ऽआदित्य ऽएकविꣳशः सोऽश्वमेधः
स्वेनैवैनꣳ स्तोमेन स्वायान्देवतायाम्प्रतिष्ठापयति तस्मा-
देकविꣳशम् ॥ ५ ॥ यद्वेवैकविꣳशम् । एकविꣳशो वै पुरुषो
दश हस्त्या ऽअङ्गुलयो दश पाद्या ऽआत्मैकविꣳशस्तदने-
नैकविꣳशेनात्मनैतस्मिन्नेकविꣳशे प्रतिष्ठायाम्प्रतितिष्ठति
तस्मादेकविꣳशम् ॥ ६ ॥ यद्वेवैकविꣳशम् । एकविꣳशो वै
स्तोमानाम्प्रतिष्ठा बहु खलु वा ऽएतदेतस्मिन्नहन्युच्चा-
वचमिव कर्म्म क्रियते तद्यदेतदेतस्मिन्नहन्युच्चावचम्बहु
कर्म्म क्रियते तदेतस्मिन्नेकविꣳशे प्रतिष्ठायाम्प्रतिष्ठित-
क्रियाता ऽइति तस्माद्वेवैतदेकविꣳशमहः ॥ ७ ॥ तस्य
प्रातःसवनम् । 'अग्निन्तम्मन्ये यो वसु'रिति होता
पाङ्क्तमाज्यꣳ शस्त्वैकाहिकमुपसꣳशꣳसति बार्हतञ्च प्रउग-
म्माधुच्छन्दसञ्च त्रिचश ऽउभे सꣳशꣳसति यश्च बार्हते
प्रऽउगे कामो य ऽउ च माधुच्छन्दसे तयोरुभयोः काम-
योराप्त्यै क्लृप्तम्प्रातःसवनम् ॥ ८ ॥ अथातो माध्य-
न्दिनꣳ सवनम् । अतिच्छन्दाः प्रतिपन्मरुत्वतीयस्य 'त्रिक-

(१) शु॰ य॰ सं॰ २२. २३। (२) शु॰ य॰ सं॰ १५. ४१। (३) ऋ॰ सं॰ २. ६. २८।

द्रुकेषु महिषो यवाशिर'मित्यतिष्ठा वा ऽएषा च्छन्दसां यदतिच्छन्दा ऽअतिष्ठा ऽअश्वमेधो यज्ञानामश्वमेधस्यै-वाप्त्यै सैषैव त्रिः शस्ता त्रिचः सम्पद्यते तेनो तङ्काममा-प्नोति यस्त्रिचे 'ऽइदं वसो सुतमन्ध' ऽइत्यनुचर ऽएष ऽएव नित्य ऽएकाहातान 'ऽइत्थां हि सोम ऽइन्मदे'ऽवि-तीति सुम्वतो व्यक्तवर्हिष' ऽइति पङ्क्तीश्च पट्पदाश्च शस्त्वैकाहिके निविदन्दधातीति मरुत्वतीयम् ॥ ९ ॥ अथातो निष्केवल्यम् । महानाम्न्यः पृष्ठम्भवन्ति सानुरूपाः सप्रगाथाः शंसति सर्वे वै कामा महानाम्नीषु सर्वे कामा ऽअश्वमेधे सर्वेषाङ्कामानामाप्त्या 'ऽइन्द्रो मदाय वावृधे' 'प्रेदं ब्रह्म वृत्रतूर्येष्वाविथे'ति पङ्क्तीश्च पट्-पदाश्च शस्त्वैकाहिके निविदन्दधाति क्लृप्तम्माध्यन्दि-नः सवनम् ॥ १० ॥ अथातस्तृतीयसवनम् । अतिच्छन्दा ऽएव प्रतिपद्वैश्वदेवस्या'भि त्यन्देवः सवितारमो-ण्यो'रिति तस्या ऽएतदेव ब्राह्मणं यत्पूर्वस्या 'ऽअभि त्वां देव सवित'रित्यनुचरोऽभिवानभिभूत्यै रूप'मुदु ष्य देवः सविता दमूना' ऽइति सावित्रः शस्त्वैकाहिके निविदन्दधाति 'मही द्यावापृथिवी ऽइह ज्येष्ठे' ऽइति चतुर्ऋचन्द्यावापृथिवीयः शस्त्वैकाहिके निविदन्दधा'त्यृभु-र्विभ्वा वाज ऽइन्द्रो नो ऽअच्छे'त्यार्भवः शस्त्वैकाहिके

(१) ऋ० सं० ५. ७ १०। (२) ऋ० सं० १. ५. २१। (३) ऋ० सं० ६. १ १८। (४) ऋ० सं० १ ६. १। (५) ऋ० सं० ६. १. १६। (६) शु० य० सं० ४. २५। (७) ऋ० सं० १. २. १३। (८) ऋ० सं० ५. ४ ५। (९) ऋ० सं० ३. ८. ८। (१०) ऋ० सं० ३. ७. ३।

निविदन्दधाति 'को नु वास्मित्रावरुणावृताय'त्रिति वैश्वदेवꣳ शस्त्वैकाहिके निविदन्दधातीति वैश्वदेवम् ॥ ११ ॥ अथात ऽआग्निमारुतम् । 'मूर्द्धानन्दिवो ऽअरतिम्पृथिव्या' ऽइति वैश्वानरीयꣳ शस्त्वैकाहिके निविदन्दधा'त्यौ रुद्रास ऽइन्द्रवन्तः सजोषस' ऽइति मारुतꣳ शस्त्वैकाहिके निविदन्दधाती'मसूं पु वो ऽअतिथिमुषर्बुध'मिति नवर्च्चञ्जातवेदसीयꣳ शस्त्वैकाहिके निविदन्दधाति तद्यदैकाहिकानि निविद्धानानि भवन्ति प्रतिष्ठा वै ज्योतिष्टोमः प्रतिष्ठाया ऽअप्रच्युत्यै ॥ १२ ॥ तस्यैते पशवो भवन्ति । 'अश्वस्तूपरो* गोमृग,† ऽइति पञ्चदश पर्य्यङ्ग्यास्तेषामुक्तम्ब्राह्मणमथैत ऽआरण्या 'वसन्ताय कपिञ्जलानालभते ग्रीष्माय कलविङ्कान्वर्षाभ्यस्तित्तिरी'निति तेषामुक्तम् ॥ १३ ॥ अथैतानेकविꣳशतये । चातुर्म्मास्यदेवताभ्य ऽएकविꣳशतिमेकविꣳशतिम्पशूनालभत ऽएतावन्तो वै सर्वे देवा यावन्तश्चातुर्म्मास्यदेवताः सर्वे कामा ऽअश्वमेधे सर्वान्देवान्प्रीत्वा सर्वान्कामानाप्नवानीति न तथा कुर्य्यात् ॥ १४ ॥ सप्तदशैव पशून्मध्यमे यूप ऽआलभेत । प्रजापतिः सप्तदशः सर्वꣳ सप्तदशः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै षोडश षोडशेतरेषु षोडशकलं वा ऽइदꣳ सर्वꣳ

---

१ (१) ऋ० सं० ४. २. १२। (२) ऋ० सं० ४. ५. ९। शु० य० सं० ७. १५।२२. ८। (३) ऋ० सं० ४. ३. ११। (४) ऋ० सं० ४. ५. १७। (५) शु० सं० य० २४. १।

* 'शृङ्गोत्पत्तिकालेऽतीतेऽपि शृङ्गहीनस्छाग० = तूपरः।

† गोमृगः = गवयः।

(६) शु० य० सं० २४. २०।

सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै त्रयोदश त्रयोदशारण्यानाकाशेष्वालभन्ते त्रयोदश मासाः संवत्सरः सर्वं संवत्सरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ १५ ॥ अथ पुरा बहिष्पवमानात् । अश्वन्निक्तवोदानयन्ति तेन पवमानाय सर्पन्ति तस्योक्तम्ब्राह्मणꣳ स्तुते बहिष्पवमानेऽश्वमास्तावमाक्रमयन्ति स यद्युव वा जिघ्रेद्वि वा वर्तेत समृद्धो मे यज्ञ इति ह विद्यात्तमुपाकृत्याध्वर्युराह होतरभिष्टुहीति तमेकादशभिर्होताभिष्टौति ॥ १६ ॥ 'यदक्रन्दः प्रथमञ्जायमान' इति । त्रिः प्रथमया त्रिरुत्तमया ताः पञ्चदश सम्पद्यन्ते पञ्चदशो वै वज्रो वीर्यं वज्रो वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहते तद्वै यजमानायैव वज्रः प्रदीयते योऽस्य स्तृत्यस्तꣳ स्तृत्वेव उप प्रागाच्छसनं वाज्यर्वाप प्रागात्परमं ष्यस्तधस्थमिति ॥ १७ ॥ एते उद्धृत्य । 'मा नो मित्रो वरुणो अर्यमायु'रित्येतत्सूक्तमद्भिगावापति 'चतुस्त्रिꣳशद्वाजिनो देवबन्धो'रित्यु हैक एतां यक्षीणाम्पुरस्ताद्दधति नेदनायतने प्रणवन्दधामेत्यथो नेदेकवचनेन बहुवचनं व्यवायामेति न तथा कुर्यात्सार्द्धमेव सूक्तमावपे'दुप प्रागाच्छसनं वाज्यर्वा'प प्रागात्परमं ष्यस्तधस्थ'मिति ॥ १८ ॥

पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

(१) शु० य० सं० २९ १२। (२) शु० य० सं० २५. २४। (३) शु० य० सं० २५. ४१। (४) शु० य० सं० २५. २३। (५) शु० य० सं० २९. २४।

[ संवादः ]

एते ऽउक्त्वा । यदुद्भिगोः परिशिष्टम्भवति तदाह वासोऽधिवासः हिरण्ययमित्यश्वायोपस्तृणन्ति तस्मिन्नेनमधि संज्ञपयन्ति संज्ञप्तेषु पशुषु पत्न्यः पात्नेजनैरुदायन्ति चतस्रश्च जायाः कुमारी पञ्चमी चत्वारि च शतान्यनुचरीणाम् ॥ १ ॥ निष्ठितेषु पात्नेजनेषु । महिषीमश्वायोपनिपादयन्त्यथैनावधिवासेन * सम्प्रोर्णुवन्ति † 'स्वर्गे लोके प्रोर्ण्वाथा'मित्येष वै स्वर्गो लोको यत्र पशुं संज्ञपयन्ति निरायत्याश्वस्य शिश्नम्महिष्युपस्थे निधत्ते ‡ 'वृषा वाजी रेतोधा रेतो दधात्वि'ति मिथुनस्यैव सर्वत्वाय ॥ २ ॥ तयोः शयानयोः । अश्वं यजमानोऽभिमेथ'त्युत्सक्थ्या ऽअव गुदन्धेही'ति तन्न कश्चन प्रत्यभिमेथति नेद्यजमानम्प्रतिप्रतिः कश्चिदसदिति ॥ ३ ॥ अथाध्वर्युः कुमारीमभिमेथति । कुमारि हये हये कुमारि 'यकासकौ शकुन्तिके'ति तत्कुमारी प्रत्यभिमेथत्यध्वर्युं हये हयेऽध्वर्यो 'यकोऽसकौ शकुन्तक' ऽइति ॥ ४ ॥ अथ ब्रह्मा महिषीमभिमेथति । महिषि हये हये महिषि 'माता च ते पिता च तेऽग्रं वृक्षस्य रोहत' ऽइति तस्यै शतः राजपुत्र्योऽनुचर्यो भवन्ति ता ब्रह्माणम्प्रत्यभिमेथ-

* अथ उपरिष्टाच्छादनार्थं वासोऽधिवासः ।
† का० श्रौ० सू० २०. ६. १५ ।
( १ ) शु० य० सं० २३. २० ।
‡ 'अश्वशिश्नमुपस्थे कुरुते' ( का० श्रौ० सू० २०. ६. १६ ) ।
(२) शु० य० सं० २३ २० । (३) शु० य० सं० २३. २१ । (४) शु० य० सं० २३ २२ ।
( ५ ) शु० य० सं० २३. २३ । ( ६ ) शु० य० सं० २३. २४ ।

न्ति व्ब्रह्मन्हुये हये 'व्ब्रह्म'न्माता च ते पिता च तेऽग्रे व्वृक्षस्य वक्रीडत' ऽइति ॥ ५ ॥ अथोद्गाता व्वावातामभिमेथति । व्वावाते हुये हये व्वावात 'ऽऊर्द्ध्वामेनामुच्छ्रापये'ति तस्यै शतꣳ राजन्न्या ऽअनुचर्य्यो भवन्ति ता ऽउद्गातारम्प्रत्यभिमेथन्त्युद्गातर्हुये हय ऽउद्गात'रूर्द्ध्वमेनमुच्छ्रयता'दिति ॥ ६ ॥ अथ होता परिवृक्तामभिमेथति । परिवृक्ते हुये हये परिवृक्ते 'यदस्या अꣳहुभेद्या' ऽइति तस्यै शतꣳ सूतग्रामण्ण्यान्दुहितरोऽनुचर्य्यो भवन्ति ता होतारम्प्रत्यभिमेथन्ति होतर्हुये हये होत'र्य्यद्देवासो ललामगु'मिति ॥ ७ ॥ अथ क्षत्ता पालागलीमभिमेथति । पालागलि हुये हये पालागलि 'यद्धरिणो यवमत्ति न पुष्टम्पशु मन्न्यत' ऽइति तस्यै शतङ्क्षात्रसङ्ग्रहीतॄणान्दुहितरोऽनुचर्य्यो भवन्ति ताः क्षत्तारम्प्रत्यभिमेथन्ति क्षत्तर्हुये हये क्षत्त'र्य्यद्धरिणो यवमत्ति न पुष्टम्बहु मन्न्यत' ऽइति ॥ ८ ॥ सर्व्वाभिर्वा ऽएषा वाचः । यदभिमेथिकाः सर्व्वे कामा ऽअश्वमेधे सर्व्वया वाचा सर्व्वान्कामानाप्नवामेत्युत्थापयन्ति महिषीन्ततस्ता यथेतम्प्रतिपरायन्त्यथेतरे सुरभिमतीमृचमन्ततोऽन्वाहु'र्द्दधिक्राव्णो ऽअकारिष'मिति ॥ ९ ॥ [अर्धप्रपाठकः ॥५३॥] अप वा ऽएतेभ्य ऽआयुर्द्देवताः क्रामन्ति । ये यज्ञेऽपूतां वाचं वदन्ति वाचमेवैतत्पुनते देवयज्ज्यायै देवतानामनपक्रमाय या च गोमृगे वपा भवति या चाजे तूपरे

(१) शु० य० सं० २३. २५। (२) शु० य० सं० २३. २६। (३) शु० य० सं० २३. २७। (४) शु० य० सं० २३. २८। (५) शु० य० सं० २३. २९। (६) शु० य० सं० २३. ३०। (७) शु० य० सं० २३. ३१। (८) शु० य० सं० २३. ३२।

ते ऽअश्वे प्रत्यवघायाहरन्ति नाश्वस्य वपास्तीति वदन्तो न तथा कुर्यादश्वस्यैव प्रत्यक्षम्मेद ऽआहरेत्प्रज्ञाता ऽहुतराः ॥ १० ॥ शृतासु वपासु । स्वाहाकृतिभिश्चरित्वा प्रत्यञ्चः प्रतिपरेत्य सदसि ब्रह्मोद्यं वदन्ति पूर्वया द्वारा प्रपद्य यथाधिष्ण्यं व्युपविशन्ति ॥ ११ ॥ स होताध्वर्युम्पृच्छति । 'कः स्विदेकाकी चरती'ति तम्प्रत्याह 'सूर्य ऽएकाकी चरती'ति ॥ १२ ॥ अथाध्वर्युर्होतारम्पृच्छति । 'किंस्विदासीत्पूर्वचित्ति'रिति तम्प्रत्याह ब्रह्म 'सूर्यसमञ्ज्योति'रिति ॥ १३ ॥ अथ ब्रह्मोद्गातारम्पृच्छति । 'पृच्छामि त्वा चितये देवसखे'ति तम्प्रत्याहा'पि तेषु त्रिषु पदेष्वस्मी'ति ॥ १४ ॥ अथोद्गाता ब्रह्माणम्पृच्छति । 'केष्वन्तः पुरुष ऽआविवेशे'ति तम्प्रत्याह 'पञ्चस्वन्तः पुरुष ऽआविवेशे'ति ॥ १५ ॥ एतस्यामुक्तायामुत्थाय । सदसोऽधि प्राञ्चो यजमानमभ्यायन्त्यग्रेण हविर्धाने ऽआसीनमेत्य यथायतनम्पर्युपविशन्ति ॥ १६ ॥ स होताध्वर्युम्पृच्छति । 'का स्विदासीत्पूर्वचित्ति'रिति तम्प्रत्याह 'द्यौरासीत्पूर्वचित्ति'रिति ॥ १७ ॥ अथाध्वर्युर्होतारम्पृच्छति । 'का ऽईमरे पिशङ्गिले'ति तम्प्रत्याहा'जारे पिशङ्गिले'ति ॥ १८ ॥ अथ ब्रह्मोद्गातारम्पृच्छति । 'कस्यस्य

(१) शु० य० स० २३ ४५। (२) शु० य० स० २३ ४६। (३) शु० य० स० २३ ४७। (४) शु० य० स० २३ ४८। (५) शु० य० स० २३ ४९। (६) शु० य० स० २३. ५०। (७) शु० य० स० २३ ५१। (८) शु० य० स० २३. ५२। (९) शु० य० स० २३ ५३। (१०) शु० य० स० २३ ५४। (११) शु० य० स० २३ ५५। (१२) शु० य० स० २३. ५६। (१३) शु० य० स० २३ ५७।

विष्ठाः कत्यक्षराणी'ति तम्प्रत्याह 'पुडस्य विष्ठाः शतमक्षराणी'ति ॥ १९ ॥ अथोद्गाता ब्रह्माणम्पृच्छति । 'को ऽअस्य वेद भुवनस्य नाभि'मिति तम्प्रत्याह 'वेदाहमस्य भुवनस्य नाभि'मिति ॥ २० ॥ अथाध्वर्युं यजमानः पृच्छति । 'पृच्छामि त्वा परमन्तम्पृथिव्या' ऽइति तम्प्रत्याहे'यं वेदिः परो ऽअन्तः पृथिव्या' ऽइति ॥ २१ ॥ सर्वाप्तिर्वा ऽएषा वाचः । यद्ब्रह्मोद्यः सर्वे कामा ऽअश्वमेधे सर्वया वाचा सर्वान्कामानाप्नवामेति ॥ २२ ॥ उदिते ब्रह्मोद्ये । प्रपद्याध्वर्युर्हिरण्मयेन पात्रेण प्राजापत्यम्महिमानङ्गृह्णाति तस्य पुरोऽनु'वाक्यां हिरण्यगर्भः समवर्त्तताग्र' ऽइत्यथास्य पुरोऽनुवाक्या 'सुभूः स्वयम्भूः प्रथम' ऽइति 'होता यक्षत्प्रजापति'मिति प्रैषः 'प्रजापते न त्वदेतान्यन्य' ऽइति होता यजति वषट्कृते जुहोति 'यस्तेऽहन्त्संवत्सरे महिमा सम्बभूवे'ति नानुवषट्करोति सर्वहुतः हि जुहोति ॥ २३ ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ वपाहोमः ]

अथातो वपानाꣳ होमः । नानेव चरेयुरा वैश्वदेवस्य वपायै वैश्वदेवस्य वपायाꣳ हुतायान्तदन्वितरा

(१) शु० य० सं० २३.५८। (२) शु० य० सं० २३.५९। (३) शु० य० २३ ६०। (४) शु० य० सं० २३ ६१। (५) शु० य० सं० २३.६२। (६) शु० य० सं० २३ ९। (७) शु० य० सं० २३.६३। (८) शु० य० सं० २३.६४। (९) शु० य० सं० २३.६५। (१०) शु० य० सं० २३.२

जुहुयुरिति ह स्माह सत्यकामो जाबालो विश्वे वै सर्वे देवास्तदेनान्यथादेवतम्प्रीणातीति ॥ १ ॥ ऐन्द्राग्नस्य वपायाꣳ हुतायाम् । तदन्वितरा जुहुयुरिति ह स्माहतुः सौमापौ मानुतन्तव्याविन्द्राग्नी वै सर्वे देवास्तदु हैवैनान्यथादेवतम्प्रीणातीति ॥ २ ॥ कायस्य वपायाꣳ हुतायाम् । तदन्वितरा जुहुयुरिति ह स्माह शैलालिः प्रजापतिर्वै कः प्रजापतिमु वा ऽअनु सर्वे देवास्तदु हैवैनान्यथादेवतम्प्रीणातीति ॥ ३ ॥ एकविꣳशतिश्चातुर्मास्यदेवता ऽअनुद्रुत्य । एकविꣳशतिधा कृत्वा प्रचरेयुरिति ह स्माह भाल्लवेय ऽएतावन्तो वै सर्वे देवा यावन्तश्चातुर्मास्यदेवतास्तदु हैवैनान्यथादेवतम्प्रीणातीति ॥ ४ ॥ नानैव चरेयुः । इतीन्द्रोतः शौनकः किमुत स्वरेरꣳस्तदु हैवैनान्यथादेवतम्प्रीणातीत्येतदुह तेषां वचोऽन्या त्वेवात स्थितिः ॥ ५ ॥ अथ होवाच याज्ञवल्क्यः । सकृदेव प्राजापत्याभिः प्रचरेयुः सकृद्देवदेवत्याभिस्तदु हैवैनान्यथादेवतम्प्रीणात्यञ्जसा यज्ञस्य सꣳस्थामुपैति न ह्वलतीति ॥ ६ ॥ हुतासु वपासु । प्रपद्याध्वर्यू रजतेन पात्रेण प्राजापत्यम्महिमानमुत्तरङ्गृह्णाति तस्य पुरोरुक्यः प्राणतो निमिषतो महित्वे[१]ति विपर्यस्ते याज्यानुवाक्ये ऽअयातयामताया ऽएष ऽएव प्रैषो वषट्कृते जुहोति 'यस्ते रात्रौ सँवत्सरे महिमा सम्बभूवे[२]ति नानुवषट्करोति तस्योक्तम्ब्राह्मणम् ॥ ७ ॥ नान्येषाम्पशूनान्तेदन्या ऽअवद्यन्ति । अवद्यन्त्यश्वस्य

(१) शु० य० सं० २३. ३ । (२) शु० य० सं० २३. ४ ।

दक्षिणतोऽन्येपाम्पशूनामवघ्नन्त्युत्तरतोऽश्वस्य प्लक्षशा-
खास्वन्येषाम्पशूनामवद्यन्ति वेतसशाखास्वश्वस्य ॥ ८ ॥
तदु होवाच सात्ययज्ञिः । इतरथैव कुर्य्युः पथ एव ना-
पोद्धिस्यमिति पूर्व्वा त्वेव स्थितिरुक्थ्यो यज्ञस्तेनान्तरिक्ष-
लोकमृद्ध्नोति सर्वस्तोमोऽतिरात्र उत्तममहर्भवति सर्वं
वै सर्वस्तोमोऽतिरात्रः सर्वमश्वमेधः सर्वस्याप्त्यै सर्व-
स्यावरुद्ध्यै ॥ ९ ॥ तस्य त्रिवृद्बहिष्पवमानम् *। पञ्चदशा-
न्याज्यानि सप्तदशो माध्यन्दिनः पवमान एकविंशानि
पृष्ठानि त्रिणवस्तृतीयः पवमानस्त्रयस्त्रिंशमग्निष्टोमसा-
मैकविंशान्युक्थान्येकविंशः षोडशी पञ्चदशी रात्रि-
स्त्रिवृत्सन्धिर्गृहीतीयस्याह्नः पृष्ठ्यस्य षडहस्य तच्छत्रम-
तिरात्रो यज्ञस्तेनामुँल्लोकमृद्ध्नोति ॥ १० ॥ एकविंशतिः
सवनीयाः पशवः । सर्वं आग्नेयास्तेषाम् समानङ्कर्म्मेत्यु
हैक आहुश्चतुर्विंशतिन्त्वेवैतान्गव्यानालभेत द्वादशभ्यो
देवताभ्यो द्वादश मासाः संवत्सरः सर्वं संवत्सरः सर्व-
मश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ११ ॥ †

पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥



* सामसंहितायामुत्तरार्चिके तृचात्मकानि सूक्तान्याम्नातानि ( साम० उ० १. १. १–३ )। तत्र 'उपास्मै' इत्याद्यं सूक्तम्। 'दविद्युतत्या' इति द्वितीयम्। 'पवमानस्य ते' इति तृतीयम्। प्रातःसवनानुष्ठाने तेषु त्रिषु सूक्तेषु गायत्रं साम गीयते। तदिदं सूक्तत्रयगानसाध्यं स्तोत्रं बहिष्पवमानमित्युच्यते। तत्र त्रिवृतावृत्त्या पवमानार्थं बहिर्गम्यमानत्वात्।

† कण्डि० १८००।

[ प्रत्यृतु पशालम्भः ]

एतेन हैन्द्रोतो दैवापः शौनकः । जनमेजयम्पारिक्षितं र्याजयाञ्चकार तेनेष्ट्वा सर्वाम्पापकृत्याꣳ सर्वाम्ब्रह्महत्यामुपजघान सर्वाꣳ ह वै पापकृत्याꣳ सर्वाम्ब्रह्महत्यामपहन्ति योऽश्वमेधेन यजते ॥ १ ॥ तदेतद्गाथयाभिगीतम् । आसन्दीवति धान्यादꣳ रुक्मिणꣳ हरितस्रजम् ॥ अबध्नादश्वꣳ सारङ्गन्देवेभ्यो जनमेजय इति ॥ २ ॥ एते एव पूर्वे अहनी । ज्योतिरतिरात्रस्तेन भीमसेनमेते एव पूर्वे अहनी गौरतिरात्रस्तेनोग्रसेनमेते एव पूर्वे अहनी आयुरतिरात्रस्तेन श्रुतसेनमित्येते पारिक्षितीयास्तदेतद्गाथयाभिगीतम्पारिक्षिता यजमाना अश्वमेधैः परोऽवरम् ॥ अजहुः कर्म्म पापकम्पुण्याः पुण्येन कर्म्मणेति ॥ ३ ॥ एते एव पूर्वे अहनी । अभिजिदतिरात्रस्तेन ह पर आट्णार ईजे कौसल्यो राजा तदेतद्गाथयाभिगीतमट्णारस्य परः पुत्रोऽश्वम्मेध्यमबन्धयत् ॥ हैरण्यनाभः कौसल्यो दिशः पूर्णा अमꣳहतेति ॥ ४ ॥ एते एव पूर्वे अहनी । विश्वजिदतिरात्रस्तेन ह पुरुकुत्सो दौर्गहेणेज ऐक्ष्वाको राजा तस्मादेतदृषिणाभ्यनूक्त'मस्माकमत्र पितरस्त आसन्त्सप्त ऋषयो दौर्गहे बध्यमान' इति ॥ ५ ॥ एते एव पूर्वे अहनी । महाव्रतमतिरात्रस्तेन ह मरुत्त आविक्षित ईजे आयोगवो राजा तस्य ह ततो मरुतः परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः

( १ ) ऋ० सं० ३. ७. १८ ।

सभासदो बभूवुस्तदेतद्गाथयाभिगीतम्मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे ॥ आविक्षितस्याग्निः क्षत्ता विश्वे देवाः सभासद ऽइति मरुतो ह वै तस्य परिवेष्टारोऽग्निः क्षत्ता विश्वे देवाः सभासदो भवन्ति योऽश्वमेधेन यजते ॥ ६ ॥ एते ऽएव पूर्वे ऽअहनी । अप्तोर्यामोऽतिरात्रस्तेन हैतेन क्रैव्य ऽईजे पाञ्चालो राजा क्रिवय ऽइति ह वै पुरा पञ्चालानाचक्षते तदेतद्गाथयाभिगीतमश्वम्मेध्य-मालभत क्रिवीणामतिपूरुषः ॥ पाञ्चालः परिवक्रायाथं सहस्रशतदक्षिणमिति ॥ ७ ॥ अथ द्वितीयया । सहस्रमाल-ब्युतां शता च पञ्चविꣳशतिः ॥ दिक्कोदिक्कः पञ्चालाना-म्ब्राह्मणा या विभेजिर ऽइति ॥ ८ ॥ त्रिवृदग्निष्टोमः । पञ्चदश ऽउक्थ्यः सप्तदशस्तृतीयमहः सोक्थकमेकविꣳ-शः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिरित्येषोऽनुष्टुप्सम्प-न्नस्तेन हैतेन ध्वसा द्वैतवन ऽईजे मात्स्यो राजा यत्रैत-द्द्वैतवनꣳ सरस्तदेतद्गाथयाभिगीतश्चतुर्दश द्वैतवनो राजा सङ्ग्रामजिद्धयान् ॥ इन्द्राय वृत्रघ्नेऽवध्नात्तस्माद्द्वैतवनꣳ सर ऽइति ॥ ९ ॥ चतुर्विꣳशाः पवमानाः । त्रिवृदभ्या-वर्तश्चतुश्चत्वारिꣳशाः पवमाना ऽएकविꣳशमभ्यावर्तम-ष्टाचत्वारिꣳशाः पवमानास्त्रयस्त्रिꣳशमभ्यावर्त्तमाग्निष्टोम-सामाद्द्वात्रिꣳशान्युक्थ्यान्येकविꣳशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिरिति ॥ १० ॥ एतद्विष्णोः क्रान्तम् । तेन हैतेन भरतो दौःषन्तिरीजे तेनेष्ट्वेमां व्यष्टिं व्यानशे येयम्भरतानान्तदेतद्गाथयाभिगीतमष्टासप्ततिम्भरतो दौः-

पन्तिर्य्यमुनामनु ॥ गङ्गायां व्वृत्रघ्नेऽवध्नात्पञ्चपञ्चाशतᳩ हयानिति ॥ ११ ॥ अथ द्वितीयया । त्रयस्त्रिᳩशतᳩ शतᳩ राजाऽश्वान्वद्धाय मेध्यान् ॥ सौद्युम्निरत्यष्ठादन्यानमायान्मायवत्तर ऽइति ॥ १२ ॥ अथ तृतीयया । शकुन्तला नाडपित्यप्सरा भरतन्दधे ॥ परᳩ सहस्रानिन्द्रायाश्वान्मेध्यान्य ऽआहरद्विजित्य पृथिवीᳪ सर्वामिति ॥ १३ ॥ अथ चतुर्थ्या । महदद्य भरतस्य न पूर्वे नापरे जनाᳩ ॥ दिव्वम्मर्त्य ऽइव वाहुभ्यान्नोदापुᳩ पञ्च मानवा ऽइति ॥१४॥ एकविᳩशस्तोमेन ऽऋषभो याज्ञतुर ऽईजे श्विक्नानाᳪ राजा तदेतद्गाथयाभिगीतं व्याज्ञतुरे यजमाने व्व्रह्माण ऽऋषभे जनाᳩ ॥ अश्वमेधे धनँल्लब्ध्वा व्विभजन्ते स्म दक्षिणा ऽइति ॥ १५ ॥ त्रयस्त्रिᳩशस्तोमेन । शोणᳩ सात्रासाहु ऽईजे पाञ्चालो राजा तदेतद्गाथयाभिगीतᳩ सात्रासाहे यजमानेऽश्वमेधेन तौर्वशाᳩ ॥ उदीरते त्रयस्त्रिᳩशाᳩ षट् सहस्राणि वर्म्मिणामिति ॥ १६ ॥ अथ द्वितीयया । षट् षट् षड्वा सहस्राणि यज्ञे कोकपितुस्तव ॥ उदीरते त्रयस्त्रिᳩशाᳩ षट् सहस्राणि वर्म्मिणामिति ॥ १७॥ अथ तृतीयया । सात्रासाहे यजमाने पाञ्चाले राज्ञि सुस्रजि॥ अमाद्यदिन्द्रᳩ सोमेनातृप्यन्त्राह्मणा धनैरिति ॥ १८ ॥ गोविनतेन शतानीकᳩ । सात्राजित ऽईजे काश्यस्याश्वमादाय ततो हैतद्वाकाशयोऽग्नीन्नादधत ऽआत्तसोमपीथाᳩ स्म ऽइति वदन्तᳩ ॥ १९ ॥ तस्य विधा चतुर्विᳪशाᳩ पव-

( १-२ ) 'सात्रासहे' इति 'ग' 'ज' पुस्तकयो पाठ. ।

मानाः । त्रिवृदभ्यावर्त्तश्चतुश्चत्वारिᳩशाः पवमाना ऽएक-
विᳩशान्याज्यानि तृणवान्युक्थ्यान्येकविᳩशानि पृष्ठानि
षट्त्रिᳩशाः पवमानास्त्रयस्त्रिᳩशमभ्यावर्त्तमाग्निष्टोमसा-
मादेकविᳩशान्युक्थान्येकविᳩशः षोडशी पञ्चदशी रात्रि-
स्त्रिवृत्सन्धिः ॥ २० ॥ तदेतद्गाथयाभिगीतम् । शतानीकः
समन्तासु मेध्यᳩ सात्राजितो हयम् ॥ आदत्त यज्ञङ्काशीनामभ-
रतः सत्त्वतामिवेति ॥ २१ ॥ अथ द्वितीयया । श्वेतᳩ सम-
न्तासु वशञ्चरन्तᳩ शतानीको धृतराष्ट्रस्य मेध्यम् ॥ आदाय
सह्वा दशमास्यमश्वᳩ शतानीको गोविनतेन हेज ऽइति
* ॥ २२ ॥ अथ चतुर्थ्यां । महदद्य भरतानान्न पूर्वे नापरे
जनाः ॥ दिवम्मर्त्य ऽइव पक्षाभ्यान्नोदापुः सप्त मानवा
ऽइति ॥ २३ ॥ अथातो दक्षिणानाम् । मध्यम्प्रति राष्ट्रस्य
यदन्यद्भूमेश्च पुरुषेभ्यश्च ब्राह्मणस्य च वित्तात्प्राची
दिग्घोतुर्दक्षिणा ब्रह्मणः प्रतीच्यध्वर्य्योरुदीच्युद्गातु-
स्तदेव होतृका ऽअन्वाभक्ताः ॥ २४ ॥ उदयनीयायाᳬ
सᳬस्थितायाम् । एकविᳩशतिं वशा ऽअनूबन्ध्या ऽआल-
भते मैत्रावरुणीर्वैश्वदेवीर्बार्हस्पत्या ऽएतासान्देवतानामा-
प्त्यै तद्यद्बार्हस्पत्या ऽअन्त्या भवन्ति ब्रह्म वै बृहस्पतिस्तद्
ब्रह्मण्येवान्ततः प्रतितिष्ठति ॥ २५ ॥ अथ यदेकविᳩश-
तिर्भवन्ति । एकविᳩशो वा ऽएष य ऽएष तपति द्वादश
मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएक-
विᳩश ऽएतामभिसम्पदम् ॥ २६ ॥ उदवसानीयायाᳬ

( १ ) 'घ' 'ञ' पुस्तकयो "॰ण्दमास्या" इति पाठ ।

सꣳस्थितायाम् * । चतस्रश्च जायाः कुमारीम्पञ्चमीञ्च-त्वारि च शतान्यनुचरीणां व्यथासमुदितन्दक्षिणान्ददाति ॥ २७ ॥ अथोत्तरꣳ सँवत्सरमृतुपशुभिर्यजते† । षड्भिरा-ग्नेयैर्वसन्ते षड्भिरैन्द्रैर्ग्रीष्मे षड्भिः पार्जन्यैर्वा मारुतैर्वा वर्षासु षड्भिर्मैत्रावरुणैः शरदि षड्भिरैन्द्रावैष्णवैर्हेमन्ते षड्भिरैन्द्राबार्हस्पत्यैः शिशिरे षड्तवः सँवत्सर ऽऋतुष्वेव सँवत्सरे प्रतितिष्ठति यद्त्रिꣳशदेते पशवो भवन्ति षट्त्रिꣳ-शदक्षरा बृहती बृहत्यामधि स्वर्गो लोकः प्रतिष्ठितस्तद्-न्ततो बृहत्यैव च्छन्दसा स्वर्गे लोके प्रतितिष्ठति ॥२८॥

पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥

कण्डिकासंख्या ॥ १०६ ॥

इति पञ्चमोऽध्यायः ॥ ५ ॥

—०—

[ पुरुषमेधः ]

पुरुषो ह नारायणोऽकामयत । अतितिष्ठेयꣳ सर्वाणि भूतान्यहमेवेदꣳ सर्वꣳ स्यामिति स ऽएतम्पुरुषमेधम्प-ञ्चरात्रं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत तेनेष्ट्वात्यतिष्ठ-त्सर्वाणि भूतानीदꣳ सर्वमभवदतितिष्ठति सर्वाणि भूता-नीदꣳ सर्वम्भवति य ऽएवं विद्वान्पुरुषमेधेन यजते यो वैतदेवं वेद ॥ १ ॥ तस्य त्रयोविꣳशतिर्दीक्षाः ‡ । द्वा-

* 'उदवसानीयान्ते भार्या ददाति यथासंवादꣳ सानुचरी' (का० श्रौ० सू० २०.८.२४) इति।

† तथा च सूचितं कात्यायनमहर्षिणा 'अस्तृतु पशूनालभते षट् षड् वसन्तादाग्नेयानैन्द्रा-न्पार्जन्यान्मारुतान्वा मैत्रावरुणानैन्द्राबार्हस्पत्यान्' (का० श्रौ० सू० २०.८.१०) इति।

‡ 'पुरुषमेधस्त्रयोविꣳशतिदीक्षोऽतिष्ठाकामस्य' (का० श्रौ० सू० २१.१.१) इति।

दशोपसदः पञ्च सुत्याः स ऽएष चत्वारिꣳशद्रात्रः सदी-
क्षोपसत्कश्चत्वारिꣳशदक्षरा विराट् तद्विराजमभिसम्प-
द्यते '[1]ततो विराडजायत विराजो ऽअधि पूरुष' ऽइत्येषा
वै सा विराडेतस्या ऽएवैतद्विराजो यज्ञम्पुरुषञ्जनयति
॥ २ ॥ ता वा ऽएताः । चतस्रो दशतो भवन्ति तद्यदेता-
श्चतस्रो दशतो भवन्त्येषाञ्चैव लोकानामाप्त्यै दिशाञ्चे-
ममेव लोकम्प्रथमया दशताप्नुवन्नन्तरिक्षन्द्वितीयया
दिवन्तृतीयया दिशश्चतुर्थ्या तथैवैतद्यजमान ऽइममेव
लोकम्प्रथमया दशताप्नोत्यन्तरिक्षन्द्वितीयया दिवन्तृती-
यया दिशश्चतुर्थ्यैतावद्वा ऽइदꣳ सर्वं यावदिमे च लोका
दिशश्च सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ३ ॥
एकादशाग्नीषोमीयाः[2] † पशव ऽउपवसथे । तेषाꣳ समा-
नङ्कर्म्मैकादश यूपा ऽएकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टु-
ब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मा-
नमपहते ॥ ४ ॥ ऐकादशिनाः सुत्यासु पशवो भवन्ति ।
एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण
यजमानः पुरस्तात्पाप्मानमपहते ॥ ५ ॥ यद्द्वेवैकादशिना
भवन्ति । एकादशिनी वा ऽइदꣳ सर्वम्प्रजापतिर्ह्येकादशिनी
सर्वꣳ हि प्रजापतिः सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्व-
स्यावरुद्ध्यै ॥ ६ ॥ स वा ऽएष पुरुषमेधः पञ्चरात्रो यज्ञ-

(१) शु० य० सं० ३१. ५ ।

(२) 'ग' 'ज' पुस्तकयो- "एकादशाग्निपोमीया." इति पाठो दृश्यते, स तु प्रामादिक एव, 'ईदग्ने सोमवरुणयो' (पा० ६. ३. २७) इति सूत्रेण—ईत्विधानात् ।

† का० श्रौ० सू० २१. १. ५ ।

क्रतुर्भवति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्त्तवः संवत्सरो यत्किञ्च पञ्चविधमधिदेवतमध्यात्मन्तदेनेन सर्वमाप्नोति ॥ ७ ॥ तस्याग्निष्टोमः प्प्रथममहर्ब्भवति । अथोक्थ्योऽथातिरात्रोऽथोक्थ्योऽथाग्निष्टोमः स वाऽएष ऽउभयतोज्योतिरुभयतऽउक्थ्यः ॥ ८ ॥ यवमध्यः पञ्चरात्रो भवति । इमे वै लोकाः पुरुषमेध ऽउभयतोज्योतिषो वा ऽइमे लोका ऽअग्निनेत ऽआदित्येनामुतस्तस्मादुभयतोज्योतिरन्नमुक्थ्य ऽआत्मातिरात्रस्तद्यदेता ऽउक्थ्यावतिरात्रमभितो भवतस्तस्मादयमात्मान्नेन परिवृढोऽथ यदेष वर्षिष्ठोऽतिरात्रोऽह्नाथं स मध्ये तस्माद्यवमध्यो युते ह वै द्विषन्तम्भ्रातृव्यमयमेवास्ति नास्य द्विषन्भ्रातृव्य ऽइत्याहुर्य्य ऽएवं वेद ॥ ९ ॥ तस्यायमेव लोकः प्प्रथममहः । अयमस्य लोको वसन्त ऽऋतुर्य्यदूर्द्ध्वमस्माल्लोकादर्वाचीनमन्तरिक्षात्तद्द्वितीयमहस्तद्वस्य ग्रीष्म ऽऋतुरन्तरिक्षमेवास्य मध्यममहरन्तरिक्षमस्य वर्षाशरदावृतू यदूर्द्ध्वमन्तरिक्षादर्वाचीनन्दिवस्तच्चतुर्थमहस्तद्वस्य हेमन्त ऽऋतुर्द्यौरेवास्य पञ्चममहर्द्यौरस्य शिशिर ऽऋतुरित्यधिदेवतम् ॥ १० ॥ अथाध्यात्मम् । प्रतिष्ठैवास्य प्प्रथममहः प्प्रतिष्ठो ऽअस्य वसन्त ऽऋतुर्य्यदूर्द्ध्वम्प्रतिष्ठाया ऽअवाचीनम्मध्यात्तद्द्वितीयमहस्तद्वस्य ग्रीष्म ऽऋतुर्म्मध्यमेवास्य मध्यममहर्म्मध्यमस्य वर्षाशरदावृतू यदूर्द्ध्वम्मध्यादवाचीनः शीर्ष्णस्तच्चतुर्थमहस्तद्वस्य हेमन्त ऽऋतुः शिर ऽएवास्य पञ्चममहः शिरोऽस्य शिशिर ऽऋतु-

रेवमिमे च लोकाः संवत्सरश्चात्मा च पुरुषमेधमभिसम्पद्यन्ते सर्वं वा ऽइमे लोकाः सर्वꣳ संवत्सरः सर्वमात्मा सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ ११ ॥

पष्ठाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

[ ब्राह्मणादीनामष्टाचत्वारिंशत्संख्यकानामग्निष्ठे यूपे नियोजनादि ]

अथ यस्मात्पुरुषमेधो नाम । इमे वै लोकाः पूरयमेव पुरुषो योऽयम्पवते सोऽस्याम्पुरि शेते तस्मात्पुरुषस्तस्य यदेषु लोकेष्वन्नन्तदस्यान्नम्मेधस्तद्यदस्यैतदन्नम्मेधस्तस्मात्पुरुषमेधोऽथो यदस्मिन्मेध्यान्पुरुषानालभते तस्माद्वेव पुरुषमेधः ॥ १ ॥ तान्वै मध्यमेऽहन्नालभते । अन्तरिक्षं वै मध्यममहरन्तरिक्षमु वै सर्वेषाम्भूतानामायतनमथो ऽअन्नं वा ऽएते पशव ऽउदरम्मध्यममहरुदरे तदन्नन्दधाति ॥ २ ॥ तान्वै दश दशालभते । दशाक्षरा विराड्विराडु कृत्स्नमन्नङ्कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै ॥ ३ ॥ एकादश दशत ऽआलभते । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानो मध्यतः पाप्मानमपहते ॥ ४ ॥ अष्टाचत्वारिꣳशतम्मध्यमे यूप ऽआलभते । अष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनवरुन्द्धे ॥५॥ एकादशैकादशेतरेषु । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्येण यजमानोऽभितः पाप्मानमपहते ॥ ६ ॥ अष्टा ऽउत्तमानालभते । अष्टाक्षरा गायत्री ब्रह्म गायत्री तद्ब्रह्मैवैतदस्य

सर्वस्योत्तमङ्करोति तस्माद्ब्रह्मास्य सर्वस्योत्तममित्याहुः
॥ ७ ॥ ते वै प्राजापत्या भवन्ति। ब्रह्म वै प्रजापति-
र्ब्राह्मो हि प्रजापतिस्तस्मात्प्राजापत्या भवन्ति ॥ ८ ॥
स वै पशूनुपाकरिष्यन् *। एतास्तिस्रः सावित्री-
राहुतीर्जुहोति 'देव सवितस्तत्सवितुर्वरेण्यं विश्वानि देव
सवित'रिति सवितारम्प्रीणाति सोऽस्मै प्रीत एतान्पु
रुषान्प्रसौति तेन प्रसूतानालभते ॥ ९ ॥ ब्रह्मणे ब्राह्म-
णमालभते। ब्रह्म वै ब्राह्मणो ब्रह्मैव तद्ब्रह्मणा समर्द्ध-
यति क्षत्राय राजन्यं क्षत्रं वै राजन्यः क्षत्रमेव तत्क्षत्रेण
समर्द्धयति मरुद्भ्यो वैश्यं विशो वै मरुतो विशमेव
तद्विशा समर्द्धयति तपसे शूद्रन्तपो वै शूद्रस्तप एव तत्त-
पसा समर्द्धयत्येवमेता देवता यथारूपम्पशुभिः समर्द्धयति
ता एनः समृद्धाः समर्द्धयन्ति सर्वैः कामैः ॥ १० ॥
आज्येन जुहोति। तेजो वा आज्यन्तेजसैवास्मिंस्त-
त्तेजो दधात्याज्येन जुहोत्येतद्वै देवानाम्प्रियन्धाम यदाज्य-
म्प्रियेणैवैनान्धाम्ना समर्द्धयति त एनः समृद्धाः सम-
र्द्धयन्ति सर्वैः कामैः ॥ ११ ॥ नियुक्तान्पुरुषान्। ब्रह्मा
दक्षिणतः पुरुषेण नारायणेनाभिष्टौति 'सहस्रशीर्षा पुरुषः
सहस्राक्षः सहस्रपा'दित्येतेन षोडशर्चेन षोडशकलं वा इदः
सर्वः सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्या इत्थमसी-
त्थमसीत्युपस्तौत्येवैनमेतन्महयत्येवाथो यथैष तथैनमेतदाह

* 'पशूनुपाकरिष्यन्त्सावित्रेण देव सवितरिति प्रत्यृचं जुहोति' ( का० श्रौ० सू०
२१ १. ६ ) इति।
( १ ) शु० य० सं० ३०। १-३। ( २ ) शु० य० सं० ३१ । १।

तत्पर्य्यग्निकृताः पशवो बभूवुरसंज्ञप्ताः ॥ १२ ॥ अथ हैनं वागभ्युवाद । पुरुष मा सन्तिष्ठिपो यदि सᳬंस्थापयिष्यसि पुरुष ऽएव पुरुषमत्स्यतीति तान्पर्य्यग्निकृतानेवोदसृजत्तद्देवत्या ऽआहुतीरजुहोत्ताभिस्ता देवता ऽअप्रीणात्ता ऽएनम्प्रीता ऽअप्रीणन्त्सर्वैः कामैः ॥ १३ ॥ आज्येन जुहोति । तेजो वा ऽआज्यन्तेजसैवास्मिँस्तत्तेजो दधाति ॥ १४ ॥ ऐकादशिनैः सᳬंस्थापयति । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्य्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्य्येण यजमानो मध्यतः पाप्मानमपहते ॥ १५ ॥ उदयनीयायाᳬं सᳬंस्थितायाम् । एकादश वशा ऽअनूबन्ध्या ऽआलभते मैत्रावरुणीर्वैश्वदेवीर्बार्हस्पत्या ऽएतासान्देवतानामाप्त्यै तद्यद्बार्हस्पत्या ऽअन्त्या भवन्ति ब्रह्म वै बृहस्पतिस्तद्बु ब्रह्मण्येवान्ततः प्रतितिष्ठति ॥ १६ ॥ अथ यदेकादश भवन्ति । एकादशाक्षरा त्रिष्टुब्वज्रस्त्रिष्टुब्वीर्य्यन्त्रिष्टुब्वज्रेणैवैतद्वीर्य्येण यजमानोऽन्ततः पाप्मानमपहते त्रेधातव्युदवसानीयासावेव बन्धुः ॥ १७ ॥ अथातो दक्षिणानाम् । मध्यम्प्रति राष्ट्रस्य यदन्यद्भूमेश्च ब्राह्मणस्य च वित्तात्सपुरुषम्प्राची दिग्घोतुर्दक्षिणा ब्रह्मणः प्रतीच्यध्वर्य्योरुदीच्युद्गातुस्तदेव होतृका ऽअन्वाभक्ताः ॥१८॥ अथ यदि ब्राह्मणो यजेत । सर्ववेदसन्दद्यात्सर्वं वै ब्राह्मणः सर्वᳬं सर्ववेदसᳬं सर्वम्पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै

(1) 'ख' 'ज' पुस्तकयो "मध्यत." इति पाठ ।

॥१९॥ अथात्मन्नग्नी समारोह्य *। उत्तरनारायणेनादित्यमुप-स्थायानपेक्षमाणोऽरण्यमभिप्रेयात्तदेव मनुष्येभ्यस्तिरो भवति यद्यु ग्रामे विवत्सेदरण्योरग्नी समारोह्योत्तरनारायणेनैवादित्यमुपस्थाय [1] गृहेषु प्रत्यवस्येदथ तान्यज्ञक्रतूनाहरेत यानभ्याप्नुयात्स वा ऽएष न सर्वस्मा ऽअनुवक्तव्यः सर्वः हि पुरुषमेधो नेत्सर्वस्मा ऽइव सर्वम्ब्रवाणीति यो न्वेव ज्ञातस्तस्मै ब्रूयादथ योऽनूचानोऽथ योऽस्य प्रियः स्यान्नेत्वेव सर्वस्मा ऽइव ॥ २० ॥

षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति षष्ठोऽध्यायः ॥ ६ ॥

---

[ सर्वमेधः ]

ब्रह्म वै स्वयम्भु तपोऽतप्यत । तदैक्षत न वै तपस्यानन्त्यमस्ति हन्ताहम्भूतेष्वात्मानञ्जुहवानि भूतानि चात्मनीति तत्सर्वेषु भूतेष्वात्मानः हुत्वा भूतानि चात्मनि सर्वेषाम्भूतानाः श्रैष्ठ्यः स्वाराज्यमाधिपत्यम्पर्यैत्तथैवैतद्यजमानः सर्वमेधे सर्वान्मेधान्हुत्वा सर्वेषाम्भूतानाः

---

* का० श्रौ० सू० २१ १. १७। 'गार्हपत्येऽपरारणिमनुप्रहृत्याहवनीय उत्तरारणिमात्मन्यग्नी समारोप्यारण्य प्रजेत' इति शाङ्खायनोक्तिः । तथा च मनुः 'आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्' ( मनु० ६ ३८ ) इति ।

'नैभात्यन्ते समारोह्यात्मन्यग्नी सूर्यमुपस्थायादुभ्य सम्भृत इत्यनुवा कैनानपेक्षमाणोऽभ्य गत्वा न प्रत्येयात्' 'ग्रामे वा विवत्सन्नरण्यो' ( का० श्रौ० सू० २१ । १ । १७–१८ ) इति कात्यायनोक्तिः ।

( १ ) "अद्भ्यः सम्भृत " इत्यादिषण्णां कण्डिकानामुत्तरनारायणमिति सञ्ज्ञा ।

( २ ) 'म' 'ज' पुस्तकयो 'सर्वेषाम्भूतानाम्' इत्यस्य स्थाने 'सर्वाणि भूतानि' इति पाठ समुपलभ्यते ।

श्रैष्ठ्यꣳ स्वाराज्यमाधिपत्यम्पर्य्येति ॥ १ ॥ स वा ऽएष
सर्वमेधो दशरात्रो यज्ञक्रतुर्भवति । दशाक्षरा विराड्वि-
राडु कृत्स्नमन्नङ्कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै तस्मिन्नग्नि-
म्पराद्ध्यँश्चिनोति परमो वा ऽएष यज्ञक्रतूनां यत्सर्वमेधः
परमेणैवैनम्परमताङ्गमयति ॥ २ ॥ तस्याग्निष्टुदग्निष्टोमः
प्रथममहर्भवति । अग्निर्वा ऽअग्निष्टुदग्निष्टोमोऽग्निमुखा
ऽउ वै सर्वे देवाः सर्वेषान्देवानामाप्त्यै तस्याग्नेया ग्रहा
भवन्त्याग्नेय्यः पुरोरुचः सर्वमाग्नेयमसदिति ॥ ३ ॥
इन्द्रस्तुदुक्थ्यो द्वितीयमहर्भवति । इन्द्रो वै सर्वे
देवाः सर्वेषान्देवानामाप्त्यै तस्यैन्द्रा ग्रहा भवन्त्यैन्द्र्यः
पुरोरुचः सर्वमैन्द्रमसदिति ॥ ४ ॥ सूर्यस्तुदुक्थ्यस्तृ-
तीयमहर्भवति । सूर्यो वै सर्वे देवाः सर्वेषान्देवाना-
माप्त्यै तस्य सौर्या ग्रहा भवन्ति सौर्य्यः पुरोरुचः सर्वꣳ
सौर्यमसदिति ॥ ५ ॥ वैश्वदेवश्चतुर्थमहर्भवति । विश्वे
वै सर्वे देवाः सर्वेषान्देवानामाप्त्यै तस्य वैश्वदेवा ग्रहा
भवन्ति वैश्वदेव्यः पुरोरुचः सर्वं वैश्वदेवमसदिति
॥ ६ ॥ आश्वमेधिकम्मध्यमम्पञ्चममहर्भवति । तस्मिन्न-
श्वम्मेध्यमालभतेऽश्वमेधस्यैवाप्त्यै ॥ ७ ॥ पौरुषमे-
धिकम्मध्यमहः षष्ठमहर्भवति । तस्मिन्मेध्यान्पुरु-
षानालभते पुरुषमेधस्यैवाप्त्यै ॥ ८ ॥ अप्तोर्यामः सप्त-
ममहर्भवति । सर्वेषां यज्ञक्रतूनामाप्त्यै तस्मिन्त्सर्वा-
न्मेध्यानालभते यच्च प्राणि यच्चाप्राणं वपा वपावता जुहोति

( १-१ ) 'घ' 'ञ' पुस्तकयो तस्य' इति पाठो नोपलभ्यते ।

त्वच ऽउत्कर्त्तमवपाकानार्थं संव्वृश्चमोषधिवनस्पतीनाम्प्र-
किरन्ति शुष्काणाञ्चार्द्राणाञ्चान्नमन्नञ्जुहोत्यन्नस्यान्नस्याप्त्यै
सर्वञ्जुहोति सर्वस्मै जुहोति सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै
प्प्रातःसवने हुतासु वपास्वेवमेव तृतीयसवने हुतेषु
हविःषु ॥ ९ ॥ त्रिणवमष्टममहर्ब्भवति । वज्रो वै त्रिणवो
वज्रेण खलु वै क्षत्रं स्पृतन्तद्वज्रेणैव क्षत्रं स्पृणोति
॥ १० ॥ त्रयस्त्रिंशन्नवममहर्ब्भवति । प्प्रतिष्ठा वै त्रय-
स्त्रिंशः प्प्रतिष्ठित्यै ॥ ११ ॥ विश्वजित्सर्वपृष्ठोऽति-
रात्रो दशममहर्ब्भवति । सर्वं वै विश्वजित्सर्वपृष्ठोऽति-
रात्रः सर्वः सर्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै ॥ १२ ॥
अथातो दक्षिणानाम् । मद्ध्यम्प्रति राष्ट्रस्य यदन्यद्ब्रा-
ह्मणस्य वित्तात्सभूमि सपुरुषम्प्राची दिग्घोतुर्द्दक्षिणा
ब्रह्मणः प्प्रतीच्यद्ध्वर्य्योरुदीच्युद्गातुस्तदेव होतृका
ऽअन्वाभक्ताः ॥ १३ ॥ तेन हैतेन विश्वकर्म्मा भौवन
ऽईजे । तेनेष्ट्वात्यतिष्ठत्सर्वाणि भूतानीदꣳ सर्वमभवदति-
तिष्ठति सर्वाणि भूतानीदꣳ सर्वम्भवति य ऽएवं विद्वा-
न्त्सर्वमेधेन यजते यो वैतदेवं वेद ॥ १४ ॥ तꣳ ह कश्यपो
याजयाञ्चकार । तदपि भूमिः श्लोकञ्जगौ न मा मर्त्यः
कश्चन दातुमर्हति विश्वकर्म्मन्भौवन मन्द ऽआसिथ ॥
उपमङ्क्ष्यति स्या सलिलस्य मद्ध्ये मृषैष ते सङ्गरः
कश्यपायेति ॥ १५ ॥

सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

इति सप्तमोऽध्यायः ॥ ७ ॥

[ ब्राह्मणचतुष्टयेन पितृमेधनिरूपणम् ]

* अथास्मै श्मशानङ्कुर्वन्ति । गृहान्वा प्रज्ञानं [redacted] यो
वै कश्च म्रियते स शवस्तस्मा ऽएतदन्नङ्करोति तस्माच्छ-
वान्नꣳ शवान्नꣳ ह वै तच्छ्मशानमित्याचक्षते परोक्षꣳ श्मशा
ऽउ हैव नाम पितृणामत्तारस्ते ह्यामुष्मिँल्लोकेऽक्षतश्मशानस्य
साधुकृत्यामुपदम्भयन्ति तेभ्य ऽएतदन्नङ्करोति तस्मा-
च्छ्मशान्नꣳ श्मशान्नꣳ ह वै तच्छ्मशानमित्याचक्षते
परोऽक्षम् ॥ १ ॥ तद्वै न क्षिप्रङ्कुर्य्यात् । नेन्नवमघङ्कर-
वाणीति चिर ऽएव कुर्य्यादघमेव तत्तिरः करोति यत्र
समा नानु चन स्मरेयुरश्रुतिमेव तदघङ्गमयति यद्यनु-
स्मरेयुः ॥ २ ॥ अयुक्षु सँवत्सरेषु कुर्य्यात् । अयुक्ꣳ
हि पितृणामेकनक्षत्र ऽएकनक्षत्रꣳ हि पितृणाममावास्या-
याममावास्या वा ऽएकनक्षत्रमेको ह्येवैतास्ꣳ रात्रिꣳ
सर्वाणि भूतानि सँवसन्ति तेनो तङ्काममाप्नोति यः सर्वेषु
नक्षत्रेषु ॥ ३ ॥ शरदि कुर्य्यात् । स्वधा वै शरत्स्वधो वै
पितृणामन्नन्तदेनमन्ने स्वधायान्दधाति माघे वा मा नोऽघ-
मभूदिति निदाघे वा नि नोऽघन्धीयाता ऽइति ॥४॥ [अर्ध-
प्रपाठकः॥५०॥] चतुरस्रङ्करोति । देवाश्चासुराश्चोभये प्राजापत्या
दिक्ष्वस्पर्द्धन्त ते देवा ऽअसुरान्त्सपत्नान्भ्रातृव्यान्दि-
ग्भ्योऽनुदन्त तेऽदिक्काः पराभवँस्तस्माद्या दैव्यः प्रजा-

---

* अत्राध्यायारम्भे 'अथास्मै श्मशानङ्कुर्वन्ति' इत्येवं पाठः 'ग' 'ज' पुस्तकयोरुप-
लभ्यते । स तु प्रामादिक एव प्रतीयते, प्राचीनतमहस्तलिखितपुस्तकेष्वदर्शनात् ।

श्चतुःस्रक्तीनि ताः श्मशानानि कुर्वतेऽथ या ऽआसुर्य्यः प्राच्यास्त्वद्ये त्वत्परिमण्डलानि तेऽनुदन्त ह्येनान्दिग्भ्य ऽउभे दिशावन्तरेण विदधाति प्राचीञ्च दक्षिणाञ्चैतस्याथं ह दिशि पितृलोकस्य द्वारन्द्वारैवैनम्पितृलोकम्प्रपादयति स्रक्तिभिर्दिक्षु प्रतितिष्ठतीतरेणावान्तरदिक्षु तदेनः सर्वासु दिक्षु प्रतिष्ठापयति ॥ ५ ॥ अथातो भूमिजोषणस्य । उदीचीनप्रवणे करोत्युदीची वै मनुष्याणान्दिक्तदेनम्मनुष्यलोक ऽआभजत्येतद्ध वै पितरो मनुष्यलोक ऽआभक्ता भवन्ति यदेषाम्प्रजा भवति प्रजा हास्य श्श्रेयसी भवति ॥ ६ ॥ दक्षिणाप्रवणे * कुर्य्यादित्याहुः । दक्षिणाप्रवणो वै पितृलोकस्तदेनम्पितृलोक ऽआभजतीति न तथा कुर्य्यादामीवद्ध नाम तच्छ्मशानकरणङ्क्षिप्रे हैषामपरोऽनुप्रैति ॥ ७ ॥ दक्षिणाप्रवणस्य प्रत्यर्षे कुर्य्यादित्यु हैक ऽआहुः । तत्प्रत्युच्छ्रितमघम्भवतीति नो ऽएव तथा कुर्य्याद्यद्वा ऽउदीचीनप्रवणे करोति तदेव प्रत्युच्छ्रितमघम्भवति ॥ ८ ॥ यस्यैव समस्य सतः । दक्षिणतः पुरस्तादाप ऽएत्य सꣳस्थायाप्रघ्नत्य ऽएतान्दिशमभिनिष्पद्याक्षय्या ऽआपोऽपिपद्येरंस्तत्कुर्य्यादन्नं वा ऽआपोऽन्नाद्यमेवास्मा ऽएतत्परस्तात्प्रत्यग्दधात्यमृतमु वा ऽआप ऽएषो ह जीवानान्दिगन्तरेण सप्तऽर्षीणाञ्चोदयनमादित्यस्य चास्तमयनममृतमेव तज्जीवेषु दधाति तद्धैतत्प्रतिमीवन्नाम श्मशानकरणञ्जीवेभ्यो हितं ध्यद्वाव

* 'दक्षिणाप्रवण एके' ( का० श्रौ० सू० २१. ३. १७ )।

जीवेभ्यो हितन्तरिपितृभ्यः ॥ ९ ॥ कम्वति * कुर्य्यात् । कम्मेऽसदित्यथो शम्वति शम्मेऽसदिति नाधिपथङ्कुर्य्यान्नाकाशे नेदाविरघङ्करवाणीति ॥ १० ॥ गुहा सद्वतापि स्यात् । तद्यद्गुहा भवत्यघमेव तद्गुहा करोत्यथ यद्वताप्यसौ वा ऽआदित्यः पाप्मनोऽपहन्ता स ऽएवास्मात्पाप्मानमपहन्त्यथो ऽआदित्यज्योतिषमेवैनङ्करोति ॥११॥ न तस्मिन्कुर्य्यात् । यस्येरथादनूकाशः स्याद्याचमानः ह नाम तस्क्षिप्रे हैषामपरोऽनुप्रैति ॥ १२ ॥ चित्रम्पश्चात्स्यात् । प्रजा वै चित्रञ्चित्रः हास्य प्रजा भवति यदि चित्रन्न स्यादापः पश्चाद्बोचरतो वा स्युरापो ह्येव चित्रञ्चित्रः हैवास्य प्रजा भवति ॥ १३ ॥ ऊषरे करोति । रेतो वा ऽऊषाः प्रजननन्तदेनम्प्रजनन ऽआभजत्येतद्ध वै पितरः प्रजनन ऽआभक्ता भवन्ति यदेवाप्रजा भवति प्रजा हास्य श्रेयसी भवति ॥ १४ ॥ समूले समूलः हि पितृणां वीरिणमिश्रः ऽएतद्धास्याः पित्र्यमनतिरिक्तमथो ऽअघमेव तद्वद्ध करोति ॥ १५ ॥ न भूमिपाशमभिविदध्यात् । न शरन्नाश्मगन्धान्नाद्ध्याण्डान्न पृश्निपर्णीन्नाश्वत्थस्यान्तिकङ्कुर्य्यान्न विभीतकस्य न तिल्वकस्य न स्फूर्जकस्य न हरिद्रोर्न न्यग्रोधस्य ये चान्ये पापनामानो मङ्गलोपेप्सया नाम्नामेव परिहाराय ॥ १६ ॥ अथात ऽआवृदेव । अग्निविधयाग्निचितः श्मशानङ्करोति

* 'शम्वति सम्वति वा' ( का० श्रौ० सू० २१. ३. २२. ) इति ।

( १ ) 'वीरिणमिश्रमेवद्धास्या' इति 'ग' पुस्तके । 'वीरिणमिश्रमेतमेतद्धास्या.' इति च 'अ' पुस्तके ।

यद्वै यजमानोऽग्निञ्चिनुतेऽमुष्मै तल्लोकाय यज्ञेनात्मानᳪ संस्कुरुत ऽएतदु ह यज्ञियङ्कर्म्मासᳪस्थितमा श्मशानकरणात्तद्यदग्निविधयाग्निचितᳪ श्मशानङ्करोत्यग्निचित्यामेव तत्सᳪस्थापयति ॥१७॥ तद्वै न महत्कुर्यात् । नेन्महदघङ्करवाणीति यावानपक्षपुच्छोऽग्निस्तावत्कुर्यादित्यु हैक ऽआहुᳪ समानो ह्येष ऽआत्मा यथैवाग्नेस्तथेति ॥ १८ ॥ पुरुषमात्रन्त्वेव कुर्यात् । तथापरस्मा ऽअवकाशन्न करोति पश्चाद्वरीयᳪ प्रजा वै पश्चात्प्रजामेव तद्वरीयसीङ्कुरुत ऽउत्तरतो वर्षीयᳪ प्रजा वा ऽउत्तराᳪ प्रजामेव तद्वर्षीयसीङ्कुरुते तद्विधायापसलविसृष्टाभि स्पन्द्याभिᳪ पर्य्यातनोत्यपसलवि पित्र्यᳪ हि कर्म्म ॥ १९ ॥ अथोद्धन्तवा ऽआह । स यावत्येव निवप्स्यन्त्स्यात्तावदुद्धन्न्यात्पुरुषमात्रन्त्वेवोद्धन्न्यात्तथापरस्मा ऽअवकाशन्न करोत्यथो ऽओषधिलोको वै पितर ऽओषधीनाᳪ ह मूलान्युपसर्प्पन्त्यथो नेदस्या ऽअन्तर्हितोऽसदिति ॥ २० ॥

अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

---

अन्तर्द्धायो हैके निवपन्ति । देवाश्चासुराश्चोभये प्राजापत्या ऽअस्मिँल्लोकेऽस्पर्द्धन्त ते देवा ऽअसुरान्त्सपत्नान्भ्रातृव्यानस्माल्लोकादनुदन्त तस्माद्या दैव्यᳪ प्रजा ऽअनन्तर्हितानि ताᳪ श्मशानानि कुर्वतेऽथ या ऽआसुर्य्यᳪ प्राच्यास्त्वद्ये त्वदन्तर्हितानि ते चम्वान्त्वद्यस्मिँस्त्वत् ॥ १ ॥ अथैनत्परिश्रिद्भिᳪ परिश्रयति ।

या ऽएवामूः परिश्रितस्ता ऽएता यजुषा ताः परिश्रयति तूष्णीमिमा दैवश्चैव तत्पित्र्यञ्च व्याकरोत्यपरिमिताभिरपरिमितो ह्यसौ लोकः ॥ २ ॥ अथैनत्पलाशशाखया व्युदूहति * । यद्देवादो व्युदूहनन्तदेत'दुपेतो येन्तु पणयोऽसुम्ना देवपीयव, ऽइति पणीनेवैतदसुम्नान्देवपीयूनसुररक्षसान्यस्माल्लोकादुपह'न्त्यस्य लोकः सुतावत' ऽइति सुतवान्हि य ऽईजानो 'द्युभिरहोभिरक्तुभिर्व्यक्त'मिति तदेनमृतुभिश्चाहोरात्रैश्च सलोकङ्करोति ॥ ३ ॥ 'यमो ददात्ववसानमस्मा' ऽइति । यमो ह वा ऽअस्यामवसानस्येष्टे तमेवास्मा ऽअस्यामवसानं याचति तान्दक्षिणोदस्यत्युदगितरान्दैवश्चैव तत्पित्र्यञ्च व्याकरोति ॥ ४ ॥ अथ दक्षिणतः सीरं युनक्ति । उत्तरत ऽइत्यु हैक ऽआहुः स यथा कामयेत तथा कुर्याद्युक्तेति सम्प्रेष्याभिमन्त्रयते 'सविता ते शरीरेभ्यः पृथिव्याँल्लोकमिच्छत्वि'ति सवितैवास्यैतच्छरीरेभ्यः पृथिव्याँल्लोकमिच्छति 'तस्मै युज्यन्तामुस्रिया' ऽइत्येतस्मा ऽउ हि कर्म्मण ऽउस्रिया युज्यन्ते ॥ ५ ॥ षड्गवम्भवति । षड्वृतवः संवत्सर ऽऋतुष्वेवैनमेतत्संवत्सरे प्रतिष्ठाया' म्प्रतिष्ठापयति तदपसलवि पर्य्याहृत्योत्तरतः प्रतीचीम्प्रथमाथं सीताङ्कृपति 'वायुः पुनात्वि'ति 'सविता

* का० श्रौ० सू० १७. १. ३१ ।

( १ ) शु० य० सं० ३५. १ । ( २ ) शु० य० सं० ३५. १ । ( ३ ) शु० य० ३५. १ । ( ४ ) शु० य० सं० ३५. १ । ( ५ ) शु० य० सं० ३५. २ । ( ६ ) शु० य० सं० ३५. २ । ( ७ ) शु० य० सं० ३५. २ । ( ८ ) शु० य० सं० ३५. ३ ।

पुनात्वि'ति जघनार्द्धेन दक्षिणा'ग्नेर्भ्राजसे'ति दक्षिणार्द्धेन प्राचीᳪ 'सूर्यस्य वर्चसे'त्यग्रेणोदीचीम् ॥ ६ ॥ *

चतस्रः सीता यजुषा कृषति †। तद्यच्चतसृषु दिक्ष्वन्नन्तस्मिन्नेवैनमेतत्प्रतिष्ठापयति तद्वै यजुषाद्धा वै तद्यद्यजुरद्धो तद्यदिमा दिशः ॥ ७ ॥ अथात्मानं विकृषति । तद्यदेव सँवत्सरेऽन्नन्तस्मिन्नेवैनमेतत्प्रतिष्ठापयति तूष्णीमपरिमिताभिरपरिमितो ह्यसौ लोकः ॥ ८ ॥ अथैनद्विमुञ्चति । कृत्वा तत्कर्म्म यस्मै कर्म्मण ऽएनद्युङ्क्ते 'विमुच्यन्तामुस्रिया' ऽइत्येतस्मा ऽउ हि कर्म्मण ऽउस्रिया युज्यन्ते तद्दक्षिणोदस्यत्युदगितरद्देवश्चैव तत्पितृयश्च व्याकरोति॥९॥

अष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

—०—

अथ सर्वौषधं वपति । यद्वेवादुः सर्वौषधन्तदेतद्वल्लीभिस्तद्रूपत्येकयेदन्देवश्चैव तत्पितृयश्च व्याकरो'त्यश्वत्थे वो निषदनम्पर्णे वो वसतिष्कृते'ति ज्योग्जीवातुमेवैभ्य ऽएतदाशास्ते तथो हैषामेकैकोऽपरो जरसानुप्रैति ॥ १ ॥ अथैनन्निवपति । इयं वै पृथिवी प्रतिष्ठास्यामेवैनमेतत्प्रतिष्ठायाम्प्रतिष्ठापयति पुरादित्यस्योदयात्तिर ऽइव वै पितरस्तिर ऽइव रात्रिस्तिर ऽएव तत्करोति यथा कुर्वतोऽभ्यु-

---

(१) शु० य० सं० ३५. ३ । (२) शु० य० सं० ३५. ३

* अत्र शतम् ६८०० ।

† का० श्रौ० सू० २१ ४. १ ।

(३) शु० य० सं० ३५. २ । (४) शु० य० सं० ३५. ४ ।

दियात्तदेनमुभयोरहोरात्रयोः प्रतिष्ठापयति ॥२॥ 'सविता[1] ते शरीराणि। मातुरुपस्थ ऽआवपत्वि'ति सवितैवास्यैतच्छरीराण्यस्यै पृथिव्यै मातुरुपस्थ ऽआवपति 'तस्यै[2] पृथिवि शम्भवे'ति यथैवास्मा ऽइयꣳ शꣳ स्यादेवमेतदाह 'प्रजापतौ[3] त्वा देवतायामुपोदके लोके निदधाम्यसा'विति नाम गृह्णात्ययं वै लोक ऽउपोदकस्तदेनम्प्रजापतौ देवतायामुपोदके लोके निदधाति ॥ ३ ॥ अथ कश्चिदाह। एतान्दिशमनवानन्त्सृत्वा कुम्भम्प्रक्षीयानपेक्षमाण ऽएहीति तत्र जपति 'परम्[4] मृत्यो ऽअनु परेहि पन्थां यस्ते ऽअन्य ऽइतरो देवयानात्॥ चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाꣳ रीरिषो मोत वीरा'निति ज्योग्जीवातुमेवैभ्य ऽएतदाशास्ते तथो हैषामेकैकोऽपरो जरसानुप्रैति ॥ ४ ॥ अथैनं स्वयाङ्कल्पयति। 'शं[5] वातः शꣳ हि ते घृणिः शन्ते भवन्त्विष्टकाः॥ शन्ते भवन्त्वग्नयः पार्थिवासो मा त्वाभिशूशुचन्' ॥ 'कल्पन्तान्ते[6] दिशस्तुभ्यमापः शिवतमास्तुभ्यम्भवन्तु सिन्धवः ॥ अन्तरिक्षꣳ शिवन्तुभ्यङ्कल्पन्तान्ते दिशः सर्वा' ऽइत्येतदेवास्मै सर्वङ्कल्पयत्येतदस्मै शिवङ्करोति ॥ ५ ॥ अथ त्रयोदश पादमात्र्य ऽइष्टका ऽअलक्षणाः कृता भवन्ति। या ऽएवामूरग्नाविष्टकास्ता ऽएता यजुषा ता ऽउपदधाति तूष्णीमिमा दैवञ्चैव तत्पित्र्यञ्च व्याकरोति ॥ ६ ॥ त्रयोदश भवन्ति। त्रयोदश मासाः

(१) शु० य० सं० ३५.५। (२) शु० य० सं० ३५ ५। (३) शु० य० सं० ३५. ६। (४) शु० य० सं० ३५. ७। (५) शु० य० सं० ३५. ८। (६) शु० य० सं० ५१. ९।

सँवत्सर ऽऋतुष्ष्वेवैनमेतत्सँवत्सरे प्रतिष्ठायाम्प्रतिष्ठापयति ॥ ७ ॥ पादमात्र्यो भवन्ति । प्रतिष्ठा वै पादः प्रतिष्ठामेवास्मै करोत्यलक्षणा भवन्ति तिर ऽइव वै पितरस्तिर ऽइव तद्यदलक्षणन्तिर ऽएव तत्तिरः करोति ॥ ८ ॥ तासामेकाम्मद्ध्ये प्राचीमुपदधाति । स ऽआत्मा तिस्रः पुरस्तान्मूर्द्धसंहितास्तच्छिरस्तिस्रो दक्षिणतः स दक्षिणः पक्षस्तिस्र ऽउत्तरतः स ऽउत्तरः पक्षस्तिस्रः पश्चात्तत्पुच्छं सोऽस्यैष पक्षपुच्छवानात्मा यथैवाग्नेस्तथा ॥ ९ ॥ अथ प्रदरात्पुरीषमाहर्त्तवा ऽआह । एतद्वास्याः पित्र्यमनतिरिक्तमथो ऽअघमेव तद्बहु करोत्यस्मिन्नु हैकेऽवान्तरदेशे कर्षूः खात्वा ततोऽभ्याहारङ्कुर्वन्ति परिकुपन्त्यु हैके दक्षिणतः पश्चादुत्तरतस्ततोऽभ्याहारङ्कुर्वन्ति स यथा कामयेत तथा कुर्य्यात् ॥ १० ॥ तद्वै न महत्कुर्य्यात् । नेन्महदघङ्करवाणीति यावानुद्बाहुः पुरुषस्तावत्क्षत्रियस्य * कुर्य्यान्मुखदघ्नम्ब्राह्मणस्योपस्थदघ्नं स्त्रिया ऽऊरुदघ्नं वैश्यस्याष्ठीवद्घ्नं शूद्रस्यैवं वीर्य्या ह्येत ऽइति ॥ ११ ॥ अधोजानु त्वेव कुर्य्यात् । तथापरस्मा ऽअवकाशन्न करोति तस्य विक्रियमाणस्य तेजनीमुत्तरतो धारयन्ति प्रज्ञा ह ता प्रज्ञामेव तदुत्तरतो धारयन्ति तान्न न्यस्येद्धृत्वा वैनामूढ्वा वा गृहेषूच्छ्रयेत्प्रज्ञामेव तद्गृहेषूच्छ्रयति ॥ १२ ॥ कृत्वा यवान्वपति । अघम्मे यवयानित्यवकाभिः प्रच्छादयति कुम्भेऽसदिति दर्भैः प्रच्छादयत्यरूक्षतायै ॥ १३ ॥

अष्टमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

अथैनञ्छङ्कुभिः परिणिहन्ति । पालाशम्पुरस्ताद्ब्रह्म वै पलाशो ब्रह्मपुरोगवमेवैनथं स्वर्गँल्लोकङ्गमयति शमी- मयमुत्तरतः शम्मेऽसदिति वारणम्पश्चादघम्मे वारयाता ऽइति वृत्रशङ्कुन्दक्षिणतोऽघस्यैवानत्ययाय ॥ १ ॥ अथ दक्षिणतः परिवक्के खनन्ति । ते क्षीरेण चोदकेन च पूरयन्ति ते हैनममुष्मिँल्लोकेऽक्षिते कुल्ये ऽउपधावतः सप्तोत्तरतस्ता ऽउदकेन पूरयन्ति न ह वै सप्त स्रवन्ती- रघमत्येतुमर्हत्यघस्यैवानत्ययाय ॥ २ ॥ अश्मनस्त्रीँस्त्रीन्प्र- किरन्ति । ता ऽअभ्युत्तरन्त्य'श्मन्वती रीयते सᳬरभ- ध्वमुत्तिष्ठत प्रतरता सखायः ॥ अत्रा जहीमोऽशिवा ये ऽअसञ्छिवान्वयमुत्तरेमाभि वाजा'निति यथैव यजुस्तथा बन्धुः ॥ ३ ॥ अपामार्गैरपमृजते । अघमेव तदुपमृजतेऽ- 'पाघमप किल्बिषमप कृत्यामपो रपः ॥ अपामार्ग त्व- मस्मदप दुःष्वप्न्यᳬ सुवे'ति यथैव यजुस्तथा बन्धुः ॥ ४ ॥ यत्रोदकम्भवति तत्स्नान्ति । 'सुमित्रिया न ऽआप ऽओषधयः सन्त्वि'त्यञ्जलिनाप ऽउपाचति वज्रो वा ऽआ- पो वज्रेणैवैतन्मित्रधेयङ्कुरुते 'दुर्मित्रियास्तस्मै सन्तु योऽ- स्मान्द्वेष्टि यञ्च वयन्द्विष्म' ऽइति यामस्य दिशन्द्वेष्यः स्यात्तान्दिशम्परासिञ्चेत्तेनैव तम्पराभावयति ॥ ५ ॥ स यदि स्थावरा ऽआपो भवन्ति । स्थापयन्त्येवाम्पाप्मानमथ यदि वहन्ति वहन्त्येवैषाम्पाप्मानथं स्नात्वाहतानि वा-

* 'उर क्षनिभस्योर्लवाह्वु मा' ( का० श्रौ० सू० २१. ४. १६ ) इति।

(१) शु० य० सं० ३५. १०। (२) शु० य० सं० ३५. ११। (३) शु० य० सं० ३५. १२। (४) शु० य० सं० ३५. १२।

साꣳसि परिधायानडुहः पुच्छमन्वारभ्यायन्त्याग्नेयो वा ऽअनड्वानग्निमुखा ऽएव तत्पितृलोकाज्जीवलोकमभ्यायन्त्यथो ऽअग्निर्वै पथोऽतिवोढा स ऽएनानतिवहति ॥ ६ ॥ 'उद्वयन्तमसस्परी'ति । एतामृचञ्जपन्तो यन्ति तत्तमसः पितृलोकादादित्यञ्ज्योतिरभ्यायन्ति तेभ्य ऽआगतेभ्य ऽआञ्जनाभ्यञ्जने प्रयच्छन्त्येष ह मानुषोऽलङ्कारस्तेनैव तन्मृत्युमन्तर्द्धते ॥ ७ ॥ अथ गृहेष्वग्निꣳ समाधाय । वारणान्परिधीन्परिधाय वारणेन स्रुवेणाग्नय ऽआयुष्मत ऽआहुतिञ्जुहोत्यग्निर्वा ऽआयुष्मानायुष ऽईष्टे तमेवैभ्य ऽआयुर्याचत्य'ग्न ऽआयूꣳषि पवस' ऽइति पुरोऽनुवाक्याभाजनम् ॥ ८ ॥ अथ जुहोति । 'आयुष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि ॥ घृतम्पीत्वा मधु चारु गव्यम्पितेव पुत्रमभिरक्षतादिमान्स्वाहे'ति यथैवैनानभिरक्षेद्यथाभिगोपायेदेवमेतदाह ॥ ९ ॥ तस्य पुराणोऽनड्वान्दक्षिणा * । पुराणा यवाः पुराण्यासन्दी सोपबर्हणैषा न्वादिष्टा दक्षिणा कामं यथाश्रद्धम्भूयसीर्दद्यादिति न्वग्निचितः ॥ १० ॥ अथानग्निचितः । एतदेव भूमिजोषणमेतत्समानङ्कर्म्म यदन्यदग्निकर्म्मणः कुर्य्याद्वाहिताग्नेः शर्करा ऽइत्यु हैक ऽआहुर्य्या ऽएवामूरग्न्याधेयशर्करास्ता ऽएता ऽइति न कुर्य्यादित्येक ऽईश्वरो हैता ऽअनग्निचितꣳ सन्तप्तोरिति स यथा कामयेत तथा

(१) शु॰ य॰ सं॰ ३५. १४। (२) शु॰ य॰ सं॰ ३५. १६। (३) शु॰ य॰ सं॰ ३५. १७।

* तथा च कात्यायनः "आसन्दी सोपधाना दक्षिणाऽनड्वान्यवाश्च सर्वं पुराणम् (का॰ श्रौ॰ सू॰ २१. ४. २६) इति।

कुर्य्यात् ॥ ११ ॥ मर्य्यादाया ऽएव लोष्टमाहृत्य । अन्तरेण निदधाती'मञ्जीवेभ्यः परिधिन्दधामि मैषान्नु गादपरो ऽअर्थमेतम् ॥ शतञ्जीवन्तु शरदः पुरूचीरन्तर्म्मृत्युन्दधतान्पर्वतेने'ति जीवेभ्यश्चैवैताम्पितृभ्यश्च मर्य्यादाङ्करोत्यसम्भेदाय तस्माद्ु हैतञ्जीवाश्च पितरश्च न सन्दृश्यन्ते ॥ १२ ॥

अष्टमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे चतुर्थः प्रपाठकः ॥४॥ कण्डिकासंख्या ॥१००॥

इत्यऽष्टमोऽध्यायः ॥ ८ ॥

अश्वमेधनाम त्रयोदशं काण्डं † समाप्तम् ॥ १३ ॥



(१) शु० य० सं० ३५. १५।

† अस्मिन्काण्डे कण्डिकासंख्या ४३२।

# अथोपनिषन्नाम* चतुर्दशं काण्डम्

काण्डेऽस्मिन्प्रतिपाद्या विषयाः—घर्मः, प्रवर्ग्यः, महावीरः, प्रवर्ग्योत्सादनम्' प्रवर्ग्यकर्तृनियमः, बृहदारण्यकम्, काम्यहवनादि, गर्भाधानादि, जातकर्म, वंशब्राह्मणमिति ।

[ घर्मोपक्रमः ]

॥ ॐ ॥ देवा ह वै सत्रन्निषेदुः । अग्निरिन्द्रः सोमो मखो विष्णुर्विश्वे देवा ऽअन्यत्रैवाश्विभ्याम् ॥ १ ॥ तेषाङ्कुरुक्षेत्रन्देवयजनमास । तस्मादाहुः कुरुक्षेत्रन्देवानान्देवयजनमिति तस्माद्यत्र क्व च कुरुक्षेत्रस्य निगच्छति तदेव मन्यत ऽइदन्देवयजनमिति तद्धि देवानान्देवयजनम् ॥ २ ॥ त ऽआसत । श्रियङ्गच्छेम यशः स्यामान्नादाः स्यामेति तथो ऽएवेमे सत्रमासते ये' सत्रमासते श्रियङ्गच्छेम यशः स्यामान्नादाः स्यामेति ॥३॥ ते होचुः । यो नः श्रमेण तपसा श्रद्धया यज्ञेनाहुतिभिर्यज्ञस्योदृचम्पूर्वोऽवगच्छात्स नः श्रेष्ठोऽसत्तदु नः सर्वेषाꣳ सहेति तथेति ॥ ४ ॥ तद्विष्णुः प्रथमः प्राप । स देवानाꣳ श्रेष्ठोऽभवत्तस्मादाहुर्विष्णुर्देवानाꣳ श्रेष्ठ ऽइति ॥ ५ ॥ स यः स विष्णुर्यज्ञः स । स यः स यज्ञोऽसौ स ऽआदित्यस्तद्धेदं यशो विष्णुर्न शशाक सँय्यन्तुन्तदिद-

---

* उपनिषच्छब्देन मुख्यया वृत्त्या ब्रह्मविद्यैवोच्यते । उप समीपस्थं प्रत्यगात्मैकत्वं नीति निश्चितं सत् तत्पराणां सहेतुं संसारं सादयतीत्युपनिषदिति व्युत्पत्तेः । ग्रन्थस्तु विद्यासमर्पकत्वेनोपचारादुपनिषदित्युच्यते ।

( १ ) 'ये सत्रमासते' इति पाठः ग° ङ° पुस्तकयोर्न दृश्यते।

मुप्येतर्हि नैव सर्वं ऽइव यशः शक्नोति सँरुधन्तुम् ॥ ६ ॥
स तिस्रधन्वमादायापचक्राम । स धनुरार्त्न्या शिर ऽउप-
स्तभ्य तस्थौ तन्देवा ऽअनभिधृष्णुवन्तः समन्तम्प-
रिण्यविशन्त ॥ ७ ॥ ता ह वम्र्य ऽऊचुः । इमा वै
वम्र्यो यदुपदीका योऽस्य ज्यामप्ययात्किमस्मै प्रयच्छेते-
त्यन्नाद्यमस्मै प्रयच्छेमापि धन्वन्नपोऽधिगच्छेत्तथास्मै
सर्वमन्नाद्यम्प्रयच्छेमेति तथेति ॥ ८ ॥ तस्योपपरासृत्य ।
ज्यामपिजक्षुस्तस्याञ्छिन्नायान्धनुरार्त्न्यौ विष्फुरन्त्यौ वि-
ष्णोः शिरः प्रचिच्छिदतुः ॥ ९ ॥ तद्घृङ्ङिति पपात ।
तत्पतित्वासावादित्योऽभवदथेतरः प्राडेव प्रावृज्यत तद्य
द्घृङ्ङित्यपतत्तस्माद्घर्म्मोऽथ यत्प्रावृज्यत तस्मात्प्र-
वर्ग्यः ॥ १० ॥ ते देवा ऽअब्रुवन् । महान्बत नो वीरोऽ-
पादीति तस्मान्महावीरस्तस्य यो रसो व्यक्षरत्तम्पा-
णिभिः सम्ममृजुस्तस्मात्सम्राट् ॥ ११ ॥ तन्देवा ऽअभ्य
मृजयन्त । यथा वित्तिं वेत्स्यमाना ऽएवन्तमिन्द्रः प्रथमः
प्राप तमन्वङ्गमनुन्यपद्यत तम्पर्य्यगृह्णात्तम्परिगृह्येदं यशोऽ-
भवद्यदिदमिन्द्रो यशो यशो ह भवति य ऽएवं वेद ॥ १२ ॥
स ऽउ ऽएव मखः स विष्णुः । तत ऽइन्द्रो मखवानभव-
न्मखवान्ह वै तम्मघवानित्याचक्षते परोऽक्षम्परोऽक्षकामा
हि देवाः ॥ १३ ॥ ताभ्यो वम्रीभ्योऽन्नाद्यम्प्रायच्छन् ।
आपो वै सर्वमन्नन्ताभिर्हीदमभिक्नूयमिवादन्ति यदिद-
ङ्कि[1]ञ्चादन्ति ॥ १४ ॥ अथेमं विष्णुं यज्ञन्त्रेधा व्यभजन्त ।

(१) ग ज पुस्तकयोः किञ्चदति इति ।

वसवः प्रातःसवनꣳ रुद्रा माध्यन्दिनꣳ सवनमादित्या-
स्तृतीयसवनम् ॥ १५ ॥ अग्निः प्रातःसवनम् । इन्द्रो
माध्यन्दिनꣳ सवनं विश्वे देवास्तृतीयसवनम् ॥ १६ ॥
गायत्री प्रातःसवनम् । त्रिष्टुम्माध्यन्दिनꣳ सवनञ्जगती
तृतीयसवनन्तेनापशीर्ष्णा यज्ञेन देवा ऽअर्चन्तः श्राम्य-
न्तश्चेरुः ॥ १७ ॥ तद्ध्यङ् ह वा ऽआथर्वणः । एतꣳ शुक्र-
मेतं यज्ञं विदाञ्चकार यथा यथैतद्यज्ञस्य शिरः प्रति-
धीयते यथैष कृत्स्नो यज्ञो भवति ॥ १८ ॥ स हेन्द्रेणोक्त
ऽआस । एतञ्चेदन्यस्मा ऽअनुब्रूयास्तत ऽएव ते
शिरश्छिन्द्यामिति ॥ १९ ॥ तद्ध हाश्विनोरनुश्रुतमास ।
दध्यङ्ङु ह वा ऽआथर्वण ऽएतꣳ शुक्रमेतं यज्ञं वेद यथा
यथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवतीति
॥ २० ॥ तौ हेत्योचतुः । उप त्वायावेति किमनुवक्ष्यमाणा-
वित्येतꣳ शुक्रमेतं यज्ञं यथा यथैतद्यज्ञस्य शिरः प्रति-
धीयते यथैष कृत्स्नो यज्ञो भवतीति ॥ २१ ॥ स होवाच ।
इन्द्रेण वा ऽउक्तोऽस्म्येतञ्चेदन्यस्मा ऽअनुब्रूयास्तत ऽएव
ते शिरश्छिन्द्यामिति तस्माद्वै बिभेमि यद्वै मे स शिरो
न च्छिन्द्यान्न वामुपनेष्य ऽइति ॥ २२ ॥ तौ होचतुः ।
आवान्त्वा तस्मात्त्रास्यावहे ऽइति कथम्मा त्रास्येथे
ऽइति यदा ना ऽउपनेष्यसेऽथ ते शिरश्छित्वान्यत्राप-
निधास्यावोऽथाश्वस्य शिर ऽआहृत्य तत्ते प्रतिधास्या-
वस्तेन नावनुवक्ष्यसि स यदा नावनुवक्ष्यस्यथ ते तदिन्द्रः

( १ ) "भवति" इति 'म' 'ज' पुस्तकयोः । ( २ ) 'म' 'ज' पुस्तकयोः "त्वद्" इति ।

शिरश्छेत्स्यत्यथ ते स्वᳪ शिर ऽआहृत्य तत्ते प्रतिधास्याव ऽइति तथेति ॥२३॥ तौ होपनिन्ये। तौ यदोपनिन्येऽथास्य शिरश्छित्वान्यत्रापनिदधतुरथाश्वस्य शिर ऽआहृत्य तद्धास्य प्रतिदधतुस्तेन हाभ्यामनूवाच स यदाभ्यामनूवाचाथास्य तदिन्द्रः शिरश्चिच्छेदाथास्य स्वᳪ शिर ऽआहृत्य तद्धास्य प्रतिदधतुः ॥२४॥ तस्मादेतदृषिणाऽभ्यनूक्तम् । दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेत्ययतन्तदुवाचेति हैव तदुक्तम् ॥ २५ ॥ तन्न सर्वस्मा ऽअनुब्रूयात् । एतस्यᳪ हि तदुथो नेन्म ऽइन्द्रः शिरश्छिनददिति यो न्वेव ज्ञातस्तस्मै ब्रूयादुथ योऽनूचानोऽथ योऽस्य प्रियः स्यान्न त्वेव सर्वस्मा ऽइव ॥ २६ ॥ सँवत्सरवासिनेऽनुब्रूयात् । एष वै सँवत्सरो य ऽएष तपत्येष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मात्सँवत्सरवासिनेऽनुब्रूयात् ॥ २७ ॥ तिस्रो रात्रीर्व्रतञ्चरति । त्रयो वा ऽऋतवः सँवत्सरस्य सँवत्सर ऽएष य ऽएष तपत्येष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मात्तिस्रो रात्रीर्व्रतञ्चरति ॥२८॥ तप्तमाचामति । तपस्व्यसान्यथा ऽइत्यसाᳪसाऽश्यनुब्रूते तपस्व्यनुब्रवा ऽइति ॥ २९ ॥ अनृन्मयपायी । अस्ति वा ऽअस्याᳪ सᳪस्पष्टमिव यदस्यामनृतं वदति तस्मादमृन्मयपायी ॥ ३० ॥ अशूद्रोच्छिष्टी । एष वै घर्मो य ऽएष तपति सैषा श्रीः सत्यञ्ज्योतिरनृतᳪ स्त्री शूद्रः श्वा कृष्णः शकुनिस्तानि न प्रेक्षेत नेच्छ्रियञ्च पाप्मानञ्च नेज्ज्योतिश्च तमश्च नेत्सत्यानृते सᳪसृजा-

नीति ॥ ३१ ॥ अथैष वाव यशः । य ऽएष तपति तद्य-
त्तदादित्यो यशो यज्ञो हैव तद्यशस्तद्यत्तद्यज्ञो यशो यज-
मानो हैव तद्यशस्तद्यत्तद्यजमानो यश ऽऋत्विजो हैव
तद्यशस्तद्यत्तदृत्विजो यशो दक्षिणा हैव तद्यशस्तस्माद्या-
सस्मै दक्षिणामानयेयुर्न तां[1] सद्योऽन्यस्मा ऽअति-
दिशेन्नेद्यश्शमेदं व्यश आगँस्तत्सद्योऽन्यस्मा ऽअतिदिशा-
नीति श्वो वैव भूते द्व्यहे वा तदात्मन्येवैतद्यशः कृत्वा
यदेव तत्र्वयति तस्मै ददाति हिरण्यङ्गां वासोऽश्वं वा
॥ ३२ ॥ अथैतद्वै[2] । आयुरेतज्ज्योतिः प्रविशति य ऽएत-
मनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या नातपति
प्रच्छादयेत नेदेतस्मात्तिरोऽसानीति नातपति निष्ठी-
वेन्नेदेतमभिनिष्ठीवानीति नातपति प्रस्रावयेत नेदेतमभि-
प्रस्रावया ऽइति यावद्वा ऽएष ऽआतपति तावानेष नेदेत-
मेतैर्हिनसानीत्यवज्योत्य रात्रावश्नीयात्तदेतस्य[3] रूपङ्क्रियते
य ऽएष तपति तदु होवाचासुरिरेकं ह वै देवा व्रतञ्च-
रन्ति यत्सत्यन्तस्मादु सत्यमेव वदेत् ॥ ३३ ॥

प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

[ प्रवर्ग्यः * ]

स वै सम्भारान्सम्भरति । स यद्वा ऽएतानितश्चामुत-
श्चाच्च सम्भरति तत्सम्भाराणाथं सम्भारत्वं स वै यत्र

(१) "ता ऽदत्सद्यो॰" इति 'ग' 'ज' पुस्तकयोः ।

(२) "अथैतद्वा" इति 'ग' 'ज' पुस्तकयोः ।

(३) "॰तदस्य" इति 'ग' 'ज' पुस्तकयोः पाठः ।

* तप्ते घृते पयःप्रक्षेपादिना प्रणीयते 'घर्मः' स्वादविशेषः । स एव प्रक्षेपः महज्जन-

यत्र यज्ञस्य न्यक्तन्ततस्ततः सम्भरति ॥ १ ॥ कृष्णाजिने सम्भरति । यज्ञो वै कृष्णाजिनं यज्ञ ऽएवैनमेतत्सम्भरति लोमतश्छन्दाᳪंसि वै लोमानि च्छन्दःस्वेवैनमेतत्सम्भरत्युत्तरत ऽउदीची हि मनुष्याणान्दिक्प्राचीनग्रीवे तद्धि देवत्रा ॥ २ ॥ अभ्र्या । वज्रो वा ऽअभ्रिर्वीर्यं वै वज्रो वीर्येणैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ३ ॥ औदुम्बरी भवति । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्जैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ४ ॥ अथो वैकङ्कती । प्रजापतिर्याम्प्रथमामाहुतिमजुहोत्स हुत्वा यत्र न्यमृष्ट ततो विकङ्कतः समभवद्यज्ञो वा ऽआहुतिर्यज्ञो विकङ्कतो यज्ञेनैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ५ ॥ अरत्निमात्री भवति । बाहुर्वा ऽअरत्निर्बाहुना वै वीर्यङ्क्रियते वीर्यसम्मितैव तद्भवति वीर्येणैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ ६ ॥ तामादत्ते । 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्यामाददे नारिरसी'त्यसावेव बन्धुः ॥ ७ ॥ ताᳪं सव्ये पाणौ कृत्वा । दक्षिणेनाभिमृश्य जपति 'युञ्जते मन ऽउत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक ऽइन्मही देवस्य सवितुः परिष्टुति'रित्यसावेव बन्धुः ॥ ८ ॥ अथ मृत्पिण्डं

मुच्यते । यादृशभङ्ग्यनतिबन्धनेवास्य कर्मणः समाख्या प्रवर्ग्य इति । तत्र पर्यपाकाय मृद्भिर्मित वल्लघ्नाकारपात्रविशेषो महावीरः । ओथ्या तु घृता घर्मः, प्रवर्ग्यः, महावीर-' इति त्रीण्येव पदानि समानार्थानीति विवेकः । (तै० साय० भा० ५. ११. १. । शत० भा० १४. १. १-११)

( १ ) 'ग' 'ज' पुस्तकयो "०जिनङ्ग स०" इति पाठ. ।

( २ ) शु० य० सं० ३७. ८ । ( ३ ) शु० य० सं० ३७. २ ।

परिगृह्णाति *। अभ्र्या च दक्षिणतो हस्तेन च हस्ते-
नैवोत्तरतो '(१)देवी द्यावापृथिवी' इति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्स इमे द्यावापृथिवी अगच्छद्यन्मृदियन्तद्यदापोऽसौ तन्मृदश्चापाश्च महावीराः कृता भवन्ति तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति तस्मादाह देवी द्यावापृथिवी इति '(२)मखस्य वामद्य शिरो राध्यास'मिति यज्ञो वै मखो यज्ञस्य वामद्य शिरो राध्यासमित्येवैतदाह '(३)देवयजने पृथिव्या' इति देवयजने हि पृथिव्यै सम्भरति '(४)मखाय त्वा मखस्य त्वा शीर्ष्णे' इति यज्ञो वै मखो यज्ञाय त्वा यज्ञस्य त्वा शीर्ष्णे इत्येवैतदाह ॥ ९ ॥ अथ वल्मीकवपाम्। '(५)देव्यो वम्र्य' इत्येता वा एतदकुर्वत यथा यथैतद्यज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेतत्समर्द्धयति कृत्स्नङ्करोति '(६)भूतस्य प्रथमजा' इतीयं वै पृथिवी भूतस्य प्रथमजा तदनयैवैनमेतत्समर्द्धयति कृत्स्नङ्करोति '(७)मखस्य वोऽद्य शिरो राध्यासन्देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्णे' इत्यसावेव बन्धुः ॥ १० ॥ अथ वराहविहतम्। '(८)इयत्यग्र आसी'दितीयती ह वा इयमग्रे पृथिव्यास प्रादेशमात्री तामेमूष इति वराह उज्जघान सोऽस्याः पतिः प्रजापतिस्तेनैवैनमेतन्मिथुनेन प्रियेण धाम्ना समर्द्धयति कृत्स्नङ्करोति '(९)मखस्य तेऽद्य शिरो राध्यासन्देवयजने

* 'मृदमादत्ते पिण्डवद्देवी द्यावापृथिवी' ( का॰ श्रौ॰ सू॰ २६. १. ४ ) इति।

(१) शु॰ य॰ सं॰ ३७. ३। (२) शु॰ य॰ सं॰ ३७. ३। (३) शु॰ य॰ सं॰ ३७. ३। (४) शु॰ य॰ सं॰ ३७. ३। (५) शु॰ य॰ सं॰ ३७. ४। (६) शु॰ य॰ सं॰ ३७. ४। (७) शु॰ य॰ सं॰ ३७. ४। (८) शु॰ य॰ सं॰ ३७. ५। (९) शु॰ य॰ सं॰ ३७. ५।

पृथिव्व्या मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुः ॥ ११ ॥ अथादारान् । 'इन्द्रस्यौज स्थे'ति यत्र वा ऽएनमिन्द्र ऽओजसा पर्य्यगृह्णात्तदस्य परिगृहीतस्य रसो व्व्यक्षरत्स पृथ्विन्विवाशेत् सोऽब्रवीदादृीर्य्येव वत म ऽएष रसोऽस्तौपीदिति तस्मादादारा ऽअथ यत्पूयन्निवाशेत तस्मात्पूतीकास्तस्मादग्नावाहुतिरिवाभ्याहिता ज्वलन्ति तस्मादु सुरभयो यज्ञस्य हि रसात्सम्भूता ऽअथ यदे-नन्तदिन्द्र ऽओजसा पर्य्यगृह्णात्तस्मादाहेन्द्रस्यौज स्थेति 'मखस्य वोऽद्य शिरो राध्यासन्देवयजने पृथिव्व्या मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुः ॥१२॥ अथाजा-क्षीरम् । यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत्ततोऽजा समभवत्त-यैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुः ॥१३॥ तान्वा ऽएतान्पञ्च सम्भारान्त्सम्भरति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्त्तवः सँवत्सरस्य सँवत्सर ऽएष य ऽएष तपत्येष ऽउ प्रवर्ग्य-स्तदेतमेवैतत्प्रीणाति तान्त्सम्भृतानभिमृशति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुः ॥१४॥ अथोत्तरतः परिश्रितम्भवति । तदभिप्रयन्तो जपन्ति 'प्रैतु ब्रह्मण-स्पतिरि'त्येष वै ब्रह्मणस्पतिर्य ऽएष तपत्येष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह प्रैतु ब्रह्मण-स्पतिरिति 'प्र देव्येतु सूनृते'ति देवी ह्येषा सूनृता-

(१) शु॰ य॰ सं॰ ३७. ६ । (२) शु॰ य॰ सं॰ ३७. ६ । (३) शु॰ य॰ सं॰ ३७. ६ । (४) शु॰ य॰ सं॰ ३७. ६ । (५) शु॰ य॰ सं॰ ३७. ७ । (६) शु॰ य॰ सं॰ ३७. ७ ।

'च्छा वीरन्नर्य्यम्पङ्क्तिं राधस'मित्युपस्तौत्येवैनमेतन्महयत्येव 'देवी यज्ञन्नयन्तु न' इति सर्व्वानेवास्मा एतद्देवानभिगोप्तॄन्करोति ॥ १५ ॥ परिश्रितम्भवति । एतद्वै देवा अबिभयुर्य्यद्वै न इममिह रक्षांसि नाष्ट्रा न हन्युरिति तस्मा एताम्पुरम्पर्य्यश्रयँस्तथैवास्मा अयमेताम्पुरम्परिश्रयति ॥ १६ ॥ अथ खरे सादयति । 'मखाय त्वा मखस्य त्वा शीर्ष्णे' इत्यसावेव बन्धुरथ प्रयौति मखाय त्वा मखस्य त्वा शीर्ष्ण इत्यसावेव बन्धुरथ मृत्पिण्डमुपादाय महावीरङ्करोति 'मखाय त्वा मखस्य त्वा शीर्ष्णे' इत्यसावेव बन्धुः प्रादेशमात्रम्प्रादेशमात्रमिव हि शिरो मध्ये सङ्गृहीतम्मध्ये सङ्गृहीतमिव हि शिरोऽथास्योपरिष्टात्त्र्यङ्गुलम्मुखमुन्नयति नासिकामेवास्मिन्नेतद्दधाति तन्निष्ठितमभिमृशति 'मखस्य शिरोऽसी'ति मखस्य ह्येतत्सौम्यस्य शिर एवमितरौ तूष्णीम्पिन्वने तूष्णीं रौहिणकपाले ॥ १७ ॥ प्रजापतिर्वा एष यज्ञो भवति । उभयं वा एतत्प्रजापतिर्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्यद्यजुषा करोति यदेवास्य निरुक्तम्परिमितꣳ रूपन्तदस्य तेन संस्करोत्यथ यत्तूष्णीं यदेवास्यानिरुक्तमपरिमितꣳ रूपन्तदस्य तेन संस्करोति स ह वा एतꣳ सर्वङ्कृत्स्नम्प्रजापतिꣳ संस्करोति य एवं विद्वानेतदेवङ्करोत्यथोपशयायै पिण्डम्परिशिनष्टि प्रायश्चित्तिभ्यः ॥ १८ ॥ अथ गवेधुकाभिर्धूपयति ।

(१) शु० य० सं० ३७. ७। (२) शु० य० सं० ३७. ७। (३) शु० य० ३७. ७। (४) शु० य० सं० ३७. ८। (५) शु० य० स० ३७. ८।

यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्त एता ओषधयो
जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति 'मखाय
त्वा मखस्य त्वा शीर्ष्णे' इत्यसावेव बन्धुरेवमितरौ तूष्णी-
म्पिन्वने तूष्णीꣳ रौहिणकपाले ॥ १९ ॥ अथैनान्धूपयति ।
'अश्वस्य त्वा वृष्णः शक्ना धूपयामी'ति वृषा वा
अश्वो वीर्यं वै वृषा वीर्येणैवैनमेतत्समर्द्धयति कृत्स्न-
ङ्करोति 'देवयजने पृथिव्या मखाय त्वा मखस्य त्वा
शीर्ष्णे' इत्यसावेव बन्धुरेवमितरौ तूष्णीम्पिन्वने
तूष्णीꣳ रौहिणकपाले ॥२०॥ अथैनाञ्छ्रपयति । शृतꣳ हि
देवानामिष्टकाभिः श्रपयत्येता वा एतदकुर्वत यथा
यथैतद्यज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेतत्समर्द्धयति
कृत्स्नङ्करोति तदु येनैव सुशृताः स्युस्तेन श्रपयेदथ
पचनमवधाय महावीरमवदधाति 'मखाय त्वा मखस्य
त्वा शीर्ष्णे' इत्यसावेव बन्धुरेवमितरौ तूष्णीम्पिन्वने
तूष्णीꣳ रौहिणकपाले तान्द्विवैवोपवपेद्विप्रोद्वपेदुद्ध हि
देवानाम् ॥ २१ ॥ स उद्वपति । 'ऋजवे त्वे'त्यसौ
वै लोक ऋजुः सत्यꣳ ह्यृजुः सत्यमेष य एष तपत्येष
उ प्रथमः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाहर्जवे
त्वेति ॥ २२ ॥ 'साधवे त्वे'ति । अयं वै साधुर्योऽयम्पवत
एष हीमाँल्लोकान्त्सिद्धोऽनुपवत एष उ द्वितीयः प्रव-
र्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह साधवे त्वेति ॥ २३ ॥

(१) शु० य० सं० ३७. ८। (२) शु० य० सं० ३७ ९। (३) शु० य०
सं० ३७. ९ । (४) शु० य० सं० ३७. ९। (५) शु० य० सं० ३७. १०।
(६) शु० य० सं० ३७. १०।

'सुक्षित्यै त्वे'ति । अयं वै लोकः सुक्षितिरस्मिन्हि लोके सर्वाणि भूतानि क्षियन्त्यथो ऽअग्निर्वै सुक्षितिरग्निर्ह्येवास्मिँल्लोके सर्वाणि भूतानि क्षियन्त्येष ऽउ तृतीयः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह सुक्षित्यै त्वेति तूष्णीम्पिन्वने तूष्णीᳬ रौहिणकपाले ॥ २४ ॥ अथैनानाच्छृणत्ति । अजायै पयसा 'मखाय त्वा मखस्य त्वा शीर्ष्णे' ऽइत्यसावेव बन्धुरेवमितरौ तूष्णीम्पिन्वने तूष्णीᳬ रौहिणकपाले ॥ २५ ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्रविशति य ऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृप्तौ ॥ २६ ॥

प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

—०—

[ महावीरसंस्काराः ]

स यदैतदातिथ्येन प्रचरति । अथ प्रवर्ग्येण चरिष्यन्पुरोपसद्भ्योऽग्रेण गार्हपत्यम्प्राचः कुशान्त्सᳬस्तीर्य्य द्वन्द्वम्पात्राण्युपसादयन्त्युपयमनीम्महावीरम्परीशासौ पिन्वने रौहिणकपाले रौहिणहवन्यौ स्रुचौ यद्वु चान्यद्भवति तद्दश दशाक्षरा वै विराड्विराड्वै यज्ञस्तद्विराजमेवैतद्यज्ञमभिसम्पादयन्त्यथ यद्द्वन्द्वन्द्वन्द्वं वै वीर्य्यं यदा वै द्वौ सᳬरभेते ऽअथ तौ वीर्य्यङ्कुरुतो द्वन्द्वं वै मिथुनम्प्रजननम्मिथुनेनैवैनमेतत्प्रजननेन समर्द्धयति कृत्स्नङ्करोति ॥ १ ॥ अथाद्भ्यर्थः । प्रोक्षणीरादायोपोत्तिष्ठन्नाह

(१) शु० य० सं० ३७. १० । (२) शु० य० सं० ३७. १० ।

ब्रह्मन्प्रचरिष्यामो होतरभिष्टुहीति ब्रह्मा वै यज्ञस्य दक्षिणत ऽआस्तेऽभिगोप्ता तमेवैतदाहाप्रमत्त ऽआस्स्व यज्ञस्य शिरः प्रतिधास्याम ऽइति होतरभिष्टुहीति यज्ञो वै होता तमेवैतदाह यज्ञस्य शिरः प्रतिधेहीति प्रतिपद्यते होता ॥ २ ॥ 'ब्रह्म जज्ञानम्प्रथमम्पुरस्तादि'ति । असौ वा ऽआदित्यो ब्रह्माहरहः पुरस्ताज्जायत ऽएष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह ब्रह्म जज्ञानम्प्रथमम्पुरस्तादित्यथ प्रोक्षत्यसावेव बन्धुः ॥ ३ ॥ स प्रोक्षति । 'यमाय त्वे'त्येष वै यमो य ऽएष तपत्येष हीदꣳ सर्वं यमयत्येतेनेदꣳ सर्वं यतमेष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह यमाय त्वेति ॥ ४ ॥ 'मखाय त्वे'ति । एष वै मखो य ऽएव तपत्येष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह मखाय त्वेति ॥ ५ ॥ 'सूर्यस्य त्वा तपस' ऽइति । एष वै सूर्यो य ऽएष तपत्येष प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह सूर्यस्य त्वा तपस ऽइति ॥ ६ ॥ पूर्वया द्वारा स्थूणाभिहृत्य । दक्षिणतो निमिन्वन्ति यथैनाꣳ होताभिष्टुवन्परापश्येद्यज्ञो वै होता स ऽएवास्यामेतद्यज्ञम्प्रतिदधाति तथैषा धर्म्मम्पिन्वते ॥ ७ ॥ [अर्धः प्रपाठकः ॥६६॥] अग्रेणाहवनीयꣳ सम्म्राडासन्दीम्परर्याहृत्य दक्षिणतः प्राचीमासादयत्युत्तराꣳ राजासन्द्यै ॥ ८ ॥ औदुम्बरी भवति । ऊर्ग्वै रस ऽउदुम्बर ऽऊर्जैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥९॥ अꣳसदघ्ना भवति । अꣳसयोर्वा

(१) शु० य० सं० ११. १ । (२) शु० य० सं० ३७. ११ । (३) शु० य० सं० ३७. ११ । (४) शु० य० सं० ३७. ११ ।

ऽइदꣳ शिरः प्प्रतिष्ठितन्तदुक्थसयोरेवैतच्छिरः प्प्रति-
ष्ठापयति ॥ १० ॥ वाल्वजीभी रज्जुभिर्व्व्युता भवति ।
यज्ञस्य शीर्षच्छिन्नस्य रसो व्व्यक्षरत्तत ऽएता ऽओषधयो
जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ११ ॥
अथ यदुत्तरत ऽआसादयति । यज्ञो वै सोमः शिरः
प्प्रवर्ग्य ऽउत्तरं वै शिरस्तस्मादुत्तरत ऽआसादयत्यथो
राजा वै सोमः सम्म्राट् प्रवर्ग्य ऽउत्तरं वै राज्यात्साम्म्रा-
ज्यन्तस्मादुत्तरत ऽआसादयत्युत्तरो वै प्प्रजा तस्मादुत्तरत
ऽआसादयति ॥ १२ ॥ स यत्रैताꣳ होतान्वाह ।
'अञ्जन्ति यम्प्रथयन्तो न विप्रा' ऽइति तदेतम्प्रचरणी-
यम्महावीरमाज्येन समनक्ति 'देवस्त्वा सविता मद्ध्वा-
नक्त्वि'ति सविता वै देवानाम्प्रसविता सर्वं वा ऽइद-
म्मधु यदिदङ्किञ्च तदेनमनेन सर्वेण समनक्ति तदस्मै
सविता प्प्रसविता प्प्रसौति तस्मादाह देवस्त्वा सविता
मद्ध्वानक्त्विति ॥ १३॥ * अथोत्तरतः सिकता ऽउपकीर्णा
भवन्ति । तद्रजतꣳ हिरण्यमधस्तादुपास्यति 'पृथिव्व्याः
सꣳस्पृशस्पाही'त्येतद्वै देवा ऽअबिभयुर्यद्वै न ऽइममध-
स्ताद्रक्षाꣳसि नाष्ट्रा न हन्न्युरित्यग्निर्वा ऽएतद्रेतो यद्धि-
रण्यन्नाष्ट्राणाꣳ रक्षसामपहत्त्या ऽअथो पृथिव्व्यु ह वा
ऽएतस्माद्बिभयाञ्चकार यद्वै मायन्तप्तः शुशुचानो न

(१) 'आसादयत्युत्तरो वै प्प्रजा तस्मादुत्तरत" इति पाठ 'ग' 'ज' पुस्तकयोर्न दृश्यते ।
(२) ऋ० सं० ४ २ २१ । (३) शु० य० सं० ३७, ११ ।
* शतम् ६६०० ।
(४) शु० य० सं० ३७ ११ ।

हिꣳस्यादिति तदेवास्या एतदन्तर्दधाति रजतम्भवति रजतेव हीयम्पृथिवी ॥ १४ ॥ स यत्रैताꣳ होतान्वाह । 'सꣳसीदस्व महाꣳ२॥ असी'ति तदुभयत आदीप्ता मौञ्जाः प्रलवा भवन्ति तानुपास्य तेषु प्रवृणक्ति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्तत एता ओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ १५ ॥ अथ यदुभयत आदीप्ता भवन्ति । सर्वाभ्य एवैतद्दिग्भ्यो रक्षाꣳसि नाष्ट्रा अपहन्ति तस्मिन्प्रवृज्यमाने पत्नी शिरः प्रोर्णुते तप्तो वा एष शुशुचानो भवति नेन्मेऽयन्तप्तः शुशुचानश्चक्षुः प्रमुष्णादिति ॥ १६ ॥ स प्रवृणक्ति । 'अर्चिरसि शोचिरसि तपोऽसी'त्येष वै घर्मो य एष तपति सर्वं वा एतदेष तदेतमेवैतत्प्रीणाति तस्मादाहार्चिरसि शोचिरसि तपोऽसीति ॥ १७ ॥ अथास्यामाशिष आशास्ते । इयं वै यज्ञोऽस्यामेवैतदाशिष आशास्ते ता अस्मा इयꣳ सर्वाः समर्द्धयति ॥ १८ ॥ 'अनाधृष्टा पुरस्ता'दिति । अनाधृष्टा ह्येषा पुरस्ताद्रक्षोभिर्नाष्ट्राभि'रग्नेराधिपत्य' इत्यग्निमेवास्या अधिपतिङ्करोति नाष्ट्राणाꣳ रक्षसामपहत्या 'आयुर्मे दा' इत्यायुरेवात्मन्धत्ते तथो ह सर्वमायुरेति ॥ १९ ॥ 'पुत्रवती दक्षिणत' इति । नात्र तिरोहितमिवास्ती'न्द्रस्याधिपत्य' इतीन्द्रमेवास्या अधिपतिङ्करोति

(१) ऋ० सं० १.३.१। (२) शु० य० सं० ३७. ११। (३) शु० य० सं० ३७. ११। (४) शु० य० सं० ३७. १२। (५) शु० य० सं० ३७. १२। (६) शु० य० सं० ३७. १२। (७) शु० य० सं० ३७. १२।

नाष्ट्राणाᳬं रक्षसामपहत्यै '(1)प्रजाम्मे दा' ऽइति प्रजामेव पशूनात्मन्धत्ते तथो ह पुत्री पशुमान्भवति ॥ २० ॥ '(2)सुपदा पश्चा'दिति । नात्र तिरोहितमिवास्ति '(3)देवस्य सवितुराधिपत्य' ऽइति देवमेवास्यै सवितारमधिपतिङ्करोति नाष्ट्राणाᳬं रक्षसामपहत्यै '(4)चक्षुर्म्मे दा' ऽइति चक्षुरेवात्मन्धत्ते तथो ह चक्षुष्मान्भवति ॥ २१ ॥ '(5)आश्रुतिरुत्तरत' ऽइति । आश्रावयन्नुत्तरत ऽइत्येवैतदाह '(6)धातुराधिपत्य' ऽइति धातारमेवास्या ऽअधिपतिङ्करोति नाष्ट्राणाᳬं रक्षसामपहत्यै '(7)रायस्पोषम्मे दा' ऽइति रयिमेव पुष्टिमात्मन्धत्ते तथो ह रयिमान्पुष्टिमान्भवति ॥ २२ ॥ '(8)विधृतिरुपरिष्टा'दिति । विधारयन्नुपरिष्टादित्येवैतदाह '(9)बृहस्पतेराधिपत्य' ऽइति बृहस्पतिमेवास्या ऽअधिपतिङ्करोति नाष्ट्राणाᳬं रक्षसामपहत्या '(10)ऽओजो मे दा' ऽइत्योज ऽएवात्मन्धत्ते तथौजस्वी बलवान्भवति ॥ २३ ॥ अथ दक्षिणत ऽउत्तानेन पाणिना निह्नुते । '(11)विश्वाभ्यो मा नाष्ट्राभ्यस्पाही'ति सर्वाभ्यो मार्त्तिभ्यो गोपायेत्येवैतदाह यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छत्त्रया वै पितरस्तैरेवैनमेतत्समर्द्धयति कृत्स्नङ्करोति ॥ २४ ॥ अथेमामभिमृश्य जपति । '(12)मनोरश्वासी'त्यश्वा ह

(1) शु० य० सं० ३७. १२ । (२) शु० य० सं० ३७ १२ । (३) शु० य० सं० ३७. १२ । (४) शु० य० सं० ३७. १२ । (५) शु० य० सं० ३७ १२ । (६) शु० य० सं० ३७. १२ । (७) शु० य० सं० ३७. १२ । (८) शु० य० सं० ३७. १२ । (९) शु० य० सं० ३७. १२ । (१०) शु० य० सं० ३७. १२ । (११) शु० य० सं० ३७. १२ ।

* अत्र "रक्षो व्यक्षरत्स" इत्यधिकः पाठः । 'ग' 'ज' पुस्तकयोः [ ] इति चिह्नान्तर्गत उपलभ्यते ।

(१२) शु० य० सं० ३७ १२ ।

वा ऽइयम्भूत्वा मनुमुवाह सोऽस्याः पतिः प्रजापति-
स्तेनैवैनमेतन्मिथुनेन प्रियेण धाम्ना समर्द्धयति कृत्स्नं
करोति ॥ २५ ॥ अथ वैकङ्कतौ शकलौ परिश्रयति
प्राञ्चौ । 'स्वाहा मरुद्भिः परिश्रीयस्वे'त्यवरथं स्वाहाकारङ्क-
रोति परान्देवतामेष वै स्वाहाकारो य ऽएष तपत्येष
ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादवरथं स्वाहाकार-
ङ्करोति परान्देवताम् ॥ २६ ॥ मरुद्भिः परिश्रीयस्वेति ।
विशो वै मरुतो विशैवैतत्क्षत्रम्परिबृंहति तदिदङ्क्षत्रमु-
भयतो विशा परिबृढन्तूष्णीमुदञ्चौ तूष्णीम्प्राञ्चौ तूष्णी-
मुदञ्चौ तूष्णीम्प्राञ्चौ ॥ २७ ॥ त्रयोदश सम्पादयति ।
त्रयोदश वै मासाः संवत्सरस्य संवत्सर ऽएष य ऽएष तपत्येष
ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मात्त्रयोदश सम्पादयति
॥ २८ ॥ अथ सुवर्णं हिरण्यमुपरिष्टान्निदधाति ।
'दिवः सथंस्पृशस्पाही'त्येतद्वै देवा ऽअबिभयुर्यद्वै न
ऽइममुपरिष्टाद्रक्षाथंसि नाष्ट्रा न हन्युरित्यग्नेर्वा ऽएत-
द्रेतो यद्धिरण्यन्नाष्ट्राणाथं रक्षसामपहत्या ऽअथो द्यौर्ह
वा ऽएतस्माद्बिभयाञ्चकार यद्वै मायन्तप्तः शुशुचानो न
हिथंस्यादिति तदेवास्या ऽएतदन्तर्दधाति हरितम्भवति
हरिणीव हि द्यौः ॥ २९ ॥ अथ धवित्रैराधूनोति । 'मधु
मद्धि'ति त्रिः प्राणो वै मधु प्राणमेवास्मिन्नेतद्दधाति त्रीणि
भवन्ति त्रयो वै प्राणाः प्राण ऽउदानो व्यानस्तानेवा-

(१) शु० य० सं० ३७. ११। (२) शु० य० सं० ३७. ११। (३) शु० य० सं० ३७. ११।

स्मिन्नेतद्दधाति ॥ ३० ॥ अथापसलवि त्रिर्दूंश्वन्ति । यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छन्नया वै पितरस्तैरेवै-नमेतत्समीरयति ॥ ३१ ॥ अप वा ऽएतेभ्यः प्राणाः क्रामन्ति । य यज्ञे धुवनन्तन्वते पुनः प्रसलवि त्रिर्दूंश्वन्ति पद् सम्पद्यन्ते षड्वा ऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति श्रपयन्ति रौहिणौ स यदार्चिर्जायतेऽथ हिरण्यमादत्ते ॥ ३२ ॥ स यत्रैताᳪ होतान्वाह । 'अप्स्वतीमश्विना वाचमस्मे' ऽइति तदध्वर्युरुपोत्तिष्ठन्नाह रुचितो घर्म्म ऽइति स यदि रुचितः स्याच्छ्रेयान्यजमानो भविष्यतीति विद्यादथ यद्यरुचितः पापीयान्भविष्यतीति विद्यादथ यदि नैव रुचितो नारुचितो नैव श्रेयान्न पापीयान्भविष्यतीति विद्याद्यथा त्वेवं रुचितः स्यात्तथा धवितव्यम् ॥३३॥ अथेतद्वै । आयुरेतज्ज्योतिः प्रविशति य ऽएतमनुवा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥३४॥

प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

——०——

स यदैतदध्वर्युः । उपोत्तिष्ठन्नाह रुचितो घर्म्म ऽइति तदुपोत्थायावकाशैरुपतिष्ठन्ते प्राणा वा ऽअवकाशाः प्राणानेवास्मिन्नेतद्दधाति षडुपतिष्ठन्ते षड्वा ऽइमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति ॥ १ ॥ 'गर्भो देवाना'मिति ।

* अत्र 'रथोऽध्यक्षरस्य' इत्यधिक पाठ [ ] इति चिह्नान्तर्गत 'ग' 'ज' पुस्तकयो रुपलभ्यते ।

(१) शु० य० सं० १४ २५ । (२) "न्वेव" इति 'ग' 'ज' पुस्तकयो । (३) "धवितव्य" इति ■ 'ज' पुस्तकयो । (४) शु० य० स० ३७ १४ ।

एष वै गर्भो देवानां य एष तपत्येष हीदꣳ सर्वं गृभ्णा-
त्येतेनेदꣳ सर्वं गृभीतमेष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति
तस्मादाह गर्भो देवानामिति ॥ २ ॥ 'पिता मतीना'-
मिति । पिता ह्येष मतीना'म्पतिः प्रजाना'मिति पतिर्ह्येष
प्रजानाम् ॥ ३ ॥ 'सन्देवो देवेन सवित्रा गते'ति सꣳ हि
देवो देवेन सवित्रा गत 'सꣳ सूर्येण रोचत' इति सꣳ
हि सूर्येण रोचते ॥ ४ ॥ 'समग्निरग्निना गते'ति । सꣳ
ह्यग्निरग्निना गत 'सन्दैवेन सवित्रे'ति सꣳ हि दैवेन
सवित्रा गत 'सꣳ सूर्येणारोचिष्टे'ति सꣳ हि सूर्येणारो-
चिष्ट ॥ ५ ॥ 'स्वाहा समग्निस्तपसा गते'ति सꣳ
ह्यग्निस्तपसा गतावरꣳ स्वाहाकारङ्करोति परान्देवतामसा-
वेव बन्धुः 'सन्दैव्येन सवित्रे'ति सꣳ हि दैव्येन सवि-
त्रा गत 'सꣳ सूर्येणारुरुचते'ति सꣳ हि सूर्येणारुरुचत
॥ ६ ॥ ते वा एते त्रयोऽवकाशा भवन्ति । त्रयो वै
प्राणाः प्राण उदानो व्यानस्तानेवास्मिन्नेतद्दधाति
॥ ७ ॥ 'धर्त्ता दिवो विभाति तपसस्पृथिव्या'मिति । धर्त्ता
ह्येष दिवो विभाति तपसस्पृथिव्या'न्धर्त्ता देवो देवानाम-
मर्त्यस्तपोजा' इति धर्त्ता ह्येष देवो देवानाममर्त्यस्तपोजा
'वाचमस्मे नियच्छ देवायुव'मिति यज्ञो वै वाग्यज्ञमस्म-

(१) रुहा० इति 'ग' न पुस्तकयो । (२) शु० य० स० ३७ १४ । (३) शु० य०
स० ३७ १४ । (४) शु० य० स० ३७ १४ । (५) शु० य० स० ३७ १४ । (६)
शु० य० स० ३७ १५ । (७) शु० य० स० ३७ १५ । (८) शु० य० स० ३७ १५ ।
(९) शु० य० स० ३७ १५ । (१०) शु० य० स० ३७ १५ । (११) शु० य० स०
३७ १५ । (१२) 'अस्तेने' इति 'ग' 'ज' पुस्तकयो । (१३) शु० य० स० ३७ १६ ।
(१४) शु० य० स० ३७ १६ । (१५) शु० य० स० ३७ १६ ।

वभ्यम्प्रयच्छ येन देवान्प्रीणामेत्येवैतदाह ॥ ८ ॥ 'अपश्यङ्गोपामनिपद्यमान'मिति । एष वै गोपा य एष तपत्येष हीदꣳ सर्वङ्गोपायत्यथो न निपद्यते तस्मादाहापश्यङ्गोपामनिपद्यमानमिति ॥ ९ ॥ 'आ च परा च पथिभिश्चरन्त'मिति । आ च ह्येष परा च देवैः पथिभिश्चरति 'स सध्रीचीः स विषूचीर्वसान' इति सध्रीचीश्च ह्येष विषूचीश्च दिशो वस्तेऽथो रश्मी'नावरीवर्त्ति भुवनेष्वन्त'रिति पुनः पुनर्ह्येष एषु लोकेषु वरीवर्त्यमानश्चरति ॥ १० ॥ 'विश्वासाम्भुवाम्पते । विश्वस्य मनसस्पते विश्वस्य वचसस्पते सर्वस्य वचसस्पत' इत्येतस्य सर्वस्य पत इत्येत'द्देवश्रुत्त्वन्देव घर्म्म देवो देवान्पाही'ति नात्र तिरोहितमिवास्ति ॥ ११ ॥ 'अत्र प्रावीरनु वान्देववीतय' इति । अश्विनावेवैतदाहाश्विनौ वा एतद्यज्ञस्य शिरः प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाहात्र प्रावीरनु वान्देववीतय इति ॥ १२ ॥ 'मधु माध्वीभ्याम्मधु माधूचीभ्या'मिति । दध्यङ् ह वा आभ्यामाथर्वणो मधु नाम ब्राह्मणमुवाच तदेनयोः प्रियन्धाम तदेवैनयोरेतेनोपगच्छति तस्मादाह मधु माध्वीभ्याम्मधु माधूचीभ्यामिति ॥ १३ ॥ 'हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा । ऊर्ध्वो अध्वरन्दिवि देवेषु धेही'ति नात्र तिरोहितमि-

(१) शु० य० सं० ३७. १७। (२) शु० य० सं० ३७. १७। (३) शु० य० सं० ३७. १७। (४) शु० य० सं० ३७. १७। (५) शु० य० सं० ३७. १८। (६) शु० य० सं० ३७. १८। (७) शु० य० सं० ३७ १८। (८) शु० य० सं० ३७. १८। (९) शु० य० सं० ३७. १९।

चास्ति ॥ १४ ॥ 'पिता नोऽसि पिता नो बोधी'ति । एष वै पिता य ऽएष तपत्येष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति,तस्मादाह पिता नोऽसि पिता नो बोधीति 'नमस्ते । ऽअस्तु मा मा हिᳪसी'रित्याशिषमेवैतदाशास्ते ॥ १५ ॥ अथ पत्न्यै शिरोऽपावृत्य । महावीरमीक्षमाणां वाचयति 'त्वष्टृमन्तस्त्वा सपेमे'ति त्वष्टा वै प्रवर्ग्यो योषा पत्नी मिथुनमेवैतत्प्रजननङ्क्रियते ॥ १६ ॥ अथै तद्वै । आयुरेतज्ज्योतिः प्रविशति य ऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या वा सृष्टौ ॥ १७ ॥

प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

इति प्रथमोऽध्यायः ॥ १ ॥

―०―

[ रौहिणहोमः, महावीरेषु अजापयस आसेकश्च ]

अथातो रौहिणौ जुहोति । 'अहः केतुना जुषताᳪ सुज्योतिर्ज्योतिषा स्वाहे'त्युभावेतेन यजुषा प्रातः 'रात्रिः केतुना जुषताᳪ सुज्योतिर्ज्योतिषा स्वाहे'त्युभावेतेन यजुषा सायम् ॥ १ ॥ तद्यद्रौहिणौ जुहोति । अग्निश्च ह वा ऽआदित्यश्च रौहिणावेताभ्याᳪ हि देवताभ्यां यजमानाः स्वर्गँल्लोकᳪ रोहन्ति ॥ २ ॥ अथो ऽअहोरात्रे वै रौहिणौ । आदित्यः प्रवर्ग्योऽमुन्तदादित्यमहोरात्राभ्या-

(१) शु० य० स० ३७ २० । (२) शु० य० स० ३० २० । (३) '०प०" इति ग' 'ज पुस्तकयो । (४) शु० य० स० ३७ २० । (५) शु० य० स० ३७ २१ । (६) शु० य० स० ३७ २१ ।

म्परिगृह्णाति तस्मादेषोऽहोरात्राभ्याम्परिगृहीतः ॥ ३ ॥ अथो ऽइमौ वै लोकौ रौहिणौ आदित्यः प्रवर्ग्योऽसुन्तदादित्यमाभ्याँल्लोकाभ्याम्परिगृह्णाति तस्मादेष ऽआभ्याँल्लोकाभ्याम्परिगृहीतः ॥ ४ ॥ अथो चक्षुषी वै रौहिणौ । शिरः प्रवर्ग्यः शीर्षंस्तच्चक्षुर्दधाति ॥५॥ अथ रज्जुमादत्ते । 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्यामाददेऽदित्यै रास्नासी'त्यसावेव बन्धुः ॥६॥ अथ गामाह्वयति । जघनेन गार्हपत्यं 'त्य'मिडे ऽएह्यदित ऽएहि सरस्वत्येही'तीडा हि गौरदितिर्हि गौः सरस्वती हि गौरथो· त्रैराह्वयति नाम्ना'सावेह्यसावेही'ति त्रिः ॥ ७ ॥ तामागतामभिदधाति । 'अदित्यै रास्नासीन्द्राण्या ऽउष्णीष' ऽइतीन्द्राणी ह वा ऽइन्द्रस्य प्रिया पत्नी तस्या ऽउष्णीषो विश्वरूपतमः सोऽसीति तदाह तमेवैनमेतत्करोति ॥ ८ ॥ अथ वत्समुपार्जति । 'पूषासी'त्ययं वै पूषा योऽयम्पवत ऽएष हीदः सर्वम्पुष्यत्येष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह पूषासीति ॥ ९ ॥ अथोन्नयति । 'घर्माय दीष्वे'त्येष वा ऽअत्र घर्मो रसो भवति यमेषा पिन्वते तस्मै दयस्वेत्येवैतदाह ॥ १० ॥ अथ पिन्वने पिन्वयति । 'अश्विभ्याम्पिन्वस्वे'त्यश्विनावेवैतदाहाश्विनौ वा ऽएतद्यज्ञस्य शिरः प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाहा·

(१) शु० य० सं० ३८. १। (२) 'ख' 'ज' पुस्तकयो "ऽदित्यै" इति पाठो न दृश्यते। (३) शु० य० सं० ३८. २। (४) "ते" इति 'ग' 'ज' पुस्तकयो। (५) शु० य० सं० ३८. २। (६) शु० य० सं० ३८ ३। (७) शु० य० सं० ३८ ३। (८) शु० य० सं० ३८ ३। (९) शु० य० सं० ३८ ४।

श्विभ्यां पिन्वस्वेति ॥ ११ ॥ 'सरस्वत्यै पिन्वस्वे'ति । वाग्वै सरस्वती वाचा वा एतदश्विनौ यज्ञस्य शिरः प्रत्यधत्तान्तामेवैतत्प्रीणाति तस्मादाह सरस्वत्यै पिन्वस्वेति ॥ १२ ॥ 'इन्द्राय पिन्वस्वे'ति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैतदश्विनौ यज्ञस्य शिरः प्रत्यधत्तान्तामेवैतत्प्रीणाति तस्मादाहेन्द्राय पिन्वस्वेति ॥ १३ ॥ अथ विप्रुषोऽभिमन्त्रयते । 'स्वाहेन्द्रवत्स्वाहेन्द्रव'दितीन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतत्प्रीणाति तस्मादाह स्वाहेन्द्रवत्स्वाहेन्द्रवदिति त्रिष्कृत्व आह त्रिवृद्धि यज्ञोऽवरं स्वाहाकारङ्करोति पराग्देवतामसावेव बन्धुः ॥ १४ ॥ अथास्यै स्तनमभिपद्यते । 'यस्ते स्तनः शशयो यो मयोभू'रिति यस्ते स्तनो निहितो गुहायामित्येवैतदाह 'यो रत्नधा वसुविद्यः सुदत्र' इति यो धनानान्दाता वसुवित्पणाय्य इत्येवैतदाह 'येन विश्वा पुष्यसि वार्याणी'ति येन सर्वान्देवान्त्सर्वाणि भूतानि बिभर्षीत्येवैतदाह 'सरस्वति तमिह धातवेऽक'रिति वाग्वै सरस्वती सैषा घर्मदुघा यज्ञो वै वाग्यज्ञमस्मभ्यम्प्रयच्छ येन देवान्प्रीणामेत्येवैतदाहाथ गार्हपत्यस्यार्द्धमे'त्युर्वन्तरिक्षमन्वेमी'त्यसावेव बन्धुः ॥ १५ ॥ अथ शफावादत्ते । 'गायत्रञ्छन्दोऽसि त्रैष्टुभञ्छन्दोऽसी'ति गायत्रेण चैवैना-

(१) शु० य० सं० ३८. ४। (२) शु० य० सं० ३८. ४। (३) शु० य० सं० ३८. ४। (४) शु० य० सं० ३८. ५। (५) शु० य० सं० ३८. ५। (६) शु० य० सं० ३८. ५। (७) शु० य० सं० ३८. ५। (८) शु० य० सं० ३८. ५। (९) शु० य० सं० ३८. ६।

वेतस्त्रैष्टुभेन च च्छन्दसादत्ते 'द्यावापृथिवीभ्यान्त्वा परिगृह्णामी'तीमे वै द्यावापृथिवी परीशासावादित्यः प्रवर्ग्योऽमुन्तदादित्यमाभ्यान्द्यावापृथिवीभ्याम्परिगृह्णात्यथ मौञ्जेन वेदेनोपमार्ष्ट्यसावेव बन्धुः ॥ १६ ॥ अथोपयमन्योपगृह्णाति । 'अन्तरिक्षेणोपयच्छामी'त्यन्तरिक्षं वा उपयमन्यन्तरिक्षेण हीदं सर्वमुपयतमथो उदरं वा उपयमन्युदरेण हीदं सर्वमन्नाद्यमुपयतन्तस्मादाहान्तरिक्षेणोपयच्छामीति ॥ १७ ॥ अथाजाक्षीरमानयति । तप्तो वा एष शुशुचानो भवति तमेवैतच्छमयति तस्मिञ्छान्ते गोक्षीरमानयति ॥ १८ ॥ 'इन्द्राश्विने'ति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतत्प्रीणात्यश्विनेत्यश्विनावेवैतदाहाश्विनौ वा एतद्यज्ञस्य शिरः प्रत्यधत्तान्तावेवैतत्प्रीणाति तस्मादाहेन्द्राश्विनेति ॥ १९ ॥ 'मधुनः सारघस्ये'ति । एतद्वै मधु सारघं 'घर्म्मम्पाते'ति रसम्पातेत्येवैतदाह 'वसवः' इत्येते वै वसव एते हीदं सर्वं वासयन्ते 'यजत वा'डिति तद्यथा वषट्कृतं हुतमेवमस्यैतद्भवति ॥ २० ॥ 'स्वाहा सूर्यस्य रश्मये वृष्टिवनय' इति । सूर्यस्य ह वा एको रश्मिर्वृष्टिवनिर्नाम येनेमाः सर्वाः प्रजा बिभर्ति तमेवैतत्प्रीणाति तस्मादाह स्वाहा सूर्यस्य रश्मये वृष्टिवनय इत्यवरं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥२१॥ अथैतद्वै । आयुरेतज्ज्योतिः

(१) शु० य० स० ३८ १ । (२) शु० य० स० ३८ ६ । (३) शु० य० स० ३८. ६ । (४) शु० य० स० ३८ ६ । (५) शु० य० स० ३८ ६ । (६) शु० य० स० ३८. ६ । (७) शु० य० स० ३८ ६ । (८) शु० य० स० ३८ ६ ।

प्प्रविशति य ऽएतमनु वा ब्नुते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ २२ ॥

द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

माध्यन्दिनीये शतपथब्राह्मणे प्रथमः प्रपाठकः ॥ १ ॥
कण्डिकासंख्या ॥ १३२ ॥

—o—

[ प्रवर्ग्यानुष्ठानम् ]

स यत्रैताᳫं होतान्वाह । 'प्प्रैतु ब्ब्रह्मणस्प्पतिः प्प्र देव्येतु सूनृते'ति तदश्वर्य्युः प्प्राद्गुदायुन्वातनामानि जुहोत्येतद्वै देवा ऽअविभयुर्य्यद्वै न ऽइममन्तरा रक्षाᳫंसि नाष्ट्रा न हन्न्युरिति तमेतत्पुरैवाहवनीयात्स्वाहाकारेणाजुहवुस्तद्ध हुतमेव सन्तमग्नावजुहवुस्तथो ऽएवैनमेप ऽएतत्पुरैवाहवनीयात्स्वाहाकारेण जुहोति तद्ध हुतमेव सन्तमग्नौ जुहोति ॥ १ ॥ 'समुद्राय त्वा व्वाताय स्वाहे'ति । अयं वै समुद्रो योऽयम्पवत ऽएतस्माद्वै समुद्रात्सर्वे देवाः सर्वाणि भूतानि समुद्द्रवन्ति तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाह समुद्राय त्वा व्वाताय स्वाहा ॥ २ ॥ 'सरिराय त्वा व्वाताय स्वाहे'ति । अयं वै सरिरो योऽयम्पवत ऽएतस्माद्वै सरिरात्सर्वे देवाः सर्वाणि भूतानि सहेरते तस्म्मा ऽएवैनञ्जुहोति तस्म्मादाह सरिराय त्वा व्वाताय स्वाहा ॥ ३ ॥ 'अनाधृष्ण्याय त्वा व्वाताय स्वाहा प्प्रतिधृष्ण्याय त्वा

(१) शु० य० सं० ३७ ७। (२) शु० य० सं० ३८ ७। (३) शु० य० सं० ३८, ७। (४) शु० य० सं० ३८, ७।

व्राताय स्वाहे'ति । अयं वा ऽअनाधृष्ण्योऽप्रतिधृष्ण्यो योऽयम्पवते तस्मा ऽएवैनञ्जुहोति तस्मादाहानाधृष्ण्याय त्वा व्राताय स्वाहा प्रतिधृष्ण्याय त्वा व्राताय स्वाहेति ॥ ४ ॥ 'अवस्यवे त्वा व्राताय स्वाहाशिमिदाय त्वा व्राताय स्वाहे'ति । अयं वा ऽअवस्युरशिमिदो योऽयम्पवते तस्मा ऽएवैनञ्जुहोति तस्मादाहावस्यवे त्वा व्राताय स्वाहाशिमिदाय त्वा व्राताय स्वाहेति ॥ ५ ॥ 'इन्द्राय त्वा वसुमते रुद्रवते स्वाहे'ति । अयं वा ऽइन्द्रो योऽयम्पवते तस्मा ऽएवैनञ्जुहोति तस्मादाहेन्द्राय त्वेति वसुमते रुद्रवत ऽइति तदिन्द्रमेवानु वसूँश्च रुद्राँश्चाभजत्यथो प्रातःसवनस्य चैवैतन्माध्यन्दिनस्य च सवनस्य रूपङ्क्रियते ॥ ६ ॥ 'इन्द्राय त्वादित्यवते स्वाहे'ति । अयं वा ऽइन्द्रो योऽयम्पवते तस्मा ऽएवैनञ्जुहोति तस्मादाहेन्द्राय त्वेत्यादित्यवत ऽइति तदिन्द्रमेवान्वादित्यानाभजत्यथो तृतीयसवनस्यैवैतद्रूपङ्क्रियते ॥ ७ ॥ 'इन्द्राय त्वाभिमातिघ्ने स्वाहे'ति । अयं वा ऽइन्द्रो योऽयम्पवते तस्मा ऽएवैनञ्जुहोति तस्मादाहेन्द्राय त्वेत्यभिमातिघ्न ऽइति सपत्नो वा ऽअभिमातिरिन्द्राय त्वा सपत्नघ्न ऽइत्येवैतदाह सोऽस्योद्धारो यथा श्रेष्ठस्योद्धार ऽएवमस्यैष ऽऋते देवेभ्यः ॥ ८ ॥ 'सवित्रे त्व ऽऋभुमते विभुमते वाजवते स्वाहे'ति । अयं वै सविता योऽयम्पवते तस्मा

(१) शु० य० सं० ३८.७। (२) शु० य० सं० ३८.८। (३) शु० य० सं० ३८.८। (४) शु० य० सं० ३८ ८। (५) शु० य० सं० ३८ ८।

ऽएवैनञ्जुहोति तस्मादाह सवित्रे त्त्वेर्त्तुमते विभुमते व्राजवत ऽइति तदस्मिन्त्रिवृत्त्वान्देवानन्वाभजति ॥ ९ ॥ 'बृहस्पतये त्त्वा विश्वदेव्यावते स्वाहे'ति । अयं वै बृहस्पतिर्योऽयम्पवते तस्मा ऽएवैनञ्जुहोति तस्मादाह बृहस्पतये त्त्वेति विश्वदेव्यावत ऽइति तदस्मिन्विश्वान्त्सर्वान्देवानन्वाभजति ॥ १० ॥ 'यमाय त्त्वाङ्गिरस्वते पितृमते स्वाहे'ति । अयं वै यमो योऽयम्पवते तस्मा ऽएवैनञ्जुहोति तस्मादाह यमाय त्त्वेत्यङ्गिरस्वते पितृमत ऽइति यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छन्नया वै पितरस्तानेवैतदन्वाभजति ॥ ११ ॥ द्वादशैतानि नामानि भवन्ति । द्वादश वै मासाः सँवत्सरस्य सँवत्सर ऽएष य ऽएष तपत्येष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्माद्द्वादश भवन्ति ॥ १२ ॥ अथोपयमन्या महावीर ऽआनयति । 'स्वाहा घर्म्माये'त्येष वै घर्म्मो य ऽएष तपत्येष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह स्वाहा घर्म्मायेत्यवरथं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १३ ॥ आनीते जपति । 'स्वाहा घर्म्मः पित्र' ऽइति यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छन्नया वै पितरस्तानेवैतत्प्रीणात्यवरथं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः ॥ १४ ॥ नानुवाक्यया·

---

( १ ) शु० य० स० ३८, ८ । ( २ ) शु० य० स० ३८ ९ ।

* अत्र "रसो व्यक्षरस्य" इत्यधिक पाठ 'ग' 'ज' पुस्तकयो [ ] इति चिह्नान्तर्गत उपलभ्यते ।

( ३ ) शु० य० स० ३८ ९ । ( ४ ) शु० य० स० ३८, ६ ।

मन्न्वाह । सकृदु ह्येव पराञ्चः पितरस्तस्मान्नानुवाक्क्या-मन्न्वाहातिक्क्रम्स्याश्श्राव्व्याह घर्म्मस्य यजेति वषट्कृते जुहोति ॥ १५ ॥ 'विश्श्वा ऽआशा दक्षिणस'दिति । सर्वा ऽआशा दक्षिणसदित्त्येवैतदाह 'विश्श्वान्देवानयाडिहे'ति सर्वान्देवानयाक्षीदिहेत्त्येवैतदाह 'स्वाहाकृतस्य घर्म्मस्य मधोः पिवतमश्श्विना'वित्त्यश्श्विनावेवैतदाहाश्श्विनौ ह्येतद्य-ज्ञस्य शिरः प्प्रत्त्यधत्तान्तावेवैतत्प्रीणात्त्यवरर्द्धं स्वाहाकार-ङ्करोति परान्देवतामसावेव वन्धुः ॥ १६ ॥ अथ हुत्वो-र्द्ध्वमुत्कम्पयति । 'दिवि धा ऽइमं य्यज्ञमिमं य्यज्ञन्दिवि धा' ऽइत्त्यसौ वा ऽआदित्त्यो घर्म्मो यज्ञो दिवि वा ऽएष हितो दिवि प्प्रतिष्ठितस्तमेवैतत्प्रीणाति तस्म्मादाह दिवि धा ऽइमं य्यज्ञमिमं य्यज्ञन्दिवि धा ऽइत्त्यनुवषट्कृते जुहोति ॥ १७ ॥ 'स्वाहाग्नये यज्ञियाये'ति । तस्स्विष्टकृज्ञाजन-मग्निर्हि स्विष्टकृ'च्छं य्यजुर्ब्भ्य' ऽइति यजुर्ब्भिर्ह्येषोऽ-स्मिँल्लोके प्प्रतिष्ठितस्तान्येवैतत्प्रीणात्त्यवरर्द्धं स्वाहा-कारङ्करोति परान्देवतामसावेव वन्धुः ॥ १८ ॥ अथ ब्रह्मा-नुमन्त्रयते । ब्रह्मा वा ऽऋत्त्विजाम्भिषक्तमस्तद्य ऽएवऽ-र्त्विजाम्भिषक्तमस्तेनैवैतद्यज्ञम्भिषज्ज्यति ॥ १९ ॥ 'अ-श्श्विना घर्म्मम्पात'मिति । अश्श्विनावेवैतदाहाश्श्विनौ ह्येतद्यज्ञस्य शिरः प्प्रत्त्यधत्तान्तावेवैतत्प्रीणाति ॥ २० ॥

---

(१) शु० य० सं० ३८ १० । (२) शु० य० सं० ३८. १० । (३) शु० य० सं० ३८. १० । (४) शु० य० सं० ३८ ११ । (५) शु० य० सं० ३८. ११ । (६) शु० य० सं० ३८. ११ । (७) "स्तेनैवैनमेत०" इति 'ग' 'ज' पुस्तकयोः पाठः । (८) शु० य० सं० ३८. १२ ।

'हार्द्यानेमहार्द्यांविभिरूतिभि'रिति । अनिरुक्तमनिरुक्तो वै प्रजापतिः प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञम्भिषज्यति ॥ २१ ॥ 'तन्त्रायिणे' इति । एष वै तन्त्रायी य एष तपत्येष हीमाँल्लोकाँस्तन्त्रमिवानुसञ्चरत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह तन्त्रायिणे इति ॥ २२ ॥ 'नमो द्यावापृथिवीभ्या'मिति । तदाभ्यान्द्यावापृथिवीभ्यान्निह्नुते ययोरिदः सर्वमधि ॥ २३ ॥ अथ यजमानः । यज्ञो वै यजमानो यज्ञेनैवैतद्यज्ञम्भिषज्यति ॥२४॥ 'अपीतामश्विना घर्म्म'मिति । अश्विनावेवैतदाहाश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्तान्तावेवैतत्प्रीणाति ॥ २५ ॥ 'अनु द्यावापृथिवी अमःसाता'मिति । तदिमे द्यावापृथिवी आह ययोरिदः सर्वमधी'हैव रातयः सन्त्विती-हैव नो धनानि सन्त्वित्येवैतदाह ॥ २६ ॥ अथ पिन्वमानमनुमन्त्रयते * । 'इषे पिन्वस्वे'ति वृष्ट्यै तदाह यदाहेषे पिन्वस्वेत्यू'र्ज्जे पिन्वस्वे'ति यो वृष्टादूर्ग्रसो जायते तस्मै तदाह 'ब्रह्मणे पिन्वस्वे'ति तद्ब्रह्मण आह 'क्षत्राय पिन्वस्वे'ति तत्क्षत्रायाह 'द्यावापृथिवीभ्याम्पिन्वस्वे'ति तदाभ्यान्द्यावापृथिवीभ्यामाह ययोरिदः सर्वमधि ॥ २७ ॥ स यदूर्ध्वः पिन्वते । तद्यजमानाय पिन्वते

---

(१) शु० य० स० ३८. १२। (२) शु० य० स० ३८ १२। (३) शु० य० स० ३८ १२। (४) शु० य० स० ३८. १३। (५) शु० य० स० ३८. १३। (६) शु० य० स० ३८. १३।

* का० श्रौ० सू० २६ ६. ८।

(७) शु० य० स० ३८ १४। (८) शु० य० स० ३८ १४। (९) शु० य० स० ३८ १४। (१०) शु० य० स० ३८. १४। (११) शु० य० स० ३८. १४।

यत्प्राङ् तद्देवेभ्यो यद्दक्षिणा तत्पितृभ्यो यत्प्रत्यङ् तत्पशुभ्यो यदुदङ् तत्प्रजाया ऽअनपराद्धन्त्वेवं यजमानस्योर्द्ध्वो ह्येव पिन्विस्त्वोथ यान्दिशम्पिन्वते तामपिन्वते यदा शाम्यन्ति विप्रुषः ॥ २८ ॥ अथ प्राङित्वोदङ्ङुत्क्रामति*। 'धर्म्मासि सुधर्म्मे'त्येष वै धर्म्मो य ऽएष तपत्येष हीदꣳ सर्वन्धारयत्येतेनेदꣳ सर्वन्धृतमेष ऽउ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह धर्म्मासि सुधर्म्मेति ॥ २९ ॥ अथ खरे सादयति । 'अमेन्यस्मे नृम्णानि धारये'त्ययमकुद्धन्नो धनानि धारयेत्येवैतदाह 'ब्रह्म धारय क्षत्रन्धारय विशन्धारये'त्येतत्सर्वन्धारयेत्येवैतदाह ॥३०॥ अथ शाकलैर्जुहोति । प्राणा वै शाकलाः प्राणानेवास्मिन्नेतद्दधाति ॥ ३१ ॥ 'स्वाहा पूष्णे शरस' इति । अयं वै पूषा योऽयम्पवत ऽएष हीदꣳ सर्वम्पुष्यत्येष ऽउ प्राणः प्राणमेवास्मिन्नेतद्दधाति तस्मादाह स्वाहा पूष्णे शरस ऽइत्युपरथं स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुर्हुत्वा मद्ध्यमे परिधा ऽउपश्रयति ॥ ३२ ॥ 'स्वाहा ग्रावभ्य' ऽइति । प्राणा वै ग्रावाणः प्राणानेवास्मिन्नेतद्दधाति हुत्वा मद्ध्यमे परिधा ऽउपश्रयति ॥ ३३ ॥ 'स्वाहा प्रतिरवेभ्य' ऽइति । प्राणा वै प्रतिरवाः प्राणान्हीदꣳ सर्वम्प्रतिरत-

(१) "न्त्वेव" इति 'ग' 'ज' पुस्तकयो । (२) "पिन्वत्याथ" इति 'ग' 'ज' पुस्तकयो. ।

* 'धर्म्मासीत्युत्क्रामत्युत्तरपूर्वार्द्धम्' का० श्रौ० सू० २६. ६ १ ) इति ।

( ३ ) शु० य० सं० ३८. १४ । ( ४ ) शु० य० सं० ३८. १४ । ( ५ ) शु० य० सं० ३८. १४ । ( ६ ) शु० य० सं० ३८. १५ ।

(७) शु० य० सं० ३८. १५ । ( ८ ) शु० य० सं० ३८. १५ ।

ऽप्राणानेवास्मिन्नेतद्दधाति हुत्वा मद्ध्यमे परिधा ऽउप-
श्श्रयति ॥ ३४ ॥ '[१]स्वाहा पितृभ्य ऽऊर्द्ध्वबर्हिभ्यो घर्म्म-
पावभ्य' ऽइति । अहुत्वैवोदङ्ङीक्षमाणो दक्षिणार्द्धे
बर्हिष ऽउपगूहति यज्ञस्य शीर्षच्छिन्नस्य * पितॄनगच्छ-
द्रया वै पितरस्तानेवैतत्प्रीणात्यथ यन्न प्प्रेक्षते सकृद्ध
ह्येव पराञ्चः पितरः ॥ ३५ ॥ '[२]स्वाहा द्यावापृथिवी-
भ्या'मिति । प्प्राणोदानौ वै द्यावापृथिवी प्प्राणोदाना-
वेवास्मिन्नेतद्दधाति हुत्वा मद्ध्यमे परिधा ऽउपश्श्रयति
॥ ३६ ॥ '[३]स्वाहा विश्श्वेभ्यो देवेभ्य ऽइति । प्प्राणा वै
विश्श्वे देवाः प्प्राणानेवास्मिन्नेतद्दधाति हुत्वा मद्ध्यमे
परिधा ऽउपश्श्रयति ॥ ३७ ॥ '[४]स्वाहा रुद्राय रुद्रहूतय'
ऽइति । अहुत्वैव दक्षिणेक्षमाणः प्प्रतिप्प्रस्थात्रे प्प्रय-
च्छति तꣳ स ऽउत्तरतः शालाया ऽउदङ्ङ्निरस्यत्येषा
ह्येतस्य देवस्य दिक्स्वायामेवैनमेतद्दिशि प्प्रीणात्यथ यन्न
प्प्रेक्षते नेन्मा रुद्रो हिनसदिति ॥ ३८ ॥ सप्तैता ऽआहु-
तयो भवन्ति । सप्त वा ऽइमे शीर्षन्प्राणास्तानेवास्मि-
न्नेतद्दधाति ॥ ३९ ॥ अथ महावीरादुपयमन्यामभ्यानयति ।
'[५]स्वाहा सञ्ज्योतिषा ज्योति'रिति ज्योतिर्वा ऽइतरस्मि-
न्पयो भवति ज्योतिरितरस्यान्ते ह्येतदुभे ज्योतिषी सङ्ग-
च्छेते ऽअवरꣳ स्वाहाकारङ्करोति परान्देवतामसावेव बन्धुः

---

* अत्र "रसो व्यक्षरत्" इत्यधिकः पाठः 'घ' 'ङ' पुस्तकयोः [ ] इति
चिह्नान्तर्गत उपलभ्यते।

(१) शु० य० सं० ३८. १५ । (२) शु० य० सं० ३८. १५ । (३) शु० य० सं०
३८. १५ । (४) शु० य० सं० ३८. १६ । (५) शु० य० सं० ३८. १६ ।

॥ ४० ॥ * अथ रौहिणौ जुहोति । 'अहः केतुना जुषताᳬं सुज्योतिर्ज्योतिषा स्वाहे'त्यसावेव बन्धू 'रात्रिः केतुना जुषताᳬं सुज्योतिर्ज्योतिषा स्वाहे'त्यसावेव बन्धुः ॥ ४१ ॥ अथ यजमानाय घर्म्मोच्छिष्टम्प्रयच्छति । स उपहवमिष्ट्वा भक्षयति 'मधु हुतमिन्द्रतमे ऽअग्नावि'ति मधु हुतमिन्द्रियवत्तमेऽग्नावित्येवैतदाहा'श्याम ते देव घर्म्म नमस्ते ऽअस्तु मा मा हिᳬंसी'रित्याशिषमेवैतदाशास्ते ॥ ४२ ॥ अथ दक्षिणतः सिकता ऽउपकीर्णा भवन्ति । तन्मार्जयन्ते य ऽएव मार्ज्जालीये बन्धुः सोऽत्रानुप्रहरति शाकलानथोपसदा चरन्त्येतदु यज्ञस्य शिरः संस्कृतं यथा यथैनन्तदश्विनौ प्रत्यधत्ताम् ॥ ४३ ॥ तन्न प्रथमयज्ञे प्रवृञ्ज्यात् । पुनस्यः हि तदुथो नेन्म ऽइन्द्रः शिरश्छिनदिति द्वितीये वैव तृतीये वापशीर्ण्णा ह्येवाग्रे यज्ञेन देवा ऽअर्चन्तः श्राम्यन्तश्चेरुस्तस्माद्द्वितीये वैव तृतीये वाथो तप्तो वा ऽएष शुशुचानो भवति ॥ ४४ ॥ तं त्वप्रथमयज्ञे प्रवृञ्ज्यात् । एषोऽस्य तप्तः शुशुचानः प्रजाश्च पशूँश्च प्रदहेदुथो ऽआयुः प्रमायुको यजमानः स्यात्तस्माद्द्वितीये वैव तृतीये वा ॥ ४५ ॥ तन्न सर्वस्मा ऽइव प्रवृञ्ज्यात् । सर्वं वै प्रवर्ग्यो नेत्सर्वस्मा ऽइव सर्वङ्करवाणीति यो न्वेव ज्ञातस्तस्मै प्रवृञ्ज्याद्यो वास्य प्रियः स्याद्यो वानूचानोऽनूकेनैनस्प्राप्नुयात् ॥ ४६ ॥

* सप्त शतम् ७००।

(१) शु० य० सं० ३८ २१। (२) शु० य० सं० ३८. २१। (३) शु० य० सं० ३८. १६। (४) शु० य० सं० ३८. १६।

सहस्रे प्रवृञ्ज्यात् । सर्वं वै सहस्रꣳ सर्वमेव सर्ववेदसे प्रवृञ्ज्यात्सर्वं वै सर्ववेदसꣳ सर्वमेव विश्वजिति सर्वपृष्ठे प्रवृञ्ज्यात्सर्वं वै विश्वजित्सर्वपृष्ठꣳ सर्वमेव वाजपेये राजसूये प्रवृञ्ज्यात्सर्वꣳ हि तत्सत्रे प्रवृञ्ज्यात्सर्वं वै सत्रꣳ सर्वमेव ऽएतान्यस्य प्रवर्जनान्यतो नान्यत्र ॥ ४७ ॥ तदाहुः । यदुपशिरा ऽअप्रवर्ग्योऽथ केनास्याग्निहोत्रꣳ शीर्षण्वद्भवतीत्याहवनीयेनेति ब्रूयात्कथन्दर्शपूर्णमासाविरित्याज्येन च पुरोडाशेन चेति ब्रूयात्कथञ्चातुर्मास्यानीति पयस्ययेति ब्रूयात्कथम्पशुबन्ध ऽइति पशुना च पुरोडाशेन चेति ब्रूयात्कथꣳ सौम्योऽध्वर ऽइति हविर्धानेनेति ब्रूयात् ॥ ४८ ॥ अथो ऽआहुः । यज्ञस्य शीर्षच्छिन्नस्य शिर ऽएतद्देवाः प्रत्यदधुर्यदातिथ्यन्न ह वा ऽअस्यापशीर्ष्णा केन चन यज्ञेनेष्टम्भवति य ऽएवमेतद्वेद ॥ ४९ ॥ तदाहुः । यत्प्रणीताः प्रणयन्ति यज्ञेऽथ कस्मादत्र न प्रणयतीति शिरो वा ऽएतद्यज्ञस्य यत्प्रणीताः शिरः प्रवर्ग्यो नेच्छिरसा शिरोऽभ्यारोहयाणीति ॥ ५० ॥ तदाहुः । यत्प्रयाजानुयाजा ऽअन्यत्र भवन्त्यथ कस्मादत्र न भवन्तीति प्राणा वै प्रयाजानुयाजाः प्राणा ऽअवकाशाः प्राणाः शाकला नेत्प्राणैः प्राणानभ्यारोहयाणीति ॥ ५१ ॥ तदाहुः । यदाज्यभागावन्यत्र जुह्वत्यथ कस्मादत्र न जुहोतीति चक्षुषी वा ऽएते यज्ञस्य यदाज्यभागौ चक्षुषी रौहिणौ नेच्चक्षुषा चक्षुरभ्यारोहयाणीति ॥ ५२ ॥ तदाहुः । यदा-

नरुप्पत्स्यैदेवेभ्यो जुहुत्यथ कस्मादेतम्मृन्म्मयेनैव जुहोतीति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्स ऽइमे द्यावापृथिवी ऽअगच्छद्यन्मृदियन्तद्यदापोऽसौ तन्मृदश्चापश्च महावीराः कृता भवन्ति तेनैवैनमेतद्रसेन समर्द्धयति कृत्स्नङ्करोति ॥ ५३ ॥ स यद्धानरुप्पत्यः स्यात्। प्रदहेत यद्धिरण्मयः स्यात्प्रलीयेत यल्लोहमयः स्यात्प्रसिच्च्येत यदयस्मयः स्यात्प्रदहेत्परीशासावथैष ऽएवैतस्मा ऽअतिष्ठत तस्मादेतम्मृन्म्मयेनैव जुहोति ॥ ५४ ॥ अथैतद्वै। आयुरेतज्ज्योतिः प्प्रविशति य ऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ ५५ ॥

द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

इति द्वितीयोऽध्यायः ॥ २ ॥

—०—

[ प्रवर्ग्योत्सादनम् ]

स वै तृतीयेऽहन्। षष्ठे वा द्वादशे वा प्प्रवर्ग्योपसदौ समस्य प्प्रवर्ग्यमुत्सादयत्युत्सन्नमिव हीदः शिरस्तद्यदेतमभितो भवति तत्सर्वः समादायाग्रेण शालामन्तर्वेद्युपसमायन्ति ॥ १० ॥ अथाग्नीद्ध्रः। आहवनीये* त्रीञ्छालाकानुपकल्पयते तेषामेकमुज्ज्वलय्य मुखदघ्ने धारयमाणो जुहोति यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत्सेमाँ

---

* तथा च कात्यायनः—'आहवनीये त्रीञ्छालाकान्प्रदीप्य प्रदीप्याग्नीध्रो धारयति प्रतद्दिवसः प्रतिलोम प्रमाणेषु' ( का० श्रौ० सू० २६. ७ २ ) इति।

ल्लोकानाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ २ ॥ अथ यन्मुखदघ्ने । उपरीव वै तद्यन्मुखदघ्नमुपरीव तद्यदसौ लोकस्तद्यामुँल्लोकꣳ शुगाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ३ ॥ 'या ते घर्म्म दिव्या शु'गिति । यैव दिव्या शु'ग्या गायत्र्याꣳ हविर्द्धाने' इति यैव गायत्र्याꣳ हविर्द्धाने 'सा त ऽआप्यायतान्निष्ट्यायतान्तस्यै ते स्वाहे'ति नात्र तिरोहितमिवास्ति ॥ ४ ॥ अथ द्वितीयमुज्ज्वलय्य । नाभिदघ्ने धारयमाणो जुहोति मद्ध्यमिव वै तद्यन्नाभिदघ्नम्मद्ध्यमिवान्तरिक्षलोकस्तद्यान्तरिक्षलोकꣳ शुगाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ५ ॥ 'या ते घर्म्मान्तरिक्षे शु'गिति । यैवान्तरिक्षे शु'ग्या त्रिष्टुब्भ्याग्नीध्र' ऽइति यैव त्रिष्टुब्भ्याग्नीध्रे 'सा त ऽआप्यायतान्निष्ट्यायतान्तस्यै ते स्वाहे'ति नात्र तिरोहितमिवास्ति ॥६॥ [अर्धः प्रपाठकः ॥६१॥] अथ तृतीयमभ्याधाय। तस्मिन्नासीनो जुहोत्यध ऽइव वै तद्यदासीनोऽध ऽइव तद्यदयँल्लोकस्तद्येमँल्लोकꣳ शुगाविशत्तयैवैनमेतच्छुचा समर्द्धयति कृत्स्नङ्करोति ॥ ७ ॥ 'या ते घर्म्म पृथिव्याꣳ शु'गिति । यैव पृथिव्याꣳ शु'ग्या जगत्याꣳ सदस्ये'ति यैव जगत्याꣳ सदस्या 'सा त ऽआप्यायतान्निष्ट्यायतान्तस्यै ते स्वाहे'ति नात्र तिरोहितमिवास्ति ॥ ८ ॥ अथो-

(१) शु० य० स० ३८ १८। (२) शु० य० स० ३८ १८। (३) शु० य० स० ३८ १८। (४) शु० य० स० ३८ १८। (५) शु० य० स० ३८ १८। (६) शु० य० स० ३८ १८। (७) शु० य० स० ३८ १८। (८) शु० य० स० ३८ १८। (९) शु० य० स० ३८ १८।

पनिष्क्रामति । 'क्षत्रस्य त्वा परस्पाय' इत्येतद्वै दैवं क्षत्रं य एष तपत्यस्य त्वा मानुषस्य क्षत्रस्य परस्पत्वायेत्येवैतदाह 'ब्रह्मणस्तन्वम्पाही'ति ब्रह्मण आत्मानङ्गोपायेत्येवैतदाह 'विशस्त्वा धर्म्मणा वय'मिति यज्ञो वै विड्यज्ञस्य त्वारिष्ट्या इत्येवैतदाहानुक्रामाम सुविताय नव्यस' इति यज्ञस्य त्वारिष्ट्या अह्वलाया इत्येवैतदाह ॥ ९ ॥ अथाह साम गायेति । साम ब्रूहीति वा गायेति त्वेव ब्रूयाद्गायन्ति हि साम तद्यत्साम गायति नेदिमाश्चहिर्द्धा यज्ञाच्छरीरान्नाष्ट्रा रक्षाꣳसि हिनसन्निति साम हि नाष्ट्राणाꣳ रक्षसामपहन्ता ॥ १० ॥ आग्नेय्याङ्गायति । अग्निर्हि रक्षसामपहन्तातिच्छन्दसि गायत्येषा वै सर्वाणि छन्दाꣳसि यदतिच्छन्दास्तस्मादतिच्छन्दसि गायति ॥ ११ ॥ स गायति । अग्निष्टपति प्रतिदहत्यहावोऽहाव इति तन्नाष्ट्रा एवैतद्रक्षाꣳस्यतोऽपहन्ति ॥ १२ ॥ त उदञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्रेणाग्नीध्रमेषा हि यज्ञस्य द्वाः स यस्यान्ततो दिश आपो भवन्ति तद्यन्ति ॥ १३ ॥ तं वै परिष्यन्द उत्सादयेत् । तप्तो वा एष शुशुचानो भवति तं यदस्यामुत्सादयेदिमामस्य शुगृच्छेद्यदप्सूत्सादयेदपोऽस्य शुगृच्छेदथ यत्परिष्यन्द उत्सादयति तथो ह नैवापो हिनस्ति नेमां यदुहाप्सु न प्रास्यति तेनापो न हिनस्त्यथ यत्समन्तमापः परियन्ति शान्तिर्वा आप-

(१) शु० य० सं० ३८. १९ । (२) "परस्पायै०" इति 'घ' 'ञ' पुस्तकयोः । (३) शु० य० सं० ३८. १९ । (४) शु० य० सं० ३८. २१ । (५) शु० य० सं० ३८. २१ । (६) "वै तद०" इति 'घ' 'ञ' पुस्तकयोः ।

स्तेनो ऽइमान्त्स् हिनस्ति तस्मात्परिष्यन्द ऽउत्सादयेत्
॥ १४ ॥ उत्तरवेद्यां त्वेवोत्सादयेत् । यज्ञो वा ऽउत्तरवेदिः
शिरः प्रवर्ग्यो यज्ञ ऽएवैतच्छिरः प्रतिदधाति ॥ १५ ॥
उत्तरनाभ्या सꣳस्पृष्टम् । प्रथमम्प्रवर्ग्यमुत्सादयति
वाग्वा ऽउत्तरनाभिः शिरः प्रवर्ग्यः शीर्षंस्तद्वाचन्दधाति
॥ १६ ॥ 'चतुःस्रक्ति'रिति । एष वै चतुःस्रक्तिर्य ऽएष
तपति दिशो ह्येतस्य स्रक्तयस्तस्मादाह चतुःस्रक्तिरिति
॥ १७ ॥ 'नाभिर्ऋतस्य सप्रथा' ऽइति । सत्यं वा ऽऋतꣳ
सत्यस्य नाभिः सप्रथा ऽइत्येवैतदाह 'स नो विश्वायुः
सप्रथा' ऽइति स नः सर्वायुः सप्रथा ऽइत्येवैतदाह
॥ १८ ॥ 'अप द्वेषो ऽअप ह्वर' ऽइति । नात्र तिरोहित-
मिवास्त्य'न्यव्रतस्य सश्चिम'इत्यन्यद्वा ऽएतस्य व्रतमन्यन्म-
नुष्याणान्तस्मादाहान्यव्रतस्य सश्चिमेत्यवमितरौ प्राञ्चौ
तन्निवृत्त्रिवृद्धीदꣳ शिरः ॥ १९ ॥ पुरस्तादुपशयाम्मृदम् ।
माꣳसमेवास्मिन्नेतद्दधाति तदभितः परीशासौ * बाहू
ऽएवास्मिन्नेतद्दधात्यभितः परे रौहिणहवण्यौ स्रुचौ
हस्तावेवास्मिन्नेतद्दधाति ॥ २० ॥ उत्तरतोऽभ्रिम् † । तद्धि
तस्या ऽआयतनन्दक्षिणतः सम्राडासन्दीन्तद्धि तस्या
ऽआयतनमुत्तरतः कृष्णाजिनन्तद्धि तस्यायतनः सर्वतो
धवित्राणि ‡ प्राणा वै धवित्राणि प्राणानेवास्मिन्नेतद्द-

---

(१) शु० य० सं० ३८ २०। (२) शु० य० सं० ३८ २०। (३) शु० य० सं० ३८, २०। (४) शु० य० सं० ३८ २०। (५) शु० य० सं० ३८, २०।

* 'परीशासावभित' (का० श्रौ० सू० २६ ७, १७) इति।

† 'अभितुरस' (का० सू० २६ ७, १९) इति।

‡ का० श्रौ० सू० २६ ७ २१।

धाति त्रीणि भवन्ति त्रयो वै प्राणाः प्राण ऽउदानो
व्यानस्तानेवास्मिन्नेतद्दधाति ॥२१॥ अथैतद्रज्जुसन्दानम् ।
उपयमन्यामाधाय पश्चात्प्राचीमासादयत्युदरमेवास्मि-
न्नेतद्दधाति तदभितः पिन्वने ऽआण्डावेवास्मिन्नेतद्दधा-
त्याण्डाभ्यां हि वृषा पिन्वते पश्चात्स्थूणामयूखमूरू
ऽएवास्मिन्नेतद्दधाति पश्चाद्रौहिणकपाले जानुनी ऽएवा-
स्मिन्नेतद्दधाति ते यदेककपाले भवत ऽएककपाले ऽइव
हीमे जानुनी पश्चाद्धृष्टी पादावेवास्मिन्नेतद्दधाति पादा-
भ्याᳬ हि धृष्टकप्रहरत्युत्तरतः खरौ प्रचरणीयौ तद्धि
तयोरायतनन्दक्षिणतो मार्ज्जालीयन्तद्धि तस्यायतनम् ॥२२॥
अथास्मिन्पय ऽआनयति । 'घर्म्मैतत्ते पुरीष'मित्यन्नं वै
पुरीषमन्नमेवास्मिन्नेतद्दधाति 'तेन वर्द्धस्व चा च प्या-
यस्वे'ति नात्र तिरोहितमिवास्ति 'वर्द्धिषीमहि च वयमा
च प्यासिषीमही'त्याशिषमेवैतदाशास्ते ॥ २३ ॥ स वै
न सर्वमिवानयेत् । नेद्यजमानात्परागन्नमसदित्यर्द्धं वा
भूयो वा परिशिनष्टि तस्मिन्नपराह्णे यजमानाय व्रत-
मभ्युत्सिच्य प्रयच्छति तद्यजमान ऽएवैतदन्नाद्यन्द-
धाति तथो ह यजमानान्न परागन्नम्भवति ॥ २४ ॥ अ-
थैनमद्भिः परिषिञ्चति । शान्तिर्वा ऽआपः शमयत्येवैन-
मेतत्सर्वतः परिषिञ्चति सर्वत ऽएवैनमेतच्छमयति
त्रिष्कृत्वः परिषिञ्चति त्रिवृद्धि यज्ञः ॥ २५ ॥ अथाह

(१) शु० य० सं० ३८. २१। (२) शु० य० स० ३८. २१। (३) शु० य० सं० ३८. २१।

शीर्षंस्तन्मुखन्दधाति ॥ २९ ॥ स ऽआनीयमान ऽआह ।
होतर्वदस्व यत्ते व्वाच्यमिति व्वदते ह्यत्र होताथोपोत्तिष्ठन्नाह
'ऽश्रातꣳ हवि'रिति श्रातꣳ हि भवत्यतिक्रम्याऽश्राव्याह
दधिघर्म्मस्य यजेति व्वषट्कृते जुहोत्यनुव्वषट्कृत ऽआह-
रति भक्षन्तं ऽयजमानाय प्प्रयच्छति ॥ ३० ॥ स ऽउप-
हवमिष्ट्वा भक्षयति । 'मयि त्यदिन्द्रियम्बृह'दित्येतद्वा
ऽइन्द्रियम्बृहद्य ऽएष तपति 'मयि दक्षो मयि क्रतु'रिति
क्रतूदक्षावेवात्मन्धत्ते 'घर्म्मस्त्रिशुग्विराजती'ति घर्म्मो
ह्येष त्रिशुग्विराजति 'विराजा ज्योतिषा सहे'ति विराजा
ह्येष ज्योतिषा सह 'ब्रह्मणा तेजसा सहे'ति ब्ब्रह्मणा
ह्येष तेजसा सह 'पयसो रेत ऽआभृत'मिति पयसो ह्येत-
द्रेत ऽआभृत'न्तस्य दोहमशीमह्युत्तरामुत्तराꣳ समा'मित्या-
शिषमेवैतदाशास्तेऽथ चात्वाले मार्जयन्तेऽसावेव बन्धुः
॥ ३१ ॥ अथातो दक्षिणानाम् । सुवर्णꣳ हिरण्मयꣳ
शतमानम्ब्रह्मणे ददात्यासीनो वै ब्रह्मा यशꣳ शयानꣳ
हिरण्मयन्तस्मात्सुवर्णꣳ हिरण्मयꣳ शतमानम्ब्रह्मणे ददाति
॥ ३२ ॥ अथ यैषा घर्म्मदुघा । तामध्वर्य्यवे ददाति तप्त
ऽइव वै घर्म्मस्तप्तमिवाध्वर्य्युर्न्निष्क्रामति तस्मात्तामध्व-
र्य्यवे ददाति ॥ ३३ ॥ अथ यैषा यजमानस्य व्व्रतदुघा ।
ताꣳ होत्रे ददाति यज्ञो वै होता यज्ञो यजमानस्तस्मा-
त्ताꣳ होत्रे ददाति ॥ ३४ ॥ अथ यैषा पत्न्यै व्व्रतदुघा ।

(१) ऋ० सं० ८. ८. १७। (२) शु० य० सं० १८. २७। (३) शु० य० सं० १८. २७। (४) शु० य० सं० १८. २७। (५) शु० य० सं० १८. २४। (६) शु० य० सं० १८. २७। (७) शु० य० सं० १८. २८। (८) शु० य० सं० १८. २८।

तामुद्गातृभ्यो ददाति पत्नीकर्म्मैव वा ऽएतेऽत्र कुर्वन्ति यदुद्गातारस्तस्मात्तामुद्गातृभ्यो ददाति ॥ ३५ ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्रविशति य ऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ ३६ ॥

तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

—०—

[ घर्मभेदे प्रायश्चित्तम्, प्रवर्ग्यप्रशंसा च ]

सर्वेषां वा ऽएष भूतानाम् । सर्वेषान्देवानामात्मा यद्यज्ञस्तस्य समृद्धिमनु यजमानः प्रजया पशुभिर्ऋध्यते वि वा ऽएष प्रजया पशुभिर्ऋध्यते यस्य घर्म्मो विदीर्यते तत्र प्रायश्चित्तिः ॥ १ ॥ पूर्णाहुतिञ्जुहोति । सर्वं वै पूर्णः सर्वेणैवैतद्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ २ ॥ 'स्वाहा प्राणेभ्यः साधिपतिकेभ्य' ऽइति । मनो वै प्राणानामधिपतिर्म्मनसि हि सर्वे प्राणाः प्रतिष्ठितास्तन्मनसैवैतद्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ३ ॥ 'पृथिव्यै स्वाहे'ति । पृथिवी वै सर्वेषान्देवानामायतनन्तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ४ ॥ 'अग्नये स्वाहे'ति । अग्निर्वै सर्वेषान्देवानामात्मा तत्सर्वाभिरेवैतद्देवताभिर्भिषज्यति यत्किञ्च विवृढं यज्ञस्य ॥ ५ ॥ 'अन्तरिक्षाय स्वाहे'ति । अन्तरिक्षं वै सर्वेषान्देवानामायतनन्तत्सर्वाभि-

(१) शु० य० मा० ३९. १ । (२) शु० य० सं० ३९. १ । (३) शु० य० मा० ३९. १ । (४) शु० य० मा० ३९. १ ।

रेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं व्यज्ञस्य ॥ ६ ॥
'वायवे स्वाहे'ति । वायुर्वै सर्वेषान्देवानामात्मा तत्सर्वा-
भिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं व्यज्ञस्य ॥ ७ ॥
'दिवे[२] स्वाहे'ति । द्यौर्वै सर्वेषान्देवानामायतनन्तत्सर्वाभि-
रेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं व्यज्ञस्य ॥ ८ ॥
'सूर्याय स्वाहे'ति । सूर्यो वै सर्वेषान्देवानामात्मा तत्सर्वा-
भिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं व्यज्ञस्य ॥ ९ ॥
'दिग्भ्यः स्वाहे'ति । दिशो वै सर्वेषान्देवानामायतनन्त-
त्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं व्यज्ञस्य
॥ १० ॥ 'चन्द्राय स्वाहे'ति । चन्द्रो वै सर्वेषान्देवानामात्मा
तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च विवृढं व्यज्ञस्य
॥ ११ ॥ 'नक्षत्रेभ्यः स्वाहे'ति । नक्षत्राणि वै सर्वेषा-
न्देवानामायतनन्तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति यत्किञ्च
विवृढं व्यज्ञस्य ॥ १२ ॥ 'अद्भ्यः स्वाहे'ति । आपो
वै सर्वेषान्देवानामायतनन्तत्सर्वाभिरेवैतद्देवताभिर्भिषज्ज्यति
यत्किञ्च विवृढं व्यज्ञस्य ॥ १३ ॥ 'वरुणाय स्वाहे'ति ।
वरुणो वै सर्वेषान्देवानामात्मा तत्सर्वाभिरेवैतद्देवताभिर्भि-
षज्ज्यति यत्किञ्च विवृढं व्यज्ञस्य ॥ १४ ॥ 'नाभ्यै स्वाहा
पूताय स्वाहे'ति । अनिरुक्तमनिरुक्तो वै प्रजापतिः
प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञम्भिषज्ज्यति ॥ १५ ॥

---

(१) शु० य० सं० ३६ ११ (२) शु० य० सं० ३९ १। (३) शु० य० सं० ३९ १। (४) शु० य० सं० ३९. २। (५) शु० य० सं० ३९ १। (६) शु० य० सं० ३९ २। (७) शु० य० सं० ३९. २। (८) शु० य० सं० ३९ २।
(९) शु० य० सं० ३९ २।

त्रयोदशैता ऽआहुतयो भवन्ति। त्रयोदश वै मासाः
सँवत्सरस्य सँवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तत्प्रजा-
पतिमेवैतद्यज्ञम्भिषज्यति ॥ १६ ॥ 'वाचे स्वाहे'ति। मु-
खमेवास्मिन्नेतद्दधाति 'प्राणाय स्वाहा प्राणाय स्वा-
हे'ति नासिके ऽएवास्मिन्नेतद्दधाति 'चक्षुषे स्वाहा चक्षुषे
स्वाहे'त्यक्षिणी ऽएवास्मिन्नेतद्दधाति 'श्रोत्राय स्वाहा
श्रोत्राय स्वाहे'ति कर्णावेवास्मिन्नेतद्दधाति ॥ १७ ॥
सप्तैता ऽआहुतयो भवन्ति। सप्त वा ऽइमे शीर्षन्प्राणा-
स्तानेवास्मिन्नेतद्दधाति पूर्णाहुतिमुत्तमाञ्जुहोति सर्वं वै
पूर्णः सर्वेणैवैतद्भिषज्यति यत्किञ्च विवृढं यज्ञस्य
॥ १८ ॥ 'मनसः काममाकूति'मिति। मनसा वा ऽइदः
सर्वमाप्तन्तन्मनसैवैतद्भिषज्यति यत्किञ्च विवृढं यज्ञस्य
॥ १९ ॥ 'वाचः सत्यमशीये'ति। वाचा वा ऽइदः सर्व-
माप्तन्तद्वाचैवैतद्भिषज्यति यत्किञ्च विवृढं यज्ञस्य 'पशूं-
नाᳩ रूपमन्नस्य रसो यशः श्रीः श्रयताम्मयि स्वाहे'-
त्याशिषमेवैतदाशास्ते ॥ २० ॥ अथ तञ्चोपशयाञ्च पिष्ट्वा।
मार्त्स्नया मृदा सᳩसृज्यावृता करोत्यावृता पचत्युत्सा-
दनार्थमथ य ऽउपशययोर्द्वढः स्यात्तेन प्रचरेत् ॥ २१ ॥
सँवत्सरो वै प्रवर्ग्यः। सर्वं वै सँवत्सरः सर्वम्प्रवर्ग्यः
स यत्प्रवृक्तस्तद्वसन्तो यद्रुचितस्तद्ग्रीष्मो यत्पिन्वितस्त-

(१) शु० य० सं० ३९. २। (२) शु० य० सं० ३९. ३। (३) शु० य० सं० ३९. ३। (४) शु० य० सं० ३९. ३। (५) शु० य० सं० ३९. ४। (६) शु० य० सं० ३९. ४। (७) शु० य० सं० ३९. ४।

द्वर्षा यदा वै वर्षाः पिन्वन्तेऽथैनाः सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वन्ते ह वा ऽअस्मै वर्षा य ऽएवमेतद्वेद ॥ २२ ॥ इमे वै लोकाः प्रवर्ग्यः । सर्वं वा ऽइमे लोकाः सर्वम्प्रवर्ग्यः स यत्प्रवृक्तस्तदयंल्लोको यद्रुचितस्तदन्तरिक्षलोको यत्पिन्वितस्तदसौ लोको यदा वा ऽअसौ लोकः पिन्वतेऽथैनः सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वते ह वा ऽअस्मा ऽअसौ लोको य ऽएवमेतद्वेद ॥ २३ ॥ एता वै देवताः प्रवर्ग्यः । अग्निर्वायुरादित्यः सर्वं वा ऽएता देवताः सर्वम्प्रवर्ग्यः स यत्प्रवृक्तस्तदग्निर्यद्रुचितस्तद्वायुर्यत्पिन्वितस्तदसावादित्यो यदा वा ऽअसावादित्यः पिन्वतेऽथैनः सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वते ह वा ऽअस्मा ऽअसावादित्यो य ऽएवमेतद्वेद ॥ २४ ॥ यजमानो वै प्रवर्ग्यः । तस्यात्मा प्रजा पशवः सर्वं वै यजमानः सर्वम्प्रवर्ग्यः स यत्प्रवृक्तस्तदात्मा यद्रुचितस्तत्प्रजा यत्पिन्वितस्तत्पशवो यदा वै पशवः पिन्वन्तेऽथैनान्त्सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वन्ते ह वा ऽअस्मै पशवो य ऽएवमेतद्वेद ॥ ॥ २५ ॥ अग्निहोत्रं वै प्रवर्ग्यः । सर्वं वा ऽअग्निहोत्रः सर्वम्प्रवर्ग्यः स यदधिश्रितन्तत्प्रवृक्तो यदुन्नीतन्तद्रुचितो यद्धुतन्तत्पिन्वितो यदा वा ऽअग्निहोत्रम्पिन्वतेऽथैनत्सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वते ह वा ऽअस्मा ऽअग्निहोत्रं य ऽएवमेतद्वेद ॥ २६ ॥ दर्शपूर्णमासौ वै प्रवर्ग्यः । सर्वं वै दर्शपूर्णमासौ सर्व-

म्प्रवर्ग्यः स यदधिश्रितस्तत्प्रवृक्तो यदुासन्नन्तद्रुचितो यद्धुतन्तद्‌पिन्वितो यदा वै दर्शपूर्णमासौ पिन्वेते ऽथैनौ सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वेते ह वा ऽअस्मै दर्शपूर्णमासौ य ऽएवमेतद्वेद ॥ २७ ॥ चातुर्म्मास्यानि वै प्रवर्ग्यः । सर्वं वै चातुर्म्मास्यानि सर्वम्प्रवर्ग्यः स यदधिश्रितन्तत्प्रवृक्तो यदुासन्नन्तद्रुचितो यद्धुतन्तद्‌पिन्वितो यदा वै चातुर्म्मास्यानि पिन्वन्तेऽथैनानि सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वन्ते ह वा ऽअस्मै चातुर्म्मास्यानि य ऽएवमेतद्वेद ॥ २८ ॥ पशुबन्धो वै प्रवर्ग्यः । सर्वं वै पशुबन्धः सर्वम्प्रवर्ग्यः स यदधिश्रितस्तत्प्रवृक्तो यदुासन्नस्तद्रुचितो यद्धुतस्तद्‌पिन्वितो यदा वै पशुबन्धः पिन्वतेऽथैनꣳ सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वते ह वा ऽअस्मै पशुबन्धो य ऽएवमेतद्वेद ॥ २९ ॥ सोमो वै प्रवर्ग्यः । सर्वं वै सोमः सर्वम्प्रवर्ग्यः स यदभिषुतस्तत्प्रवृक्तो यदुन्नीतस्तद्रुचितो यद्धुतस्तद्‌पिन्वितो यदा वै सोमः पिन्वतेऽथैनꣳ सर्वे देवाः सर्वाणि भूतान्युपजीवन्ति पिन्वते ह वा ऽअस्मै सोमो य ऽएवमेतद्वेद न ह वा ऽअस्या प्रवर्ग्येण केन चन यज्ञेनेष्टम्भवति य ऽएवमेतद्वेद ॥ ३० ॥ अथैतद्वै । आयुरेतज्ज्योतिः प्रविशति य ऽएतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्य्या या सृष्टौ ॥ ३१ ॥

तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

माध्यन्दिनीये शतपथब्राह्मणे द्वितीयः प्रपाठकः ॥२॥ कण्डिकासंख्या ॥१२२॥

इति तृतीयोऽध्यायः ॥ ३ ॥

[ बृहदारण्यकम् * ]

( कोऽसौ पाप्मा मृत्युः, कुतो वा तस्योद्भवः, केन वा तस्यातिक्रमणम्, कथं चेत्येतत्सर्वं स्पष्टयति )

द्वया ह प्राजापत्याः। देवाश्चासुराश्च ततः कानीयसा ऽएव देवा ज्यायसा ऽअसुरास्त ऽएषु लोकेष्वस्पर्धन्त ॥ १ ॥ ते ह देवा ऽऊचुः। हन्तासुरान्यज्ञ ऽउद्गीथेनात्ययामेति ॥ २ ॥ ते ह वाचमूचुः। त्वन्न ऽउद्गायेति तथेति तेभ्यो वागुदगायद्यो वाचि भोगस्तन्देवेभ्य ऽआगायद्यत्कल्याणं वदति तदात्मने तेऽविदुरनेन वै न ऽउद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स ऽएव स पाप्मा ॥ ३ ॥ अथ ह प्राणमूचुः। त्वन्न ऽउद्गायेति तथेति तेभ्यः प्राण ऽउदगायद्यः प्राणे भोगस्तन्देवेभ्य ऽआगायद्यत्कल्याणञ्जिघ्रति तदात्मने तेऽविदुरनेन वै न ऽउद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपञ्जिघ्रति स ऽएव स पाप्मा ॥४॥ अथ ह चक्षुरूचुः। त्वन्न ऽउद्गायेति तथेति तेभ्यश्चक्षुरुदगायद्यश्चक्षुषि भोगस्तन्देवेभ्य ऽआगायद्यत्कल्याणम्पश्यति तदात्मने तेऽविदुरनेन वै न ऽउद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्त्स यः स पाप्मा यदेवेदमप्रतिरूपम्पश्यति स ऽएव स पाप्मा ॥ ५ ॥ अथ ह श्रोत्रमूचुः। त्वन्न ऽउद्गायेति तथेति तेभ्यः श्रोत्रमुदगायद्यः

* बृहत्त्वं चास्य ब्रह्मविद्यादेवतानामन्तरङ्गबहिरङ्गभूतानां बहूनामिहोपदेशात्, अर्थतो ग्रन्थपरिमाणतश्च बहुत्वात्। आरण्यकत्वं चास्य नियमपूर्वकमरण्येऽनूच्यमानत्वात्।

श्रोत्रे भोगस्तन्देवेभ्य ऽआगायद्यत्कल्याणꣳ शृणोति तदात्मने तेऽविदुरनेन वै न ऽउद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविद्ध्यन्त्स यः स पाप्मा यदेवेद- मप्रातिरूपꣳ शृणोति स ऽएव स पाप्मा ॥ ६ ॥ अथ ह मन ऽऊचुः । त्वन्न ऽउद्गायेति तथेति तेभ्यो मन ऽउद्गायद्यो मनसि भोगस्तन्देवेभ्य ऽआगायद्यत्क- ल्याणꣳ सङ्कल्पयति तदात्मने तेऽविदुरनेन वै न ऽउद्गा- त्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविद्ध्यन्त्स यः स पाप्मा यदेवेदमप्रातिरूपꣳ सङ्कल्पयति स ऽएव स पाप्मै- वमु खल्वेता देवताः पाप्मभिरुपासृजन्नेवमेनाः पाप्मना- विद्ध्यन् ॥ ७ ॥ अथ हेममासन्न्यम्प्राणमूचुः । त्वन्न ऽउ- द्गायेति तथेति तेभ्य ऽएष प्राण ऽउदगायत्तेऽविदुरनेन वै न ऽउद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविव्यत्स- न्त्सं स्यथाश्मानमृत्वा लोष्टो विद्ध्वꣳसेतैवꣳ हैव विद्ध्वꣳ- समाना विष्वञ्चो विनेशुस्ततो देवा ऽअभवन्पराऽसुरा भव- त्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य ऽएवं वेद ॥ ८ ॥ ते होचुः । क नु सोऽभूद्यो न ऽइत्थमसक्तेत्यय- मास्येऽन्तरिति सोऽयास्य ऽआङ्गिरसोऽङ्गानाꣳ हि रसः ॥ ९ ॥ सा वा ऽएषा देवता । दूर्नाम दूरꣳ ह्यस्या मृत्युर्दूरꣳ ह वा ऽअस्मान्मृत्युर्भवति य एवं वेद ॥ १० ॥ सा वा ऽएषा देवता । एतासान्देवतानाम्पाप्मानम्मृत्यु- मपहृत्य यत्रासान्दिशामन्तस्तद्गमयाञ्चकार तदासाम्पाप्म-

(१) सन्त्स" इति 'ग' 'ज' पुस्तकयोः ।

नो विन्न्यदधात्तस्माज्ञ जनमियान्नान्तमियान्नेत्पाप्मानम्मृत्युमन्न्ववायानीति ॥ ११ ॥ सा वा ऽएषा देवता । एतासान्देवतानाम्पाप्मानम्मृत्युमपहत्याथैना मृत्युमत्यवहत् ॥ १२ ॥ स वै वाचमेव प्प्रथमामत्त्यवहत् । सा यदा मृत्युमत्यमुच्च्यत सोऽग्निरभवत्सोऽयमग्निः परेण मृत्युमतिक्क्रान्तो दीप्प्यते ॥ १३ ॥ अथ प्प्राणमत्यवहत् । स यदा मृत्युमत्यमुच्च्यत स वायुरभवत्सोऽयं वायुः परेण मृत्युमतिक्क्रान्तः पवते ॥ १४ ॥ अथ चक्षुरत्यवहत् । तद्यदा मृत्युमत्यमुच्च्यत स ऽआदित्योऽभवत्सोऽसावादित्यः परेण मृत्युमतिक्क्रान्तस्तपति ॥ १५ ॥ अथ श्श्रोत्रमत्यवहत् । तद्यदा मृत्युमत्यमुच्च्यत ता दिशोऽभवँस्ता ऽइमा दिशः परेण मृत्युमतिक्क्रान्ताः ॥ १६ ॥ अथ मनोऽत्यवहत् । तद्यदा मृत्युमत्यमुच्च्यत स चन्द्रमा ऽअभवत्सोऽसौ चन्द्रः परेण मृत्युमतिक्क्रान्तो भात्येवꣳ ह वा ऽएनमेषा देवता मृत्युमतिवहति य ऽएवं वेद ॥१७॥ अथात्मनेऽन्नाद्यमागायत् । यद्धि किञ्चान्नमद्यतेऽनेनैव तदद्यत ऽइह प्प्रतितिष्ठति ॥ १८ ॥ * ते देवा ऽअब्रुवन् । एतावद्वा ऽइदꣳ सर्वं यदन्नन्तदात्मन ऽआगासीरनु नोऽस्मिन्नन्न ऽआभजस्वेति ते वै माभिसँविशतेति तथेति तꣳ समन्तम्परिण्ण्यविशन्त तस्म्माद्यदनेनान्नमत्ति तेनैतास्तृप्प्यन्त्येवꣳ ह वा ऽएनꣳ स्वा ऽअभिसँविशन्ति भर्त्ता स्वानाꣳ श्श्रेष्ठः पुर ऽएता भवत्यन्नादोऽधिपतिर्य

* अत्र धनम् ७१०० ।

ऽएवं वेद ॥ १९ ॥ य ऽउ हैवंविदम् । स्वेषु प्रतिप्प्रति-
र्व्वुभूषति न हैवालम्भार्य्येब्भ्यो भवत्यथ य ऽएवैतमनु
भवति यो वैतमनु भार्य्यान्बुभूर्षति स हैवालम्भार्य्येब्भ्यो
भवति ॥ २० ॥ सोऽयास्य ऽआङ्गिरसः । अङ्गानाᳪं हि
रसः प्प्राणो वा ऽअङ्गानाᳪं रसः प्प्राणो हि वा ऽअङ्गानाᳪं
रसस्तस्माद्यस्मात्कस्माच्चाङ्गात्प्राण ऽउत्क्रामति तदेव
तच्छुष्यत्येष हि वा ऽअङ्गानाᳪं रसः ॥२१॥ एष ऽउ ऽएव
बृहस्प्पतिः । वाग्वै बृहती तस्या ऽएष पतिस्तस्मादु
बृहस्प्पतिः ॥ २२ ॥ एष ऽउ ऽएव ब्रह्मणस्प्पतिः । वाग्वै
ब्रह्म तस्या ऽएष पतिस्तस्मादु * ब्रह्मणस्प्पतिः ॥ २३ ॥
एष ऽउ ऽएव साम । वाग्वै सामैष सा चामश्चेति
तत्साम्म्नः सामत्वं यद्वेव समः प्लुषिणा समो मशकेन
समो नागेन सम ऽएभिस्त्रिभिर्ल्लोकैः समोऽनेन सर्व्वेण
तस्माद्वेव सामाश्नुते साम्म्नः सायुज्यᳪं सलोकतां य
ऽएवमेतत्साम वेद ॥ २४ ॥ एष ऽउ वा ऽउद्गीथः ।
प्प्राणो वा ऽउत्प्राणेन हीदᳪं सर्व्वमुत्तब्धं वागेव गीथोच्च
गीथा चेति स ऽउद्गीथः ॥ २५ ॥ तद्धापि ब्रह्मदत्तश्चै-
कितानेयः । राजानम्भक्षयन्नुवाचायन्त्यस्य राजा मूर्द्धानं
विपातयताद्यदितोऽयास्य ऽआङ्गिरसोऽन्येनोदगायदिति वा-
चा च ह्येव स प्प्राणेन चोदगायदिति ॥ २६ ॥ तस्य हैतस्य
साम्म्नो यः स्वं वेद । भवति हास्य स्वन्तस्य वै स्वर
ऽएव स्वन्तस्माद्यार्त्विज्यङ्करिष्यन्वाचि स्वरमिच्छेत तया

* अत्र 'प' 'ब' पुस्तकयो "ह" इत्यधिको पाठो ।

र्वाचा स्वरसम्पन्नयार्त्विज्यङ्कुर्यात्तस्माद्यज्ञे स्वरवन्त-न्दिदृक्षन्त ऽएवाथो यस्य स्वम्भवति भवति हास्य स्वं य ऽएवमेतत्साम्नः स्वं वेद ॥ २७ ॥ तस्य हैतस्य साम्नो यः सुवर्णं वेद । भवति हास्य सुवर्णन्तस्य वै स्वर ऽएव सुवर्णम्भवति हास्य सुवर्णं य ऽएवमेत-त्साम्नः सुवर्णं वेद ॥ २८ ॥ तस्य हैतस्य । साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष ऽएतत्प्राणः प्रतिष्ठितो गीयतेऽन्न ऽइत्यु हैक ऽआहुः ॥ २९ ॥ अथातः पवमानानामेवाभ्यारोहः । स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तुयात्त-देतानि जपेदसतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्मामृतङ्गमयेति ॥ ३० ॥ स यदाहासतो मा सद्गम-येति । मृत्युर्वा ऽअसत्सदमृतम्मृत्योर्मामृतङ्गमयामृतम्मा कुर्वित्येवैतदाह ॥ ३१ ॥ तमसो मा ज्योतिर्गमयेति । मृत्युर्वै तमो ज्योतिरमृतम्मृत्योर्मामृतङ्गमयामृतम्मा कु-र्वित्येवैतदाह मृत्योर्मामृतङ्गमयेति नात्र तिरोहितमिवास्ति ॥ ३२ ॥ अथ यानीतराणि स्तोत्राणि । तेष्वात्मनेऽन्नाद्यमा-गायेत्तस्मादु तेषु वरं वृणीत यङ्कामङ्कामयेत तः स ऽएष ऽएवंविदुद्गातात्मने वा यजमानाय वा यङ्कामङ्कामयते तमा-गायति तद्धैतल्लोकजिदेव न हैवालोक्यताया ऽआशास्ति य ऽएवमेतत्साम वेद ॥ ३३ ॥

चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥

[ ज्ञानकर्मणोः स्तुत्यर्थं तत्फलभूतस्य प्रजापतेर्जगत्सृष्ट्यादौ स्वातन्त्र्यविभूतिवर्णनेन फलोत्कर्षवर्णनम् ]

आत्मैवेदमग्र ऽआसीत् । पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहन्नामाभवत्तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र ऽउक्त्वाथान्यन्नाम प्रब्रूते यदस्य भवति ॥ १ ॥ स यत्पूर्वोऽस्मात्सर्वस्मात् । सर्वान्पाप्मन ऽऔषत्तस्मात्पुरुष ऽओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य ऽएवं वेद ॥ २ ॥ सोऽबिभेत् । तस्मादेकाकी बिभेति स हायमीक्षाञ्चक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत ऽएवास्य भयं वीयाय कस्माद्ध्यभेष्यद्द्वितीयाद्वै भयम्भवति ॥ ३ ॥ स वै नैव रेमे । तस्मादेकाकी न रमते स द्वितीयमैच्छत्स हैतावानास यथा स्त्रीपुमाꣳसौ सम्परिष्वक्तौ ॥ ४ ॥ स ऽइममेवात्मानन्द्वेधापातयत् । ततः पतिश्च पत्नी चाभवतान्तस्मादिदमर्द्धवृगलमिव स्व ऽइति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्य्यत ऽएव ताꣳ समभवत्ततो मनुष्या ऽअजायन्त ॥५॥ सो हेयमीक्षाञ्चक्रे । कथन्नु मात्मन ऽएव जनयित्वा सम्भवति हन्त तिरोऽसानीति ॥ ६ ॥ सा गौरभवत् । वृषभ ऽइतरस्ताꣳ समेवाभवत्ततो गावोऽजायन्त ॥ ७ ॥ वडवेतराभवत् । अश्ववृष ऽइतरो गर्द्दभीतरा गर्द्दभ ऽइतरस्ताꣳ समेवाभवत्तत ऽएकशफमजायत ॥ ८ ॥ अजेतराभवत् । वस्त इतरोऽविरितरा मेष ऽइतरस्ताꣳ समेवाभवत्ततोऽजावयोऽजायन्तैवमेव यदि-

(१) "-रो" इति 'ग' 'घ' पुस्तकयोः ।

दद्भिश्च मिथुनमा पिपीलिकाभ्यस्तत्सर्वमसृजत ॥ ९ ॥
सोऽवेत् । अहं वाव सृष्टिरस्म्यहꣳ हीदꣳ सर्वमसृक्षीति
ततः सृष्टिरभवत्सृष्ट्याꣳ हास्यैतस्याम्भवति य एवं
वेद ॥ १० ॥ अथेत्यभ्यमन्थत् । स मुखाच्च योनेर्हस्ता-
भ्यां चाग्निमसृजत तस्मादेतदुभयमलोमकमन्तरतोऽलो-
मका हि योनिरन्तरतः ॥ ११ ॥ तद्यदिदमाहुः । अमुं
यजामुं यजेत्येकैकन्देवमेतस्यैव सा विसृष्टिरेष उ
ह्येव सर्वे देवाः ॥ १२ ॥ अथ यत्किंचेदमार्द्रम् । तद्रेतसोऽ-
सृजत तदु सोम एतावद्वा इदꣳ सर्वमन्नं चैवान्नादश्च
सोम एवान्नमग्निरन्नादः ॥ १३ ॥ सैषा ब्रह्मणोऽति-
सृष्टिः । यच्छ्रेयसो देवानसृजताथ यन्मर्त्यः सन्नमृतान-
सृजत तस्मादतिसृष्टिरतिसृष्ट्याꣳ हास्यैतस्याम्भवति
य एवं वेद ॥ १४ ॥ तद्धेदन्तर्ह्यव्याकृतमासीत् । तन्ना-
मरूपाभ्यामेव व्याक्रियतासौनामायमिदꣳ रूप इति
तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौनामा-
यमिदꣳ रूप इति ॥ १५ ॥ स एष इह प्रविष्टः ।
आ नखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वं-
भरो वा विश्वम्भरकुलाये तन्न पश्यन्त्यकृत्स्नो हि सः ॥१६॥
प्राणन्नेव प्राणो नाम भवति । वदन्वाक्पश्यꣳश्चक्षुः शृण्वꣳ-
श्छ्रोत्रम्मन्वानो मनस्तान्यस्यैतानि कर्म्मनामान्येव स योऽत
एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवति
॥१७॥ [अर्धः प्रपाठकः ॥५०॥] आत्मेत्येवोपासीत । अत्र ह्येते
सर्वे एकम्भवन्ति तदेतत्पदनीयमस्य सर्वस्य यदयमात्मा-

नेन ह्येतत्सर्वं वेद यथा ह वै पदेनानुविन्देदेवं कीर्त्तिꣳ
श्लोकं विन्दते य ऽएवं वेद ॥ १८ ॥ तदेतत्प्रेयः पुत्रात् ।
प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा
स योऽन्यमात्मनः प्रियम्ब्रुवाणम्ब्रूयात्प्रियꣳ रोत्स्य-
तीतीश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत स य
ऽआत्मानमेव प्रियमुपास्ते न हास्य प्रियम्प्रमायुकम्भ-
वति ॥ १९ ॥ तदाहुः । यद्ब्रह्मविद्यया सर्वम्भविष्यन्तो
मनुष्या मन्यन्ते किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति
॥ २० ॥ ब्रह्म वा ऽइदमग्र ऽआसीत् । तदात्मानमेवावेदह-
म्ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्तद्यो यो देवानाम्प्रत्य-
बुध्यत स ऽएव तदभवत्तथर्षीणान्तथा मनुष्याणाम्
॥ २१ ॥ तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे । अहम्मनुर-
भवꣳ सूर्यश्चेति तदिदमप्येतर्हि य ऽएवं वेदाहम्ब्रह्मा-
स्मीति स इदꣳ सर्वम्भवति तस्य ह न देवाश्चनाभूत्या
ऽईशत ऽआत्मा ह्येषाꣳ स भवत्यथ योऽन्यान्देवतामुपा-
स्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवꣳ
स देवानां यथा ह वै बहवः पशवो मनुष्यम्भुञ्ज्युरेव-
मेकैकः पुरुषो देवान्भुनक्त्येकस्मिन्नेव पशावादीयमानेऽ-
प्रियम्भवति किमु बहुषु तस्मादेषान्तन्न प्रियं यदे-
तन्मनुष्या विद्युः ॥ २२ ॥ ब्रह्म वा ऽइदमग्र ऽआसीत् ।
एकमेव तदेकꣳ सन्न व्यभवत्तच्छ्रेयो रूपमत्यसृजत
क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः
पर्जन्यो यमो मृत्युरीशान ऽइति तस्मात्क्षत्रात्परन्नास्ति

तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र
ऽएव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म तस्मा-
द्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत ऽउपनिश्रयति
स्वां योनिं य ऽउ एनं हिनस्ति स्वां स योनिमृच्छति
स पापीयान्भवति यथा श्रेयांसं हिंसित्वा ॥ २३ ॥
स नैव व्यभवत् । स विशमसृजत यान्येतानि देवजातानि
गणश ऽआख्यायन्ते वसवो रुद्रा ऽआदित्या विश्वे देवा
मरुत ऽइति ॥ २४ ॥ स नैव व्यभवत् । स शौद्रं वर्ण-
मसृजत पूषणमियं वै पूषेयं हीदं सर्वं पुष्यति यदि
दङ्किञ्च ॥२५॥ स नैव व्यभवत् । तच्छ्रेयो रूपमत्यसृजत
धर्म्मन्तदेतत्क्षत्रस्य क्षत्रं यद्धर्म्मस्तस्माद्धर्मात्परन्नास्त्यथो
ऽअबलीयान्बलीयांसमाशंसते धर्म्मेण यथा राज्ञैवं
यो वै स धर्म्मः सत्यं वै तत्तस्मात्सत्यं वदन्तमाहुर्द्धर्म्मं
वदतीति धर्म्मं वा वदन्तं सत्यं वदतीत्येतद्ध्येवैतदुभय-
म्भवति ॥ २६ ॥ तदेतद्ब्रह्म क्षत्रं विट् शूद्रः । तदग्नि-
नैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो
वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमि-
च्छन्ते ब्राह्मणे मनुष्येष्वेताभ्यां हि रूपाभ्याम्ब्र-
ह्माभवत् ॥ २७ ॥ अथ यो ह वा ऽअस्माल्लोकात्स्वँल्लो-
कमदृष्ट्वा प्रैति । स ऽएनमविदितो न भुनक्ति यथा वेदो
वाननूक्तोऽन्यद्वा कर्म्माकृतं यदु ह वा ऽअप्यनेवंविन्म-
हत्पुण्यङ्कर्म्म करोति तद्धास्यान्ततः क्षीयत ऽएवात्मान-

(१) 'यदि' इति 'ग' 'ज' पुस्तकयोः पाठः ।

मेव लोकमुपासीत स य ऽआत्मानमेव लोकमुपास्ते न हास्य कर्म्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत्कामयते तत्त- त्सृजते ॥ २८ ॥ अथो ऽअयं वा ऽआत्मा । सर्वेषाम्भूता- नाँल्लोकः स यज्जुहोति यद्यजते तेन देवानाँल्लोकोऽथ यदनु- ब्रूते तेनऽर्षीणामथ यत्प्रजामिच्छते यत्पितृभ्यो निपृ- णाति तेन पितृणामथ यन्मनुष्यान्वासयते यदेभ्योऽ- शनन्ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयाᳪस्या पिपीलिकाभ्य ऽउपजीवन्ति तेन तेषाँल्लोको यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेवᳪ हैवंविदे सर्वदा सर्वाणि भूतान्यरिष्टिमिच्छन्ति तद्वा ऽएतद्विदितम्मीमाᳪसितम् ॥ २९ ॥ आत्मैवेदमग्र ऽआसीत् । एक ऽएव सोऽ- कामयत जाया मे स्यादथ प्रजायेयाथ वित्तम्मे स्यादथ कर्म्म कुर्वीयेत्येतावान्वै कामो नेच्छँश्चनातो भूयो विन्देत्तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्या- दथ प्रजायेयाथ वित्तम्मे स्यादथ कर्म्म कुर्वीयेति स यावद- प्येतेषामेकैकन्न प्राप्नोत्यकृत्स्न ऽएव तावन्मन्यते तस्यो कृत्स्नता ॥ ३० ॥ मन ऽएवास्यात्मा । वाग्जाया प्राणः प्रजा चक्षुर्म्मानुषं वित्तञ्चक्षुषा हि तद्विन्दति श्रोत्र- न्दैवᳪ श्रोत्रेण हि तच्छृणोत्यात्मैवास्य कर्म्मात्मना हि कर्म्म करोति स ऽएष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदᳪ सर्वं यदिदङ्किञ्च तदिदᳪ सर्व- माप्नोति यदिदङ्किञ्च य ऽएवं वेद ॥ ३१ ॥

॥ चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ २ ॥

[ अद्यमानत्वेन सृष्टस्यान्नभूतस्य जगत उपासनार्थं
विभागेन सप्तधा निरूपणम् ]

यत्सप्तान्नानि मेधया तपसाजनयत्पिता ॥ एकमस्य साधारणन्द्वे देवानभाजयत् ॥ त्रीण्यात्मनेऽकुरुत पशुभ्य एकम्प्रायच्छत् ॥ तस्मिन्सर्वम्प्रतिष्ठितं यच्च प्राणिति यच्च न ॥ कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदा ॥ यो वै तामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन ॥ स देवानपिगच्छति स ऊर्जमुपजीवतीति श्लोकाः ॥ १ ॥ यत्सप्तान्नानि मेधया तपसाजनयत्पितेति । मेधया हि तपसाजनयत्पितैकमस्य साधारणमितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते स य एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रंह्येतत् ॥ २ ॥ द्वे देवानभाजयदिति । हुतञ्च प्रहुतञ्च तस्माद्देवेभ्यो जुह्वति च प्र च जुह्वत्यथो आहुर्दर्शपूर्णमासाविति तस्मान्नेष्टियाजुकः स्यात् ॥ ३ ॥ पशुभ्य एकम्प्रायच्छदिति । तत्पयः पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति तस्मात्कुमारञ्जातङ्घृतं वैवाग्रे प्रतिलेहयन्ति स्तनं वानुधापयन्ति ॥ ४ ॥ अथ वत्सञ्जातमाहुः । अतृणाद इति तस्मिन्सर्वम्प्रतिष्ठितं यच्च प्राणिति यच्च नेति पयसि हीदं सर्वम्प्रतिष्ठितं यच्च प्राणिति यच्च न ॥ ५ ॥ तद्यदिदमाहुः । संवत्सरम्पयसा जुह्वदप पुनर्मृत्युञ्जयतीति न तथा विद्याद्यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं विद्वान्सर्वं हि देवेभ्योऽन्नाद्यम्प्रयच्छति कस्मात्तानि न क्षीयन्तेऽद्य-

मानानि सर्वेदेति ॥ ६ ॥ पुरुषो वा ऽअक्षितिः । स हीदमन्नम्पुनः पुनर्ज्जनयते यो वै तामक्षितिं वेदेति पुरुषो वा ऽअक्षितिः स हीदमन्नन्धिया धिया जनयते कर्म्मभिर्य्यद्धैतन्न कुर्य्यात्क्षीयेत ह सोऽन्नमत्ति प्रतीकेनेति मुखम्प्रतीकम्मुखेनेत्येतत्स देवानपिगच्छति स ऽऊर्ज्जमुपजीवतीति प्रशंसा ॥ ७ ॥ त्रीण्यात्मनेऽकुरुतेति । मनो वाचम्प्राणन्तान्यात्मनेऽकुरुतान्यत्रमना ऽअभूवन्नादर्शमन्यत्रमना ऽअभूवन्नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति ॥ ८ ॥ कामः सङ्कल्पः । विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वम्मन ऽएव तस्मादपि पृष्ठत ऽउपस्पृष्टो मनसा विजानाति ॥ ९ ॥ यः कश्च शब्दो वागेव सा । एषा ह्यन्तमायत्तैषा हि न प्राणोऽपानो व्यान ऽउदानः समानोऽन ऽइत्येतत्सर्वम्प्राण ऽएवैतन्मयो वा ऽअयमात्मा वाङ्मयो मनोमयः प्राणमयः ॥ १० ॥ त्रयो लोका ऽएत ऽएव । वागेवायँल्लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥ ११ ॥ त्रयो वेदा ऽएत ऽएव । वागेवऽर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः ॥ १२ ॥ देवाः पितरो मनुष्या ऽएत ऽएव । वागेव देवा मनः पितरः प्राणो मनुष्याः ॥ १३ ॥ पिता माता प्रजैत ऽएव । मन ऽएव पिता वाङ्माता प्राणः प्रजा ॥ १४ ॥ विज्ञातं विजिज्ञास्यम् । अविज्ञातमेत ऽएव यत्किञ्च विज्ञातं वाचस्तद्रूपं वाग्घि विज्ञाता वागेनन्तद्भूत्वावति ॥१५॥ यत्किञ्च विजिज्ञास्यम् । मनसस्तद्रूपम्मनो

हि विजिज्ञास्यम्मन ऽएनन्तद्भूत्वावति ॥ १६ ॥ यत्किञ्चा-
विज्ञातम् । प्राणस्य तद्रूपम्प्राणो ह्यविज्ञातः प्राण ऽएनं-
न्तद्भूत्वावति ॥१७॥ तस्यै वाचः पृथिवी शरीरम् । ज्योती
रूपमयमग्निस्तद्यावत्येव वाकावती पृथिवी तावानयमग्निः
॥ १८ ॥ अथैतस्य मनसः । द्यौः शरीरञ्ज्योती रूप-
मसावादित्यस्तद्यावदेव मनस्तावती द्यौस्तावानसावा-
दित्यस्तौ मिथुनꣳ समैतान्ततः प्राणोऽजायत स ऽइन्द्रः
स एषोऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो
भवति य ऽएवं वेद ॥ १९ ॥ अथैतस्य प्राणस्यापः ।
शरीरञ्ज्योती रूपमसौ चन्द्रस्तद्यावानेव प्राणस्तावत्य
ऽआपस्तावानसौ चन्द्रः ॥२०॥ त ऽएते सर्व ऽएव समाः ।
सर्वेऽनन्ताः स यो हैतानन्तवत ऽउपास्तेऽन्तवन्तꣳ स
लोकञ्जयत्यथ यो हैताननन्तानुपास्तेऽनन्तꣳ स लोकञ्ज-
यति ॥ २१ ॥ स ऽएष सँवत्सरः । प्रजापतिः षोडश-
कलस्तस्य रात्रय ऽएव पञ्चदश कला ध्रुवैवास्य षोडशी
कला स रात्रिभिरेवा च पूर्य्यतेऽप च क्षीयते सोऽमा-
वास्याꣳ रात्रिमेतया षोडश्या कलया सर्वमिदम्प्राणभृद्-
नुप्रविश्य ततः प्रातर्जायते तस्मादेताꣳ रात्रिम्प्राण-
भृतः प्राणन्न विच्छिन्द्यादपि कृकलासस्यैतस्या ऽएव
देवताया ऽअपचित्यै ॥ २२ ॥ यो वै स सँवत्सरः ।
प्रजापतिः षोडशकलोऽयमेव स योऽयमेवंवित्पुरुषस्तस्य
वित्तमेव पञ्चदश कला ऽआत्मैवास्य षोडशी कला स

( १-२ ) "एव तद्भूत्वावति" इति 'ग' 'ज' पुस्तकयो. ।

वित्तेनैवा च पूर्य्यतेऽप च क्षीयते तदेतन्नक्ष्यं य्यदयमात्मा प्प्रधिर्वित्तन्तस्माद्यद्यपि सर्वञ्ज्यानिञ्जीयत ऽआत्मना चेज्जीवति प्प्रधिनागादित्याहुः ॥ २३ ॥ अथ त्रयो वाव लोकाः । मनुष्यलोकः पितृलोको देवलोक ऽइति सोऽयम्मनुष्यलोकः पुत्त्रेणैव जय्यो नान्येन कर्म्मणा कर्म्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकानाथं श्रेष्ठस्तस्माद्विद्याम्प्रशथंसन्ति ॥ २४ ॥ अथातः सम्प्रत्तिः । यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वम्ब्रह्म त्वं य्यज्ञस्त्वँल्लोक ऽइति स पुत्रः प्रत्याहाहम्ब्रह्माहं य्यज्ञोऽहँल्लोक ऽइति ॥ २५ ॥ यद्वै किञ्चानूक्तम् । तस्य सर्वस्य ब्रह्मेत्येकता ये वै के च यज्ञास्तेषाथं सर्वेषां य्यज्ञ ऽइत्येकता ये वै के च लोकास्तेषाथं सर्वेषाँल्लोक ऽइत्येकतैतावद्वा ऽइदथं सर्वमेतन्मा सर्वथं सन्नयमितोऽभुनजदिति तस्मात्पुत्रमनुशिष्टँल्लोक्यमाहुस्तस्मादेनमनुशासति स यदैवंविदस्माल्लोकात्प्रैत्यथैभिरेव प्प्राणैः सह पुत्रमाविशति स य्यद्यनेन किञ्चिदक्षणया कृतम्भवति तस्मादेनथं सर्वस्मात्पुत्रो मुञ्चति तस्मात्पुत्रो नाम स पुत्रेणैवास्मिँल्लोके प्प्रतितिष्ठत्यथैनमेते दैवाः प्प्राणा ऽअमृता ऽआविशन्ति ॥२६॥ पृथिव्यै चैनमग्नेश्च । दैवी वागाविशति सा वै दैवी वाग्यया य्यद्यदेव वदति तत्तद्भवति ॥ २७ ॥ दिवश्चैनमादित्याच्च । दैवम्मन ऽआविशति तद्वै दैवम्मनो येनानन्द्येव भवत्यथो न शोचति ॥ २८ ॥ अद्भ्यश्चैनञ्चन्द्रमसश्च । दैवः प्प्राण ऽआविशति स वै दैवः प्प्राणो यः

सञ्चरँश्चासञ्चरँश्च न व्यथतेऽथो न रिष्यति स
ऽएष ऽएवँवित्सर्वेषाम्भूतानामात्मा भवति यथैषा देव-
तैवꣳ स यथैतान्देवताꣳ सर्वाणि भूतान्यवन्त्येवꣳ हैवं-
विदꣳ सर्वाणि भूतान्यवन्ति यदु किञ्चेमाः प्रजाः
शोचन्त्यमैवासान्तद्भवति पुण्यमेवामुङ्गच्छति न ह वै
देवान्पापङ्गच्छति ॥ २९ ॥ अथातो व्रतमीमाꣳसा । प्रजा-
पतिर्ह कर्म्माणि ससृजे तानि सृष्टान्यन्योऽन्येनास्प-
र्द्धन्त वदिष्याम्म्येवाहमिति वाग्दध्रे द्रक्ष्याम्म्यहमिति
चक्षुः श्रोष्याम्म्यहमिति श्रोत्रमेवमन्न्यानि कर्म्माणि
यथाकर्म्म ॥ ३० ॥ तानि मृत्युः श्रमो भूत्वोपयेमे ।
तान्याप्नोत्तान्याप्त्वा मृत्युरवारुन्द्ध तस्माच्छ्राम्म्यत्येव
वाक्श्राम्म्यति चक्षुः श्राम्म्यति श्रोत्रमथेममेव नाप्नोद्योऽ-
यम्मद्ध्यमः प्राणः ॥ ३१ ॥ तानि ज्ञातुन्दध्रिरे । अयं वै
नः श्रेष्ठो यः सञ्चरँश्चासञ्चरँश्च न व्यथतेऽथो न रिष्यति
हन्तास्यैव सर्वे रूपम्भवामेति त ऽएतस्यैव सर्वे रूपमभवँ-
स्तस्मादेत ऽएतेनाख्यायन्ते प्राणा ऽइति तेन ह वाव
तत्कुलमाख्यायते यस्मिन्कुले भवति य ऽएवं वेद य
ऽउ हैवंविदा स्पर्द्धतेऽनुशुष्य हैवान्ततो म्रियत ऽइत्य-
द्ध्यात्मम् ॥ ३२ ॥ अथाधिदेवतम् । ज्वलिष्याम्म्येवाह-
मित्यग्निर्दध्रे तप्स्याम्म्यहमित्यादित्यो भास्याम्म्यहमिति
चन्द्रमा ऽएवमन्न्या देवता यथादेवतꣳ स यथैषाम्प्राणाना-
म्मद्ध्यमः प्राण ऽएवमेतासान्देवतानां वायुर्म्म्लोचन्ति
ह्यन्न्या देवता न वायुः सैषानस्तमिता देवता यद्वायुः

॥ ३३ ॥ अथैष श्लोको भवति । यतश्चोदेति सूर्य्योऽस्तं
यत्र च गच्छतीति प्प्राणाद्वा ऽएष ऽउदेति प्प्राणेऽस्तमेति
तन्देवाश्चक्रिरे धर्म्मᳯ स ऽएवाद्य स ऽउ श्व ऽइति यद्वा
ऽएतेऽमुर्ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति तस्मादेकमेव व्रत-
ञ्चरेत्प्राण्याच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नवदिति
यद्यु चरेत्समापिपयिषेत्तेनो ऽएतस्यै देवतायै सायुज्यᳯ
सलोकताञ्जयति य ऽएवं वेद ॥ ३४ ॥

चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३ ॥

—o—

[ प्रपञ्चितस्याविद्याकार्यस्य संक्षेपेणोपसंहारः ]

त्रयं वा ऽइदन्नाम रूपङ्कर्म्म । तेषान्नाम्नां वागि-
त्येतदेषामुक्थमतो हि सर्वाणि नामान्युत्तिष्ठन्त्येतदेषाᳬ
सामैतद्धि सर्वैर्न्नामभिᳯ सममेतदेषाम्ब्रह्मैतद्धि सर्वाणि
नामानि बिभर्त्ति ॥ १ ॥ अथ रूपाणाम् । चक्षुरित्येत-
देषामुक्थमतो हि सर्वाणि रूपाण्युत्तिष्ठन्त्येतदेषाᳬ
सामैतद्धि सर्वै रूपैᳯ सममेतदेषाम्ब्रह्मैतद्धि सर्वाणि रूपाणि
बिभर्त्ति ॥ २ ॥ अथ कर्म्मणाम् । आत्मेत्येतदेषामुक्थ-
मतो हि सर्वाणि कर्म्माण्युत्तिष्ठन्त्येतदेषाᳬ सामैतद्धि
सर्वैᳯ कर्म्मभिᳯ सममेतदेषाम्ब्रह्मैतद्धि सर्वाणि कर्म्माणि
बिभर्त्ति तदेतत्त्रयᳬ सदेकमयमात्मात्मो ऽएकᳯ सन्नेतत्त्र-

यन्तदेतदमृतꣳ सत्येन च्छन्नम्प्राणो वा ऽअमृतन्नामरूपे सत्यन्ताभ्यामयम्प्राणश्छन्नः ॥ ३ ॥

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ४ ॥

माध्यन्दिनीये शतपथब्राह्मणे तृतीयः प्रपाठकः ॥ ३ ॥
कण्डिकासंख्या ॥ १०१ ॥

इति चतुर्थोऽध्यायः ॥ ४ ॥

—०—

[ अविद्याविषयमेव आत्मत्वेनोपगतवन्तं गार्ग्यं पूर्वपक्षिणं तद्विपरीतात्मदर्शिनमजातशत्रुं सिद्धान्तिनं चोपस्थाप्य आख्यायिकाप्रदर्शनम् ]

दृप्तबालाकिर्हानूचानो गार्ग्य ऽआस । स होवाचा-जातशत्रुङ्काश्यम्ब्रह्म ते ब्रवाणीति स होवाचाजातशत्रुः सहस्रमेतस्यां वाचि दद्मो जनको जनक ऽइति वै जना धावन्तीति ॥ १ ॥ स होवाच गार्ग्यः । य ऽएवासावादित्ये पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठा ऽअतिष्ठाः सर्वेषाम्भूतानाम्मूर्द्धा राजेति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्तेऽतिष्ठाः सर्वेषाम्भूतानाम्मूर्द्धा राजा भवति ॥ २ ॥ स होवाच गार्ग्यः । य ऽएवासौ चन्द्रे पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठा बृहन्पाण्डरवासाः सोमो राजेति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्तेऽहरहर्ह सुतः प्रसुतो भवति नास्यान्नं क्षीयते ॥ ३ ॥ स होवाच गार्ग्यः । य ऽएवायं

विद्युति पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठास्तेजस्वीति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते तेजस्वी ह भवति तेजस्विनी हास्य प्रजा भवति ॥ ४ ॥ स होवाच गार्ग्यः । य ऽएवायमाकाशे पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठाः पूर्णमप्रवर्त्तीति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते पूर्य्यते प्रजया पशुभिर्न्नास्यास्माल्लोकात्प्रजोद्वर्त्तते ॥ ५ ॥ स होवाच गार्ग्यः । य ऽएवायं वायौ पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठा ऽइन्द्रो वैकुण्ठोऽपराजिता सेनेति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी ॥ ६ ॥ स होवाच गार्ग्यः । य ऽएवायमग्नौ पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठा विषासहिरिति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते विषासहिर्ह भवति विषासहिर्हास्य प्रजा भवति ॥ ७ ॥ स होवाच गार्ग्यः । य ऽएवायमप्सु पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठाः प्रतिरूप ऽइति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते प्रतिरूपः हैवैनमुपगच्छति नाप्रतिरूपमथो प्रतिरूपोऽस्माज्जायते ॥ ८ ॥ स होवाच गार्ग्यः । य ऽएवायमादर्शे पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मि-

न्त्सँवदिष्ठा रोचिष्णुरिति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्रजा भवत्यथो यैः सन्निगच्छति सर्वांस्तानतिरोचते ॥ ९ ॥ स होवाच गार्ग्यः । य ऽएवायन्दिक्षु पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठा द्वितीयोऽनपग ऽइति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते द्वितीयवान्ह भवति नास्माद्गणश्छिद्यते ॥ १० ॥ स होवाच गार्ग्यः । य ऽएवायं यन्तम्पश्चाच्छब्दोऽनूदेत्येतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठा ऽअसुरिति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते सर्वँ हैवास्मिँल्लोक ऽआयुरेति नैनम्पुरा कालात्प्राणो जहाति ॥ ११ ॥ स होवाच गार्ग्यः । य ऽएवायञ्छायामयः पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठा मृत्युरिति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्ते सर्वँ हैवास्मिँल्लोक ऽआयुरेति नैनम्पुरा कालान्मृत्युरागच्छति ॥ १२ ॥ स होवाच गार्ग्यः । य ऽएवायमात्मनि पुरुष ऽएतमेवाहम्ब्रह्मोपास ऽइति स होवाचाजातशत्रुर्म्मा मैतस्मिन्त्सँवदिष्ठा ऽआत्मन्वीति वा ऽअहमेतमुपास ऽइति स य ऽएतमेवमुपास्त ऽआत्मन्वी ह भवत्यात्मन्विनी हास्य प्रजा भवति स ह तूष्णीमास गार्ग्यः ॥ १३ ॥ स होवाचाजातशत्रुः । एतावन्नू३ ऽइत्ये-

(१) "यथायमात्मनि" इति 'म' 'ज' पुस्तकयोः ।

